# भारतीय-रत्नचरितम्

卐

लेखकः

श्रीरुद्रदत्त पाठकः

•

सम्पादकौ

श्रीविष्णुवल्लभ शास्त्री

श्री गोविन्द नरहरि वैजापुरकरश्च

•

प्रकाशकः

श्रीविष्णु-प्रकाशनम्, देव, ( गया )

प्रकाशक :
श्रीराजवल्लभ पाठकः
श्रीविष्णु प्रकाशनम्,
देव गया ( बिहार )



प्रथमं संस्करणम् : १००० प्रतयः
राष्ट्रनायक नेहरूजयन्ती : १९६२
मूल्यम् : अष्टौ रूप्यकाणि




मुद्रक :
श्री विश्वनाथ भार्गव
मनोहर प्रेस,
जतनबर, वाराणसी ।

# प्राक्कथनम्

पुस्तकमिदमाधुनिक-संस्कृत-साहित्ये नव्यप्रकारेण लिखितमस्ति। अत्र कथाकाव्यरूपेण भारतीयैतिहासिकघटनानां संक्षिप्तं वर्णनं प्राचीनकालादारभ्य वर्तमानसमयं यावत् सरल-सरसभाषया कृतमस्ति। संस्कृत-साहित्ये राष्ट्रियभावनया ओतप्रोता एतादृशा ग्रन्था अद्यावधि अत्यल्पा एव। अस्य ग्रन्थस्य लेखकाः स्वर्णपदकालङ्कृताः व्याकरण-साहित्याचार्या व्याकरणतीर्थाः श्रीरुद्रदत्तपाठकशर्माणो हार्दिकं धन्यवादार्हाः। पूर्णमाशासे, पाठका अमुं समादृत्य तेषां परिश्रमं सफलयिष्यन्तीति।

राजभवनम्
भोपाल ( म० प्र० )
४-११-'६१.

कैलासनाथ काटजू
महोदयस्य
मध्यप्रदेश–मुख्यमन्त्रिणः

( मूल प्रतिः )

राजभवन, भोपाल
४ नवम्बर १९६१

प्रस्तुत पुस्तक आधुनिक संस्कृत साहित्य में नये ढंग की लिखी गयी है। इसमें कथाकाव्य के रूप में भारत की ऐतिहासिक घटनाओं का संक्षिप्त वर्णन प्राचीनकाल से आरम्भ कर वर्तमान समय तक सरल-सरस भाषा में किया गया है। संस्कृत में राष्ट्रिय भावनाओं से ओतप्रोत इस प्रकार के ग्रन्थ अभी तक कम ही लिखे गये हैं। इस सुन्दर पुस्तक के लेखक श्री रुद्रदत्त पाठक, व्याकरण साहित्याचार्य, व्याकरणतीर्थ, गोल्ड-मेडलिस्ट को मैं हार्दिक बधाई देता हूँ। मुझे पूर्ण आशा है, पाठकगण इसे अपना कर उनके परिश्रम को सफल करेंगे।

कैलासनाथ काटजू
( मुख्यमन्त्री, मध्यप्रदेश )

# आशीर्वचनम्

विद्वद्वरेण्येन श्रीविष्णुवल्लभशर्म्मणा, प्रदीयमानया प्रेरणया: श्रीरुद्रदत्तपाठकान्त सङ्कल्पप्रालेयशैलसमुद्भूताया राष्ट्रियरत्नयशोगानपरिधानाया भारतीयरत्नचरिताभिधानायामिह रचनागङ्गाया सरस प्रणीनपर्यवेक्षणप्लवनस्य ममायमेव निष्कैतवानुबन्ध भावनिबन्ध.—

चरितं भारतीयस्य रत्नस्येद मनोहरम्।
गीत श्रीरुद्रदत्तेन भूयादाचन्द्रतारकम्॥

—जगन्नाल त्रिपाठी

व्याकरण साहित्यवेदान्ताचार्यः,
बोधगयामठस्थः प्रधानपण्डितः

८-११-'६२

# प्रकाशकीयम्

पुस्तकेऽस्मिन् ऋषभदेववृत्तमनुसारभ्य १९४७ ख्रिस्ताब्दीयवत्सर-पर्यन्तं भारतीयेतिवृत्तस्य प्रमुखघटनानां संक्षिप्तं वर्णनमत्र वर्तते। क्षीणा मर्यादा, यज्ञानां वर्णनम्, राजवंशानामनुकीर्तनम्, विकासवाद-खण्डनम्, चातुर्वर्ण्य-व्यवस्था, भारतीय-सम्प्रदायप्रवर्तकानां वृत्तं तत्सिद्धान्ताश्च, राष्ट्रमहासभायाविशिष्टनेतृणां कार्याणि एवमादीन्यन्यान्यपि भारतीयमहत्त्वोपष्टम्भकानि वृत्तानि संकलितानि विद्यन्ते। श्रीरलस्य पुनश्चरितमेवैतत्। सर्वमिदं देवगिरि पठित्वा नूनं यस्यापि देशभक्तस्य हृदयं समुद्वेलितं भवेत्। आशासे च देववाणीप्रणयी प्रत्येकं भारतीयोऽवश्यममुं ग्रन्थं समाद्रियेतेति।

—राजवल्लभ-पाठकस्य

# सम्पादकीयम्

— १ —

मान्या मनीषिणः !

संस्कृत काव्यसाहित्यमहोदधेः प्रधानतया तरङ्गद्वयम्—दृश्य श्रव्यञ्च । श्रव्य-काव्यस्यैवावान्तरो भेदो गद्यकाव्यम् । तद्धि कवीनां निकषं वदन्ति अभियुक्ताः । संस्कृतगद्य लेखकानां यथा न न्यूनता, तथा प्राचुर्यमपि नैव वक्तुं शक्यम् । कादम्बरी, हर्षचरितम्, वासवदत्ता, शिवराजविजयं, एवमादीनि पुस्तकानि संस्कृत-गद्यसाहित्यस्य भास्वरभास्वरायमाणानि । एतेषु भाषायाः क्लीष्टातिम प्रौढत्वमलङ्काराणाञ्च उद्भटाडम्बराः विलसन्ति । तेन च प्रतिपाद्यविषयः कियत् शैथिल्यमपि भजते । कोमलमतिमता कृते पुनस्तेऽगम्या अनवगाह्याश्च जायन्ते ।

एभिरेव भावनाजातैः प्रेरितेनामुना लेखकेन भाषा भ्यायता वास्तविकता-कल्पनयोः मणिकाञ्चनयोगेन सुन्दरं हारं गुम्फितुमत्र प्रयतितम् । राष्ट्रिय-भावनया ओत प्रोतेन ऐतिहासिककथा काव्यरूपेण ग्रन्थस्यास्य प्रगयं संवृत्तम् । अत्र समसामयिकस्थितिम्, भारतीयसभ्यता संस्कृती, आर्थिकी मवस्थाञ्च ध्यात्वा ऐतिहासिकघटना क्रमोऽपि सदैव प्रस्तावितः ।

अत्र भाषा सरला सरसा सुन्दरा च विधातु चेष्टितम् । नव्यशब्दाना प्रणयनमपि व्याकरण काव्य कोषसम्मत विधातु प्रयतितम् । ऐतिहासिक वास्तविकघटनानां वास्तविकता गोपयितु न चेष्टितम्, न वा ता पल्लवीकृत्य शाब्दिकविवादकरणस्य प्रयासो विहितः । अत एव लेखको नूनं धन्यवादार्ह इति । सम्पादन प्रकाशनकर्मणोः गयास्थरामविनोदविद्या-लयाध्यापकेन पण्डितश्रीश्रीकान्तमहोदयानां सहयोगश्चिरं स्मरणीयो भवेत् ।

आशासे, पाठका सानन्दमेनमनुग्रहिष्यन्तीति ।

गया —विष्णुवल्लभशास्त्रिणः

१४-११-६२ व्याकरण-साहित्यायुर्वेदाचार्यस्य ।

( प्रधान संस्कृत पण्डित,

हरिदास सेमेनरी हाईस्कूल, गया )

सच्चिदानन्दात्मकस्य निराकारनिर्विकाराखण्डाद्वितीयस्य ब्रह्मणो यदि नाम किमपि प्राथमिकं जगद्बीजं रूपं तच्छब्द एव। ब्रह्म एव शब्दमयं रूपं परिगृह्य स्वीयमर्धाङ्गं शब्दार्थरूपेण प्रपूर्य अर्धनारीनटेश्वरो भूत्वा जगन्नाटकमिदमभिनीतवानिति शास्त्रकृतां सर्वतन्त्रसिद्धान्तः। स्वव्यवहाराय अमरा एनां स्वीचक्रुः। तत एवेयं तेषां व्याहारतां गता 'देववाणी'ति अन्वर्थं नामाधिगतवती। मृत्युलोके पुनरियं सर्वप्रथमम् 'अग्निमीळे' इत्यादि वैदिकभाषारूपेण समुपतस्थौ। ततः शास्त्रकृतामुपकाराय सुसंस्कृतं लौकिक रूपं धारयामास। तत एव 'संस्कृतम्' इति सार्थपदा बभूव। इयमेव लोकजननी लोकानां सौविध्याय आत्मनि विकारमपि सोढ्वा प्राकृतापभ्रंशादिरूपतां गतेत्यहोऽस्याः ममता-परिप्लुतं लोकमातृत्वम्!

इयमेव लौकिकी संस्कृता वाणी करुणामूर्तेर्वाल्मीकिनः अन्तरे स्थितं क्रौञ्चमिथुनैकवधसमुत्थं शोकं श्लोकतां परिणमयन्ती मनोरमं लौकिकछन्दोबद्धं काव्यरूपमबिभ्रत्। तेन च स महर्षिरादिकवेर्महत्तमं पदमाप। क्रमशः शारस्वतसन्ततिततिप्रतिफलितया प्रतिभया समभिसिञ्चितोऽसौ काव्यकल्पतरुः दृश्य-श्रव्य-गद्य-पद्यादिसहस्रशाखः पल्लवितः पुष्पितः फलितश्च सन् संसारातपतप्तेभ्यः सच्छायी मोदकरश्च समभवत्।

साहित्यं नाम मनुजनुषां प्राणप्रदम्। तदन्तरा जीवनं न केवलं रिक्तमिव प्रतीयते, तत्र नैरस्यमपि पदमादधाति। तद्धि मानवस्य संसारयात्रायां महत्तमं सम्बलम्। यथा यथा कालः प्रकृतिश्च परिवर्तेते, साहित्यमपि स्वं रूपं नवं नवमाधाय आनन्तं मानवस्य सहयोगं विदधाति। यदि नाम तत् सततमभिनवं रूपं न बिभृयात्तदा 'पदे पदे यन्नवतामुपैति' इत्यादि। कालिदासं यथा चोयुगिमनुष्य तत् 'सुन्दरम्' 'रमणीयम्' वेति पदं कथं प्राप्नुयात्? अलङ्घ्यशासनं भगवन्तं महाकालं वा नाम समुपेक्षितुं शक्नुयात्? तादृशसाहित्याभिव्यञ्जने अनिवार्यमाध्यमीभूतायाः भाषाया अपि साहित्यविधानुगमनं नियमप्राप्तमेव। यथापूर्वोल्लेखं नूनं सा अमरभारती जननी अस्मादृशजनपृतं स्वीयं प्रतिविकारं परमया उदारास्थया आत्मसात्करोतीति।

युगेऽसौ राष्ट्रियता प्रधानः । स्वराष्ट्रोत्थानपतनयोरितिवृत्तं समीक्ष्य ततः शिक्षाग्रहणं नोऽनिवार्यं कर्तव्यम् । येन दुर्गमेन उच्चावचेन पथा गच्छद्भिरस्माभिः स्वातन्त्र्यमाधादितम्, तत्स्मृतिरस्माकं चेतःपटले प्रतिक्षणं जागृता स्यात् । तदैव समासादितायाः स्वतन्त्रतायाश्च संगोपनं कर्तुं क्षमा भवेम ।

पण्डितप्रवराणां श्रीरुद्रदत्तपाठकानां 'भारतीयरत्नचरितम्' नामेदं कथाकाव्यं विषयेऽस्मिन् अनितरां समुपयोगितां भजते । अस्य ग्रन्थस्य प्रतिपृष्ठमस्माकं भारतीयानां स्वर्णमयस्यातीतस्य समुज्ज्वलानि चित्राणि हृदादर्शे सुस्पष्टं दृश्यन्ते, वास्तविककर्तव्याय च नो नोदयन्ति । पुनर्यस्य कथाप्रबन्धस्य नायकत्वेन 'कर्तव्यस्य मूर्तिमयी प्रतिकृतिर्धीरोदात्तः श्रीरत्नो धृतः, स चानेकानि भारतीयरत्नानि स्वस्वसमयाऽवतीर्णानि निर्गोलयन्ति, तस्य ग्रन्थस्य प्रेरणाप्रदत्वे किमधिकं वक्तव्यं भवेत् ? विषयानुरूपां भाषामपि सर्वजनसुखबोधकारिणीं विधातुं कविर्नूनं कृती । वयं विश्वसिमो यदेतत् काव्यं संस्कृतभाषायाः व्यापकप्रचारप्रसारप्रसङ्गे संयोजिका शृङ्खला इव भवेत् ।

लेखकस्य आत्म-निवेदनेन सुस्पष्टं भवेद् यदस्य ग्रन्थरत्नस्य प्रणयने कियन्तः कीदृशाश्च दैविकादिप्रत्यूहास्तस्य पथि समापतिताः । तथापि अविदितखेदोऽसन् स्वर्गीयमाणेन तेन कार्यमिदं पूर्णं प्रकाशपदवीं यावन्नेतुं यो धृतिभावः प्रादर्शि, स तस्मिन् श्रद्धातिशयं पुष्णाति ।

महदिदं सौभाग्यमस्य जनस्य यदेतादृशस्य परमोपयोगिन अध्ययनीयस्य वाङ्मयस्य सम्पादनकर्मणि योगदानाय एषोऽवसरं प्राप । तथाप्ययमत्यन्तं कार्यव्यस्ततया प्रकाशने चात्यल्पसमयलाभेन आनृष्टेः योगमददानः किञ्चिद्वैरस्यमप्यनुभवति । संशोधनविधाने पण्डितश्रीशङ्कर गोपाल नेने चि० जयन्त गोविन्द वैजापुरकरश्च महान्तं सहयोग मदद्ताम्, अतो व्यक्तिद्वयं शुभाशीर्भिः संवर्धयति ।

अन्ते च आशास्ते यत् कृपालवः पाठका उदारतया अमुं ग्रन्थमादृत्य लेखकस्य श्रमं सफलं नेष्यन्तीति ।

उदासीन-संस्कृत-महाविद्यालयः **गोविन्द नरहरि वैजापुरकरस्य**
वाराणसी, १८-११ '६२ ( एम०ए०, न्याय-वेदान्त-साहित्याचार्यस्य )

# लेखकस्य परिचयः

आसन् पुरास्याभिनवस्य भारतीयरत्नचरिताकथाकाव्यकर्तुस्तत्र भवन्तो भरद्वाजगोत्रीया गीर्वाणवाणीप्रेयांसः पूर्वजा बिहारहारभूतस्य पुराणादि-सुप्रसिद्धस्य क्रकचेविछित्वा सहर्षे देहार्धं याचकाय वामनाय बलिरिव बलि-मुपहरतो हरतो दानमानिना मानं महाराजमयूरध्वजस्य ध्वजभूतसार्थक-नाम्नी शाहाबादापरनाम्नी क्रकचापुरी ( आरा ) जनपदान्तर्गत 'जगदीश-पुर'-नगरनागरिकेन्द्रस्य महेन्द्रस्य सप्तपञ्चाशदधिकाष्टादशशतिस्ताब्दीय-देश विदेशप्रसिद्ध भारतविद्रोहाग्रेसरस्य सेनानेविख्यातयशसो नृसिंहस्य श्रीकुँअरसिंहस्य तत्रभवता पूर्वजाना पुरोधसो गणकाश्च ।

अथैकदा श्रीसत्यनारायणपूजाप्रसङ्गेन कस्यचन गोपस्य गृहे गमनेन रुष्टेन श्रीकुँअरसिंहपित्रा साहबजादासिंहेनाधिक्षिप्तो मनस्वी महागणकः सुदर्शनः श्रीसुदर्शनपाठकः स्वकीयं सर्वस्व गृहभूम्यादिकं कस्मैचिद् ब्राह्मणाय शास्त्रविहितेन विधिना सम्प्रदाय आदाय च शरीरमात्र सपरिवारं पुना राज्ञा भूय भूयोऽभ्यर्थितोऽपि स्ववंशजेभ्यः पौरोहित्यकरणे वंशहीनतारूप घोर शाप प्रदाय विहाय जगदीशपुर पारेशोण गयामण्डलान्तर्गत टिकारीराज्यमायात् ।

ततस्तस्य ज्योतिर्विद्याप्रभावितेन टिकारीराज्यमहाराजेन तस्मै प्रदत्तेऽप्येकस्मिन् ग्रामे टिकारीतो दक्षिणदिशि योजनषट्कवर्तिदेव राजधान्य-धीशेन श्रीछत्रपतिसिंहेन नृसिंहेन देव सूर्यदेवमन्दिरोत्तरा दिशमधिष्ठितमाना नन्दपुरानामकं ग्राममभ्यर्थनयानीतो निवासचक्रे सुदर्शन-चक्रमिव सुदर्शनः ।

पुरा तत्र उदयपुरनिवासिनः सूर्यवंशीयराणावंशजाः केचन कारणेन केनचित् स्वां राजधानीमपहाय गयामण्डलान्तर्गत देवनगरीं राजधानीमकुर्वन् । तामेव देवनगरीमध्यासमानमखिलैककार्यं विनाशयतो

भासा भासयतो भगवतः श्रीभास्करस्यातीव प्राचीनतममन्दिरमस्ति, यद्-द्यापि रमणीयतां दधत् जनैर्दृश्यते मनोहरेण सूर्यकुण्डेन सह ।

'शून्यव्योमनभोरसेन्दुकरभूहीने द्वितीये युगे
माघे बाणतिथौ सिते गुरुदिने देवे दिनेशालयम् ।
आरेभे हृपदां यये रचयितु सौम्यादिलायां भवः
यस्यासीत्स नराधिप. प्रभुतयालोको विशोनो भुवि ॥'

इत्यादिशिलालेखेन बहूना पण्डितप्रकाण्डाना प्रातःस्मरणीयस्वर्गीय-श्रीशिवकुमारशास्त्रिप्रभृतीनां च मतेन मन्दिरमिदमैलनृपतिविनिर्मितमिति नैव खण्डयितुं शक्यम् ।

अथ ज्योतिर्विद्याप्रभावप्रभावितेन तेन जनपतिशिरेन नृसिंहेन सुदर्शन-पाठकाय प्रदत्तामेकाधिकशतविग्रहां(बीघा मिता मिता भूमिं सम्प्राप्य तत्पुत्र-पौत्रा सानन्दमानन्दपुर्यामेव निवासञ्चक्रिरे । अतो मुविमलेऽस्मिन् ज्योति-र्विद्याया सदैव प्राधान्यमासीत् , अद्यापि लेखकस्य तत्र प्रवृत्तिर्नाभूत् ।

प्राचीनविचाराचारचरणप्रचारणचणस्य सुदर्शनपाठकस्य पञ्चपुरुषात् जयन्तीग्रामे दिवाकरादश्मिरिव दिवाकरात् लेखकः श्रीरुद्रदत्तपाठको विक्रमा-दित्यराज्यात् चतु सप्तत्यधिकोनविंशतितमे वर्षे ज्येष्ठमासस्यामायां तमायां जयन्तीदेव्यामादित्यवासर एव प्रादुरभूत् ।

सप्तवर्षदेशीयो वर्णमालामारभ्य वर्षाभ्यन्तरे सारस्वतव्याकरणमध्येतु स्वजन्मभूमि समीपवर्ति - पाताल्गंगास्थित - ब्रह्मचारि - पाठशालाध्यापकस्य श्रीव्रजकिशोरमिश्रस्यान्तेवासमकरोत् । तत्र सारस्वतव्याकरणं निपुण-मधीत्य गयास्थित - श्रीरामविनोदविद्यालयाध्यापक - श्रीमहावीरप्रसादमिश्र श्रीदेवराजमिश्राभ्यामधीत्य बिहारसंस्कृतसमितेः साहित्याचार्यपरीक्षाया-मुत्तीर्णतां लेभे ।

अथ व्याकरणशास्त्रमध्येतुकामः कलिकातास्थित राजकीयसंस्कृत-

विद्यालयमहोध्याप महामहोपाध्याय श्रीहाराणचन्द्रशास्त्रिमहाशयात् पाणिनीयं व्याकरणमधीत्य व्याकरणतीर्थपरीक्षाञ्चोत्तीर्य ठाकुरप्रतापनारायणदेव-शर्म स्वर्णपदकं प्राप्तवान्।

अथ महाप्रस्थानानन्तरं श्रीगुरोः महामहोपाध्याय श्रीकालीपदतर्काचार्य-महाशयात् न्यायादिशास्त्रञ्चाधीत्य कलिकातास्य - श्रीईश्वरसंस्कृतविद्यालये प्रधानाध्यापकतामकरोत्। पुस्तकलेखने मनोऽभियोगं प्रदाय 'भारतीय-रत्नचरितम्' महता कौशलेन विलिख्य संस्कृत साहित्ये इतिवृत्तस्याशिकीं पूर्तिमकरोदिति।

आशासे, एतेन न केवलं भारतस्य, अपि तु विश्वस्य महानुपकारो भविष्यतीति।

—श्रीअवधविहारी त्रिपाठी

व्याकरणाचार्य, काव्य-व्याकरणतीर्थः

व्याकरणकेसरी, विद्यामार्तण्डः,

कार्यसमितिसदस्यश्च

पश्चिम बंग-राष्ट्रीय संस्कृतशिक्षा-परिषदः

कलकत्ता

---

# समर्पणम्

स्वर्गतानामपि येषां वात्सल्यमद्यापि न विस्मर्यते
तेषामेव पूज्यपितृमहोदयानां चरणारविन्दयोः
समर्प्यतेऽयं ग्रन्थः —

तत्तनुजनुषा
रुद्रदत्त पाठकेन

अनन्तरं सहसैव एकस्मिन्दिवसे सान्ध्यारात्रिकसमये कलिकातास्थ-विवेकानन्दपथस्थित 'जयपुरिया-भवन देवालये' श्रीराधाकृष्णयुगलं संस्मृत्य 'नमामि नित्यमि'त्यादिग्रन्थादिमङ्गलाचरणात्मकं पद्यं निर्माय तद्गुण-कीर्तनं सता नमस्कारञ्च विधाय तारापुरीवर्णनमारब्धवान् ।

'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' इति न्यायानुसार विलिख्य दशपत्राणि तारापुरीवर्णनस्य श्रीदेवव्रतशास्त्रिणमदर्शयम् । विलोक्य परमां प्रसन्नतामापन्नो देवव्रतशास्त्री श्लाघ्योऽयं भवतः प्रयास इत्यकथयत् । तारापुरीवर्णनस्य कियन्तमनुच्छेदं पठित्वा श्रीअवधविहारी-त्रिपाठिमहाशयोऽपि परमां प्रसन्नतां प्रकटितवान् । ततो गुरुवर्याः महामहो-पाध्याय श्रीकालीपदतर्काचार्यमहाभागा अपि प्रभावतीविषादवर्णनं श्रुत्वा समीचीनोऽयं लेखः, एतादृगस्यैव कथायाः ग्रन्थस्येदानीं भारतेऽस्त्यावश्यकतेति कथयित्वा ग्रन्थलेखनाय मां प्रोत्साहितवन्तः । मम मित्रवर्याः श्रीजीवेश्वरशा-श्रीरमाकान्तशास्त्रि श्रीकान्तशास्त्रिप्रभृतयोऽपि ग्रन्थलेखनस्य पूर्णं समर्थनं हृदयेन कृतवन्तः ।

किन्तु 'श्रेयांसि बहु विघ्नानि' भवन्ति । प्रथमलेखसमाप्तेः पूर्वमेव परमधार्मिकस्य श्रीपूरणमल्लजयपुरिया महोदयस्य सहसा महा-प्रस्थानं महाक्लेशायाभूत् । कथमपि समाप्य ग्रन्थस्य प्रथमलेखनं यावद् द्वितीयलेखारम्भं विचारयन्नासम, तावदेव आसन्नप्रसवा मम पुत्रवधू रोगाक्रान्ता सती गयायां स्त्री चिकित्सालये प्रविष्टेति वृत्तं प्राप्तम् । ततः श्रीमत्कलिकातातोऽहं गयां गतः । तत्रैव द्वितीयलेखारम्भ-मप्यकरोम् । द्विमासं यावत् जीवन मरणाभ्यां समामं कुर्वन्ती मत्पुत्रवधू माधुरीनाम्नीमेका कन्यां सूत्वाऽऽरोग्यता लेभे ।

पुनः स्वजीविकाकार्यार्थं कलिकातानगरमगाम् । सहसैकस्मिन् प्रातःकाले वात्सल्यपरिपूर्णचेतसः श्रीगजाधरजयपुरिया-महाशयस्य स्वर्गारोहणमवलोक्य कियन्ति विघ्नानि ग्रन्थलेखने भविष्यन्तीति विचार्य चिन्तासागरे निमग्नः । तत एकदा चि० बाबूलालजयपुरिया मामाहूय उवाच—'भवतस्तैलयानेन

गेहं गच्छन्ती भवतो धर्मपत्नी नितरामाहता भूत्वा स्त्री-चिकित्सालये प्रविष्टेति गयास्थः श्रीरामलालजयपुरिया सूचितवानिदानीं दूरध्वनियन्त्रेण । अतो भवान् यथाशीघ्रं वायुयानेन गयां गच्छत्विति । शीघ्रमेवाहं गयां गत्वा स्त्री-चिकित्सालये भिन्नोत्तमाङ्गां मूर्च्छितां धर्मपत्नीमवलोक्य 'रामाविरहजं दुःखं जानाति रघुनन्दनः' इति मनसि विचारितवान् । कृते बहुविधोपचारे दिनचतुष्टयानन्तरं सा मूर्च्छां परित्यज्य स्वस्थाऽभवत् । पुनः किञ्चित् स्वस्थां तां स्वगेहे संस्थाप्य कलिकातामागतः स्वकर्मणि दत्तावधानोऽभवम् ।

अनन्तरं स्वग्रामे व्याप्तायां महामार्यां स्वज्येष्ठभ्रातुः ग्रन्थलेखनाय आदेशप्रदातुः श्रीजगन्नाथपाठकस्य मरणमस्थाने गह्वरश्चैवकरमभूत् । स च मुद्रितमिमं ग्रन्थं नैव ददर्शेत्यहो विधेर्वैचित्र्यम् ।

'सर्वे गुणाः काञ्चनमाश्रयन्ति' इति न्यायानुसारं दरिद्रसार्थस्य मम विनिपातान्तरायनम आच्छिन्न समापितस्य विद्यालयस्यास्य ग्रन्थस्य प्रकाशनकार्यं दुष्करमेवाभूत् । एकस्मिन् दिवसे प्रचलन्त्यां ग्रन्थप्रकाशनवार्तायां श्रेष्ठिप्रवरो मंगतूरामजयपुरिया-महोदयः स्वेच्छया सार्धद्विशतमुद्राः ग्रन्थप्रकाशनार्थं प्रदाय सर्वप्रथमं ग्रन्थप्रकाशनकर्मणि मामग्रेसरं चकार । पुनः ज्येष्ठभगिनीकल्पा कश्मीर-निवासिनी श्रीमती सुभद्रादेवी ज्ञानसम्महाशया स्वयं द्विशतपरिमिता मुद्राः प्रदाय अन्येभ्यः सज्जनेभ्यश्च सार्धत्रिशतमिता मुद्राः प्रदापयित्वा महत् साहाय्यमुत्साहवर्धनञ्च कृतवतीति कदापि नैव विस्मरिष्यामि । मीलराज-धनवारीलालजयपुरियाप्रभृतयोऽपि यथोत्साहं साहाय्यं चक्रुः । श्रीभगवान-दत्तश्रोत्रीमहोदयानुरोधात् श्रीगोविन्दलालबागड श्रीबाबूलालजालानादि साहाय्यं प्रदत्तवन्तौ ।

'भवतः पुस्तकस्यास्य प्रकाशनकर्मणि साहाय्यमवश्यमेव करिष्यामः कारयिष्यामश्च, द्वित्रिदिवसानन्तरं भवता दूरध्वनियन्त्रेण वार्तालापो विधातव्यः साक्षात्कारो वा' इति कथयित्वा पुनः पुनः प्रतारकैर्धनिकम्मन्यैः सहापि मम साक्षात्कारोऽभूत् । केवलं मधुरभाषिणस्ते कथमत्र विस्मरणीयाः ! ये पुनः कर्मणा मनसा वाचा अर्थेन वा पुस्तकस्यास्य लेखने प्रकाशने च किञ्चिदपि साहाय्यं विहितवन्तः, तान्प्रत्यहं तु नितरां विनम्रोऽस्मि ।

लक्ष्यैकदृष्टयो लक्षणैकदृष्टयो वैयाकरणा इव दूषणैकदृष्टयो भूषणैकदृष्टयो द्विविधा आलोचकाश्चापि भवन्ति। अथ च कल्पनाससमन्वितो ग्रन्थो नैव चारुतापदमाधास्यतीति कथयन्ति स्म कतिपये मम हितैषिणः। तान् सर्वान् प्रति 'उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' इति भारविवचनमेव पर्याप्तम्। ग्रन्थलेखनस्य ममायं प्रथमः प्रयासः। यत्र क्वाप्यशुद्धिः स्यात्, सा तु विद्वद्भिः क्षन्तव्या।

अद्वैतसिद्धान्तप्रवर्तकभगवच्छ्रीशंकराचार्य - साम्प्रदायिक - बुद्धगया-मठाध्यक्षैः श्रीसत्यानन्दस्वामिपादैः प्रदत्त सत्प्रियमाशीर्वचनमात्मनः प्रबलं सम्बलं मन्ये। स्वीयाशीर्वादं प्रदाय तत्रस्थ एव महापण्डितः श्रीजगल्लालत्रिपाठि महाशयः, गयास्थः श्रीविष्णुवल्लभशास्त्रिमहोदयः, काशीस्थोदासीनसंस्कृतमहाविद्यालयाध्यापकः एम० ए० न्याय वेदान्त-साहित्याचार्योपाधिभाक् श्रीगोविन्दनरहरिवैजापुरकरमहोदयश्च ग्रन्थ-प्रकाशनसम्पादनादि कर्मणि महत् साहाय्यं विहितवन्त इत्यपि न विस्मरिष्यते।

अनन्तरं सदैव मम छन्दोऽनुवर्तिन सोदरभ्रातृकल्पं श्रीराजेश्वर-शर्माणं कदापि नैव विस्मरिष्यामि, यो हि सदैव ममास्वस्थताकाले प्रतिनिधि-र्भूत्वा मञ्जीविकाकार्यं चकार। अवधेशशर्मापि यथासमय महान्तं साहाय्यं ग्रन्थप्रकाशनादिकर्मणि चकारेत्यप्यविस्मरणीयमेव। शेषे पूज्य-पितृव्यौ व्रजराजशर्म-त्र्यम्बकेश्वरशर्माणौ नमस्कुर्वन्, कनिष्ठभ्रातरौ गणेशदत्त-शिवदत्तशर्माणौ भ्रातृपुत्रान् अयोध्याप्रसादोपेन्द्राशोककुमारांश्च शुभाशिषा संवर्धयन् भगवन्त वासुदेव प्रार्थये यदिमे दीर्घायुषो भूत्वा ग्रन्थमिमं पठन्तु पाठयन्तु च सर्वेभ्यः सुतराम्। ग्रन्थप्रकाशनविधौ आयुष्मता मत्तनु-जनुषा *श्रीराजवल्लभपाठकेन यावान् श्रमः कृतस्तदर्थं तं* पुनःपुनराशीर्भिः संयोजयामि। यद्ययमेतादृशं महान्त श्रमं नाकरिष्यत्तदा ग्रन्थोऽयमद्यापि पाठकेभ्य उपायनीकर्तुमसमर्थः स्याम्। मनोहरप्रेसयन्त्रालयाध्यक्षाः धर्मचारिणश्चापि अस्याविशीघ्रप्रकाशनविधौ नितरां धन्यवादार्हा इतिशम्।

काशी
राष्ट्रनायक-नेहरू-जयन्ती
१४-११-'६२

विद्वच्चरणसेवकः-
**श्रीरुद्रदत्तपाठकः**

# अनुक्रमः

यद्यो पत्यपि करोति परोपकार-
मात्मार्पणञ्च कुरुते जगतां हिताय ॥
जिह्वाग्रवर्ति खलु यस्य हरेश्चरित्रं
तं विश्वपूजितनरं शरणं प्रपद्ये ॥ ८ ॥
वाचा यदेव कथितं कुरुते तदेव
स्वप्नेऽपि नेच्छति कदापि परापकारम् ॥
आत्मोपमञ्च मनुते खलु विश्वमात्रं
तं विश्ववन्द्यचरणं शरणं प्रपद्ये ॥ ९ ॥
सत्कर्मणे खलु वियन्ति दिनानि येषां
लोकोपकारकरणे भजते सदैव ॥
मोहाब्धिमन्थनविधौ किल मन्दरा ये
तेषां पदाम्बुजरजः शिरसा बिभर्मि ॥१०॥
परापवादाय न कल्पते यो
गुणं स्वकीयं समये व्यनक्ति ॥
एवंविधं सत्पुरुषं महान्तं
नमाम्यहं भूमिगतेन मूर्ध्ना ॥११॥



# तारापुरी-वर्णनम्

अस्ति विराट्पुरुषस्य भगवतो वासुदेवस्य पादाङ्गुष्ठविनिर्गताया ब्रह्माण्डेश्वरस्य शिरोलङ्कारत्वमापन्नाया भगीरथस्य तपसः फलस्वरूपायाः त्रिभुवनजननिषेवितसलिलाया विविधदेशाननुगच्छन्त्या हिमवतः प्रभूताया वसुधामौक्तिकहारसमानायाः सगरसन्ततेः स्वर्गसम्पादिकायास्त्रैलोक्यपावनजलपरिपूरिताया इन्द्रनागसुराधिपतिगण निषेवितायाः सागरं प्रति गमनं कुर्वन्त्यास्तत्र भवत्या भागीरथ्यास्तटे तारापुरी नाम नगरी।

यत्र गगनचुम्बीनि श्वेतरक्तपीतहरितनीलादिवर्णविनिर्मितानि ध्वजपताकातोरणोपशोभितानि रत्नानन्दकलशभृङ्गारादिविनिनादितानि प्रातःप्रातः समागतानां बालवृद्धयुवस्त्रीजनानां महता सम्मर्देन भगवन्नामसङ्कीर्तनकारिणां सङ्कीर्तनेन गायकानां स्वरलयतालमूर्च्छनादिसहितेन गानेन, क्वचित्तु सामगानपाठिनां विप्राणां शुद्धोच्चारितवेदपाठेन महाभारतपुराणादिकथावाचकानां भगवत्कथाप्रवचनेन निर्धूमाङ्गारभरितधूपपात्रप्रदत्तमहासुगन्धितधूपाधिवासितेन धूमेन घृतपूरितवर्तिकाभिः सहितानां स्वर्णरजतपित्तलादिविनिर्मितानां दीपानां प्रकाशेन गङ्गाजलपरिपूर्णानां विविधाकृतिकानां कलशानां भृङ्गारकाणाञ्च समुदायेन श्वेतरक्तपीतहरितविद्युद्दीपकानां महाप्रकाशेन परिपूरितानि मन्दिराणि वर्तन्ते।

सन्ति चैतेषु स्वर्णरजतपित्तलाष्टधातुविनिर्मिताः पीतकौशेयवस्त्रपरिधानसम्पन्ना हारकेयूरकटककङ्कणवलयाङ्गदादिविविधालङ्कारालङ्कृताः स्वर्णरजतादिसिंहासनासीना-श्वेतच्छत्रोपशोभिता रत्नाष्टापदविनिर्मित-

मुकुटमण्डिता शास्त्रोक्तेन विधिना समर्च्यै सम्पूज्यमाना देवाना देवीनाञ्च मूर्तय ।

येषु पर्वयात्रामहोत्सवेषु भूते महति जनसम्मर्दे व्यवस्थाकरणार्थं दण्डधारिणो राजपुरुषा· समागच्छन्ति, स्वयमेवकाश्च विविधा सेवा प्रकुर्वन्ति ।

सन्ति च तारापुर्या बौद्धजैनसिक्खपारसीकमुहम्मदीयक्रिश्चियनादीनामप्युपासनागृहाणि, येष्वपि समये भवति महान् जनसम्मर्द·, समागच्छन्ति च तत्तद्धर्मावलम्बिन ।

तारापुर्यां प्रतिपर्व गङ्गास्नानार्थिना सम्भूत महति जनसम्मर्दे समुपस्थिते महति जनसमुदाये च महान् कोलाहलो जायते ।

वेदवेदान्तकाव्यसाङ्ख्यमीमांसाधर्मशास्त्रव्याकरणन्याययोगादिशास्त्राध्यापननिष्णाता प्रतियादिपराजयकर्मणि दक्षा सर्वशास्त्रनिष्णाता देशगौरवभूता शास्त्रचिन्तनविचाररतदनुकूलदर्शपौर्णमासादिभिर्देवपितृयाजका सन्ध्यावन्दनगायत्रीजपनित्यश्रवणदेवपूजनबलिवैश्वदेवकर्मकलग्ना "तृप्यन्ता स्वधा, या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता" इत्यादिवाक्योच्चारणमहरह कुर्वन्तो ब्राह्मणवृत्त्यैव यत्किञ्चिदायाति, तेनैव कथकथञ्चित् स्वजीविकामञ्चालका. शास्त्राणा विचारे समग्रा तत्त्वार्थचिन्तने दत्तमानसा परलोकाकाङ्क्षोता धर्मे दत्तमतयो देवदर्शने श्रद्धावन्ता "ब्रह्म सत्य जगन्मिथ्ये' ति विचारे सर्वदैव तत्परा गणपतिशिवविष्णुशक्तिसूर्यसमाराधका भस्मत्रिपुण्ड्रोर्ध्वपुण्ड्रविराजितमस्तका श्वेतधौतोत्तरीयमात्रपरिधारका मूर्तिमद् ब्राह्मण्यमिव विचरन्तो गङ्गास्नायिनो जीर्णशीर्णगृहनिवासिन. प्रायेण रात्रौ बुभुक्षिता अर्धबुभुक्षिता· शीतकाले कम्बलाद्यावरणरहिता: सम्प्राप्ते कन्योद्वाहसमये द्रव्याभावाद् व्याकुलीभूता. सर्वेषा श्रद्धाभाजनानि परमास्तिका सत्यवादिनो महापण्डिताश्च ब्राह्मणा निवसन्ति तारापुर्याम् ।

एवंविधेषु महापण्डितेषु केचन राजसकाशाद्यातवृत्तयः केनापि प्रकारेण स्वजीविकां सञ्चालयन्ति निवसन्ति च स्वकीयेषु गृहेषु मासिकशुल्कं प्रदाय परकीयेषु भवनेषु च ।

अन्ये सम्वर्धितकेशश्मश्रुधारका रक्तचन्दनरक्तवस्त्रालङ्कृता आत्मानमेव ख्याति शास्त्र ख्यानि शास्त्रपारगम्मन्या किञ्चिदपि शास्त्रमजानन्तः शास्त्रिणो वेदाङ्गमप्यदृष्ट्वाऽपि वैदिका उपाध्याया जन्मप्रभृति कदापि वेददर्शनमकृत्वाऽपि आचार्यपदवीमाप्ताः विदेशीयभाषाध्ययनाध्यापने संलग्ना राजन्यायालयेषु न्यायाधीशवाक्कीलादिकार्यकारकाः स्वयोग्यतानुकूलं सम्प्राप्य मासिकवेतनं कार्यालयेषु कार्यकारका भोजनालये महाभोजनालये वा सर्वजातिपाचितान्नभोजका भूत्वा मद्यं निविधनिहार कुर्वन्तः मानश्रद्धाचमनाय-चूरुटामिष्ठान-कुक्कुटाण्ड प्रातराशञ्च विधाय स्वगृहाणि भरन्तः मदमत्ताः सर्वदेशसर्वजाति समुद्भवाभिः कन्याभिः सह प्रेमविवाहं आत्मीयविवाहम् वा समाचरन्तः ब्राह्मणब्रुवाश्च निवसन्ति तारापुर्याम् ।

तथा चान्ये स्वजातिकार्यं पाचकधावकादिकर्मकारकास्तैल यानवाष्पयानविद्युद्यानादीनां सञ्चालकाः सञ्जाता यानानां संस्कृत कारका यानेषु गत्वा दूरवर्तिमार्गशुल्कमादाय प्रयोगपत्रप्रदातारः स्वोदरपूर्त्यर्थं सर्वविधकर्म कर्तुं समुद्यताश्च ब्राह्मणा निवसन्ति तारा पुर्याम् । अपरे च केचन तत्र बहुविधं व्यापारं कृत्वा सम्प्राप्तबहुधना रमणीयतमगगनचुम्बिभवनानि निर्माय बहुभृत्यैः सेव्यमाना बहुवैभव सम्पन्ना सामोदं निवसन्ति ।

देशजातिगोब्राह्मणाश्रितजनप्रतिपालकाः सत्यदयादमदानादिधर्मे संलग्नमतयः सन्ध्यावन्दनगायत्रीजपदेवपूजनादिकर्मकारका देशधर्म रक्षार्थं विविधाधुनिकयुद्धकर्मकुशला बहुविधशस्त्रसञ्चालननिपुणा उन्नतललाटा आयतवक्षसा वृषस्कन्धा सुपुष्टभुजा बहुविध यागादिकर्मणि वर्तमानमा वंशमर्यादारक्षकाः क्षत्रिया निवसन्ति तारापुर्याम् ।

अपरे गोब्राह्मणदेववृत्त्यपहारका आश्रिताना क्लेशप्रदातारः पूर्वं कार्यं कारयित्वाऽपि वेतनप्रदानसमये कलह कुर्वाणा विदेशीयवेषधारकाः सर्वदेशसर्वजातिसमुद्भवाभिः कन्याभिः सह कदापि ब्राह्मविवाहं कदापि प्रेमविवाह कदापि राक्षसविवाहमपि कुर्वन्तो न्यायाधीशसकाशात्प्राप्तप्रमाणविवाहन्तु बहुधा कुर्वन्तः सर्वविधमांसभक्षणे सुप्रसक्ता, स्वकीय वेदशास्त्रसम्मत स्नान कर्मापहाय राज्य प्रजापालनादिकञ्च दूरे परित्यज्य विटनटवारनारीपरायणा सर्वदा मद्यपानादिक कुर्वन्तो वैदिकधर्मविहीनाः स्वेच्छया धर्मकारका गोब्राह्मणाश्रितसाधुबालस्त्रीहननेऽपि निर्लज्जा वस्त्रादियन्त्राध्यक्षा दधिक्षीरलवणलौहतैलादिविविधद्रव्यविक्रेतारः सर्वजातिपाचितान्न-भोजकाश्चपान कुर्वन्तो वेदशास्त्रोपनिषदां पठन विहाय विदेशीयभाषापठनकुशला राज्यविस्तारकर्मापहाय कार्षापणैकनीकरणतत्परा विलासप्रिया भोजनालयमहाभोजनालयेषु सदैव भोजका रात्रौ पीत्वा मद्यं सानन्द विहरन्तो मदमत्ता गीतलास्यादिनिरता विदेशोद्भवाभिर्विट्रूपनारीजनसुलभलज्जाभिर्वारनारीसमाभिर्ललनाभिः सम विविधा क्रीडा कुर्वन्तः कतिपयचाटुकारैः सह श्वेताङ्गवेषं विधाय विहाय भारतीयतीर्थयात्रा वायुयानेन विदेश गच्छन्तः शूरा युध्यमाणा ताडने वीरा ब्राह्मणक्षेत्रद्रव्यापहरणे कुशलाः स्वकार्यसाधने पालकाश्चाटुकाराणाम्, भोजका धूर्तानाम् अनुरक्ता विदेशोद्भवासु ललनासु श्रोतारो वाद्ययन्त्रनिःसृतग्राम्यगीताना स्वदेशे केचन तैलयानेन भ्रमन्तः क्षत्रिया निवसन्ति तारापुर्याम् ।

वणिजोऽपि केचन गङ्गास्नानसन्ध्यावन्दनगायत्रीजपदेवदर्शनपूजनविप्रवन्दनकर्मसंलग्ना. स्वकुलक्रमागताचारधर्मकारका भगवद्भक्ता मन्दिरादिनिर्माणतत्परा अतिथिसाधुब्राह्मणसेवका दीनानाथेभ्यो धनप्रदातारः परमास्तिका न्यायागतद्रव्येण स्वजीविकासञ्चालका धर्मपूर्वकव्यापारकारकाश्चन्दनालङ्कृतललाटाः शिखासूत्रपरिशोभिताः परमोदाराः परमास्तिका निवसन्ति तत्र ।

अन्ये येन केनाप्युपायेन धनसङ्ग्रहणतत्परा अनेकानेकनिर्धनानाथ जनक्लेशप्रदातारः स्वकीय धर्मकर्मादिकमपहाय परद्रव्यापहरण कुशला बहुविधव्यापारसंलग्ना परवञ्चनपरपीडनगोहयसुवर्णतैलमत्स्यचर्मलवणादिव्यापारनिरता विद्युत्प्रकाशविद्युद्व्यजनवायुयन्त्र नलनालिकागवाक्षादिपरिशोभितेषु श्वेतमश्वेतकृष्णचित्रविचित्रोपलेप्यकादिनिर्मितेषु प्रासादेषु निवासिनो वणिजो निवसन्ति यत्र ।

एतया व्यापारिणा वणिजा वस्त्रयन्त्रगोधूमयन्त्रतैलतण्डुललौहशीशकप्लास्टिकचर्मकृत्रिमदुग्धघृतकर्गलप्रलेपनीविद्युदुपकरणप्रस्तरकाष्ठसुवर्णरजतलौहसूत्रादिनिर्माणयन्त्रशलाका शुष्कपण्डीशर्करामिष्ठ प्रपानकौषधिपादनाशाभ्रकरजरग्रूभ्रपानरस्तुरज्जुतैलयानपादयानादीनावृहल्लघूनि सञ्चालकोपसञ्चालकान्वितानि यन्त्राणि च प्रचलन्त्यहोरात्रमेव तारापुर्याम् ।

एतेषु यन्त्रेषु लक्षशो जनाः कार्यं कुर्वन्ति महता परिश्रमेण ।

अपरे विविधव्यापाराणामायद्रव्ये भागप्राप्त्यर्थं बहुभिर्व्यापारिभिः सह मिलित्वा निमितसयुक्त ैकल्यारव्यव्यापाराप्तधना स्वर्णरजत ताम्रपित्तललौहादसीसकादिवस्तून्यद्याऽपि घृतरूपेण व्यापारं कुर्वन्तो लाभं महामोदमापन्ना हानौ तु खिन्नास्तदर्थं कृतमहाकोलाहलाश्च वैश्यादयो व्यापारिणो निवसन्ति तत्रोच्चप्रासादेषु कतिपयप्रकोष्ठानि सम्प्राप्य प्रदत्तमासिकशुल्कानि ।

कश्चित् सुवर्णरजतताम्रलौहशुक्तिरत्नालङ्कारस्फटिकरत्नभाण्डवस्त्रमिष्टान्न सर्वविधानवीनोपयोगिवस्तूनां विक्रेतारो वस्तूनां विक्रयार्थं सघटन कर्मकृत्त्वोभयत सम्प्राप्तधना ( मध्यद्विदलयोर्मध्ये मूसलचन्दा इव विराजमाना ) दलालापरनामका बहुमूल्याभरणाच्छादितशरीरा धृतस्वच्छवस्त्रा घातितगोचर्मनिर्मितपादत्राणालङ्कृतपादा समुन्नतभवन निवासिनो व्यापारिणो निवसन्ति तत्र तारापुर्याम् ।

क्वचन पितृपितामहादिनिर्मितोन्नतबहुभवननिवासिभ्यः मासिक-शुल्करूपाणि बहुधनानि सम्प्राप्य तैरेव स्वजीविकां सुखेन सञ्चालयन्तो निवसन्ति तत्र ।

कतिपयवैश्यादयो व्यापारिणो भोजनालयं महाभोजनालयं वा संस्थाप्य तत्र भोजनकर्तृभ्यो द्विगुणं चतुर्गुणं वा भोजनमूल्यमवाप्य तत्रैव स्वजीवनं यापयन्तो निवसन्ति महानगर्यामत्र ।

यत्र च शूद्रास्त्रिवर्णसेवका वेदशास्त्रगुरुवृद्धादिसमादरकर्तारः, कुलक्रमागतधर्मप्रवृत्तचित्ता शुद्धमतयो धार्मिकाः परमास्तिकाश्च निवसन्ति तत्र तारापुर्याम् ।

अन्ये भालशोभितकाश्मीरचन्दना यज्ञोपवीतालङ्कृतस्कन्धाः स्मृतिपुराणात्सर्गसमयेऽपि परस्परं वार्त्तां कुर्वन्तो 'ब्राह्मणा वयम्, क्षत्रिया-वयमिति' ब्रुवाणाः शर्मवर्मत्युपाधिभाजः सर्वकर्मलग्ना ऊर्ध्वाधोव-स्त्रालङ्कृतदेहाः कुलक्रमागतसदाचारं कुर्वन्तः अकुर्वन्तश्च शूद्रा निवसन्ति यत्र ।

वेदशास्त्रगुरुवृद्धसाधुसन्यासिप्रभृतिनिन्दकाः स्वमतं समये सर्वजन-समादरकर्तारः सर्वधर्मपरिपालकाश्च भवन्त उच्चाधिकारित्वं गताः, समर्थाः विविधव्यायामेन विराजमाना भूत्वा यथाप्रवचना-दिकं कुर्वन्तः सर्वाङ्गे भस्म विलिप्य वर्द्धितकेशश्मश्रवः 'सिद्धा वयं महात्मानो वयमिति' स्वं समुद्घोषयन्तश्च विचरन्ति, निःसरन्ति विशन्ति विलसन्ति भ्रमन्ति गायन्ति च तारापुर्याम् ।

अपरे चलचित्रदर्शनार्थमत्र चलचित्रमहाद्वारेषु चलचित्र-दर्शनप्रवेशपत्रप्राप्त्यर्थं पर्याप्तमातपे शरीरादिस्यन्दिनि शीते च दण्डायमानास्तिष्ठन्ति । तत्र सहस्रशो मानवानां मध्ये येनकेन परस्परं विवदमाना दण्डादण्डि केशाकेशि कुर्वाणा अपरार्द्धे समुपागताश्चलचित्रदर्शनानन्तरं मित्रैः सह हसन्तो भ्रमन्ति गायन्ति नृत्यन्ति सुपानं कुर्वन्ति खेलन्ति समलिनाधोवस्त्रपरि-

धारका समये त एव रात्रौ दिवा मध्याह्ने सायं वा मार्गे यान्तीनां कुलवधूटीनां कुमारीणामध्ययनशीलानां छात्रीणामन्यासां वा कासाञ्चिन्नारीणां दर्शनं कृत्वा स्वरलयतालमूर्च्छनाविहीनं ग्राम्यं गीतं गायन्ति हस्ततालपूर्वकं महाट्टहासं कुर्वाणा व्यर्थमेव प्रलापं कुर्वन्ति वदन्ति च किमपि माम्यरत्नाम्, तथा मार्गे भ्रमद्भिः प्रहरिभिर्निधृताः सन्तस्ते कारागारवासमनुभवनमपि कुर्वन्ति। किन्तु नास्ति तेषां मनसि कापि लज्जा भयं वा पुनः निःसृत्य कारागारात्तमेवाचारं कुर्वन्तो भ्रमन्ति निवसन्ति च सामान्यात्तारापुर्याम्।

सहस्रं जनाश्चौरकर्माणि दत्तचित्ता गङ्गास्नानार्थं देवदर्शनार्थं वा यान्तीनां भक्तिपरिपूरितमानसानां कुलवधूनां भूषणादिकमपहरन्तो द्यूतकर्मनिरताश्च भवन्ति महानगर्यां तारापुर्याम्।

केचन वाष्पयानतैलयानधूम्रयानविद्युद्यानादीनां विश्रामस्थानेषु पर्वयात्रामहोत्सवादिषु वा भूते महति जनसम्मर्दे स्त्रीणां कर्तितकञ्चुकीतस्त्राढ्य द्रव्यादिकमपहृत्यान्य व्यापारव्याजं निधाय रात्रौ स्वगृहं गच्छन्ति व्यापारिणः। क्वचिद् वस्त्रमपि वा छुरिकाघातं कुर्वन्तोऽपरे तैलयानद्वारा भ्रमन्तो महाचोरा दृष्ट्वा कञ्चिद् धनिकं द्रव्यान्वितं प्रविश्य वा नैके नासिकाम्प्रहारं कृत्वा द्रव्यं प्रगृह्य पलायमाना भवन्ति तारापुर्याम्।

अथ चापरे केचन महाधूर्तास्तारापुर्यां समागतान्नवीनान् पुरुषान् मधुरालापैः स्ववशवर्तिनो विधाय 'गच्छन्तु भवन्तोऽस्माभिः सह, सर्वा व्यवस्था भवतां सौकर्याय करिष्यामो वयमि'ति कथयित्वा ग्रामस्य च काञ्चित्सङ्कीर्णां प्रतोलीं नीत्वा सर्वस्वहरणं कृत्वा पलायमानाः 'शूरा वयम्, बुद्धिमन्तो वयम्, कृतकार्या वयमि'ति पुनः पुनः परस्परं समुद्घोषयन्ति तत्र।

अन्ये केचन वाष्पयानविश्रामालयेषु स्वगृहादियात्राकरणार्थिनां सम्भूते महति जनसम्मर्दे कयाञ्चित्सविधे गत्वा सविनयं "कथं भवन्तः क्लेशभाजो भविष्यन्ति ? दीयतां द्रव्यम्, यानप्रवेशपत्रमानीय वयं

यानं सावकाशं समुपवेशयिष्यामो भवत" इति कथयित्वा द्रव्यमादाय पलायिता भवन्ति नाम तत्र ।

अन्ये च ज्ञानरहिताः कुमारीः कदाचिद्युवतीरपि मधुरालापैः प्रलोभ्य ताभिर्व्यभिचारं कारयित्वा गृहीत्वा च व्यभिचारागतं द्रव्यं सामोदा निवसन्ति तारापुर्याम् ।

केचन महाधूर्ताः स्वर्णरजतताम्रलौहादिवस्तुविनये बहुविधच्छलैः स्वकार्यसाधनं कृत्वा धूर्तान्पराजयन्ते ।

कतिपयमानवाः सर्वविधदुराचारकरणार्थं तत्परा अपि स्वकार्यसाधनार्थं कदापि धार्मिकाः समाजसुधारका अबलाश्रमविधवाश्रमादिसञ्चालकाः समाजवादिनो वर्गवादिनो राष्ट्रसेवकाः स्वदेशभक्ता ब्राह्मणगुरुदेवपूजका भगवन्नामसङ्कीर्तनकारका भागवतादिकथाश्रोतारो गङ्गास्नायिनो वा भूत्वा नटा इव विविधवेषधारका विचरन्ति तारापुर्याम् नास्ति तेषां कापि जातिः, कोऽपि धर्मः, सदाचारः, निश्चितो विचारः, सत्यवादित्वम्, गृहचिन्ता, गुरुपितृमातृवृद्धजनसेवाभिलाषा, लोकनिन्दाभयम्, ब्राह्मणस्त्रीबालगोविधवासंन्यासिनादीनां हननेऽपि लज्जा, पूज्यपूजाव्यतिक्रमे दोषोऽपूज्यपूजने च विचारः, गङ्गास्नानदेवदर्शने च श्रद्धा, दर्शपौर्णमासचातुर्मास्यचान्द्रायणपितृमातृश्राद्धब्राह्मणभोजनगोरक्षणादिषु मतिः, स्पृश्यास्पृश्यस्पर्शास्पर्शविचारश्च । किन्तु सर्वे स्वकार्यसाधनार्थं 'परमधार्मिका वयम्, ब्राह्मणा वयम्, धृतयज्ञोपवीता वयम्, सनातनधर्मावलम्बिनो वयम्, क्षत्रिया वयम्, वैश्या वयम्, शूद्रा वयम्, साधुब्राह्मणादिभक्ता वयमिति ब्रुवन्तो महाधूर्ताः स्वार्थसाधका निवसन्ति तत्र ।

एतेऽपि कदापि 'लोककल्याणार्थं यज्ञं कारयिष्यामो वयमि'ति सर्वत्रोद्घोषं कृत्वा द्रव्यसञ्चयं विधाय येन केनापि प्रकारेण यज्ञादिकर्म कारयित्वा स्वार्थसाधनं सर्वदैव कुर्वन्ति तारापुर्याम् ।

अन्ये केचन चर्चरशब्दभाजश्चणकान् वंशपात्रे निधाय तत्पात्रं रज्ज्वा गले लम्बायमानं कृत्वा 'गृह्णन्तु चणकाः' इति शब्दमुच्चारयन्तः श्रवणकप्रशंसापरिपूर्णं किन्तु स्वरलयतालमूर्च्छनारहितं गानं कुर्वन्तस्तारापुर्यां चणकविक्रेतारो जना भ्रमन्ति।

ग्रामं ग्रामं विविधद्रव्यविक्रेतारश्च केचन मानवास्तारापुर्यां द्रव्याणि स्कन्धे शिरसि वा समुत्थाय भ्रमन्तस्तत्र तत्र प्रतोल्यां 'गृह्णन्तु विविधानि द्रव्याणी'ति उच्चैर्महान्तं चीत्कारं कुर्वन्ति, येन विचारशीलानामध्यापकानां विद्यार्थिनां विदुषां वैज्ञानिकानाञ्च सहसा ध्यानभङ्गः समुपजायते।

अन्ये च समानविरोधिनो मानवा यदा कदापि कलहायमाना महान्तं कोलाहलं प्रकुर्वन्ति, उच्छालयन्ति च स्वविरोधिनं प्रति-प्रस्तरेष्टकादिखण्डान् क्षारजलपरिपूर्णानि शीशकपात्राणि च। किन्तु तेषां सङ्ग्रामे परस्परं कलहकारिणां कस्यापि कापि क्षतिर्नैव जायते, भवति च निद्राभङ्गोऽवश्यमेव तारापुरीनिवासिनां सभ्यानाम्। तेषां युद्धप्रक्रिया चैतादृशी विंशतिः पञ्चविंशतिः पञ्चाशद्वा जना मिलित्वा-दाचरन्तश्चौर्यकर्म कृत्वा द्रव्यमादाय मद्यालये मद्यपानं विधाय द्यूत-कर्म समारभन्ते। द्यूते मद्यपानाभिमत्तानान्तेषां मुखेभ्यः पूर्वं गालनं पश्चादपशब्दो निःसरति। सम्भूते परस्परं गालनयुद्धे तेषु कतिपयजना एकस्मिन् भागे, अन्येऽपरस्मिन् भागे भूत्वा युद्धार्थं सन्नद्धा भवन्ति, कोलाहलञ्च महान्तं कुर्वन्ति। यदा च प्रस्तरेष्टकादिखण्डानादाय क्षारजलपरिपूर्णानि शीशकपात्राणि च समाक्षिपन्ति भूमौ प्रस्फोटयन्ति च यदा, तदैकभागस्था विरोधिनः पलायमाना भूत्वा स्वरक्षागृहमाश्रयन्ते, प्रहारकाश्च महान्तं कोलाहलं कृत्वा प्रक्षोभ्य च तत्तद् द्रव्याणि पलायन्ते। तदान्ये निःसृत्य रक्षागृहात्तादृशमेव कोलाहलं कुर्वन्ति, प्रक्षिपन्तः प्रस्फोटयन्ति च प्रस्तरेष्टकादिखण्डान् क्षारजल-परिपूरितशीशकपात्राणि च प्रतोल्यां राजमार्गे वा यत्र तत्रैवंविधः

संग्रामस्तेषां प्रचलति घटीद्वयं घटिकात्रयं वा, किन्तु न भवति क्षतिस्तेषाम् ।

क्वचन वंशपरम्परयैव दरिद्रा, येषां पितृपितामहादयो द्वारपाल-कृषिपालधानरूपाचकादिकर्म कुर्वन्त एव भरणमापेदिरे, त एव भाग्येन प्राप्तधनाः नारायणपुर्यां धनिका वयं, बुद्धिमन्तो वयं, चतुरा वयं, सर्वकर्मसु दक्षा वयं, परोपकारिणो वयं, दातारो वयं, सुभद्रयभोजका वयमिति कथयन्तः पूर्वं गालनं पश्चाद्दानं वदन्तः सर्वानेव पूर्वविदुषो यशोऽवदातान् प्रजाजनतश्च विनिन्दन्तो मोदमाना मेघेनाच्छादिते चन्द्रे खद्योता इव प्रकाशमाना वर्षर्तौ विरते कोकिलानां मधुरालापे बलाहका इव गर्जन्तो जना विचरन्ति ।

अत्र च नार्यः काश्चित् गृहकर्मशिशुपालनस्वामिश्वशुरश्वश्रूगुरुवृद्धातिथिबान्धवदेवपूजनकुलजातिमर्यादाचारादिधर्मपरायणा व्रतयुगादि-तिथिसंक्रान्तिसूर्यचन्द्रोपरागादिसमये गंगास्नानदेवदर्शनकथाश्रवणपारायणादिकर्मकारिका परपुरुषदर्शनस्पर्शनादिरहिता गृहाधिष्ठात्री देव्य इव ननन्दृश्वश्रूपरिकरा पतिपुत्रादिसहिताश्च निवसन्ति सुखेन नारायणपुर्याम् ।

अपरा शौचाचारविचारसम्पन्ना प्रतिदिनं गंगास्नानदेवदर्शनादिकारिका स्वगुणगणसहिता सर्वविधकुलधर्मपरिपालिका सर्वैश्वर्यसम्पन्नाश्च निवसन्ति ताः ।

काश्चन शिक्षिता धनार्जनरताश्च तत्र कार्यालयादिषु विविधकर्म कृत्वा साम्राज्ञीवत् सर्वालङ्कारसम्पन्नाः मानेनावगुण्ठनरहिता स्वागतप्रागल्भ्यमार्गेषु विचरन्ति दर्शयन्ति च परपुरुषेभ्यः स्वकीयं लावण्यम् ।

अन्याः काश्चन पतिनिरपेक्षा अपि कठिनवस्त्रनिर्मितकठिन-पाषाणा इव भूत्वा संसारे नामधारस्य कटिर्यन्त्रेणाच्छादितां धारयन्त्य अर्धनग्ना इव भ्रमन्ति नारायणपुर्याम् ।

तद्वच्च नार्यस्तारापुर्यां सधवा अपि त्यक्तसिन्दूरालक्तकादिसौभाग्यचिन्हा हस्तधृतचर्ममञ्जूषा सापनेत्रा उन्नतपादत्राणसहिता स्वपतिभिरन्यैर्वा पुरुषै सह भ्रमन्ति ।

चलचित्रनिर्माणस्थानेषु नाटकेषु विशिष्टपुरुषाणां सामूहिकभोजनावसरे विहारस्थानेषु महाभोजनालयेषु स्वमनमाऽधरीकृतरम्भातिलोत्तमादिसुन्दर्यः पीत्वा मद्यं नृत्यन्ति समुच्छलन्ति स्वकीयमङ्गं प्रदर्शयन्ति च कुलवधूः कुमारीशब्दमाना नार्यः ।

तथा कुम्भस्तना कूर्चश्मश्रुरहिता प्रतिमासं ऋतुमत्यः शिशुसमुत्पादयन्त्या दर्शनिमांसैरेकमेव, नार्यस्तारापुर्यां सभां सम्मेलनं वा विधाय 'पुरुषसमाना वयमि'ति कथयन्ति विनिन्दन्ति च सीताप्रभृतिपतिव्रताशिरोमणिभूता नारीः ।

अन्याश्च काश्चन तारापुरीस्था कुमार्यो यौवनोन्मत्ता विश्वसुन्दरीपुरस्कारप्राप्त्यर्थं विदेशं गच्छन्ति, तत्र च विश्वसुन्दरीपरीक्षणसमये वस्त्रदङ्गं स्वकीयं प्रदर्शयन्ति विश्वसुन्दरीपरीक्षकाणां समीपे ।

काश्चनान्यजोद्भवा अपि स्वजातिधर्मं परिपालयन्त्यः परपुरुषस्पर्शरहितास्तारापुरीपरिष्कारं कुर्वन्ति ।

यस्याञ्च शासकीया अशासकीया वा बहवः कार्यालया वर्तन्ते ।

कार्यालयेषु यन्त्रलिपिकारका संकेताक्षरलेखका समागतानां द्रव्याणां यथास्थानं संस्थापका संख्याकारका नानादेशेभ्यः समागतानां पत्राणां वाचका नानादेशेषु व्यापारकार्यार्थमन्यकार्यार्थं वा पत्राणां प्रेषका कर्मकारेभ्यः समये वेतनप्रदातारः समागतानां द्रव्याणां सङ्ग्रहीतारो गणका पत्रालयेभ्यः पत्राणां समानेतारः कार्यालयतो लिखितानां पत्राणां पत्रालये प्रापयितारः आपणे प्रदत्तानां वस्तूनां कार्यालयपत्रप्रदानपूर्वकं मूल्यमानेतारः आयकराभियोगे प्रार्थनाकरणार्थं वाकीलाः प्रधानलेखकाः साधारणलेखकाः कार्यालयस्थैः साहबैः सह साक्षात्करणार्थं समागतानां सभ्यानां विशिष्टस्थानेषु

समुपवेशकास्तैलयानबाष्पयानवायुयानजलयानादिभिः प्रेष्याणां सङ्कलयितारो गणकास्तेषामेव वस्तूनां महापुस्तिकायां लेखका विदेशेभ्यः समागतानां वस्तूनां संग्रहीतारः कार्यालयेषु कार्यकर्तॄणां सविधे समये चहा पानीयञ्चानेतारो विविधफलादिकमानेतारः साहबे टनटनायमाने विद्युद्घण्टिकायन्त्रे साहबसमीपे गन्तारोऽथ च तदाज्ञानुसारं कार्यकर्तारो वाचयित्वा सर्वाणि पत्राणि श्रावयितारः सद्व्यवस्थाकरणार्थं सर्वदैव तत्रत्याश्चानेके मानवा विचरन्ति कार्यं कुर्वन्ति च ।

यस्यां गङ्गाजलप्रवाहे नौका वृहन्नौका असंख्येयानि नानापुरुषान्वितानि बहुविधवस्तुपरिपूर्णानि तत्र ग्रामं विदेशं वा गन्तुं समुद्यतानि विदेशेभ्यः समागतानि परिष्कारार्थं जीर्णोद्धारार्थं वा संस्थितानि बहुपरिष्कारैर्जीर्णोद्धारकैश्च परिष्क्रियमाणानि कानिचित्सद्योनिर्मितानि कानिचित्पूर्वनिर्मितानि ध्वजपताकाघण्टाचालनयन्त्रदूरवीक्षणध्वनिविस्तारकयन्त्रान्वितानि चालकोपचालकैः समन्वितानि सर्वोत्तमोत्तममध्यमनिम्नपुरुषनिवासस्थानसहितानि विद्युत्प्रकाशपरिपूर्णानि मूत्रशौचस्थानयुतानि गमनागमनं कुर्वाणानि जलयानानि वर्तन्ते गङ्गाजले तारापुर्याम् ।

यत्र च राजपुरुषैः सभ्यैर्नेतृभिर्ब्राह्मणैः क्षत्रियैः श्रेष्ठिभिः कुलाङ्गनाभिः साधारणमानवैः क्वापि धूर्तैर्महाधूर्तैश्च समधिष्ठितानि तैलयानान्यहोरात्रमेव प्रचलन्ति तारापुर्याम् ।

अन्यानि राजपरिवहननामकानि वृहत्तैलयानानि यथा दूरवर्तिमार्गशुल्कं प्रदाय सर्वविधस्त्रीपुरुषसमधिष्ठितानि महतो जनसम्मर्दत्वाद्यथावकाशं स्थातुमशक्नुवानैर्दण्डायमानैरपि कैश्चित्पुरुषैः समधिष्ठितानि निर्णीतस्थानेषु किञ्चित्स्थित्वा पुनरपि धावने संलग्नानि म्रियन्तामत्र जना नास्ति चिन्तेति विचारवद्भिर्व्यवस्थापकैश्चालकैश्च समन्वितानि तैलयानानि सर्वत्रैव विस्तृतराजमार्गेषु धावन्ति तारापुर्याम् ।

सर्वविधवस्तुसहितान्यप्यन्यानि तैलयानानि च भ्रमन्ति यत्र ।

कानिचित् द्वाभ्यां मानवाभ्यामग्रतो द्वाभ्यामेकेन वा पृष्ठतः परिचालितानि वस्तुपरिपूर्णानि पुरुषाभ्यां पुरुषेण स्त्रीभ्यां स्त्रिया वापि समधिष्ठितानि हस्तयानानि च प्रचलन्ति यत्र । किन्त्वेतद्यानचालकाः प्रायेण पशुभूता एव परिश्रमे भवन्ति ।

अन्यान्यपि विशुद्यानानि महिषाश्वपादयानानि वस्तुभिः पुरुषैः स्त्रीभिश्चापि समधिष्ठितानि यानानि च प्रचलन्त्यहर्निशमेव तारापुर्याम् ।

यत्र च तारापुर्यामध्ययनशीलाश्छात्राः छात्र्यश्च विद्यालयविश्वविद्यालयेषु च पठन्ति संस्कृतहिन्द्याङ्ग्लादिभाषाम् । किन्त्वध्ययनशीलानां मध्ये बहवः कुशाग्रबुद्धयः परीक्षासु ससम्मानं समुत्तीर्णा भवन्ति, केचन मन्दमतयोऽभिनयचलचित्रादिदर्शनात्सुरादर्शकाश्च परीक्षाकालेऽवैधमुपायमवलम्बन्त परीक्षोत्तीर्णताप्राप्त्यर्थं शिक्षकान्परीक्षाधिकारिणश्चाप्यमन्यन्ते ।

अध्ययनशीलानां प्रमादरहितानामपि छात्राणां मध्ये केचनैव गुरुपितृमातृवृद्धजनसेवकाः प्राचीनभारतीयधर्माचारविचारसभ्यतानुगमन गायनाध्ययनब्रह्मचर्यव्रतधारकाश्च भवन्ति ।

केचन विद्यार्थिनस्तैलयानविद्युद्यानवाष्पयानव्योमयानपरिचालनविद्यासु निपुणाः केचन च विविधयान्त्रिकविद्यासु नैपुण्यमाप्नुवन्ति च ।

अन्ये च विविधासु विद्यासु नैपुण्यमवाप्य तत्तत्स्थानेषु विविधकार्यं कुर्वन्तः सञ्चालयन्ति ससम्मानं स्वजीविकाम् ।

यत्र च विविधदेशप्रान्तजातिसमुद्भवानां गगनचुम्बीनि विद्युद्दीपिकाविद्युद्व्यजनविद्युन्नलिकासहितानि शयनपाकस्नानासनभोजनविश्रामसर्जनवार्तास्थानशौचादिस्थानालङ्कृतानि विचित्रपञ्चभौमिकान्वितानि वातायनपरिशोभितानि धनिकानां निवासभूतानि भवनानि विद्यन्ते ।

मध्यवित्तानां मानवानामपि साधारणसुखोपभोगसहितानि भवनानि दरिद्राणाञ्च महाशालाकुटीः. सामान्यसंख्याकैः परिपूर्णानि सर्वविधनगरसौन्दर्यसहितानि कानिचिद् भवनानि कानिचित्र सुन्दराणि प्राचीनानि सर्वाणि निर्मितानि दुर्गन्धपरिपूर्णानि गृहाणि वर्तन्ते तारापुर्याम् ।

राजकीयस्थलानि सभास्थलानि धर्मार्थस्थलानि विविधशोभासमन्वितानि च वर्तन्ते ।

सर्वविधाश्चर्यजनककुसुमालङ्कारसमन्विता निर्मलजलपरिपूरितास्तारापुरीनिवासिजनमनोरञ्जनभूताः समये सन्तरद्भिः कुमारैः सन्तरन्तीभिः कुमारिकाभिश्चालङ्कृता तीरेषु उपवनैश्च सुशोभिता विविधमीनसमन्वितास्तटाका विद्यन्ते तारापुर्याम् ।

यत्र च देशरक्षार्थं नियुक्तानां सदैव विविधायुधनिरतशस्त्रसहितानां सेनाध्यक्षादिप्रधानाधिकारिभिरन्वितानां सैनिकानां निवासभवनानि तथा न्यायाधीशानां वाकीलानां राजकीयप्रधानकर्मचारिणां राजकीयकार्यालयेषु सामान्यकार्यकर्तॄणाञ्चापि भवनानि विद्यन्ते ।

यत्राग्निशामकगृहाणि घण्टान्विततैलयानसमन्वितान्यग्निशामार्थं समुद्यतपुरुषैरन्वितानि च भवनानि विद्यन्ते ।

अथ च सेवकसेविकाचिकित्सकचिकित्सिकाद्वारपालरोगिनिवासशयनगेहशय्यादिपरिपूर्णानि विविधसामयिकसौख्यसमन्वितानि कानिचिच्छासकनिर्मितानि कानिचित् धार्मिकधनिजनविनिर्मितानि कानिचिद्बहुजनव्ययनिर्मितानि च चिकित्सागृहाणि वर्तन्ते तत्र ।

यत्र च जम्बूनिम्बकदम्बकरञ्जसिन्धुवाराशोकचम्पकपुन्नागामलकीचन्दनमुनिद्रुमपूगीफलदेवदारुभूर्जाम्रपिप्पलवटाश्वत्थपर्कटगुग्गुललाजवन्तीजातीमाधवीस्थलपद्मादिविविधवृक्षोपशोभितानि सर्वजनाह्लादकराणि बहून्युद्यानानि वर्तन्ते ।

येषु सायङ्काले तारापुरीनिवासिनो बालयुवद्धकुमारिकास्त्रीजनसमुदाया द्विचक्रयानतैलयानचरयानगदयानादिभिः केचन पदातयश्च वायुसेवनार्थं समागच्छन्ति ।

उद्यानेषु चर्वरशब्दभाजनश्रवणकान् दधिवटकान् तिक्तमिष्टक्षारद्रव्यान्विताम्लजलपरिपूर्णानि भाण्डानि 'गोलगप्पा'रकान् क्षारतिक्ताम्लमिष्टद्रव्ययोजित पाचितालूकसमन्वित लशुनपलाण्डु-तामलद्रव्यसंयुक्त चाटखाद्याय विक्रयार्थं वहन्तो जना समागच्छन्ति वदन्ति च । 'अहह ! सुन्दराऽयं चाटः, रम्भायाऽत्र सर्वतीक्ष्णपदार्थलवणतैलसम्मिलिता भूनितश्रवणकसमुदायो गृह्यन्तामिमे दधिवटकाः, दृश्यन्तां पलाण्डुलशुनपर्पटीप्रभृतीनि सुस्वादूनि भक्ष्याणि साहसा किं कथयामि स्वादुतेयं सुस्वादुभक्ष्याणां माहात्म्यम् । भक्षिते मनः सुप्रसन्नं भवति, शरीरे स्फूर्तिर्जायते, पाचनञ्च शीघ्रतरं भवति' इत्युक्ते सति काश्चित् किशोरसहिताः शोभनेनावगुण्ठितपादत्राणालङ्कृतपादाः प्लास्टिकनिर्मितया पेटिकयाख्यया नीवक्षाः कटिपर्यन्तमेव कञ्चुकीवस्त्रधारिका अर्धनग्ना कर्तितार्धशिरकेशा आनतस्तना मदमत्ता बाला समागत्य वदन्ति—'देहि चतुराणकानां चाटमिति' उक्ते विक्रेता वदति 'नानू ! आणकानामेव दीयते, साहसाऽपि भक्षयिष्यति' मधुरमिदं वचनं श्रुत्वा समागताणकाम्कानां चाटं बाला स्वकीय किशोरैः सह पत्रपुटकेषु कर्गजपुटकेषु वा भक्षयन्ति । भक्षयित्वा यदैव पुटकान् प्रक्षिपन्ति तदैव भग्नवस्त्रपरिधाना मलिनसर्वाङ्गा अकिञ्चनबालका अहमहमिकया पुटकेषु समापतन्ति लिहन्ति चोच्छिष्टपुटकान् । अन्याश्च तरुण्यः काश्चन वृद्धा अपि निर्लज्जास्तथैव चाटं भक्षयन्ति तारापुर्या उद्याने, विहरन्ति खेलन्ति हसन्ति समुच्छलन्ति च परपुरुषैः सहैव ।

यस्यां तारापुर्यां बहिर्निर्मिता न पशुशाला यत्र मानवोपकारिण्यो निरपराधिन्यो गावस्तादृशा एवान्ये पशवश्च वधिकैः प्रतिदिनमेव

हन्यन्ते। हताना पशूना गवाञ्च मास भोजनालयेषु महाभोजनालयेषु मांसभक्षकाणा गृहेषु प्रतिदिनमेव पाचितं भवति मांसभक्षकै र्भक्ष्यते च। तारापुर्या आपणेषु विक्रीयन्ते मांसानि। हताना पशूना रुधिरैः कश्चित् स्वादनामक पदार्थो निष्पन्नो भवति, स च दीयते जनैश्चहोद्यानेषु तेन स्वादेन चहाया तीव्रता समायाति। तीव्रां चहा पिबन्ति सर्वत्र जना। सायं प्रातः अतिथिसत्कारेषु च चहाया विशिष्टं स्थानं विद्यते निम्नस्य सर्वभागेष्विदानीम्।

तस्यामेव वध्यशालाया कतिपयगोवत्सानामुपरि पूर्णं सोष्ण पानीयं प्रक्षिप्य वेत्रैः प्रहार कुर्वन्ति वधिका, येन चर्माध स्थित रुधिर बहिर्निःसृत्य चर्माणि रक्तानि करोति। वेत्रप्रहारसमये वत्सा बन्धित सुरुचरणा प्रक्रन्दन्ते पश्यन्ति च रक्षितारम्। किन्त्वहो न भवति तत्र कोऽपि रक्षकस्तेषाम्। तदनन्तरमेव जीवितानामेव तेषा शरीरेभ्य-श्चर्माणि निष्कासयन्ति वधिकास्तैर्निर्मिता उपानह पेटिकाश्च परिधाय गृहीत्वा च धूम्रपानं कुर्वन्त साहबपदभाजो बहवो जना भ्रमन्ति तारापुर्या सततं स्वच्छपरिधानधवला सुन्दर्यश्च मदमत्ता।

अथ च बहुविधाधुनिकास्त्रशस्त्रवैज्ञानिकयन्त्रनिर्माणस्थानान्यपि वर्तन्ते तारापुर्या यत्र बहवो जना अहोरात्रमेव विविधाधुनिकास्त्र-यन्त्रादीना निर्माण कुर्वन्ति।

यत्र च स्वदेशाद्विदेशेभ्यो वा समागतै राजकर्मचारिधनिक व्यापारि-नेतृवृन्द भारतनिर्गमनकादिजनैः तारापुरीतः तत्र तत्र स्थान गामुकजनैश्च परिपूर्णं भोजनालयमहितं विशुत्प्रभाच्छमलङ्कृत विद्युद् व्यजनवायुपरिपूर्णसिगरेटधूमलुगन्धित समागतमानवाना गन्तव्यस्थान-प्रापकरमणीयतैलयान वनिविस्तारकयन्त्रसम्पन्नमतीवरमणीय वायुयान विश्रामस्थानं वर्तते।

यत्र च विदेशस्य स्वदेशाद्वा समागता बहवो जनास्तारापुर्यां-मध्ये च भोजनालय गत्वा विविध स्वाद्यं चोष्य भोज्यपदार्थं च भुक्त्वा पीत्वा च बहवो गन्तव्यस्थानं वायुयानैर्नौयानैर्वा गच्छन्ति।

वायुयानैर्गन्तारश्च प्रायेण सर्व एव विदेशीयस्वच्छपरिधानधवला सिगरेट्चुरुटादीन् पिबन्त एव भवन्ति "साहब"पदवीसम्पन्नाः। वायुयानगन्तारश्च प्रायेण सहस्राधिकक्रोशदूरमपि स्थानं चतुःपञ्च घटिकाभिरेव प्राप्नुवन्ति।

यत्र च विविधविद्युद्वर्तिकासमुद्भासितं विद्युद्व्यजनवायुसम्पन्नं वाष्पयानव्यवस्थापकजनसुव्यवस्थितं महदेकं वाष्पयानविश्रामस्थानं विद्यते। अन्यान्यपि लघूनि बहूनि वाष्पयानविश्रामस्थानानि वर्तन्ते तत्रैव।

येषु यथादूरं वाष्पयान-गमनार्थिना द्रव्ये शुल्कमादाय प्रवेश पत्रप्रदातारो गेहेषु कुर्सिकाफलकाद्यासनेषु समुपविष्टा बहिः पङ्क्तिबद्धेभ्यो दण्डायमानेभ्यो जनेभ्य. छिद्रेण प्रवेशपत्र वितरन्ति। अन्ये प्रवेश पत्रमादाय यानारोहणार्थं गच्छतां जनानां समीपे प्रमाणपत्र विद्यते न वेति निरीक्षन्ते। अपरे विगत सामग्रीमादाय जना गच्छन्तीति निरीक्ष्य सत्वा निक्षेपशालाप्रवेश शुल्कमादाय पुनरपि प्रमाणप्रदानं कुर्वन्ति। केचित् सामग्रीं पटिकाम्बा निस्तीर्णाधिक मस्तके हस्ते वा समादाय रक्तकञ्चुकधारका वाष्पयानाधिकारिप्रदत्त-स्वगात्रसूचक पित्तलपत्रमुद्राभिलाञ्छिता भारवाहका यात्रिणो वाष्पयाने समुपवेशयन्ति।

केचिद् गृह्णन्तु आपणा ग्रहा, गृह्णन्तु ताम्बूलानि फलानि वा विविधानि वस्तूनि धूम्रपानादिकानि चेति शब्दमुच्चारयन्त स्वकीय द्रव्यजात विक्रीणन्ति।

बहवो यात्रिणो मलने धूतविनिर्गणादिका हस्तधृतजलपानादिका वाष्पयानारोहणार्थं शीघ्रतया गच्छन्ति। अपरे गृहीत्वा हस्ते मार्जनीं सम्पूर्णं वाष्पयानविश्रामस्थान परिष्कुर्वन्ति।

केचन ताम्बूल-तमालपत्रादिकं भक्षयित्वा यत्र तत्र थूत्कन्ति,

बहवो जना जनाना सर्वस्वहरणार्थमेव समयनिरीक्षका इतस्ततो भ्रमन्ति च ।

तत्र वाष्पयानानि विविधसुखसौलभ्यपरिपूर्णानि प्रथममध्याधमश्रेणिविभागसहितानि विद्युत्प्रकाशविद्युद्व्यजनपरिपूर्णानि च स्थानानि भवन्ति । येषु समारुह्य जना सुखेन मासै. गन्तव्यस्थान कतिपयघटिकाभिरेव गच्छन्ति सानन्दम् ।

यत्र च वैदिकार्यसनातनबौद्धजैनमुहम्मदीयसिक्खख्रिस्तजरथुस्थशिन्तोप्रभृतिधर्मावलम्बिनो मानवाः प्रतिदिनमेव वायुयानैर्वाष्पयानैर्जलयानैस्तैलयानैर्वानेकदेशेभ्यस्तारापुर्या समागच्छन्ति तत्तन्नियतस्थानेषु भोजनालयेषु महाभोजनालयेषु वा निवास कुर्वन्ति । भोजनालयेषु निवासिनां दण्डायमाना एव प्रतिदिन भुञ्जन्ते ।

भुञ्जानानान्तेषा समक्षे कठिनवस्त्रकृतोन्नतपयोधरा लन्दननिर्मितसुगन्धश्वेतचूर्णश्वेतीकृतकपोला स्वमनसाऽङ्गीकृतसर्वसुन्दर्यः काश्चिद्भारतीया. काश्चिद्विदेशोद्भवा अपि समुच्छलन्ति गायन्ति नृत्यन्ति हसन्ति सल्वर्धनग्ना रमण्यः ।

कृत्रिमयौवनोन्मत्ताना तासा वाद्यसहित नृत्य गानञ्च पश्यन्ति शृण्वन्ति समागता भुञ्जाना मानवा. ।

महाभोजनालयेषु पूर्वं मांसलिप्तास्थिखण्डपरिपाचित क्षारद्रव्यसमन्वित किञ्चित्तिक्त जल पिबन्ति तदन्तरं गोवराहाजकुक्कुटाण्डमाससम्मिलितकरोटिका. शाकाश्च भुक्त्वा चहापान मद्यपानञ्च कुर्वन्ति ।

भोजन परिसमाप्य माहत्वा नृत्यन्तीना ललनाना मध्ये येऽपि काभिरपि सम गायन्ति नृत्यन्ति स्वपन्ति च सरम्भा. सोपानत्का अरम्भा अनुपानत्का वेति ।

एतादृशा जनाः प्रतिदिनमेव तारापुर्यां समागच्छन्ति ।

वायुयानवाष्पयानतैलयानाश्वमहिषयानविद्युद्यानादियानाना रव रवकर्मव्यस्ताना मानवानाञ्च सम्मिलितो ध्वनिः कदापि समुत्तिष्ठते,

त्रेन तारापुरी शब्दायमानेव भवति। अपरञ्च बहूनि प्राचीनानि नवीनानि दुर्गगृहाणि विद्यन्ते, येषु सर्वविधाधुनिकास्त्रशस्त्रसुसज्जिता लौहावरणलौहोष्णीषधारकाः सैनिका निवसन्ति। ते च यदा कदा निःसरन्ति राज्याधिकारिणां नमस्कारार्थम्।

कदापि यदागच्छन्ति राष्ट्रमहाधिकारिणस्तारापुर्यान्तदा तेषां सुरक्षार्थं सद्व्यवस्थाकरणार्थञ्च सैनिका राजमार्गेषु पङ्क्तिबद्धास्तिष्ठन्ति। भवति च समागतविशिष्टराज्यमहाधिकारिदर्शनार्थं तारापुरीनिवासिनां महान् जनसम्मर्दः। लक्षशो जनानां पङ्क्तिबद्धं महान्तं जनसम्मर्दं लङ्घयितुं राजमार्गं पारं कर्तुं वा न कोऽपि मानवः समर्थो भवति।

यदा कस्मिन्नपि समये राज्यमहाधिकारिणा सार्वजनिकभाषणस्यायोजनं भवति तदा पञ्चलक्षदशलक्षजनानां महान् सम्मर्दो भवति भाषणश्रवणार्थम्।

समुद्रस्य तरङ्गानामिव चञ्चलानां तेषां मानवानां व्यवस्थाकरणार्थं बहवो यष्टिनालिकास्त्रधारका राजकीयपुरुषाः समुपस्थिता भूत्वा व्यवस्थां कुर्वन्ति।

यदा कदा भूते जनानां कोलाहलेऽश्वारोहिणः सैनिकाः सद्व्यवस्थानिमित्तमश्रुवाष्पस्य व्यवहारं कुर्वन्ति, येन सर्व एव जना यत्र तत्र पलायन्ते।

पुनरप्येकत्रीभूय सर्वतो जयतु प्रधान इति ध्वनिं समुच्चारयन्ति। पूर्णे भाषणे पक्षे विपक्षे च विवादं कुर्वन्त एव जनाः स्वस्व गृहं परावर्तन्ते।

कदाचिद् विशालं कन्दुकक्रीडनं भवति, तत्रापि बहवो जनास्तद् द्रष्टुं गच्छन्ति। तेषामपि महान् सम्मर्दो जायते।

यत्र च तारापुर्यां विशाला राजमार्गाः परिष्कृताः परिष्क्रियमाणाः

प्रज्वाल्यमानाश्च निरन्तरं वर्तन्ते, येषु व्यापारिणो नानाविधानि वस्तूनि साधारणजनोपभोग्यानि विक्रीणन्ति ।

तेभ्यो विनिःसृताश्च सहस्रशः प्रतोल्यो वर्तन्ते ।

सर्वत्रैव राजमार्गेषु प्रतोलीषु च लौहस्तम्भेषु लम्बायमाना विद्युद्वर्तिका वर्तन्ते, यासां प्रकाशेन प्रकाशिता राजमार्गाः प्रतोल्यश्च रात्रावपि दिवेव प्रकाशमाना भवन्ति ।

अथ च तारापुर्या अन्तःस्थिताभिर्नालिकाभिः सर्वं एव मूत्रपुरीषादयो भागीरथ्यामेव निपतन्ति ।

या गङ्गा महर्षिकपिलक्रोधभस्मीभूताना सगरात्मजाना स्वर्गप्रापणं कृतवती, यस्यामाहात्म्यं वेदेषु पुराणेषु धर्मग्रन्थेषु च सर्वत्रैव वरीवर्ति, तस्याएव तारापुर्यामीदृशी दुर्दशा-समयवैचित्र्यमहो !

यत्र च तारापुर्यां विविधदेशीया राजदूताः स्वदेशप्रतिनिधिभूता निवसन्ति । तेषामावासभवनानि सुसज्जितानि तत्तद्देशीयबहुपरिचारकयुतानि वार्ताप्रापकप्रेषणध्वनियन्त्रसहितानि सर्वविधसौख्यसम्पन्नानि च वर्तन्ते ।

एते राजदूताः स्वदेशस्य प्रतिनिधिभूताः सर्वसत्तासम्पन्ना राज्ञो राष्ट्रपतेर्वाऽपि प्रतिनिधयो वर्तन्ते ।

सर्वं एवैते प्रतिसप्ताहं भारतीयवृत्तं प्रेषयन्ति स्वदेशम् । एतेषां सर्वेषामेव राजदूतानां भूषाचारविचारव्यवहारादयः स्वदेशानुकूला एव वर्तन्ते ।

सन्ति चैते सर्वं एव राजदूताश्चतुराः कुलीना देशभक्ताः प्रभावशालिव्यक्तित्वसम्पन्ना अवसरावधाननिपुणा निर्भयाश्च ।

यस्यास्तारापुर्या रक्षार्थमहोरात्रमेव, धृतनालिकास्त्रा यष्टिधारकाश्च राजपुरुषाः केचन पदातयः केचन तैलयानाधिरूढा अपरे फट्-फट्कारितैलशकटीसमारूढा राजमार्गेषु प्रतोलीषु च सर्वत्रैव परिभ्रमन्ति,

जायमाने च सन्देहे यानेभ्योऽवतीर्य सन्देहस्थलं सावधानतया निरीक्ष्य निस्सन्देहा अग्रे गच्छन्ति ।

केचन राजकीयपुरुषाः प्रतिचतुष्पथं स्थिता गतागतानां विविध यानानां मानवानाञ्च निरीक्षणं कुर्वते तथा रक्तश्वेतहरितविद्युद्वर्तिकाभिः गच्छतां मार्गप्रदानं च कुर्वन्ति ।

अपरे गुप्तचरा विहाय राजकीयवेषं साधारणमानववेषञ्च विधाय गुप्तरीत्या भ्रममाणास्तारापुर्यामुत्कोचग्राहिणश्चौरान् पाटच्चरान् मिश्रितखाद्यौषधिविविधद्रव्यविक्रेतॄन् शर्करान्नादीनामधिकमूल्यग्रहीतॄन् समाजविरोधिनो न्यायविरोधिनश्च गृहीत्वा आनयन्ति न्यायाधीशसमीपम् समुचितदण्डं प्रापयन्ति च ।

अथ च काश्चन स्त्रियोऽपि धृतपुरुषवेशा राजपुरुषवदमनाय यदा कदा तारापुरीं भ्रमन्ति, विशेषत स्त्रीणां विवादे स्त्रीविषयकराजकार्येषु च ता गच्छन्ति ।

निवसन्ति च तारापुर्यां बहुविधा वेश्या या खलु स्वशृङ्गारादिभिर्मधुरैर्वाक्यैश्च प्रलोभ्य पुरुषान् स्ववशवर्तिनः कृत्वा च कामुकानां कामशान्तिं स्वकार्यसाधनञ्च कुर्वन्ति ।

यत्र च बहुविधगोमहिषीसहितानि गोष्ठान्यपि वर्तन्ते । एतेषु वसन्ता गोपा दुग्धप्रदानपर्यन्तमेव गाः पालयन्ति ।



: २ :

# मुक्तामणि-गार्हस्थ्यवर्णनम्

एवंविधायां तारापुर्यां विविधशौचाचारविचारसम्पन्नो देवपूजनव्रतनियमकारकः सर्वविद्यायां निपुणो वादिप्रतिवादिपराजयकर्मविख्यातः सर्वथाऽधवजनपरिपालकः कुशाग्रबुद्धिः प्रखरविचारवान् वाग्मी सर्वभाषाविज्ञानकुशलोऽल्पजनमित्रभूतः सर्वजनमान्यः सर्ववैभवसौख्यसम्पन्नो मुक्तामणिर्नाम ब्राह्मणः प्रतिवसति स्म ।

एवंविधस्य महामान्यस्य मुक्तामणिब्राह्मणस्य महामान्या सर्वविधललनागुणसम्पन्ना देवब्राह्मणसाधुजनपरिपूजिका परमधार्मिकमानससमलङ्कृता प्रभावती नाम धर्मपत्नी बभूव ।

परितः प्राकारवेष्टितः, सुन्दरोद्यानसमलङ्कृतः प्रस्तरेष्टकादिविनिर्मितः सर्वत्र श्वेतचूर्णधवलसमन्वितेन निवासभवनश्चासीन्मुक्तामणेः ।

यस्योद्याने जम्बूनिम्बकदम्बैलालवङ्गकमुकाशोककर्पूरकलाम्रहरीतकीविभीतकामलकीपिप्पलवटाश्वत्थपर्कटादीनां वृक्षाः सन्ति ।

यत्र च जातीचम्पकमन्दारकुरवकबकुलकर्णिकाररजनीगन्धशृङ्गारहारजपाकुन्दकुसुमानां सुगन्धेन सुगन्धितः विकसितकमलपुष्पोपशोभितां वापीं संस्पृश्य मन्दं मन्दं प्रवहति, हरति चोद्यानगतानां मानवानां श्रमग्लानितन्द्रौदासीन्यानि पवनः ।

वसन्ति च तत्र शुकतित्तिरकलहंसकोकिलदात्यूहप्रभृतयः पक्षिणः ।

भवनप्राकारान्तराल एव विपुलनिर्मलजलपरिपूर्णगोणीयुतं रजकगृहम्, यत्र मुक्तामणिकुटुम्बानां प्रतिदिनमेव वस्त्रप्रक्षालनं कुर्वन्ति रजकाः । एकत्र मालाकारगृहम्, तत्रस्था मालाकाराः प्रतिदिनमेव पुष्पोद्यानं सिञ्चन्ति ।

एत एव मालाकाराः प्रतिदिनमेव सुगन्धितानि पुष्पाणि तुलसीदलानि विल्वपत्राणि चोत्तार्य वृक्षेभ्यः सम्यक् प्रक्षाल्य च प्रभावतीसमीपं पूजार्थं नयन्ति ।

अपरत्र गोशाला गोयुता, गोपाश्चापि प्रतिदिनमेव गाः दुग्ध्वा पयः प्रापयन्ति मुक्तामणिपाकशालाम् ।

बहूनि तत्र वर्तन्ते तैलयानगृहाणि येषु रक्षितानि सन्ति क्रीतानि सुन्दराणि कानिचित्प्राचीनानि वर्तन्ते तैलयानानि । तैलयानचालक-गृहाण्यपि तत्रैव वर्तन्ते, येषु चालकाः सुखेन निवसन्ति ।

तैलयानप्रक्षालका अपि तत्रैव निर्मितगृहेषु निवासं कुर्वन्ति । ये च तैलयानानि प्रतिदिनमेव प्रक्षालयन्ति च । प्रक्षालितानि तानि चालका नयन्ति मुक्तामणियानाकरणसमये ।

अथ च तत्रैव निवसन्ति निरालसाः स्वच्छपरिधानधवलाः सर्वनिध-सेवाचतुरा दासा दास्यश्च । तेषु दासेषु केचन मुक्तामणिसेवासंलग्नाः केचन प्रतिदिनमेवापणतो गार्हस्थ्ययोग्यानि सर्वविधवस्तूनि समान-यन्त्यापणतः । अन्ये पाचकाः सुस्वादु सर्वविधमेव भोजनं पाचयन्ति, परिवेषकाश्च भोजनावसरे भोजकेभ्यो भोजनं परिवेषयन्ति सावधानतया ।

द्वारपालगृहरक्षका अपि तत्रैव निवसन्ति, ये च मुक्तामणिगृहरक्षणं प्रतिदिनमेव कुर्वन्ति ।

एतेषां भृत्यानां महाव्यवस्थापकश्चैको दीर्घकूर्चशोभितः पीनो युवा मुण्डितश्मश्रुस्तुङ्गो दीर्घनेत्रो हस्ते गृहीतनालिकाऽधोवस्त्रोर्ध्व-वस्त्रटोपाम्बरवरशिरस्त्राणपरिशोभितो घटीयन्त्रविद्युद्यन्त्रान्विते प्रधान-द्वारदेशसमीपवर्तिनि गेहे निवसति ।

अङ्गुल्या संस्पृष्टे विद्युद्घण्टिकायन्त्रे चैको मधुरटनटनायमानो ध्वनिः सञ्जायते, समुपस्थिताश्च भवन्ति सर्व एव गृहरक्षका दासा दास्यश्च । सर्वेषामेव कार्यकरणार्थं महाव्यवस्थापकश्च व्यवस्थां करोति प्रतिदिनमेव ।

यस्य च भवनस्य प्राकारान्तरालोद्यानस्य मध्यवर्ती जलपरिपूर्णो वर्तुलाकारो निर्झरो वर्तते ।

यतो रात्रौ कदापि दिवा यन्त्रद्वारा जलक्षरणं भवति । रात्रौ

विद्युत्प्रकाशविभासित श्वेतरक्तपीतकृष्णहरितवर्तिकामहावर्तिकान्वित श्वेतरक्तपीतकृष्णहरितरक्तचाकचक्यसमुद्भासित निर्झरचल सदसोद्यान-गताना जनाना मनो हरति ।

तत्र कदापि मुक्ता मणि सायकाले वायुसेवनार्थं गच्छति मित्र मण्डलीसहितश्च परमा प्रसन्नतामाप्नोति ।

भवनस्यातीव रमणीय विविध गार्हस्थ्यवस्तुसमन्वित वर्तते ।

भवनस्यैकभागे प्रभावत्या पूजागृहमेक यत्र प्रभावती पूजन करोति सन्ध्यावन्दनादिकार्यं मुक्तामणिरपि ।

भवनस्यैकभागे पाकशाला, यत्र प्रतिदिनमेव विविधा पाका पच्यन्ते ।

पाकशालाया पाचितानि बहुविधानि स्वादूनि भोज्यानि वस्तूनि भोजकेभ्योऽन्यत्र प्रशस्ततमे भोजनगृहे कुर्शिकोपरि सस्थिताना मुक्ता-मणिप्रभृतीना सविधे गोलमञ्चोपरि परिवेषयन्ति परिवेषका स्वच्छ-परिधानशोभितगात्रा ।

तत्र च सर्वे भुञ्जते प्रतिदिन सुप्रसन्नतया मुक्तामणिप्रभृतय ।

भवनस्यैकभागे स्नानगृहम् । अपरत्र शीततापनियन्त्रित स्वच्छसु कोमलशय्यासमन्वित विद्युद्वर्तिकोपशोभित विद्युद्गीतयन्त्रमधुर ध्वनिनिनादित कतिपयवृहद्दर्पणोद्भासितमनेकचित्रचमत्कृतमतीव परिष्कृत मुक्तामणिशयनगृहम् ।

एकश्च महाभोजनालयोऽप तस्मिन्नेव भवने विश्वे यत्र यदा कदा मुक्तामणिगेहे समागता बहवो विशिष्ट अतिथय परि चर्ताश्च भुञ्जन्ते ।

तस्मिन्नेव भवने चैक भाण्डागारगृह यत्र सर्वविधा अपाचिता भोज्यपदार्था राशीभूता सर्वदैव सुरक्षिता, विविधानि च फलानि राशीभूतानि विद्यन्ते ।

एकत्र स्वर्णरजतनिचलकान्यनिर्मितकलशस्थालीपानदर्वीकटाह भृङ्गारस्रुचिकादिस्थापनगृहं विद्यते ।

*अन्यदेकं वस्त्रगृहं वर्तते तत्रैव, यत्र बहुविधकौशेयकार्पासनिर्मितानि* चित्रविचित्ररङ्गयुतानि मुक्तामणेः प्रभावत्याश्चापि सुवस्त्राणि वर्तन्ते ।

एकत्र प्रभावत्याः शृङ्गारगृहञ्चापि वर्तते, यत्र गत्वा प्रभावती स्वच्छाश्चित्रविचित्राः शाटिकाः स्तनपट्टिकाः विविधालङ्कारान् कञ्चुकांश्चापि परिदधाति तथा तत्रस्थे विशाले दर्पणे चावलोकयति शृङ्गारविमण्डितं स्वकीयं सम्पूर्णशरीरम् ।

तस्मिन्नेव गृहे रत्नमाणिक्यस्वर्णालङ्कारभरिताः समर्थतालिकान्विता बहुमञ्जूषा याः कुञ्चिकाभिः समुद्घाट्य निस्सार्य चालङ्कारान् स्वकीयं सर्वाङ्गमलङ्करोति प्रभावती ।

अन्यान्यपि सुसज्जितानि जलयन्त्रघटीयन्त्रविद्युद्वर्तिकाविद्युद्व्यजनशय्याद्युपकरणान्वितानि शौचस्थानसम्पन्नानि सर्वतोभावेन सुसज्जितानि गृहाणि मुक्तामणिभवने वर्तन्ते ।

सम्पूर्णमेव भवनं तस्य श्वेतचूर्णश्वेतीकृतं रात्रौ चन्द्रांशुभिरतीव रमणीयं विभाति ।

प्रतिदिनमेव बहवो जनाः तैलयानाश्वयानादिभिः केचन पदातयोऽपि मुक्तामणिभवनमागच्छन्ति विविधा वार्ता विधातुम् ।

समागतैस्तैर्विशिष्टजनैः सर्वदैव महता जनसम्मर्देनाकुलीभूत*मिव दृश्यते मुक्तामणिभवनम् ।*

एवंविधो विविधभाषापारङ्गमः सर्वजनसमादृतो वाक्कीलकर्मप्रधानो मुक्तामणिः प्रातरेवोत्थाय स्वकीयां कुलदेवीं संस्मृत्य वायुसेवनार्थं भवनाद्बहिर्गच्छति ।

वायुसेवनात्परमागत्य स्वभवनं स्वशरीरे सम्मर्दिततैलः साबुनेन स्नानं करोति । पश्चाद्गायत्रीजपादिकं विधाय भुक्त्वा स्वकीयकार्यालये सर्वकार्यजातं सम्पाद्यान्यायालयं गच्छति तैलयानेन ।

तत्र कतिपयाभियोगेषु स्वकीय वितर्कं न्यायाधीशसविधे दत्वा कृत्वा चाभियोगीना सर्वाण्येव कार्याणि प्रायेणास्ताचलावलम्बिनि भगवति भास्करे स्वकीयलेखकैः कर्मचारिभिश्च सहैवागच्छति स्वकीयमानन्द-दायक भवनम् ।

तत्र चहापानादिलघ्वशन कृत्वा स्वकीयभवनस्य एव कार्यालये समागत्य तत्रोपस्थितैरभियोगिभिः सहावश्यकीं वार्ता विधाय भोजनानन्तर भगवतः सस्मरणपूर्वक शयन करोति ।

एवविधसर्वसौख्यवैभवसम्पन्नस्य मुक्तामणिविप्रस्य परलोकोद्धारकः स्वकीयवशवर्द्धनश्च नासीत् कोऽपि पुत्रः ।



: ३ :

# प्रभावतीविषादवर्णनम्

सर्वविधकार्यकारकस्य प्रधानवाक्कीलस्य चेतसि शङ्काविनाप-स्यतादुःस्य निहितमासीत्।

एकदा तस्य धर्मपत्नी प्रभावती स्वामिनः सकाशं रहसि गत्वा सविनयं प्रोवाच—

'स्वामिन्' नास्ति कापि सन्ततिः। आवयोरुपरते कोऽस्य विशालस्य वैभवस्योपभोक्ता विशालस्य भवनस्याधिपतिस्तैलयानाधिरोढा देव-पूजनकारको ब्राह्मणानां गवाञ्च सेवकः समागतानामतिथिनां सत्कारकारकः विशेषेणावयोरुपरते श्राद्धकर्ता पूर्वपितॄणां जलाञ्जलि-दाता सदाश्रितानां भृत्यानां परिपालकः समागतेभ्यः साधुभ्यः सन्यासिभ्यो भिक्षुकादिभ्यः सम्मानपूर्वकं भिक्षाभोजनादीनां प्रदाता, रत्नानां कौशेयवस्त्रादीनां परिधारकः कुलक्रमागतानां व्रतयात्रामहोत्सवानां सञ्चालकः सर्वेषां मित्राणामभिनन्दको वेदविदुषां भूदेवानां सम्मानका-रकश्च भविष्यति ?

अनपत्यत्वदुःखदग्धां मां सखीजनो नाभिनन्दति। पुत्रवतीनां युवतीनां मध्ये गमने लज्जते मे हृदयं, तेनाम्बा स्ववत्सभुजाल ताम्यति मनः, कम्पन्ते गात्राणि, मुखे नायाति वचनं हस्तौ किमपि कार्यं नैव कुरुतः रात्रौ निद्रानायाति सर्वं दुःखं चिन्तयन्ती व्यतीता करोमि शर्वरीम्, दिवा कार्येषु मनो नैव स्थिरं भवति, विविधभोजनेषु रतिर्नैव जायते। विविधानां पेयपदार्थानां पाने स्वकीयेच्छापि न भवति। विविधानां शृङ्गारसामग्रीणां दर्शनेच्छापि नैव समुत्पद्यते। अतोत्सवादिषु गीतादि-गानन्नैव निःसरति मुखात्, किं कथयामि समानावस्थानां सर्वासामेव वनितानां पुत्रा अभूवन्, कासाञ्चित् पौत्राअपि। किन्त्वहो दैवदुर्वि-पाकोऽद्यावधि न कापि सन्ततिरावयोरुत्पन्ना।

भर्तः ! कदा द्रक्ष्यामि पुत्रमुखं कदा च धूलिधूसरितो बिलालको

बालको मदुत्सङ्गे विहरिष्यति, कदा विविधगायनैः स्वकीयं स्वदन्तं बालकं प्रबोधयिष्यामि, कदा बालैः सह विहरन्मे बालो बहुश आहूतोऽपि नागमिष्यति। कदा तैलशाकुनाभ्यां संस्नाप्य स्वकीयं बालकं विविधैः सुवस्त्रैरलङ्कारैश्चालङ्कृत्याङ्के निधाय हर्षोत्फुल्लवदना गमिष्यामि सखीनां मध्ये। कदा च जातस्य कुमारस्य जातकर्मनामकरणान्नप्राशनकर्णछेदनमुण्डनयज्ञोपवीतोद्वाहादिसंस्कारान् करिष्यामि। कदा च नवागताया वध्वा द्रक्ष्यामि मुखम् ?

प्राणनाथ ! कोऽप्युपायो विधातव्यो येन पुत्रो भवेत्।

हृदयेश्वर ! श्रूयते यद्राजा हरिश्चन्द्रो वरुणमाराध्य रोहिताश्वनामानं पुत्रमवाप। राजा दशरथो वशिष्ठानुमतेन ऋष्यशृङ्गमुनिना पुत्रेष्टियज्ञं कारयित्वा चतुरः पुत्रान् लेभे।

तथा च जाम्बवत्या प्रार्थितेन श्रीकृष्णेनोपमन्युनामकमृषिं स्वगुरुं विधाय कैलासे कठिनं तपस्तप्तम्। तपसा प्रसन्नो भगवानाशुतोषः श्रीकृष्णाय वरप्रदानञ्चकार येनासौ जाम्बवत्या साम्बनामानं पुत्रमलभत।

देव ! कृतेऽप्युपाये यदि कोऽपि बालो नैव भविष्यति तदा नास्त्यावयोर्दोषः।

एवमुक्त्वा विरतवचनायां तस्यां मुक्तामणिभिन्नयनैव सगद्गदं प्रोवाच—

सुमुखि ! अस्त्यावयोः किमपि प्राक्तनं कर्म, येन पुत्रलालनसुखं नैवानुभवावः।

देवि ! इतोऽविदूरे भागीरथ्यास्तटे श्रीसदानन्दब्रह्मचारिण आश्रमो वर्तते। श्रूयते हि स ब्रह्मचारी महातपस्वी परमोदार्शनिक उद्भटवक्ता सर्वशास्त्राणां विज्ञाता भूतभविष्यद्वर्तमानविषयविज्ञानसम्पन्नश्चास्ते। तस्यैवाश्रममागामिनि दिवसे प्रातरेव गमिष्यामि त्वया सह। विश्वासो वर्तते मम चेतसि, यदसौ कमप्युपायमवश्यमेव विधास्यति, येनावयोरवश्यमेव प्राप्तिर्भविष्यति पुत्रस्य।

लोलाक्षि ! चेतसि धैर्यमाधत्स्व, देवेषु गोषु ब्राह्मणेषु सन्यासिप्रभृतिषु भक्तिमधिकां कुरु, भगवतः पूजायामधिकं विश्वासं विधेहि । प्रसन्ने भगवति सकलमेव क्लेशजातं समुदिते सूर्ये नीहारमिव विनाशमुपयाति । सर्वमेव मनोऽभिलषितं कार्यञ्च सम्पन्नं भवति । भागवतादि पुराणेषु सर्वत्रैव भगवतश्चरणारविन्दसेवनमेवाशेषक्लेशहरं वर्णितं महर्षिभिः, एवमुक्त्वा विरतोऽभूत् मुक्तामणिः प्रभावती च पुनराश्वस्ता शान्विता च ।

अथ द्वितीयेऽह्नि प्रातरेवोत्थाय मुक्तामणिः शीघ्रतया नित्यक्रियाञ्च सम्पाद्य स्वपत्न्या प्रभावत्या विश्वसितेन भृत्येन सम्मतिदायकेन चानुगम्यमानः सुगन्धिना माला फलादिकञ्चादाय सदानन्दब्रह्मचारिण आश्रमं प्रतस्थे ।

मार्गे गच्छन्मुक्तामणिः गङ्गास्नानं विधाय धृततिलकं भगवतः पूजार्थं गङ्गाजलपरिपूर्णं कलशं कमलादिपुष्पाणि वहन्तं स्वच्छवस्त्रधारकं पौराणिकं भगवतः स्तुतिं पठन्तं बद्धशिखं गौरवर्णं ब्राह्मणं हस्ते धृतवेदपुस्तकं स्नातानुलिप्तं धृतोत्तरीयधौतं विशोरं पठनार्थं गुरोः समीपं गच्छन्तं विद्यार्थिनं स्वाङ्के स्वदारं बालकं निधाय स्वपतिना सह देवदर्शनार्थं यान्तीं पीताम्बरां कृतभालसिन्दूरां कज्जलोपशोभितनेत्रां विविधालङ्कारालङ्कृतां सुमुखीं सुन्दरीं ललनां नित्यार्थं मस्तककृतदधिपूरितभाजनां गोपपत्नीं वृषभानन्थ मल्लं नेतारं मल्लं विजेतारं सव्यामृतं सवत्साश्च गा दृष्ट्वा सानन्दो मुक्तामणिः ।

तस्मिन्नेव समये मुक्तामणिदक्षिणभुजः प्रभावत्याश्च वामभुजः सहैव प्रास्फुरताम् ।

अन्यान्यपि बहूनि शकुनानि तस्य बभूवुः मार्गे गच्छतः ।

# मुक्तामणिसदानन्दवार्ताप्रसंगः

प्रशान्त मुनिमानसमिव पवित्र गंगाजलप्रवाहमिव, धीरगम्भीर-पुरुषनिषेवित राजप्रासादमिव, गतागतबहुजनसमाकुलसुधन्या-थालयमिव बहुशिष्यसमावृत महाविद्यालयमिव विविधपशुपक्षि-निषेवित महावनमिव वेदपाठिभिर्ब्राह्मणैरुपशोभित यज्ञमण्डप-मिव, विकसितपुष्पावलिविमण्डित पुष्पोद्यानमिव, दर्शनार्थिनरिपूर्ण-देवमन्दिरमिव, कोकिलालापगुञ्जित वसन्तमिव, नृत्यन्मयूरघनि-सहित प्रावृट्समयमिव, सर्वजनाभिलाषापरिपूरक कल्पवृक्षमिव, मानव-कोलाहलविवर्जित महापुरुषकालयमिव, षड्दर्शनशास्त्र विचारकै सवृत्त विद्वानस्थानमिव, बहुविधरत्नसम्पन्न रत्नापणमिव, शुष्य-न्मुनिजनचोरवल्कलोपशोभितवृक्षम् घनच्छाय निनाद निस्ताप निर्माय गतमत्सर धनैषणारहितमग्निहोत्रधूमसुगन्धित कुशौगोम-यैश्चापूरित भगवद्भजनकीर्तनकारकैर्भक्तिसम्पन्नै मुनिभिरलङ्कृत करपात्रैः कुटीचकैर्हंसैः परमहंसैरजगरवृत्तिधारकै काषायाम्बराच्छादितशरीरै ब्रह्मविचारसलग्नै कमण्डलुविराजितहस्तैश्चसाधुभि समावृत रोमन्थ कारणीभिर्वत्सतरीसहिताभिर्दुग्धप्रदायिनीभिर्गाभिरुपशोभित वेदाध्यय नकारिविद्यार्थिगणसस्वरवेदपाठगुञ्जित तृणकाष्ठविनिर्मितैर्बहुभिरुटजै-र्ब्रह्मविचारसलग्नै र्वेदा-तमर्मज्ञै कतिपयभागवतादिकथावाचकैर्भूसुरैश्च विमण्डित दीयमानान्नदान सेव्यमानदीनानाथ क्रियमाणविविध प्रश्नोत्तर पाठ्यमानधर्मशास्त्र भण्यमानसर्ववेद पठ्यमानविविधपुराण जप्यमानबहुमन्त्र नमस्क्रियमाणदेव दीयमानसूर्यार्घ्य तृप्यमाणपितृगण गीयमानसामगान सत्क्रियमाणातिथि सर्वत्र गम्यमानमृग विलीर्य-माणौषध सर्वजनमनोह्लादकर परमरमणीयमाश्रम समाजगाम सदा-नन्दस्य सपत्नीको मुक्तामणि. सभृत्यश्च ।

तत्र बहुशिष्यसमावृत दीर्घश्मश्रु पिङ्गजटाभार चन्दनोद्भासित

भाल स्वहस्तनिर्मितयज्ञोपवीतोद्भासमानशरीरं दीर्घनेत्रमुन्नतललाटं जितेन्द्रियं तेजसा सूर्यबिम्बादप्यमितं सुस्थिरशरीरमनतिमस्पृष्टक्रोधं चन्द्र-मिव सुशीतलं परमकारुणिकं सदानन्दब्रह्मचारिणं ददर्श मुक्तामणिः। पत्न्या भृत्यैश्च सह कृतप्रणामः स तत्रैव समुपविवेश।

अथ दत्ताशीर्वादः सदानन्दस्तं प्रत्युवाच—"तारापुरीनिवासिन्-भूसुर-कुलावतंस! गृहाश्रमिणो भवतः सर्वं कुशलं? गार्हस्थ्यधर्मः सम्यक् परिपाल्यते भवता? गृहागतानामतिथीनां सेवनं यथोचितं भवता गेहे भवति कच्चित्? नित्यनैमित्तिकञ्च कर्म सुष्ठु सम्पद्यते सुतराम्? अपि खलु भगवतः सर्वमेव कार्यजातं सम्यक् प्रचलति? कथमिवो-दासीन्यपरिपूर्णमुखं निरीक्ष्यते भवतो धर्मपत्न्याः?"

इत्युक्ते वर्णिनि मुक्तामणिः प्रोवाच साश्रुकण्ठम्—

"देव! नास्त्यविदितं किञ्चिद्भवतस्तथापि पृच्छ्यते चेत्कथयामि। भगवन्! गृहाश्रमिणो मम सर्वधनपरिपूर्णं भवनं, भृत्या आज्ञाकराः छन्दानुवर्तिनश्च सर्वगुणसम्पन्ना सर्वदेवाज्ञाकारिणी धर्मपत्नी च। गवां सेवनं परिपालनञ्च सम्यक्तया भवति। भगवतः पूजनं होमादिकञ्च यथोत्साहं मया नियतं एव। किम्बहुना, सकलमेव सांसारिकं सुखं मद्गेहे पङ्कभूतमिवावतिष्ठते। किन्तु भगवन्! नास्ति मे नरकाद्दुद्धार-कारिका कापि सन्ततिः। आवयोः पञ्चत्वमापन्नयोः कः श्राद्धादिकर्ता कश्च तिलाञ्जलिप्रदाता भविष्यति? कोऽप्युपायोऽनुष्ठीयतां येन पुत्रो भवेत्। यदि भवेन्मन्त्रजपस्य तान्त्रिकमन्त्रविधानस्य हवनस्य यज्ञस्य वाऽवश्यकता, तत्सर्वमेव कर्तुं समुद्यतोऽस्मि। भवदाज्ञानुसारं धन-राशिव्ययोऽपि पुत्रार्थं कर्तुं समुद्यतो भविष्यामि। भवतो यथाज्ञा, सर्वमेव धार्मिकं कार्यं तथा सम्पादयिष्यामि। भवत्सविधे यस्य प्रश्नस्योत्तरं यस्याभिलाषस्य प्रपूर्तिश्च नैव भविष्यतः, मन्ये, तस्य प्रश्नस्योत्तरं तस्याभिलाषस्य पूर्तिश्च नैव कुत्रापि भवितुं शक्या।"

इत्युक्त्वा विरते मुक्तामणौ प्रथमाश्रमी प्रोवाच—

: ५ :

# मुक्तामणि-पुत्रजन्मोत्सवः

अथ कदाचित्प्रभावती दैवयोगात् शुभेऽह्नि गर्भवती जाता। मुक्तामणिश्च यथासमयं गर्भाधानपुंसवनसीमन्तोन्नयनसंस्कारान् परमानन्दसन्दोहं सम्पादयामास। तदनन्तरमेव शुभग्रहावलोकितवेलायां शुभेऽह्नि भाग्यवन्तं बालकं जनयामास प्रभावती।

हिमार्तस्य सूर्येणेव, घर्मार्तस्य चन्द्रेणेव, श्रमार्तस्य विश्रामेणेव, गच्छतो गमनस्थानप्रापणेनेव, कुटिलानां कौटिल्येनेव, साधूनां परोपकारेणेव, दुर्जनानां परदुःखेनेव, कितवानां स्तैन्येनेव, पिपासितानां पानीयलाभेनेव, कृषकाणां समुत्पन्नशस्यविलोकनेनेव, मयूराणां घनगर्जनेनेव, चकोराणां चन्द्रेणेव, परीक्षार्थिनां प्रथमश्रेण्यामुत्तीर्णताप्रापणेनेव, निर्वाचने समुत्थितानां स्वविजयलाभेनेव, मुक्तामणेः स्वकीयपुत्रदर्शनेन परमानन्दसन्दोहः समजनि। कृतनान्दीश्राद्धो मुक्तामणिः स्वकीयपुत्रस्य जातकर्मसंस्कारं कारयामास।

अथ नामकरणदिवसे मुक्तामणेः सर्वे एव परिचिता बान्धवा राजकीयकर्मचारिणः कतिपयश्वेताङ्गाश्च निजनिजपत्नीसहिताः समानन्दसम्पन्नं गेहं समाजग्मुः। तद्दिने मुक्तामणिगेहं सुपरिष्कृतं सुसज्जितं बहुविधगीतवाद्यसहितं गतागतजनसमाकुलञ्च बभूव। बान्धमानैर्विविधवाद्यमन्त्रैर्यत्र तत्र भ्रममाणैर्व्यवस्थापकैर्महाव्यवस्थापनैर्निरीक्षकैर्बहुविधवेषधारकैः परिचारकैश्चित्रविचित्रशाटिकास्तनपट्टिकाधारिकाभिर्दासीभिश्च बहुमूल्यालङ्कारशाटिकास्तनपट्टिकासुसज्जिताभिः समुन्नतपादत्राणालक्तकालङ्कृतपादाभिः समुन्नतस्तनाभिः प्रभावतीपरिचिताभिः सौन्दर्यशालिनीभिर्ललनाभिरनेकविधशैलयानैरश्वयानैः पादयानैर्गीतगायनकुशलाभिः कुमारिकाभिश्च परिपूर्णमभूद्गेहं मुक्तामणिमुरस्य।

अनन्तरं वेदविदुषो बृहच्छिखाः धृतधौतवस्त्रोत्तरीया ब्राह्मणाः सर्वां पूजासामग्रीमेकत्रीकृत्य होमार्थं वेदिकाञ्च विनिर्माय पूजाकरणार्थं प्रभावतीसहितं मुक्तामणिमाकारयाञ्चक्रुः। स्वधर्मपत्नीसहितः प्रसन्नवदनो

मुक्तामणिः पूजास्थानमागत्य ब्राह्मणान्नमस्कृत्य स्वकीयासने समुपविष्टः ।

ब्राह्मणाश्च स्वस्तिवाचनपूर्वकं गणपत्यादिदेवानां पूजनं मुक्तामणिना कारितवन्तः । पूजावसरे नर्तका अनृत्यन्, गायका माङ्गलिकानि गानानि समगायन्, कुलवध्वः कुमार्यश्च सर्वा अतीव रमणीयं गीतवितानं समारेभिरे । कर्णप्रियाणां मधुराणां वाद्ययन्त्राणां सुन्दरो नादः सञ्जातः । तस्मिन्समये मुक्तामणिभवनं परममाङ्गलिकगीतवाद्यादिसहितं महाह्लादसम्पन्नं सम्बभूव ।

पूजनानन्तरं ब्राह्मणाः शास्त्रं विचार्य जातस्य कुमारस्य श्रीरत्न इति नाम कृतवन्तः । किन्तु जनेषु तस्य प्रसिद्धी रत्नलाल इति नाम्ना जाता ।

पश्चात् भूदेवाः हवनं विधायावाहितान् सर्वानेव देवान् विसर्जयामासुः । कृतभोजनेभ्यो ब्राह्मणेभ्यो गोफलवस्त्रालङ्काररत्नमाणिक्योपशोभितां मनोभिलषितां दक्षिणां ददौ मुक्तामणिः । गृहीतदक्षिणाः सुप्रसन्नाः ब्राह्मणाः वेदमन्त्रैः शुभाशिषः प्रदाय मुक्तामणिकृतप्रणामाः सानन्दाः सहासाश्च स्वस्वावासं गतवन्तः ।

अथ समागतानां सर्वेषां कुटुम्बानां बान्धवानां परिचितानां मित्राणां दूरस्थानेभ्यः समागतानां नानाजातिसमुद्भवानां राज्याधिकारिणां वाक्कीलानां सपत्नीकानामपत्नीकानाञ्च प्रीतिभोजनारम्भो बभूव ।

स्वच्छवस्त्रदत्तोष्णीषधारकाः सुस्वादुभोज्यपदार्थपरिवेषकाः जलपूर्णभृङ्गारकसहिताश्च केचन परिवेषकाः पङ्क्तिबद्धेषु समुपविष्टेषु भोजनं कुर्वत्सु सर्वेषु परिधावन्तोऽपेक्षया पात्रेषु भोज्यं जलं वा परिवेषयन्तो विरेजिरे ।

इत्थं सर्व एव समागता अतिथयो भोजनं विधायाचमनीयञ्च कृत्वा गृहीतैलालवङ्गपूगीफलताम्बूला नवजाताय बालकाय मौक्तिकहारं स्वकीयाशीर्वचनञ्च प्रदाय तैलयानाश्वयानपादयानादिभिरन्ये केचन पदातयश्च सपत्नीका अपत्नीकाः समाया सभृत्याः सर्व एव स्वकीयं गेहं प्रतस्थिरे ।

एतत्सर्वमेवानन्दसन्दोहं विलोकयन्ती प्रभावती परमानन्दसिन्धुनिमग्नाऽभवत् ।

: ६ :

# दैवज्ञ-समागमः

अथैकस्मिन् दिवसे भूतभविष्यद्वर्तमानज्ञानसम्पन्नो ब्रह्मतेजसा समुद्भासितशरीरः स्निग्धवृद्धश्मश्रुरनुपानत्को धृतधौतोत्तरीयोष्णीषो ज्योतिःशास्त्रपारङ्गमो विष्णुदत्तो नामा कश्चिद् दैवज्ञः समाजगाम मुक्तामणिभवनम् ।

बहुप्रसन्नमना मुक्तामणिर्दैवज्ञं नमस्कृत्य स्वयमासनं विस्तीर्य तत्र दैवज्ञं समुपवेशितवान् । समुपविष्टे दैवज्ञे पाद्याचमनीयार्घ्यादिभिस्तस्य पूजनं विधाय तेन गृहीताशीः स्वयमपि मुक्तामणिः स्वासने समुपविश्य दैवज्ञं सविनयमुवाच—

"भूसुरकुलावतंस ! कुतः समागम्यते भवता, किन्नामधेयश्च भवान् ? कथमिव पवित्रीकृतं मद्भवनम् ? यदि श्रावयितुं योग्यानि वर्तन्ते तदा कृपया श्रावयतु सर्ववृत्तजातानि ।"

दैवज्ञः कथयति—"भूदेव, मगधदेशोद्भवो विष्णुदत्तो नामा ब्राह्मणोऽहम् । बहुवर्षाणि यावद्वाराणस्यां निवासं विधाय ज्योतिःशास्त्रमपठम् । पश्चाद् गार्हस्थ्यधर्मं परिपालयन् ग्राम एव वसामि । इदानीं खलु भागीरथ्यां स्नातुकामस्तारापुरीमागतोऽहं भवतो नाम भवद्गेहे पुत्रजन्मोत्सवञ्च श्रुत्वा स्वेच्छयैवाहं भवन्निकेतनमागतोऽस्मि । बालकाय स्वकीयाशीर्वचनं प्रदाय पुनः शीघ्रमेव गमिष्यामि स्वकीयगेहम् । कृषिकर्मकारस्य ग्रामीणस्य ममापि बहूनि कार्याणि गेहेऽपि विद्यन्ते खलु ।"

इत्थं नाक्षत्रिकवचनं श्रुत्वा मुक्तामणिः प्रसन्नोऽप्यधिकां प्रसन्नतामापन्नो मातुरङ्कस्थितमेव बालकं श्रीरत्नं समानीय तेन नमस्कारितवान् दैवज्ञम् ।

दृष्ट्वा श्रीरत्नं परमः प्रसन्नो दैवज्ञस्तस्मै शुभाशीर्वचनं प्रदत्तवान् ।

पुनर्मुक्तामणिस्तं दैवज्ञं पप्रच्छ—"भगवन् ! किं ममायं बालो यथा

क्रमागतकुलरीतेः संरक्षणं करिष्यति ? किं भविष्यत्ययं वंशवृद्धिकरः स्वगार्हस्थ्यसञ्चालकः सर्वजनप्रीतिभाजनो मधुरालापकर्ता स्वशौचाचारविचारसम्पन्नः सर्वविद्याममज्ञो विदुषां सम्मानकारकः स्वयशसा मण्डितभूलोकश्चेति ? यथास्य जातकफलं तथा भवान् सर्वमेव कथयतु । जानाम्यहं भवत्कथितं सर्वमेव वचनं सत्यं भविष्यतीति ।"

एवं पृष्टो दैवज्ञः प्रोवाच—"मुक्तामणे । भवतः पुत्रो विश्वशान्तिप्रदाता दुःखार्तजनानां दुःखविनाशने सर्वदा यतमानो दयया जीमूतवाहन इव, त्यागे बलिरिव, भाषणे विधायाञ्च बृहस्पतिरिव, स्वकीयोज्वलकीर्त्या सर्वत्र विख्यातः सर्वविधकष्टसहिष्णुर्विलक्षणसगठनशक्तिसम्पन्नः सर्वजनोपरि स्वप्रभावसंस्थापको राजाधिराजपदवीमलब्ध्वापि राजाधिराज इव शासनाधिकारसम्पन्नः सर्वजनकल्याणे प्रदत्तमतिर्भारतस्य प्रधानो भविष्यति ।

कियद्वर्षेभ्यः एताय संस्थापितस्य काङ्ग्रेसस्यापि बहुवारं सभापतिपदमलङ्करिष्यति । अथ च तिलकगोखलेगान्धिप्रभृतिकाङ्ग्रेसप्रधाननेतृभिः सह मिलित्वा देशस्य स्वतन्त्रतान्दोलने महत्तमं योगदानं करिष्यति । पुनश्चोपरतेषु प्राचीननेतृषु यदा गान्धीमहात्मा स्वतन्त्रतान्दोलनं सञ्चालयिष्यति तदा तदाज्ञानुसारं सर्वजनैः सह सर्वमेव कार्यं विधायायं तव बालको भारतं स्वतन्त्रं करिष्यति।" इत्युक्त्वा दैवज्ञो विश्रान्तिमापेदे ।

पुनर्मुक्तामणिवार्तां विस्तारयन्नेव दैवज्ञं प्रोवाच—"नाक्षत्रिकप्रवर ! कथमिवायं भारतो देशः पराधीनो बभूव, कीदृशश्चेतिहासो देशस्यास्य प्राचीनो वर्तते ? कृपया सर्वमेव प्राचीनेतिहासं कथयतु सम्प्रति त्रिकालज्ञो दैवज्ञो भवानिति ।"

# सृष्ट्युत्पत्ति-विचारः

दैवज्ञ कथयति—'श्रूयतां भारतेतिहासो यदि भवता इष्यते ! भारतीयशास्त्रानुसारं चतुर्दशमन्वन्तराणि भवन्ति। तेषु षण्मन्वन्तराणि व्यतीतानि सन्ति। सप्तमं वैवस्वतं नाम मन्वन्तरं प्रचलत् भवति साम्प्रतम्। एतस्य प्रवर्तको विवस्वान् मनुरस्ति। तदुत्पत्तिर्यथा—

विराट्पुरुषस्य भगवतो महाविष्णोर्नाभिकमलाद्ब्रह्मणः समुत्पत्तिः। ब्रह्मणः मनसः मरीचिर्नामा महर्षिरभूत्। तत्पुत्रः कश्यपस्तस्मादादित्यात् सूर्यः समुत्पन्नो बभूव। विवस्वतः पुनः श्राद्धदेव एव वैवस्वतमनुनाम्ना प्रसिद्धो जातः। अथ च वैवस्वतमनोरेव सूर्यवंशस्यारम्भोऽप्यभूत्। एतस्य वंशजाः सूर्यवंशीयाः क्षत्रिया श्चाभूवन्।

तथा कश्यपमुनेः सकाशादेव सर्वस्याः सचराचरायाः प्रजायाः समुत्पत्तिः। यः सर्वस्थावरजङ्गमात्मकः प्राणिनस्तेषामुत्पादकः कश्यपनामा मुनिरेव।

श्रुत्वैतादृशं वचनं भ य एव मण्डयन् मुत्रामणि प्रोवाच—

दैवज्ञवर ! भगवतो ब्रह्मणः सकाशात्सृष्टेरुत्पत्तिर्मानवानां नास्ति कथिता। किन्तु चार्ल्सडार्विनसाहबेन सृष्टेरुत्पत्तेः प्रकारोऽन्य एव वर्णितः। तद्वर्णनं यथा—

### विकासवादस्तत्खण्डनं च

चार्ल्सडार्विना नामा श्वेताङ्गा विकासवादस्य प्रवर्तको भवति जनैः। स च पोतेन यथासम्भवसंसारस्य यात्रां चकार। तथा दूरवर्तिषु द्वीपेषु गत्वा विविधजातीयजन्तूनामवलोकनञ्च कृतं तेन। एकैकजातीयप्राणिष्वगणितभेदमवलोक्यासौ आश्चर्यचकितो बभूव। अत एव मालथसप्राणिसंख्याविचारं पठित्वासौ इत्थमनिदमपि यद् १,२,४,८,१६, एतज्ज्यामितिरेखागणितानुसारं जीवधारिणां संख्यावर्धनं भवति, तथा खाद्यसंख्यावर्धनं १,२,३,४, एतदङ्कगणितक्रमानुसारं भवति। युद्धे

महामारिभिर्विविधैश्च संहारैर्जनसंख्या सीमितास्ति । अथ च डार्विनसाहब एवमपि निश्चितवान् यत् प्रतिद्वन्द्वितासंघर्षौ निश्चितौ स्तः । एतयोर्मध्ये योग्यतम एव रक्षितो भवति । कयाचिद्विशिष्टशारीरिकरचनया तथा विशिष्टशक्त्यैव विशेषप्रदेशेषु प्राणिनां जीवनस्य सुविधा भवति । एवमेव ये विशिष्टनिवासस्थानेषु योग्यशरीरवन्तो भवन्ति तेषां सन्ततिवर्धनमपि जायते । अन्येषां जातयो नष्टा भवन्ति । यद्वा स्वसौविध्यानुकूलमन्यत्र गत्वा स्वप्राणरक्षणं कुर्वन्ति । प्रकृतिश्च योग्यतमानां चयनं कृत्वा तान् रक्षति, अन्यानुपेक्षते च । अत एवायोग्या विनष्टा भवन्ति । अथ च डार्विनमतानुसारं प्रतिद्वन्द्विता शाश्वता सार्वत्रिकी च वर्तते । प्राणिनामभिवृद्धिरेव जीवनसंग्रामादिकारणम् । बलवान्निर्बलान् विनाश्य स्वं रक्षति । यस्मिन् परिस्थित्यनुसारं स्वं निर्मातुं क्षमता भवति तस्यैव सन्तानवर्धनमपि भवति । एतैर्जीवनसंघर्षैर्विभिन्नगुणानां विभिन्नपरिस्थितीनामनुसारं भेदो भवति, तथा परम्परानुगताः संघर्षाः अतीव पुष्टाश्च भवन्ति । एतेनावस्थानुरूपपरिवर्तनेन विभिन्नजातीनां प्राकट्यमभूत् । इयं खलु भिन्ना स्वतन्त्रा वा सृष्टिर्नहि विद्यते ।

इत्थं निरीक्षणपरीक्षणानुमानैर्डार्विनसाहबो विकाससिद्धान्तं स्थिरीचकार । यात्रयानेकविधप्राणिनां निरीक्षणप्राणिसंख्यावृद्धि-सिद्धान्तञ्च दृष्ट्वा तेषु योग्यतमरक्षणस्य प्रतिद्वन्द्वितायाश्चानुमानञ्चकार । पश्चादसौ परीक्षणारम्भञ्चक्रे । परीक्षया घोटकमेषपालका जना बहून् परित्यज्य स्वेच्छया पशून् संगृह्णन्ति, तेषु विभिन्नताश्चोत्पादयन्ति । एतदतिरिक्तः पशुपक्षिणां बहवो जातयो या नष्टा बभूवुर्वर्तमानजातिभिः सहाधिकं सादृश्यञ्चावलम्बन्ते । अयमेव भेदो यत् पूर्वजातयो वर्तमान-जातय इवोन्नमना नैवाप्नुवन्त्य आसन् । पृथ्वीस्थितवर्तमानजातीनां सादृश्यमपि तृतीयं प्रमाणम् ।

एतेनानुमीयते यत् प्रारम्भिकसमये क्षुद्रजन्तूनामेवैका जातिरासीत् । तेषामेव सूक्ष्माण्यण्डानि बीजानि वा जलवायुप्रभावेन प्रवाहेण च

समस्तभूमण्डले व्यामान्यभूवन्। तेभ्य एव विकासक्रमानुसार वर्तमानजातया निःसृताः। विकासक्रमस्य चतुर्थं कारणमिदमपि यद् गर्भावस्थायां सर्वा एव जातयः समाना दृश्यन्ते। अनेकजन्तुषु कतिपयप्रारम्भिकेन्द्रियाणि गर्भावस्थायामेव भवन्ति। तेषां पूर्णविकासोऽपि नैव भवति। एतेनापि प्राकृतिकचयनस्य योग्यतमरक्षायाश्च सिद्धान्तः सिद्धो भवति।

२. अथ च चार्ल्सडार्विनमतानुसार मानवानां बुद्धिशरीरयोः साम्यं पशूनां बुद्धिशरीराभ्यां सह विद्यते अतो यथा मत्स्येभ्यः कच्छपपक्ष्यादिक्रमेण वानराणामाविर्भावोऽभूत्तथा वानरेभ्यो मानवानामाविर्भावश्च जातः। डार्विनमतानुसारं वानरा यदि नराणां पूर्वजा न सन्ति, किन्तु तेषां भ्रातृपुत्रा अवश्यमेवेति। अथ च वानरनरयोः पूर्वज एकोऽवश्यमेव।

पशुषु स्मृतिसौन्दर्यज्ञानसहानुभूत्यादयो गुणा मानवतुल्या एव वर्तन्ते। अश्वाः श्वानश्चापि शिक्षिता भवन्ति। अतस्तेषु विवेकोऽपि भवति। एवं सामान्यकीटेभ्यः समारभ्य मानवपर्यन्तं क्रमिकविकास एव स्वीकार्यः।

मध्यश्रेणीयजातीः परित्यज्य कीटमनुष्ययोर्भेदो महान् दृश्यते। किन्तु क्रमानुगतविलोकनेन काप्याश्चर्यकारिणी वार्ता न विद्यते। इत्थं मनुष्यकृतयन्त्राणां गृहाद्यन्यपदार्थानाञ्चेतिहासविलोकनेन आकाशपातालयोरिवान्तरं दृश्यते। किन्तु क्रमोन्नतिदर्शनेन नास्ति किमप्याश्चर्यकरम्।

३. डार्विनमतानुसारं प्रतिद्वन्द्वितासमरौ शाश्वतौ सार्वत्रिकौ च वर्तेते। सहानुभूतिपरोपकारदयादयोऽपि स्वार्थायैव।

यदा कदा मनुष्यो मनुष्यस्य बर्बरः प्रहारको भवति, यदा कदा वानरोऽपि स्वामिनोऽर्थं प्राणमपि ददाति। प्रशंसायोग्यकर्मसु प्राणिनां प्रवृत्तिर्निन्दितकर्मभ्यो निवृत्तिश्च भवतः। एतयोः क्रमेणाभ्यासोऽपि जायते

इति । परार्थं प्रवृत्तिकार्ये सहानुभूतिकार्येऽपि च क्रमशः प्रवृत्तिर्भवति । एतेन प्रतिद्वन्द्विता सिद्धान्ते कापि बाधा नैव जायते ।

४ अत्र दैवज्ञो भक्तमणि प्रत्यकथयत्—भूदेव । ईश्वरविषये डार्विन-साहबस्य को हि विचारो वर्तते ?

मुक्तामणि कथयति—ईश्वरविषये डार्विन किमपि नैवाकथयत् किन्तु मानवानां दुःखमवलोक्य तस्यापि यदा कदा कश्चित् सन्देहोऽवश्यमेव बभूव यद् यदि कश्चित्परमकारुणिकः सर्वज्ञो जगन्निर्माता शासको वर्तते, तदा तेन दुःखरहितसंसारस्य निर्माणमावश्यकमासीत् ।

५ हर्बर्टस्पेन्सरहेमिल्टनमान्सेल्प्रभृतिविकासवादानुयायिन ईश्वर-स्वीकारे यदि बहुविध तर्कं समुपस्थापयन्ति । तद्यथा—स्वतन्त्रजगत्कारणमीश्वरो जगद्बाह्योऽस्ति तदा जगता सह तस्य कोऽपि सम्बन्ध एव नास्ति, सम्बन्धमन्तरा किमपि ज्ञानमेव न भवति । यदि च जगता सह सम्बन्धस्तदा स्वातन्त्र्यं कीदृशम् ? इत्यादि ।

६ एतेषामिदमपि कथनं यद् दिक्कालद्रव्यधृतिशक्तिचित्तात्मपर-मात्मादयोऽज्ञेया वर्तन्ते । एतेषां मूलस्वभावो दुर्बाधानिर्वचनीयौ स्तः ।

७ स्पेन्सरमतानुसारं शक्ते सार्वकालिकी सत्तैव मूलपदार्थो विद्यते । तयैव सत्तया द्रव्याणामनश्वरता, गतेः सातत्यं नियमानामैकरूप्यं शारीरिकमानसिकसामाजिकशक्तीनां परिणामस्तुल्यवर्तित्वं गतेर्दिङ्नियमो रेखानुसारिता गुरुत्वाकर्षणानुसारम् एतयोर्द्वयोर्योगस्तथा गतेरविच्छिन्नप्रवाहश्च निःसरन्ति । तस्या एव गतेर्नियमः सर्वप्रमेयपदार्थेषु संलग्नो-ऽस्ति । एतेषु नियमेषु सर्वव्यापी नियमो विकासस्यैव । एतदनुसारं द्रव्यस्य सदैवान्तरं परिवर्तनं भवति । संसारस्य सर्वे अवयवाः समस्तसमारब्धे विकासे विच्छेदे च संलग्नाः सन्ति । विकासावस्थायां द्रव्याणां घनीभावो विच्छेदावस्थायां शिथिलीभावश्च भवतः ।

८ स्पेंसर एतस्य विकासस्य श्रेणित्रयं मानयति—शक्तीनां केन्द्र-रूपस्वरूपम् । यथा मेघानामेकत्रिते प्रारम्भिकमेघस्य तथा कीटाणूनां

जीवनकेन्द्रेषु दृष्टिगोचर भवति । भेदीकरण मूलस्य बहिरावेष्टनात्पृथग्भूत्वा तस्मिन्नान्तरिकभेदस्योत्पत्ति । स्पष्टीकरण भेदाना निश्चितरूपेण स्वेषु सम्बद्ध सुव्यवस्थित पूर्णरूपधारणम् । विकासे विच्छेदे चायमेव भेदो यद् भूत्वा एक विकासकाले भेदेन सह सघटन विच्छेदे च सघटनाभाव । विकासस्य गतिरनिश्चितसम्बन्धेन व्यवस्थारहितैकरूपतया च निश्चितसम्बन्धे व्यवस्थापूर्णानेकरूपताया च गच्छति । यथा निम्नश्रेण्याय जीवेषु विशेषेन्द्रिय भेदो न भवति । यत्र तत्र लिङ्गभेदोऽपि नैव भवति । एकेन स्पर्शेन्द्रियेणैव सर्वं कार्यं सञ्चलति । किन्तु अनन्तरं यथा यथा विकासश्रेण्या वर्धन्ते तथा तथा तष्विन्द्रियभेदोऽपि जायते । सहैव विभिन्नेन्द्रिये सम्बन्धोऽपि सस्था पितो भवति । मानवेषु सर्वेन्द्रियाणि सगानि भवन्ति, तदैव स्वेन स्वन सम्बन्धेन मानवशरीरस्य रक्षणे वृद्धौ च योगदान कुर्वन्ति । स्पेंसरमता नुसार विकासस्यैव नियम सर्वेष्वन विषयेषु सलग्ना भवति ।

६ विकासवादिना मतानुसार प्राकृतिकपदार्थाना मूलकारणमीथ रोऽस्ति । तस्यैव कल्पनया तरगावल्या च विद्युत्प्रकाश शब्द उष्णता च समुत्पन्ना भवन्ति । तस्यैव सूक्ष्मकणाना नाम इलैक्ट्रोनश्चा प्यस्ति । एतस्यैव सघातेन विद्युन्निर्मिता भवति । अयमेव शक्तिरूपेण स्थूलाकारे 'मैटर' इति कथ्यते । मैटरस्य विरलदशाया नाम गैस , तरल दशाया नाम लिक्विड इति, तथा विशिष्टदशाया नाम सालिड इति विद्यते । स्थिरोत्पन्ना इमे पदार्था घनीभूता आकर्षणविकर्षणनियमाभ्या चक्राकारगत्या सम्पद्यन्ते । किञ्चित्समयानन्तर तदेव चक्र सूर्या भवति । सूर्ये ग्रीष्मतया तथा गतिकारणेन चक्रत्व ( भ्रमणशीलत्वं ) सम्पद्यते । तत एव पृथग्भूता किञ्चिदशा ग्रहा भवन्ति । तेभ्य उपग्रहाणान्निर्माणञ्च जायते । एतादृशेषु ग्रहेषु पृथ्वी नामैको ग्रहो वर्तते । इय पूर्वमुष्णासीत्, क्रमश शीतला जाता । तस्या एव पृथिव्या सकाशाद्वाष्प मेघो जल समुद्रो जीवाश्च समुत्पन्ना । तस्या एवैका शाखा कोष्ठधारिणी 'अमीबा' बभूव । अमीबा एतादृश वर्धनमापन्ना यत्र तस्या भोजनेऽपि सन्देहो

१० एवमेव विकासवादिनो जीवविभाग शास्त्रानुसार साधर्म्य वैधर्म्यानुसारञ्च प्राणिवर्गाणां वर्गीकरण पृष्ठवंशधारिपृष्ठवंशविहीन भेदाभ्यां कुर्वन्ति ।

मुक्तामणिकृत विस्तृत विकासवादवर्णनं श्रुत्वा निराधारेऽभ्रंलिह-प्रासादरचनाकल्पकानाममीषां पाश्चात्यानां बुद्धिवैभवं मनागीषद्धासेन विगणयन् दैवेन क्रमशस्तासां युक्तीनां खण्डनं कुर्वन्नाह—

१ भारतीयाध्यात्मवादिनां विचारे डार्विनस्यैतत्कल्पनायां नाप्यपूर्वा वार्ता नहि विद्यते । वेदान्तिनां ब्रह्म, सांख्यानां प्रकृतिरनन्तप्रपञ्चस्य भाण्डागारं विद्यते । तत्र शक्तिरूपेण सर्वाण्येव वस्तूनि तिष्ठन्ति । प्रथमकारणावस्थायां कार्यशक्तिरव्यक्ता भवति । क्रमशः सहकारि-सापेक्षा भूत्वा व्यक्ता भवति । पृथिव्यामेवानन्तानि बीजानि भवन्ति, किन्तु विशिष्टजलवाय्वोः सम्बन्धेनैवाङ्कुरितपुष्पितफलितानि भूत्वा दृष्टि-गोचराणि भवन्ति । मृन्मयभाजनानां हिरण्मयाभूषणानाञ्च कारणाव-स्थैवैव, किन्तु सहकारिणः कुलालस्य सुवर्णकारस्य चेच्छयैव कार्यावस्थायां मृत्तिकायाः सुवर्णस्य चानेकानि रूपाणि भवन्ति । नैयायिका अपि साधर्म्यवैधर्म्ययोर्विश्लेषणं कृतवन्तः । मूलकारणावस्थात एव विभिन्न-चेतनाचेतनवस्तूनां प्रादुर्भावो बभूव । एताः सर्वा एव वार्ता अध्यात्मवादे विलीना भवन्ति । मत्स्योऽपि प्राणिभिर्दृष्ट एव । कतिपयजना इममपि दृष्टान्तं समुत्थापितवन्तः । एकस्मिन्पात्रे सेटकमित रक्षिते द्राक्षाफले-ऽनन्तरं तस्मिन् पञ्च कीटा भवन्ति । पुनः तेषां वंशवर्धनं पर्याप्तं भवति । पुनर्यथा यथा ते वृद्धिमाप्नुवन्ति तथा तथैकोऽपरान् भक्षयन्ति । प्रबलो दुर्बलान् भक्षयति । शेषे तस्मिन् पात्रे पीन एकः कीटो दृश्यते । जलेऽरण्ये चैव मत्स्यभक्षणनियमो मात्स्यन्यायनाम्ना प्रसिद्धः ।

भागवते विलिखितं स्वल्पम्—"अहस्तानि सहस्तानामपदानि चतुष्प-दाम् । फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥" इति ॥

तथाप्येष स्वाभाविको नहि, किन्तु क्षुधाया एव सर्वोपद्रवः । क्षुधा-

मन्तरा न कोऽपि कस्यापि भक्षको भवति। "क्षुधैव मृत्युः, अशनाया वै मृत्युः" उपनिषद्। किन्तु स्वभावेन सर्वे एव प्राणिनो अमृतस्य पुत्राः। अत एव तेषु समानता स्वतन्त्रता भ्रातृता च सन्ति। अविद्याकामकर्मभिरेव क्षुधापिपासामृत्यूनामुपद्रवास्तेषु भवन्ति नाम।

अथ च विकासवादसम्बन्धे वर्तमानजनानामपि मनसि कतिपयशङ्का समुद्भवन्ति। यासु विभिन्नप्रकारकव्यक्तिषु देशकालाप्रयुक्ता व्यवस्थ प्रवृत्त्या याम्यतमरूपेण चयनीकृत्य रक्षिता परिवर्तिताश्च भवन्ति, तथा तदनुसार नानाजन्तूना विकासो भवति। तासु व्यक्तिषु प्रथम भेद कुत समायात? जातिभेदकारिका विकासकल्पना यदान्तिमभेदोपरि प्रयाति, तदा सापि स्थिरैव भवति। चार्ल्सडार्विनोऽवस्थाभेदेन इन्द्रियाणा शक्तीनामुपयोगानुपयोगाभ्याञ्च व्यक्तिषु प्रथमभेद स्वीकरोति। शीतोष्णाभ्यामवस्थाभ्यामपि व्यक्तिभेदो भवति। यस्या शक्तेर्येषा मिन्द्रियाणाञ्चोपयोगो भवति, सा शक्तिस्तानीन्द्रियाणि च सुरक्षितानि येषामुपयोगो न भवति, तानि नष्टानि भवन्ति।

अध्यात्मवादे तु तत्तदनन्तकार्यानुगुणमेव तत्तत्कारणेषु शक्तयो भवन्ति। सूक्ष्मवटबीजेऽङ्कुरो नाल स्कन्ध शाखोपशाखेपत्रपुष्पफलादीनि विचित्ररूपरसगन्धयुक्तविभिन्नपदार्थाना शक्तयो भवन्ति। ता एव कार्यरूपफलैरनुमीयन्ते। सर्वथा सती विकास कदापि न भवति। अनया दृष्ट्या प्रथमभेदस्यान्तिमभेदस्य च मूलकारण शक्तिभेद एवास्ति।

विभिन्नजीवाना ताभि सम्पर्क कर्मानुसारमवास्ति।

२ *भारतीयाध्यात्मवादिमतानुसार मूलकारणेभ्यो विभिन्नविचित्र* सृष्टिवैचित्र्य कर्मवैचित्र्येण सम्भव भवति, अवान्तरकार्याणा कारणानाञ्च परम्परोपयुक्तैव। कतिपयकार्यकारणेषु प्रकृतिविकृतिभावोऽप्युपयुक्त एव। यथा तस्माद् वा एतस्मादात्मन आकाश सभूत, आकाशाद्वायु वायोस्तेजस्तेजसो जल जलात्पृथिवी पृथिव्या विभिन्न पार्थिव जगत् समुत्पन्न बभूव। किन्तु यथा मुकुटात् कुण्डल कुण्डलात्कटकादयो न भवन्ति

साक्षात्, भवतु नाम कस्मिंश्चिदंशे साम्यम्, तथैव रूपं शब्दो न भवति, शब्दो । गन्धो वा न भवति साक्षात् । यथा चाम्रकदम्बपनसानां मध्येऽन्ये कस्मादन्यस्योत्पत्तिर्न भवति तथैव मत्स्येभ्यो वानराणामुत्पत्ति र्वानरेभ्यस्तत्पूर्वजेभ्यो वा नराणामुत्पत्तिकल्पनापि निराधारा व्यर्था च । अवश्यमेव देशकालजलवायुवैषम्येन तथा गुणेनाल्पत्वाच्च ह्रासविकासौ भवतः । किन्तु तावपि स्वमाभ्योऽभ्यन्तर एव । कनचिद्रूपेण सर्वेषु वृक्षेषु पशुषु समानता विद्यते । किन्त्वेतावतैव कथयितुं नैव शक्यते यत्सर्वेषां मूलकारणमेकमेवेति । यदि विभिन्नतायां विचित्रतायाश्च सूक्ष्मशक्तिः कुत्रापि मान्या तदा कारणेऽपि च मान्या । धान्याद्यदाङ्कुराणां विकासस्तदा तस्मादन्यस्य विकासो नैव भवति । पुष्पाद्यदि फलस्य विकासस्तदा पुष्पात्पुष्पस्य विकासो नैव भवति । तथैव यदि मत्स्येभ्य क्रमेण वानरादयः समुत्पन्ना वानरेभ्यो मानवास्तदा पुनर्मत्स्येभ्यो मत्स्यानामुत्पत्तिपरम्परा कथं विद्यमाना ? एवमेव वानरेभ्यो वानरोत्पत्तिपरम्परा च कथं विद्यमाना ? यथा प्राचीनकाले बीजेभ्योऽङ्कुरास्तथेदानीमपि भवति । एतेन न्यायेन पूर्ववदद्यापि वानरेभ्यो नराणामुत्पत्तिः कथं न भवति ? इत्थं मनुष्येतरेभ्यो मनुष्योत्पत्तेरदर्शनं मत्स्येभ्यो वानरोत्पत्तेः मत्स्यानां वानराणाञ्चोत्पत्तिदर्शनं डार्विनविकासविरुद्धम् ।

संसारे दुःखस्याप्यास्तित्वमीश्वराभीष्टमेव । लौकिकशासकस्यात्म-शुद्ध्यर्थं यथा दण्डविधानमावश्यकं तथेश्वरस्यापीति ।

५ ईश्वरवादिनां दृष्टावेतेषां तर्काणां किमपि महत्त्वं नास्ति । ईश्वरः सर्वं जानन्नपि स्वतन्त्रोऽस्ति । शासकोऽपि कारागारं गच्छति, किन्तु दण्डभोगाय नहि, किन्तु सुव्यवस्थायै । वस्तुतः सर्वद्रष्टुः सर्वशक्तिमतः परमेश्वरादेव विकासोऽपि नियन्त्रितो भवति । अचेतना प्रकृतिरथवान्यत् किमपि जडतत्त्वं नियमितक्रमिकविकासे सर्वथासमर्थं एव । लोके नियमितविकासयोजनानिर्माणं तथा तस्य सञ्चालनञ्च चेतनद्वारैव भवति । अतः प्राकृतिकविकासे चेतनस्येश्वरस्य हस्तोऽवश्यमेव ।

६ अवश्यमेव केवलप्रत्यक्षप्रामाण्यवादिनः कृते तेषां निर्णयः काठिन्यपरिपूर्णः, किन्त्वनुमानागमादिद्वारा किमपि वस्तु नैवाज्ञेयम् । हर्बर्टस्पेंसरस्तु सर्वेषामेव मतानामाधारं प्रत्यक्षमेव मानयति स्म । अत एव तस्य मतानुसारं न किमपि मतं सत्यमसत्यं वा । स्पेंसरमतानुसारमीश्वरस्य कीदृशं स्वरूपमिति नैव ज्ञातुं शक्यते । वस्तुतः स्पेंसरमतानुसारं किमपि वस्तु ज्ञातुमेव शक्यते ।

७ स्पेंसरस्येदं मतं सांख्यमतेन सह मिलति । तेऽपि प्रकृतिमेवा-स्माभिन्नमर्वप्रपञ्चानां मूलं मानयन्ति, चलञ्च गुणवृत्तमिति नियमेन व्यक्तानामव्यक्तानाञ्च स्वरूपं गतिशीलमेव मानयन्ति सांख्याः ।

क्षणपरिणामिनो हि भावा ऋते चिति शक्तेः, चितिशक्तिं विहाय सर्वानेव भावान् क्षणपरिणामिनश्च मानयन्ति ते । तैरसङ्गचेतनो व्यापकः पुरुषः । स्वतन्त्रो मान्यते च । किन्तु सांख्यस्य प्रत्यभिज्ञानमेवास्मिन् मतेऽपि भवति । सांख्यानुसारं सतो विनाशोऽसतः समुत्पत्तिश्च न भवति । केवलमवयवानां संघीभावेनाविर्भावो विकासो वा भवति । तथावयव-विच्छेदात्तिरोभावेन नाशव्यवहारो भवति । प्रकृतिः सुखदुःखमोहात्मिका चेतना च । अतस्तस्याः परिणामोऽपि सुखदुःखमोहात्मिका चेतना भवति ।

दैवज्ञ अवोचत्—एतत्सर्वमेव कथनं भ्रान्तिपूर्णमेव । खण्डिते विकासवादे सर्व एव विकासविचाराः खण्डिता बभूवुः ।

एवमेव यदा सर्वे एव मानवा वानरेभ्यः समुत्पन्नास्तदा यत्र यत्र वानराणां निवासस्तत्र तत्रैव नराणामुत्पत्तिः सम्भवेत्, अथ च यदा वनमानवेभ्यो मानवानामुत्पत्तिर्जाता तदा यत्र वनमानवा मिलन्ति तत्र मानवानामप्युत्पत्तिर्जाता । वनमानवा अमेरिकायामास्ट्रेलियायां मेडागास्करे जावाद्वीपे च मिलन्ति । तत्रस्था निग्रोजातीया सभ्यतायामिदानीमपि मानवसमुदायात्पश्चाद्भूता तिष्ठन्ते । तेष्वपि कतिपयैतादृशा अपि वर्तन्ते, ये वनमानवेभ्यः किञ्चिदेव समुन्नताः ।

एतेऽपि सर्व एव विषया विकासवादखण्डनेनैव खण्डिता भवन्ति । तथापि शृणु, एकस्मिन्नेव स्थाने भूतायामपि सर्गे देशकालसम्पर्केण तस्या भेदो लक्षितो भवति । बीजमन्तरा क्वापि वृक्षो नैव समुत्पद्यते । समुद्रतटेऽपि यावद्बीजं न भवति, बीजस्य मृत्तिकया सम्पर्कश्च न भवति, तावत्कस्यापि वृक्षस्योदयो नैव जायते । सोऽपि मालाकारः सुरक्षित एव स्थाने वृक्षं समुत्पादयति । यत्र झञ्झावाताभिभूतस्माद्भयमासीत् तत्रैवेश्वरोऽपि मानवादिसृष्टिञ्चकार ।

तथान्ये-अमेरिकाया वानरा नासन्, अतस्तत्र मानवोत्पत्तिसम्भवः । पूर्वं यूरोपस्यापि जलवायू मनुष्योत्पत्त्यनुकूलौ नास्ताम् । विदुषामन्वेषकाणां कथनमिदं यत् स्तनधारिणः प्राणिन एशियात एव यूरोपमागतवन्तः । वार्न्क्षाह्नतत्पुस्तकप्रभाविता भारतीया अपि उत्तरीयध्रुवस्थाने मानवोत्पत्तिं स्वीकुर्वन्ति । किन्त्वन्यथा विदुषामीदृशं मतं यद् उत्तरीयध्रुवप्रदेशे प्रतिसार्धदशसहस्रवर्षानन्तरं भीषणो हिमपातो भवति, अतस्तत्र मानवसृष्टेरुत्पत्तिकथनं सर्वथा निर्मूलमेव । इंग्लैण्डनिवासिनो दास्तरं-लन्सनस्य कथनं यन्मानवचर्मणि ध्रुवप्रदेशपशूनामिव लम्बायमानः केशो न भवति, अतो मानवास्तत्रस्थाः प्राणिनो नैव भवितुमर्हन्ति । मानवशरीरेषु स्वेदनिःसरणार्थमतीव लघूनि रोमाणि भवन्ति, अत्यधिशीतप्र-

देशीयास्ते नैव। भूगोलविशेषज्ञानामिदमपि कथनं यद् ध्रुवप्रदेशे वनस्पतयो नैव भवन्ति, अतस्तत्र मानवोत्पत्तिर्नैव बभूव। अनेके विद्वांस एशियायामपि मनुष्योत्पत्तिं मानयन्ति, तेषां कथनमिदमेव यद् पश्चिमोत्तरैशियायामेव मानवोत्पत्तिर्बभूव। तत एव मानवा विभिन्नदेशेषु गतवन्तः।

मक्षमूलरः मध्यैशियायां मानवोत्पत्तिं स्वामिदयानन्दस्तिब्बते मानवोत्पत्तिमुमेशचन्द्रदत्तश्च मङ्गोलियायां मानवोत्पत्तिं मानयन्ति। किन्तु संस्कृतलेटिनग्रीकादिभाषाणां कृतायां तुलनायामधिकांशविद्वांस एतस्मिन्निष्कर्षे गतवन्तो यदेतद्भाषाभाषिणः कदाप्येकभाषाभाषिण एवासन्। यथा यथैकस्मात्परं भिन्ना बभूवुः तथा भाषाभेदोऽपि समभूत्। यद्यपीमे सर्वाः भाषाः परस्परं भगिनीर्मानयन्ति, एतासां जननीं स्वतन्त्रैव कामपि भाषामामनन्, तथापि सर्वभाषाजननी संस्कृतभाषैव इदमत्राधिकं प्रमाणसिद्धम्। अद्यापि समस्ते संसारे सर्वप्राचीनग्रन्थः वेद एव वर्तते। "वाचा विरूपनित्यया," विरूपनित्यपदलक्षणयाऽनयैव भगवान् स्तुतिं करोति। एतेनापि वाक्यनवदोऽनादिः सिद्धो भवति। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति वाक्यद्वारा स्वयम्भूरनादिनिधनोत्पत्तिरहितस्यैव पदलक्षणवाण्यास्सर्गं चकार। एवमेव वचनेन वेदस्यानादित्वं सिद्धं भवति। अत सर्वप्राचीना संस्कृतभाषैव सिद्धा। तस्या एवान्यभाषाः समुत्पन्नाः। तैत्तिरीयादिवेद-मनुस्मृत्यादिग्रन्थैश्च सप्तद्वीपाया मेदिन्या जम्बूद्वीप एव प्रधानः। जम्बूद्वीपेऽपि भारतवर्षं श्रेष्ठम्। चतुर्दशभुवनेषु पृथ्वी पृथ्व्यामपि भारतवर्षमेव विराट्पुरुषस्य हृदयं वर्तते। अस्मिन्नेव वर्षे हिमालयार्यावर्तब्रह्मावर्ता वर्तन्ते। अस्मिन्नेव मानसगङ्गया विवेकोऽपि जायते। अथ सर्वप्रकारा मानवा अस्मिन्नेव वर्षे मिलन्ति। अतोऽत्रैव मानवोत्पत्तिः प्रथमं बभूव।

वेदा पुरुषेण देवयजनमात्मनः समादाय "पुरुषेण देवाना देवयजनं

सर्वेषां भूतानां ब्रह्मसदनम्। रामोत्तरतापिन्युपनिषत्। डाक्टर ई.आ. एलेन्सनस्य मेडिकलपुस्तके लिखितमस्ति यद् हिमालये वनस्पतयो वासाश्च प्रचुरतया समुत्पद्यन्तेऽतो गोमहिषाजगजादिजन्तूनां तत्रैव समुत्पत्ति, मानवाश्च तत्रैव समुत्पन्नाः। कथं नातिप्राचीनाः प्राणिदेहावशेषास्तत्रैव मिलन्ति? कतिपयभाषाशास्त्रिणः काश्मीरं मानवोत्पत्तिस्थानं मानयन्ति। पाश्चात्त्या विद्वांसो योरपवासिनामार्यत्वं कथयन्ति, किन्तु भारतीयाः कथयन्ति यद् ये खलु रूपं प्रकृत्यामाकृत्या धर्मे कर्मणि विज्ञाने आचारे विचारे शीले च श्रेष्ठास्त एवार्याः

कर्तव्यमाचरन् काममकर्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः॥
न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति।
न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः॥
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः।
दत्त्वा न पश्चात्कुरुते न तापं स कथ्यते सत्पुरुषार्यशीलः॥

वस्तुतस्त्वेन भारतीयशास्त्रेषु श्रेष्ठार्थ एवार्यशब्दस्य व्यवहारो भवति। महाकुलकुलीनार्यसभ्यसज्जनसाधवः इत्यमरादपि श्रेष्ठवाचक एवार्यशब्दः। आर्यशब्दो वैश्ये स्वामिनि च व्यवहृतो भवति, 'स्यादार्यः स्वामिवैश्ययोः'। जातिदृष्ट्या चातुर्वर्ण्ये हिन्दूशब्दोऽत्र प्रयुक्तो भवन्ति।

एवमेवात्र सर्वे एवार्या हिन्दुशब्देन व्यवह्रियन्ते।

---

# राजवंशानुकीर्तनम्

## सूर्यवंशः

इत्युक्ते दैवज्ञे—मुनाग्रणि प्रोवाच भगवन्! अग्रे सूर्यवंशीयो-पाख्यानं कथय।

दैवज्ञ सूर्यवंशीयां कथां कथयति—सप्तमस्य वैवस्वतमनोरिक्ष्वाकु-प्रभृतयो दशपुत्रा अभूवन्। इक्ष्वाकुश्च मध्यदेशस्य राजाभूत्, तस्य राजधान्यासीदयोध्या। एतस्यैव वंशे मान्धातृदशरथरामप्रभृतयो महा-प्रतापशालिनो नृपा अभूवन्।

मनोरन्यः पुत्रो नेदिष्टः। पूर्वस्यां दिशि तिरहुतप्रदेशस्य राजाऽभवत्। एतस्मिन् वंशे विशालो नामैको भूपो वैशाली नाम्नीमेकां महानगरीं संस्थापितवान्। बौद्धकाले एतस्यां महानगर्यां महत्युन्नतिरासीत्। लिच्छवीनाम्ना प्रसिद्धानां क्षत्रियाणां वैशाली राजधानी बभूव। एतस्याः प्रसिद्धाया महानगर्या अवशेषो मुजफ्फरपुरमण्डले बसाढ-नाम्ना प्राप्यते खल्वधुनापि।

मनोरन्यः पुत्रः करूषः करूषराज्यं संस्थापितवान्, यस्यावशेष इदानीं बघेलखण्डे समुपलभ्यते।

मनोरेकः पुत्रो शर्यातिश्च गुजरातप्रदेशे स्वकीयं राज्यमकरोत्। शर्यातेः पुत्र आनर्तो महाप्रतापशाली राजा बभूव। एतस्यैव नाम्ना देशस्यास्य नामाप्यानर्तः। तथैतस्य राजधानी कुशस्थली द्वारकासीत्।

एत एव चत्वारः पुत्रा महाप्रतापशालिनोऽभूवन्। मनोर्भूपस्य शेषाः षट्पुत्रा नैतादृशाः शक्तिशालिनः, किन्तु तेऽपि भारतस्यान्यभागेषु साधारणं राज्यं कुर्वन्त एवासन्।

सूर्यवंशस्यापरस्येक्ष्वाकोरप्यनेके पुत्राः स्वतन्त्रं राज्यं संस्थापित-वन्तः। तत्रापि इक्ष्वाकोर्ज्येष्ठपुत्रो विकुक्षिरयोध्याराज्यसिंहासनमलञ्चकार। तस्यैव पुत्रो निमिरयोध्यावैशाल्योर्मध्ये एकं स्वतन्त्रं राज्यं संस्थापित-

वान्, यस्य राजधानी मिथिला बभूव । एतद्वंशजा भूपा मैथिलनाम्ना जनकनाम्ना वा प्रसिद्धा अभूवन् । पौराणिकानुश्रुत्या मनोर्वंशजा भारतस्य सर्वेष्वेव प्रदेशेषु विविधानि राज्यानि सम्स्थापितवन्त ।

सप्तमवैवस्वतमनोः पुत्र इक्ष्वाकुरयोध्यायां स्वतन्त्रं राज्यं सस्थापितवानिति कथितमेव । कुत्रामते । तस्यैवैक्ष्वाकोर्वंशे निशानिरथस्यानन्तर मान्धाता नाम कोऽपि महाप्रतापशाली राजा बभूव । पुराणेष्वसौ चक्रवर्तिनाम्ना प्रसिद्धोऽस्ति । स महत् साम्राज्यस्यास्य महाप्रतापी शासकश्च भूत आसीत् । यत सूर्य उदेति यत्र चास्तं याति, तावती भूमिर्मान्धातू राज्यान्तर्गत आसीत् । अयं च मान्धातृराज्ये सर्वाण्येव नगराणि सुवर्णमयान्येवासन् ।

मान्धातुरनन्तरं तत्पुत्रः पुरुकुत्सोऽयोध्याराजसिंहासनमलञ्चकार । निरन्तरमस्य समये राजशक्तिः क्षीणा जाता अनन्तरं पुरुकुत्सस्यैवादरथस्यानन्तरं तथा सत्यव्रतत्रिशङ्कोरनन्तरं हरिश्चन्द्रो नाम महाप्रतापशाली राजा बभूव । एतस्य रुद्रराज्ञी नाम शैव्यासीत् । हरिश्चन्द्रतुल्योऽस्मिन् मार्गे महादानी सत्यवादी च राजा नाभूदिति प्रसिद्धिः । तद्दानशीलताया विवरणं यथा—

एकस्मिन् समये विश्वामित्रो हरिश्चन्द्रस्य समीपमागत्य छलेन सर्वमेव राज्यं महादानस्वरूपेण जहार, महादानदक्षिणां च ययाचेऽसौ । महादाननाम्ना विश्वामित्रेण सर्वस्वहरणे कृतेऽपि राजा दक्षिणादानस्य मासमेकं समयं याचित्वाऽयोध्यां विहाय वाराणसीमागतवान्, सम्पूर्णं राज्यं विश्वामित्रेणाधिकृतञ्च । किञ्चित्कालानन्तरमेव पुनर्विश्वामित्रः समागत्य वाराणस्यां हरिश्चन्द्रमुवाच-राजन् ! सूर्यकुलप्रसूतो भूत्वा मां किं प्रतारयसि ? यदि दक्षिणा-द्रव्यस्य नास्ति प्रदत्तवत्तदा स्पष्टं कथ्यताम् । विश्वामित्रवचनं श्रुत्वा सविनयं प्रोवाच हरिश्चन्द्रः-भगवन् ! मासस्यावधिर्न व्यतीतोऽभूत्, दक्षिणामवश्यमेव प्रदास्यामि । पुनरपि विश्वामित्रे क्षत्रियत्वाद् धनयाचनमनुचितम्, केनोपायेन दक्षिणाधन

भविष्यति, कुत प्राप्स्यामीति विचारयन्नर्धमूर्छित इव वाराणस्या भ्रमन् बभूवासौ ।

मासस्यान्तिमे दिवसे पुनर्मूर्तिमान् क्रोध इव ज्वलन् विश्वामित्र समागत्य हरिश्चन्द्रसकाश दक्षिणा ययाचे ।

दक्षिणादानार्थं धनप्राप्ते कमप्युपायमदृष्ट्वा राजा मर्माहतो भूत्वा स्वकीया प्रिया पत्नीं शैव्या पुन रोहिताश्वश्चैकस्य काशीस्थस्य हस्ते विक्रीतवान्, प्राप्तधन दत्तवान् विश्वामित्राय दक्षिणास्वरूपम्। किन्त्वहो! दत्तस्य महादानस्य दक्षिणापूर्तिर्नैव जाता। तत स्वकीयशरीरमपि तस्यात तत्रस्थस्यैव चाण्डालस्य हस्ते विक्रीय विश्वामित्रदक्षिणातो मुक्तो भूत्वा चाण्डालाविष्ट महतीं जर्जरवशयष्टिका हस्ते धृत्वा विधाय चाण्डालवेषञ्च मृतमानवाग्निसंस्कारकर रक्षन् वाराणस्या महाश्मशानेऽतिष्ठद्राजा हरिश्चन्द्र ।

एकस्मिन्दिवसे ब्राह्मणगेहे दासभाव गतस्य हरिश्चन्द्रपुत्रस्य रोहिताश्वस्य सखाभिस्सह कुशानयनकाले पादेसर्पोऽदशत् । तेनासौ पञ्चत्वमापदे। अनन्तर तत्रैव ब्राह्मणस्य गेहे दासभावमापन्ना हरिश्चन्द्र पत्नी शैव्यार्धरात्रौ कार्य यापममात्यैकाकिनी विलपन्ती मृत स्वकीय बालमादायाग्निसंस्कारार्थं महाश्मशानमगात्, यत्र राजा हरिश्चन्द्रो मृतनैर्घटमदत्ता आसीत्। स्वपुत्राग्निसंस्कारार्थं समुद्यताया शैव्याया श्मशाननियमानुकूल याचितवान् शवसंस्कारकर राजा हरिश्चन्द्र.। श्रुत्वैव राज्ञो वचन महाविलपन्ती शैव्या छिन्ना कदलीव मूर्छिता निपपात। स्वरगाढत्या च स्वकीया धर्मपत्नीं मृत स्वकीय तनयञ्च विज्ञायापि राजा सत्यवचन परिपालयन् करग्रहणानन्तरमेव शवदाहो भविष्यतीति सम्मुखागान्। राज्ञ्यपि स्वपतेर्नियमे सत्यवादिताशञ्च योगदान कुर्वन्ती भर्त्रा स्वकीयाञ्चलवस्त्र स्वरूपेण दातु समुद्यता बभूव ।

एतस्मिन्नेव समये देवै. सह भगवानादिदेवो नारायण. सहसा

प्रचलति तिष्ठति स्वपीति भ्रमति जलं पिबति घासं चादति, तदा तत्रैव तया सह गच्छन् तस्याः सेवायां रक्षणे च तत्परो बभूव। यदा च सा सायंकाले वनात्समागच्छेद् यदा प्रातःकाले वशिष्ठाश्रमाद्वनं गच्छेत्तदैव तया सह जगाम च नरपतिः।

इत्थं गोसेवाव्रतधारिणा दिलीपस्य सप्तविंशतिदिनानि व्यतीयुः। प्राप्तेऽष्टाविंशे दिवसे नन्दिनी भूमिभर्तुर्भक्तिपरीक्षार्थं मायामयमेकं सिंहं विधाय स्वग्रहणं कृतवती स्ववधार्थम्।

नन्दिनीपृष्ठस्थः सिंहो दिलीपमुवाच मनुष्यवाचा—प्रभो! नन्दिनीमिमामहमद्य भक्षये। भवतैतस्या जीविताशां विहाय स्वगृहं गम्यताम्। एवं सिंहवचनं निशम्य चिन्ताकुलमना राजा सिंहमुवाच-मृगेन्द्र! स्वसुतामिव नन्दिनीमेतस्याः कृतेऽहं स्वकीयं सर्वस्वमेव दातुं कृतनिश्चयोऽस्मि न त्विमाम्।

सिंहः पुनरपि राजानमुवाच-महीपते! धेन्वाः कृते सर्वस्वपरित्याग-करणं मूर्खताया लक्षणमस्तु विचक्तिताया। इत्थंभूते वार्तालापे मृगाधिपः पुनः राजानमकथयत् यदि धेन्वा प्रयोजनं भवतस्तदा स्वकीयं शरीरं समर्प्यताम्।

श्रुत्वैव सिंहवचनं राजा महर्षेरनुरागात् गृह्यतां मे शरीरं परित्यज्य-ताम् नन्दिनीत्युक्त्वा यावदेवासौ सिंहस्य समीपे नतमस्तको बभूव तावदेव गगनमार्गाच्छरीरिणा विमानस्थायिभिर्देवाः पुष्पवृष्टिमकुर्वन्। दिलीपभक्त्या प्रसन्ना च नन्दिनी तस्मै पुत्रप्राप्तिरूपवरदानमकरोत्। तेन रघुनाम्ना प्रसिद्धो दिलीपस्य पुत्रो बभूव। एतस्यैव रघोर्नाम्ना प्राचीने-क्ष्वाकुवंशो रघुवंशनाम्ना प्रसिद्धो बभूव।

अग्रे चैतस्मिन्नेव सूर्यवंशे परमप्रतापी राजा दशरथो जातः। एतस्य रामलक्ष्मणभरतशत्रुघ्नसंज्ञकाश्चत्वारः पुत्रा आसन्। भारतीया-स्तु हृदयनिता सर्वे एव रामकथां जानन्ति।

पौराणिककथानुसारं रावणादिराक्षसपीडितैर्देवैः प्रार्थितो महाविष्णु-

दशरथस्य तिसृषु कौसल्याकैकेयीसुमित्राख्यासु भार्यासु रामभरतलक्ष्मणशत्रुघ्नरूपैरवातरत्। जातेषु किशोरेषु महर्षिविश्वामित्र एकदागत्य दशरथमकथयत् राजन्, राक्षसा यज्ञविघ्नं कुर्वन्ति, देहि रामलक्ष्मणौ। नास्त्येतयोः किमपि भयं मया सह गमने। यज्ञविघ्नकारकान् राक्षसान्निहत्य शीघ्रमेव भवतः सकाशमागमिष्यतः। श्रुत्वा विश्वामित्रवचनं राजा दशरथो रामलक्ष्मणवियोगव्यथितो भूत्वापि ऋषेराग्रहेण मुनयेऽददात्। रामलक्ष्मणौ च विश्वामित्रेण सह वनमरण्यं गत्वा राक्षसान्निहत्य स्वकीयवीरतायाः परिचयं प्रदत्तवन्तौ शिक्षितवन्तौ च विश्वामित्रसकाशात् दुर्लभशिक्षामस्त्रस्य।

एतस्मिन्नेव समये मिथिलाभूपो जनकः स्वकन्यायाः सीताया विवाहार्थं स्वयंवरं व्यधत्त। मिथिलाभूपानां जनक इत्युपाधिर्वंशक्रमागत आसीत्। यस्य सीतानाम्नी कन्यासीत्तस्य नाम सीरध्वजजनकोऽभूत्। सीरध्वजस्य समीप एकं प्राचीनं दिव्यं धनुरासीत्। यः कश्चन तद्धनुर्भङ्क्ष्यति तेनैव सार्कं सीताया विवाहो भविष्यतीति प्रतिज्ञातवान् सीरध्वजो जनकः।

सीतया सह विवाहार्थं समागतेषु राजसु नैव कोऽपि धनुर्भङ्क्तुं समर्थोऽभूत्। पश्चाद्विश्वामित्रलक्ष्मणाभ्यां सह तत्र गतो रामो बभञ्ज धनुः। सीतया सह रामस्य विवाहः सम्पन्नः अन्येषामपि लक्ष्मणभरतशत्रुघ्नानां रामभ्रातॄणामूर्मिलामाण्डवीश्रुतकीर्तिभिः सह जनकगेह एव विवाहोऽभूत्। विवाहानन्तरं रामः सानन्दमयोध्यामाजगाम।

इदानीं वृद्धो राजा दशरथः सर्वगुणसम्पन्नं ज्येष्ठपुत्रं रामं राज्यसिंहासनासीनं कृत्वा स्वयं राजकीयकार्येभ्यो अवकाशमैच्छत्। सर्व एवायोध्यावासिनो राजकीयसभाप्रधानाश्चैव दशरथविचारं समर्थितवन्तः। किन्तु कैकेय्याः सेवया प्रसन्नो राजा दशरथो वरद्वयप्रदानस्य वचनं पूर्वमेव दत्तवानासीत्। मन्थरादासीवचनवशीभूता कैकेयी रामो

चतुर्दशवर्षाणि यावद् वने वासं करोतु, भरतोऽपि राज्यसिंहासनमलङ्करोतु चैतद्वरद्वयं तस्मिन्नेव समये याचितवती ।

सत्यप्रतिज्ञो राजा वरद्वयं स्वीकृत्य रामं वनायाज्ञापितवान् । प्रियभ्रात्रा लक्ष्मणेन स्वधर्मपत्न्या सीतया च सह रामचन्द्रो मुनिवेषं विधाय वनं जगाम । रामवियोगव्याकुलो राजा पञ्चत्वमापेदे च ।

भरत एतस्मिन्समये स्वमातुलपुरं गतवानासीत् । स्वमातुः कैकय्याश्चरितस्य क्रमेण तस्य किमपि ज्ञानं नासीत् । मातुलपुरादागत्य भरतो दशरथस्य विधाय श्राद्धादिकं रामं प्रत्यावर्तयितुं चित्रकूटनिवासिनस्तस्य समीपं जगाम । अतस्त्वं राज्यसिंहासनमलङ्करोतु भवानिति भरतेन बहुशः प्रार्थितोऽपि रामस्तं स्पष्टमुक्तवान् भरत ! नाहं पितुर्वचनं कदाप्यन्यथा करिष्यामि । "लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् । सागरोऽप्यतियाद्वेलां न प्रतिज्ञामहं पितुः ।" पुनः रामपादुके गृहीत्वा भरतो रामप्रतिनिधिर्भूत्वा नन्दिग्रामे राज्यमकरोत् । रामस्तु चित्रकूटाच्चलन् दण्डकारण्यमवाप सपत्नीको भ्रातृसहितश्च । तथा गोदावरीतटे पञ्चवट्यां स्थानं व्यधत्त । अत्र च जनस्थाननाम्ना प्रसिद्धा राक्षसानां वसतिरासीत् । रामस्यागमनात् राक्षसानां क्रूरं चिन्तातङ्कं बभूव । रामेण सह ते च विरोधमकार्षुः ।

शूर्पणखा नाम्नी रावणभगिनी च रामसमीपं गत्वा तेन सह विवाहं प्रार्थितवती । लब्धरामेङ्गितो लक्ष्मणः कर्णनासिकाविहीनां तामकरोत् । एतेन क्रुद्धाः जनस्थाननिवासिनो राक्षसा रामेण सह युद्धमारेभिरे । रामश्च चतुर्दशसहस्रसंख्यकान् जनस्थाननिवासिनो राक्षसान् बाणैर्निजघान । ततः शूर्पणखा लङ्कां गत्वा राक्षसराजं रावणं प्रति सर्वमेव जनस्थानवृत्तान्तमकथयत् । मारीचसहायो रावणो व्याजेन जनस्थानात्सीतां हृत्वा लङ्कास्थिताशोकवाटिकायामरक्षत् । सीतान्वेषणं कुर्वन्तौ रामलक्ष्मणौ पम्पासरोवरसमीपमागतवन्तौ । तत्र सुग्रीवमन्त्रिणो हनुमतः साहाय्येन सुग्रीव-

राममेवमुक्त्वा वैदेही तत्रस्थं लक्ष्मणं प्राह—वत्स समानय समिधः विधेहि चितामग्निना प्रज्वलिताञ्च कुरु ।

सीतयेत्थमुक्तो लक्ष्मणश्चितां निर्मायाग्निना प्राज्वालयत् । सीता रामं नमस्कृत्यात्तवती देवा भूतानि मनुष्या सर्व एव प्राणिनः स्थावर-जङ्गमाः, पश्यन्तु ममाग्निप्रवेशम् । रामादन्यं मानसेनैव चिन्तितवती रावणाङ्कं विवशा गतास्मि अग्निदेव ! मनसा वाचा कर्मणा चाहं कदा-प्यन्यं स्मृतवती रामेव मम कर्मणो धर्मस्य पातिव्रतस्य साक्षिप्रदाता भवत्वित्युक्त्वा वैदेही विवेश वैश्वानरम् ।

वह्नौ प्रविशन्त्या सीताया रामस्तामेव विचिन्तयन् तत्रैव मौनी भूत्वास्थौ ।

किं कथयामि मुक्तामणे? प्रज्वलितेऽग्नौ प्रविशन्त्या सीताया एकमपि नैवाङ्गं प्रज्वलितं का कथा शरीरस्य । सीतया कृते प्रवेशे सतार्चिश्चन्दन इव सुशीतलः अभूत् । पुनर्विशुद्धां सीतामादाय स्वयमग्निदेव प्रादुर्भूत्वा राममुवाच—

दाशरथे ! विशुद्धा सीता कथमिवानमन्यसे । इत्युक्ते ह्यग्निदेवे अन्यदाभूता देवा अपि निष्कलङ्किनी सीतेति सहैव राममूचुः ।

अनन्तरं निष्कलङ्किनीं सीतामादाय सलक्ष्मणो रामोऽयोध्यामागत्य राज्यसिंहासनमलञ्चकार ।

रामराज्ये सर्व एव जना सुखिनः आधिव्याधिजराग्लानिरहिता आर्तदैन्यरहिता अतिवृष्ट्यवमरणरहिताश्चाभूवन् ।

स्वपत्नीं कदाचिदेकस्या रात्रौ कश्चित् प्रोक्तवान् दुष्टे परगृहोषिता त्वां स्वगृहे कदापि नैव रक्षिष्यामि । रावणगृहे वर्षमेकमुषिता सीता रामो रक्षतु नाम किन्तु, नाहराम । एवंविधं प्रजावाक्यं श्रुत्वा प्रजानुरञ्जको रामोमहता कष्टेन गुर्विणीं सीतां लक्ष्मणद्वारा वाल्मीकेराश्रमं प्रापयामास। तत्रैव सा कुशलवौ पुत्रौ प्रासूत । सीतापरित्यागादनन्तरं भगवान् श्रीराम-चन्द्रः ब्रह्मचर्यविधिना स्वकीयं समयं निनाय । रामराज्यसमय एवादिक-

विर्वाल्मीकि श्रीरामचरितपरिपूर्ण रामायणनामकमेकं महाकाव्यं लिखित्वा कुशलवौ पाठयामास। रामाश्वमेधयज्ञसमये वाल्मीकिना सह तौ रामागारं कुशलवौ गत्वा रामायणं अगायतामगातु। अनन्तरं सीतापातालप्रवेशं कृतवती स्वतनये रामाङ्के प्रदाय।

रामशासनकाले रामस्य समीपमागत्य कश्चित् श्वा प्राणाच–भगवन्! एको ब्राह्मणो निरपराधिनं मां लगुडेनाताडयत्। तं दण्डयितुमर्हसि भवानिति।

ब्राह्मणः कथमिव दण्डितः स्यात् कथङ्कारञ्च शुना सह न्यायो भवति चिन्तान्वितो रामः श्वानमुवाच—भवानेव ब्राह्मणे दण्डविधानं करोतु। इत्युक्ते श्रीरामे श्वा समुवाच—भगवन्, ब्राह्मणमुच्चशिन्याशिवमन्दिरे समर्चकं विदधातु भवान्। अहमपि पूर्वजन्मनि तत्रैव शिवसमर्चक एवासम्। नृपेणैव प्रासौ रामस्तं विप्रं शिवसमर्चकञ्चकार। मुक्तामणि! रामस्य धर्मनियन्त्रिते राज्ये तिर्यग्भिः सहापि न्यायो बभूव, का कथा मानवानाम्। कदापि कृतयज्ञेन रामेण सर्वस्वमपि राज्यादिकं ब्राह्मणेभ्य प्रायच्छत्। केवलं सीताहस्ते सौभाग्यसूचकमाङ्गलिकमभूत्।

ब्राह्मणा रामम् समवदन्तु देव! एतत् समस्तं राज्यं वा नास्माकं किमपि प्रयोजनम्। भवानेव सर्वस्य पुनः प्रतिगृह्णातु नाम। एवमुक्तापि ब्राह्मणे रामो राज्यग्रहणार्थं नैव समुत्सुको बभूव। तदा पुनरपि ब्राह्मणास्तमकथयन्—भूपालमणे! राज्यं महत् कार्यं सर्वमस्माकम्, किन्तु भवानस्माकं प्रतिनिधिर्भूत्वा राज्यशासनसञ्चालनं करोतु नाम। ब्राह्मणवचनं पालयन्नेव भगवान् श्रीरामचन्द्रो ब्राह्मणप्रतिनिधिर्भूत्वा प्रजातन्त्रं धर्मनियन्त्रितञ्च राज्यं चकार। भारतेतिहासे रामराज्यं स्वर्णयुगम् इति कथ्यते।

रामपुत्रौ कुशलवौ कोशलराज्यं प्राप्तवन्तौ, भरतपुत्रौ तक्षपुष्कलौ स्वशक्तिविस्तारं कृत्वा गान्धारं विजित्य तक्षशिला पुष्करावतीञ्च वासितवन्तौ।

भारतस्य प्राचीनेतिहासे तक्षशिलाया महत्त्वपूर्णं स्थानमासीत्। बौद्धकाले च तक्षशिला शिक्षायाः प्रधानकेन्द्रञ्च बभूव। शत्रुघ्नपुत्रो सुबाहुः शूरसेनो मथुराया राज्यमकुरुताम्। शूरसेनस्य नाम्नैवैतस्य देशस्य शूरसेन इति नामाभूत्।

लक्ष्मणपुत्रावपि भारते राज्यं कुर्वन्तौ बभूवतुः।

क्रमशः सूर्यवंशीया राजानो क्षीणशक्तयोऽभूवन्स्तथा तेषां राज्योपरि यादवादिभूपानामाधिपत्यमभूत्। सूर्यवंशस्यान्तिमो भूपः सुमित्रो प्रतापशाली बभूव। तत एव साधारणभूपा इव सामन्ता इव वा ते जाताः। यत्र तत्र सूर्यवंशजनामधारका राजान इदानीमपि भारते विद्यन्ते।

चन्द्रवंशः

यथा भारतेतिहासे सूर्यवंशस्य प्रसिद्धिस्तथैव चन्द्रवंशस्यापि चन्द्रवंशवर्णने यथा कल्पान्ते भगवतो विराट्पुरुषस्य विष्णोर्नाभिकमलाद्ब्रह्मणः समुत्पत्तिर्ब्रह्मणः सकाशादत्रिनामर्षिरभूत्। अत्रेः पुत्रश्चन्द्रश्चन्द्रस्य तारागर्भाद्बुधोऽजनि। बुधस्य मनो पुत्र्येलया सह सम्बन्धेन पुरूरवा (ऐलः) बभूव। ऐलस्य चोर्वशीगर्भात् षट्पुत्राणां मध्ये ज्येष्ठ आयुनामको महाप्रतापशाली पुत्रो बभूव। आयोः पुत्रो नहुषः, अथ च सूर्यवंशीयभूपानां राजधानी यथायोध्या तथैव चन्द्रवंशीयभूपानां राजधानी प्रतिष्ठानपुरमभूत्। नहुषश्च वाराणस्यामप्येकं स्वतन्त्रं राज्यं संस्थापितवान्। नहुषपुत्रो ययातिः पुनः प्रतिष्ठानपुरस्य राज्यसिंहासनमलञ्चकार। ययातिश्चक्रवर्ती राजासीत्, एतस्य राज्यं सरस्वतीनदीपर्यन्तं विस्तृतमासीच्च। ययातेर्यदुतुर्वसुद्रुह्यनुपुरुनामकाः पञ्चपुत्राः पुराणेष्वतीव प्रसिद्धाः।

एतेषु कनिष्ठः पुत्रः पुरुः प्रतिष्ठानपुरस्य राज्यसिंहासनासीनो जातस्तन्नाम्नैवैलवंशः पुरुवंशनाम्ना प्रसिद्धो बभूव।

अत्र मुक्तामणि दैवज्ञं पप्रच्छ—भूदेव ! कथं यदुप्रभृतिषु ज्येष्ठभ्रातृषु स्थितेषु कनिष्ठः पुरुः प्रतिष्ठानपुरस्य राजाभूत् ? कारणमेतस्य भवता प्रतिपाद्यताम्।

दैवज्ञः कथयति—शृणु मुक्तामणे ! देवासुरसंग्रामे देवैर्निहता दैत्या मृतसञ्जीवनीविद्याप्रभावेण शुक्रेण जीविता अभूवन्, न तु देवाः, बृहस्पतिना सञ्जीवन्या अभावात्। एकदा देवैर्मिलित्वा बार्हस्पत्यः कचः सञ्जीवनी-प्राप्त्यर्थं शुक्रसमीपे प्रेषितः । स शुक्राश्रमं गत्वा सञ्जीवनीप्राप्त्यर्थं शुक्रं सिषेवे । तत्र शुक्रपुत्र्या देवयान्या सुसेवितः । बहुकालानन्तरं सुप्रसन्नः शुक्रः कचाय सञ्जीवनीविद्याप्रदानमकरोत् । प्राप्तविद्यं स्वाश्रमं गच्छन्तं कचं देवयानी पाणिग्रहणार्थं प्रार्थितवती । किन्तु गुरुपुत्र्या सह पाणिग्रहण-मनुचितमिति कचेनास्वीकृता देवयानी भवतो विद्याऽसफला भविष्यतीति तस्मै शापं दत्तवती । भवत्या विवाहोऽपि ब्राह्मणेन सह न भविष्यतीति शापं कचेनापि देवयान्यां पातितः । एकदा बहुसखीसमावृतया दैत्यराजवृषपर्वपुत्र्या खेलन्ती देवयानी सरोवरे स्नातुं प्रविष्टा । तत्र सहसा समागतं गिरिजासमेतं गिरिशमवलोक्य सर्वा एव कुमार्यो भीताः सत्वरात्स्वं स्वं वासः परिधातुं समारेभिरे । तासु परिधानरतासु देवयानी दैत्यराजपुत्र्याः शर्मिष्ठायाः वासो दधार एतेन कुपिता शर्मिष्ठा वासोविहीनां तां बहु विनिर्भर्त्स्य कूपेऽपातयत् ।

गतायां सखीसमेतायां शर्मिष्ठायां महाराजो ययातिर्मृगयां कुर्वन् पिपासितो भूत्वा तत्र कूपे समागम्य पानीयनिष्कासनसमये दृष्ट्वा देवयानीं स्वबाहुदण्डमुद्धृत्य तां हस्ताभ्यां कूपान्निष्कासितवान् ।

कूपान्निःसृता सा तमेव स्वपाणिग्रहणार्थं प्रार्थितवती कचशापं सस्मारयन्ती । कुमार्यः पितुराधीना भवन्ति, न तु स्वेच्छाचारिण्य इति कथयित्वा ययातिना पितुराज्ञार्थं शुक्रसमीपे प्रस्थाप्य स्वयं स्वराज-धानीमवाप ।

अनन्तरं देवयान्या श्रुतशर्मिष्ठापमानवृत्तान्तः प्रभूतरोषः राजधानी-परित्यज्यान्यत्र गच्छन् शर्मिष्ठा देवयान्याः सेविका भविष्यतीति प्रतिज्ञाय दैत्यराजः क्षमार्थमनु गुरुं शुक्राचार्यं परावर्तितवान् । शर्मिष्ठा तल्पे कदापि भवता न गन्तव्यमिति कथयित्वा ययातिं तेन सह

विवाहिता देवयानी सखीसहस्रसंयुतया शर्मिष्ठया सेविता ययातिभवनं गता। व्यतीते समये देवयानी यदुतुर्वसुनामकौ पुत्रौ प्रासूत। कदापि शर्मिष्ठयापि प्रार्थितो राजा तस्यां द्रुह्यनुपुरुसंज्ञकान् त्रीन् पुत्रानुत्पादयामास। एतेन क्रोधाविष्ट उशना त्वरितमेव वृद्धो भवतीति शशाप। पुनः बहुधा यौवनार्थं तेन प्रार्थितः शुक्रो यदि कश्चिद्भवतो वृद्धत्वं गृहीत्वा स्वकीयं यौवनं दद्यात्तदा भवान् यौवनान्विता भवितुमर्हसि।

शुक्रेणैवमुक्तो ययातिर्यदुप्रभृतीन् चतुरः पुत्रान् यौवनदानार्थं प्रार्थितवान्। किन्तु नैव कोऽपि पित्रे यौवनमदात्। शेषे कनिष्ठ पुत्रः पूरुः पित्रे स्वकीयं यौवनं प्रदाय तस्य वार्धक्यं गृहीतवान् सहस्रवर्षावधि। पितुर्वाक्यपूरणेन पुरुरेव प्रधानराज्यसिंहासनाधिकारी बभूव। अन्ये च पुरुवशवर्तिनो भूत्वा भारतस्य भागेषु राज्यं मकुर्वन्। एतदेव कारणं पुरोः प्रधानराज्यप्राप्तेरिति।

एवमुक्त्वा पुनरपि दैवज्ञो मुञ्जामपि कथयति—प्रतिष्ठानस्य दक्षिणपूर्वप्रदेशे तुर्वसुः स्वतन्त्रराज्यस्थापनमकरोत्। यदुश्च भारतस्य पश्चिमभागे राज्यमवातनोत्। एतस्यैव वंशजा यादवा अभूवन्। अयोध्यायाः पश्चिमभागे नाराज्यमनोरभवत् द्रुह्योः यमुनासरस्वत्योर्मध्यभागे राज्यमभूत्।

चक्रवर्तिना ययातेः साम्राज्यं पश्चिमसरस्वत्याः समारभ्य पूर्वस्याः प्रतिष्ठानपर्यन्तमभासीत्। किन्तु उपरते ययातौ विशालं साम्राज्यं पुत्रेषु विभक्तं विच्छिन्नमभूत्।

अथ पाञ्चालानामैक्ष्वाकुभूपानां साम्राज्यं ययातिसाम्राज्याधीनं आसीत्।

अथ नैक्ष्वाको मान्धाता प्रतिष्ठानस्य पौरवराज्यं कान्यकुब्जस्यैलराज्यं द्रुह्युराज्यमनुराज्यञ्च विजित्य तद्राज्यभूपान् स्ववशवर्तिनोऽकार्षीत्। मान्धातृपराजिता द्रुह्युवंशजाः पश्चिमदिशि गतवन्तः। सम्भवतः एतस्यैव वंशजाः गान्धारमपि गत्वा तत्र स्वकीयं राज्यं संस्थापितवान्। तथा

च मान्धातृपराजिता अनुवंशजा स्वकीयं राज्यं परित्यज्य पञ्जाबप्रदेशे राज्यमकुर्वन्।

एवमेव मानववंशस्यैका शाखा सुदूरपूर्वभारतं गत्वा वर्तमान-भागलपुर-मुंगेरमध्ये एकं राज्यसंस्थानमकरोत्।

तितिक्षोरेकः पुत्रो गयो भारतवर्षस्य पूर्वभागं गत्वा धर्मारण्ये राज्यमेकं संस्थापितवान्। एतस्य राजधानी गयाऽभवत्।

पूर्ववर्णितस्य ययातिपुत्रस्य यदोर्वंशजा दक्षिणेऽपि गतवन्तः।

पौराणिकानुश्रुत्या यादवानामेका शाखा हैहय आसीत्। एतस्मिन् वंशे महिष्मान्नाम महापराक्रमी भूपो बभूव येन माहिष्मती नाम्नी नगरी निर्मिता। अपि च नर्मदायामवाच्यामुत्तरस्यां महिष्मानुत्तरभारतस्याक्रमणं कृतवान्। महिष्मत उत्तराधिकारी भद्रश्रेण्य आसीत्। स च वाराणसीमपि विजितवान्। एतस्मिन् शक्तिशालिनि वंशे महिष्मतोऽष्ट-स्थानानन्तरं कृतवीर्यो नाम महाप्रतापी भूपो बभूव।

कृतवीर्यस्य महाप्रतापशाली पुत्रोऽर्जुनो बभूव। स च दक्षिणे नर्मदात आरभ्योत्तरे हिमालयपर्यन्तं प्रदेशं जितवान्। दक्षिणदेशराजं रावणमप्यसौ पराजितवान्। एतेन सह परशुरामस्यापि महान् सङ्गरोऽभूत्। परशुरामस्य पराक्रमेण भारतस्य च पराजिता हैहयास्तदा किञ्चित्कालं यावन्मन्दा बभूवुः। किन्तु कार्तवीर्यार्जुनस्य पौत्रस्य तालजङ्घस्य शासन-काले पुनरप्येतेषां महानुत्कर्षो जातः।

तालजङ्घोऽयोध्याधिपतेर्हरिश्चन्द्रपुत्ररोहिताश्वस्य समकालीन आसीत्। स च स्वपितामह इव बहूनि राज्यानि विजित्य स्ववशे चकार। कान्यकुब्जराज्यमपि तालजङ्घेन विजितम्। तथैवैतस्य वंशजा अपि विजयमकार्षुः।

यथा प्राचीनैक्ष्वाकुवंशो रघुनाम्ना प्रसिद्धस्तथैव प्राचीनहैहय-वंशोऽपि तालजङ्घनाम्ना प्रसिद्धः। तालजङ्घवंशजाः स्वस्थानादारभ्य वाराणसीपर्यन्तं राज्यमकार्षुः।

मुक्तामणौ ? हैहयवंशजा अपि यादवशाखाभूता एवासन् । यथा च हैहयवंशजाः स्वशक्तिवर्धने संलग्नास्तथैव यादवान्यशाखा अपि स्वशक्तिवर्धने संलग्ना बभूवुः ।

यदुवंशस्यैवान्यतमो भूपो विदर्भ आसीत् । येन स्वनाम्ना विदर्भराज्यं संस्थापितम्, यदिदानीं बरारनाम्ना प्रसिद्धं वर्तते । विदर्भपौत्रश्चेदिः चम्बलकेननद्योर्मध्ये एकं राज्यं संस्थापितवान् । एतस्य वंशजा एव चेदिराजानोऽभवन् । इदानीञ्च चेदिराज्यं बुन्देलखण्डनाम्ना प्रसिद्धमस्ति । इत्थमैलवंशजा दक्षिणभारतेऽपि बहूनि राज्यानि संस्थापितवन्तः ।

ऐलवंशसमुद्भूतस्य ययातेः पञ्चसु पुत्रेषु पुरुः प्रतिष्ठानस्य राज्यसिंहासनमलञ्चकार । अन्येऽन्यप्रदेशेषु राज्यमकार्षुरिति वर्णितमेव मुक्तामणौ । किन्तु माहिष्मत्या अयोध्यायाश्च शक्तिवर्धनेनैते मन्दा बभूवुः । विशेषतोऽयोध्याया ऐक्ष्वाकसगरभूपस्य विजयकाले एते नितान्तं निर्बलाः सञ्जाताः ।

महापराक्रमशालिनः सगरस्य चरित्रमपि पूर्वमेव वर्णितम् ।

अनन्तरं सगरे स्वर्गं गते स्वकीयाभ्युदयावसरं समीक्षमाणाः पौरवाः स्वकीयं पूर्वगौरवं संस्थापितवन्तः । एतद्वंशप्रसूतस्य प्राचीनेतिहासेऽधिकं महत्त्वमस्ति । कालिदासेनैतस्यैव दुष्यन्तस्य कथानकमवलम्ब्य 'अभिज्ञानशाकुन्तलम्' नाम नाटकं व्यरचि । एकस्मिन् दिवसे दुष्यन्तो मृगयार्थं हिमालयसमीपवर्तिनि कानने जगाम । तत्र कण्वस्याश्रमे शकुन्तला नाम्नीं कन्यामवलोक्य गान्धर्वेण विवाहेन तामुपयेमे । शकुन्तलायां भरतो नाम महापराक्रमी पुत्रो जातः । केषाञ्चिन्मते देशस्यास्य एतस्यैव नाम्ना भारत नामाभूत् । किन्तु भागवतानुसारेण नाभिपुत्रभरतस्य नाम्ना भारतं बभूव । पूर्वमेतस्य देशस्य नाम अजनाभ इत्यासीत् ।

किन्तु दुष्यन्तपुत्रभरतस्यैव नाम्ना पौरववंशो भारतवंशनाम्ना प्रसिद्धः । भरतस्तु सार्वभौमसम्राडासीत् । तत्कालीना बहवो

राजानस्तद्वंशीयत्वमपि स्वीकुर्वन्तः । पश्चिमस्यां सरस्वत्या आरभ्य पूर्वस्यां गोमतीपर्यन्तं तस्य साम्राज्यमासीत् ।

भारतस्यैव वंशे राजा हस्ती बभूव एतेन हस्तिनापुरनामकं नगरं निर्मितम् । कुरुभूपानामेतदेव पुरं राजधान्यभूत् । हस्तिपुरस्याजमीढस्य समये भरतवंशस्यानेकाः शाखाः समभूवन् । कुरुराजानां शाखाया राजधानी हस्तिनापुरमेव आसीत् ।

अन्याः कुरुशाखाः पाञ्चालदेशे पृथगेव स्वराज्यं संस्थापितवन्तः । कुरुदेशेन सह संलग्ना या हि गङ्गापूर्वतटा देशः स एव पाञ्चालदेशः । दक्षिणोत्तरभेदेन पाञ्चालो द्विविधः । उत्तरपाञ्चालस्य राजधानी अहिच्छत्रमासीत्, यस्य भग्नावशेष इदानीं बरेलीमण्डले समुपलभ्यते । दक्षिणपाञ्चालस्य राजधानी काम्पिल्यो यस्य भग्नावशेषः फर्रुखाबादेऽस्ति । एतयोर्द्वयोः शासनकारकाः भरतवंशजा एवासन् ।

हस्तिनापुरेऽहिच्छत्रे काम्पिल्ये च ये हि शासनकारका आसन्, तेषु परस्परं युद्धारम्भोऽभूत् । हस्तिनापुरभूपस्याजमीढस्य दशमवंशजानन्तरं कुरुवंशभूपः संवरणो बभूव । तस्य समकालीनः उत्तरपाञ्चालभूपः सुदास आसीत् । सुदाससंवरणयोर्मध्ये महान्ति समराः अभूवन् । येषु सुदासः एव संवरणं हस्तिनापुरे पराजयत् तं च गङ्गापारं कृत्वा सुदासो यमुनातीरवर्तिकुरुदेशं विजित्य स्ववशवर्तिनञ्चकार । अथ च सुदासः उत्तरपाञ्चालसमीपवर्तीनि राज्यान्यपि निगाय । तद्विजयेन विस्मयीभूताः कुरुमत्स्यतुर्वसुद्रुह्युशिविप्रभृतयो राजानः सम्मिलिता भूत्वा तेन सह युद्धमकार्षुः । किन्तु विजयः सुदासस्यैव बभूव । हस्तिनापुरभूपः संवरणः पलाय्य सिन्धुतटनिर्मिते एकस्मिन् दुर्गे शरणं लेभे ।

सुदाससंवरणयोरेष संग्रामः परुष्णीनद्यास्तटेऽभूत् । किन्तूत्तरपाञ्चालस्यैष विजयो दीर्घकालपर्यन्तं नैव सुस्थिरो बभूव । सुदासवंशजौ सहदेवसोमकौ सुदाससमानौ वीरौ नैवास्ताम् । तयोः समये संवरणः पुनरपि कुरुदेशस्योद्धारञ्चकार । न केवलं कुरुदेशस्योद्धारमेव, किन्तूत्तरपाञ्चाल-

मपि जिगाय सवरण । नि सन्देह संवरणोऽपि महाप्रतापी यशस्वी च आसीत् । सवरणपुत्र कुरुरपि पितृतुल्य एव महापराक्रमी भूप आसीत् । उत्तरपाञ्चाल सवरण एव जितवान्, किन्तु कुरुर्दक्षिणपाञ्चालमपि जित्वा स्वकीयराज्य विशालतामकरोत् । तस्य कुरु शासने सरस्वत्या आरभ्य प्रयागपर्यन्त समस्तो विस्तृत भूभाग आसीत् । कुरुनाम्नैव प्राचीना भरतवश कौरवनाम्ना प्रसिद्धो बभूव । हस्तिनापुरस्य समीपे कुरुदेश इति नामाभवत् ।

कुरुवश एवाग्र वसुनामा राजा बभूव । असौ नष्ट चेदिदेशमपि विजित्य स्ववशवर्तिनमकरोत् । अत एवासौ चैद्य उपरिचरनाम्ना-पाधिना च प्रसिद्धो जात । असावेव चैद्यो परिचरो वसु पूर्वे मगधपर्यन्त स्वशासन सस्थापितवान् । तथा च शुक्तिमती नगरी स्वराजधानी-मकरोत् । वसुश्चक्रवर्ती सम्राडासीत् ।

बृहद्रथप्रत्यग्रहकुशाम्बदुमावेल्लसज्ञका पञ्च पुत्रा यशोरासन् । वसु-र्यद्विशाल साम्राज्य स्वबाहुबलेन सस्थापितवान्, तत्तत्पुत्रेषु विभज्य पञ्चैव राज्याधिकारिण अकरोत् । साम्राज्यस्य पञ्च भागा यथा—मगध, कौशाम्बी, कारुष चेदि, मत्स्यश्च ।

तत्र मगधशासको बृहद्रथो बार्हद्रथवश सस्थाप्य स्वनाम्ना गिरिव्रज राजधानीञ्च विधाय राज्यमकरोत् । पाटलिपुत्रराजगृहयो स्थापनात्पूर्वं गिरिव्रज एव मगधराजधान्यासीत् । तथा राजगृहस्थापन गिरिव्रजस्य भग्नावशेष एवाभूत् । गिरिव्रजसस्थापकौ वसुबृहद्रथावास्ताम् ।

एलवशीययथातिभूपस्य पूर्वमेव वर्णन कृत मुक्तामणे । यस्य पञ्च पुत्रा पृथक्पृथक् स्व राज्य सस्थापितवन्त ।

किन्तु मान्धातृसमय एतया शक्त्यवरोधाऽभूदेतदपि वर्णितमेव ।

अथ च यदुवशीयो राजा विदर्भ वर्तमानवरारप्रदेशस्य शासक आसीत् । तत्पुत्रो मधुश्चक्रवर्ती राजा बभूव ।

एतस्मिन्नेव वशे सात्वतनामा महाप्रतापशाली वीरो राजा जात ।

तेन च शत्रुघ्नपुत्रस्यापि मथुराराज्ये स्वशौर्येण स्वकीयं राज्यं संस्थापितम्। सात्वतस्यानेके पुत्रा आसन्, तेषु प्रसिद्धयो वृष्ण्यन्धकयोर्नाम्ना वृष्णिवंशोऽन्धकवंशश्च विख्यातावभूताम्।

अनयोरेव वंशयोः कृष्णो वृष्णिवंशे कंसश्चान्धकवंशे समुत्पन्नौ। एतदतिरिक्तान्यपि यादवशाखाया अनेकानि राज्यान्यासन् वर्तमानविदर्भावन्तिप्रभृतिप्रदेशेषु।

हस्तिनापुरस्य कौरवशाखाया विकास इत्थं प्रकारेणाभूदिति वर्णितमेव।

कुरोः चतुर्दशे वंशे प्रतीपो नाम राजा बभूव महाप्रतापशाली। प्रतापपुत्रः शान्तनुः स्वपितुरनन्तरं हस्तिनापुरस्य सिंहासनमलञ्चकार। शान्तनोः पौत्रौ पाण्डुधृतराष्ट्रौ समभूताम्। तयोर्धृतराष्ट्रस्य दुर्योधनप्रभृतयः शतपुत्राः पाण्डोश्च युधिष्ठिरभीमार्जुननकुलसहदेवनामानः पञ्च पुत्रा अभूवन्। धार्तराष्ट्राः कौरवनाम्ना पाण्डोः पुत्राश्च पाण्डवनाम्ना विख्याता बभूवुः। कौरवाः पाण्डवाश्च राज्यार्थं परस्परं कलहायमाना आसन्। पाण्डवानामिच्छासीत् यद्धस्तिनापुरराज्ये तेषामपि भागोऽस्ति न्यायतः, स च तेभ्यो मिलेत् किन्तु दुर्योधनः सर्वथैतत्प्रतिकूल आसीत्। संघर्षानन्तरं पाण्डवा यमुनायाः पश्चिमभागे खाण्डववननामकमेकं स्थानं प्राप्य तद्वनमेव भस्मसात्कृत्वा तत्रेन्द्रप्रस्थ नामकमेकं नगरंनिर्मितवन्तः। इन्द्रप्रस्थ एवेदानीं प्राचीनदिल्लीनाम्ना प्रसिद्धोऽस्ति। पाण्डवानां प्रयत्नेनैवेन्द्रप्रस्थनगरं धनधान्यपरिपूर्णं बभूव तस्मिन् काले।

पौराणिकानुश्रुत्या गिरिव्रजभूपानां नामानि कथितानि। किन्तु महाभारतानुसारमस्यैकस्य मगधभूपस्यापि वर्णनमस्ति, तस्य नाम दीर्घेति। इमं दीर्घतमभूपं हस्तिनापुरराजा पाण्डुः पराजितवान्। तद्विवरणमित्थम्—

पृथ्वीं विजेतुकामः पाण्डुर्भीष्मधृतराष्ट्रादिकौरवान्प्रणम्य सद्वाचरण

विधाय रथाश्वहस्त्युष्ट्रादिभिः पदातिभिश्च सहितो मगधं विजेतुं प्रतस्थे। तत्र गत्वा मगधराजं दीर्घं निहत्य पाण्डुः राजगृहाद् बहुविधवाहनादिसम्पन्न सुवर्णरत्नादिकोषमाहृतवान् । मुक्तामणे ! एतेन महाभारतीयकथा नकेन विज्ञायते यन्मगधराजो दीर्घ आसीत्, अथ च जरासन्धोऽपि युधिष्ठिरसमकालीन एव।

यद्यपि मगधराजो दीर्घः पाण्डुना पराजितस्तथापि दीर्घस्य वीरताया पराक्रमे च नासीत्सन्देहः । महाभारते विलिखितं यत् स्वबाहुबलगर्वान्वितो दीर्घो बहूनां भूपानां मानभङ्गञ्चकार। एतस्यैव वंशीयो जरासन्धो मगधराज्यसिंहासनासीनो बभूव। जरासन्धः स्वसमकालीनभूपानां राज्यश्रियं समाप्य सर्वराजसु प्रधानस्थानमाप्तवान्। प्रायेण सर्वे एव तत्कालीना राजानो जरासन्धवशवर्तिन आसन्।

चेदिराजः शिशुपालो मगधाधीनतामवाप्य मगधराजप्रधानसेनापतिपदमलञ्चकार । करूषदेशभूपो मायायुद्धविशारदो महाप्रतापशाली वक्रस्तच्छिष्य इवाभूत्। एवमेकन विक्रमशालिना विख्यातः करमदेशभूपो मेघवाहनो जरासन्धाधीन एव बभूव। तथा च मुरनरकाभ्यां सहित प्राग्ज्योतिषपुराधीशो भगदत्तो मनसा कर्मणा वाचा च तस्याधीनत्वं स्वीचकार। युधिष्ठिरमातुलः पुरुजिद्, वङ्गपुण्ड्रकिरातराजो वसुदेवश्च तदधीनतामेव स्वीचक्रुः । अथ च पाण्ड्यक्रथकैशिकभूपो भीष्मकोऽपि मगधराज्याधीनतां स्वीकृतवानासीत्।

पूर्वकथितवचनैः सुस्पष्टमेव जरासन्धराज्यं पूर्वे वङ्गासामपर्यन्तं विस्तृतमासीत्। तद्यथा पूर्वभारतस्याङ्गवङ्गपुण्ड्रकिरातप्राग्ज्योतिषपुरनरेशाः दक्षिणभारतस्य पाण्ड्यक्रथकैशिकभूपाश्चेदिराजश्च तस्याधीना बभूवुः । भारतस्य पश्चिमोत्तरशूरसेनप्रदेशोऽन्धकयादवानां भूपः कंसस्तस्यैव जामाता बभूव। कंसश्च जरासन्धसरक्षण साहाय्यञ्चावाप्य प्रजासु स्वेच्छयात्याचारञ्चकार। इत्थं भारतस्य महति भूभागे जरासन्धस्यैव प्रभावो बभूव।

एतादृशा अप्यनेके नृपा आसन् ये खलु मगधराजस्याधीनतामस्वीकृत्य विहारं च स्वकीयराज्यानि सुदूरपश्चिमभारते निवासमकार्षुः ।

एतादृशा अष्टादशसंख्यका राजानस्तदतिरिक्ताः शूरसेनभद्रकारयोधशाल्वपटच्चरसुस्थलकुकुरकुलिन्दकुन्तिशाल्वायनप्रभृतय आसन्। एते सर्व एव राजानो जरासन्धभयात्स्वकीयं जनपदमपहाय सुदूरपश्चिमभारतं गताः ।

एवमेव दक्षिणपाञ्चाल—पूर्वकोशलमत्स्यनिवासिनश्च स्व स्व प्रदेशं विहाय दक्षिणभारतेऽन्यत्र वा निवासमकार्षुः । यथा सिंहो महाहस्तिनो निगृह्य गुहायामवरुणद्धि तथैव जरासन्धोऽपि बहून् नृपानभिगृह्य गिरिव्रजस्य कारागारे निरुद्धवान् । सर्वेषामेव नृपाणां बलिप्रदानकर्मणा भूतराजं शिवं समर्चितुं तस्येच्छाऽऽसीत् ।

पाण्डवानां मातुलपुत्रः श्रीकृष्ण आसीत् । तस्य साहाय्येन तेषां महत्युन्नतिर्जाता । एकदा समस्तभूपालान्विजित्य राजसूययज्ञं कर्तुं तेषामिच्छा बभूव । तस्मिन् समस्तभूपानां विजय आवश्यक इति कृत्वा भीमार्जुननकुलसहदेवैश्चतसृणां दिशां विजये कृतेऽपि मगधराजजरासन्धस्य विजयोऽवशिष्ट एवाभूत् । केनोपायेन जरासन्धपरिजयो भविष्यतीति चिन्ताकुलमतिं युधिष्ठिरं प्रसाद्य भीमार्जुनसहितः श्रीकृष्णो मगधराजजरासन्धं निर्जेतुं प्रतस्थे ।

त्रय एव ब्राह्मणवेषं विधाय जरासन्धसमीपं गत्वा द्वन्द्वयुद्धभिक्षां याचितवन्तः, स्वकीयं परिचयञ्च दत्तवन्तः । तेषां परिचयं ज्ञात्वा जरासन्धः सहासमवदत्—कृष्ण ! त्वं तु मत्समक्षाद् युद्धे पलायितोऽसि, तेन त्वया सह युद्धकरणमनुचितं मम । तथाऽर्जुनस्तु बाल एव, तेन साकमपि युद्धमनुचितमेव । किन्तु भीमस्तुल्यबलो मम, तेनैव सह गदायुद्धं करिष्यामि । इत्युक्त्वा भीमाय महतीमेकां गदां प्रदाय

स्वयमप्येकामादाय च गदां शनैः शनैः युद्धं कुर्वाणो बभूव भीमेन सह जरासन्धः।

दिवा युद्धं कुर्वाणयो रात्रौ मित्रवच्छयनशीलयोः त्रयोदश दिनानि व्यतीयुः। मल्लविशारदो भीमः श्रीकृष्णं प्रोवाच—जरासन्धशरीरमद्य शिथिलोऽद्य तेन सह युद्धमिदानीमेव करिष्यामि। देवः श्रीकृष्णो भीमं सान्त्वयन् स्वहस्तेन तच्छरीरं परिमर्दयन्नुवाच—आगामिनि दिवसे युद्धं कुर्वता त्वयाहमवलोक्यः, मदीयसङ्केतेन कार्यं च कर्तव्यमिति। अथापरस्मिन् दिने पुनरपि युद्धारम्भे काले भीमः श्रीकृष्णं विलोकितवान्। श्रीकृष्णश्च तृणं मध्यतो विदारयन् मगधराजं मध्यत एव विदारयितुं सङ्केतं चकार। ज्ञातसङ्केतो भीमो जरासन्धं विदारयामास। तत्र जरासन्धः पञ्चत्वमापेदे। जरासन्धे मृते श्रीकृष्णो मगधराजकारागारनिरुद्धान् भूपान् मुमोच। मुक्ताश्च ते युधिष्ठिरराजसूययज्ञे सम्मीलितुं सहर्षं तत्परा बभूवुः। मगधस्य साम्राज्यवाद एतेषां मूलोच्छेदं विधातुं तत्पर आसीत्, अतएव जरासन्धः एतान् स्वकीयकारागारे निरुद्धांश्चकार। किन्तु युधिष्ठिरस्य साम्राज्यवादस्तादृशो नासीत्। अन्यभूपास्तदधीना भवेयुरेतदेवोद्देश्यमासीत्तस्य। मूर्धाभिषिक्तभूपानां कारागारे बन्दीकरणमथवा हननं प्राचीनार्यपरम्पराविरुद्धम्। मृते जरासन्धे तत्पुत्रः सहदेवो मगधराजसिंहासनासीनो बभूव। जरासन्धमरणानन्तरमेव तद्राज्यं छिन्नं जातम्। इन्द्रप्रस्थभूपस्य युधिष्ठिरस्य साहाय्यमवाप्यानेके राजानः स्वतन्त्रा बभूवुः। अनेके स्वकीयगणराज्ये परावृता बभूवुश्च। इदानीं भारतस्य राजनीतिकशक्तेः केन्द्रस्थलमिन्द्रप्रस्थो बभूव। अनन्तरं भीमार्जुनसहितः श्रीकृष्णो युधिष्ठिरयज्ञकर्मणि संलग्नो जातः। तत्र सर्वाभ्य एव दिग्भ्यो युधिष्ठिरवशीभूता विविधोपहारसहिता भूपाः समाजग्मुः। सहदेवोऽपि समागतो बहूपहारसम्पन्नः।

तस्मिन् वर्तमाने राजसूययज्ञे युधिष्ठिरस्य सर्वं एव बान्धवा यज्ञकार्यसंलग्ना बभूवुः। तत्र भीमो भोजनाध्यक्षो दुर्योधनो धनाध्यक्षः सहदेवः

सर्वेषां समागतानां सभ्यानां पूजनकर्मणि तत्परो नकुलो द्रव्यसंग्रहे वृद्धानां गुरूणां शुश्रूषणेऽर्जुनो द्रौपदी सेवायां कर्णो दाने श्रीकृष्णश्च सर्वेषां पाद-प्रक्षालनकर्मणि रतः। राजसूयने सर्वप्रथमपूजा कस्य भवेदिति विचारणायां समुत्पन्नायां जरासन्धपुत्रः सहदेवः श्रीकृष्णस्य नाम प्रथमं पूजार्थं प्रस्तावितवान्। एतस्य प्रस्तावस्य सर्व एव जनाः समर्थनञ्च कृतवन्तः। तदा युधिष्ठिरः परमप्रसन्नेन मनसा सुवर्णसिंहासने श्रीकृष्णं समुपवेश्य भक्त्या पूजितवान्। सर्वप्रथमं श्रीकृष्णपूजनेन क्रोधितं निन्दमानमपशब्दमुच्चारयन्तञ्च शिशुपालं हतवान् श्रीकृष्णः। अनन्तरं यज्ञः परिपूर्णतामगात्। तत्र च दृष्टिगोचरं प्रचलितं गिरं सर्वे श्रुतवन्तः। किन्तु पाण्डवानामेव उत्कर्षो दीर्घकालपर्यन्तं स्थिरो नाभूत्। हस्तिनापुरनिवासिनः कौरवाः एतदुत्कर्षं सोढुं नैव पारितवन्तः। अस्यान्तिमपरि-णामोमहाभारतयुद्धमेवाभूत्।

## श्रीकृष्णः

शूरसेनप्रदेशे यादवानां राज्यद्वयमासीत्—अन्धकराज्यं वृष्णिराज्यञ्च। अन्धकयादवानां प्रधानं कंसो जरासन्धस्य जामाता अतुल्यपराक्रमशाली मथुरायां राजसिंहासनासीन आसीत्। जगत्यां मगधस्यैको राजा, किन्तु यादवान्धकानाम् नरेको राजेति। परञ्च श्वशुरजरासन्धस्य साहाय्यमवाप्य कंसोऽप्यन्धकयादववृष्णीनामपमानं कर्तुं प्रारब्धवान्। स्वकीयं पितरमुग्रसेनञ्च राज्यच्युतं कृत्वा स्वयमेव राज्याधिकारी बभूव। कंसभगिन्या देवक्या विवाहो मथुरानिवासिना वसुदेवेन सहाभूत्। स्वभगिन्या यौतुकरूपेण कंसो बहुधनं प्रदाय वरवध्वौ प्रस्थानमकारयत्। प्रस्थानसमय एव कंसः देवक्याः अष्टमगर्भात्समुत्पन्नो बालकस्त्वां हनिष्यतीति देववाणीं श्रुतवान्। श्रुत्वैव देववाणीमेकस्मिन् हस्ते खड्गं गृहीत्वा परेण देवकीकेशपाशमादाय तां हन्तुं तत्परो बभूव स। देवकीगर्भजाद्बालकाद्भवतो भयं ननु

देवक्या, अतो देवकीसमुत्पन्नं बालं भवते प्रदास्यामीति प्रतिज्ञाते वसुदेवे तां मुमोच स.। व्यतीते वर्षे देवकीसमुत्पन्नं बालं कंसाय प्रददौ वसुदेवः। तच्चादाय कंस शिलायां विपोथ्य हतवान्। एवं षट्सु बालेषु हतेषु देवैः पृथ्वीभारापहारार्थं धर्मदेवब्राह्मणगोरक्षार्थञ्च प्रार्थितोऽस्य भगवतो महाविष्णोराज्ञया तदंशभूतः शेषो देवक्या गर्भे वास व्यधत्त। विष्णोराज्ञया योगमाया देवीगर्भात्तं समाकृष्य नन्दगोकुलनिवासिन्या वसुदेवभार्याया रोहिण्या गर्भेऽवासयन्, स्वयञ्च नन्दपत्न्या यशोदाया गर्भे वासं कृतवती। रोहिणीगर्भात्समुत्पन्नस्य बालस्य रामसंकर्षणादीनि नामान्यभूवन्। देवक्या गर्भपातोऽभूदिति लोकेषु विख्यातिर्जाता। अष्टमे देवक्या गर्भे स्वयमेव भगवान् विष्णुर्निवासञ्चक्रे। सम्प्राप्ते समये देवकी सर्वलक्षणसम्पन्नं विष्णोरवतारभूतं पुत्रं जनयामास। नन्दपत्नी यशोदा योगमायावतारभूतां च पुत्रीम्। परैरलक्षितो वासुदेवस्तं बालमादाय नन्दगोकुलं गत्वा यशोदाशयने न्यस्य बालिकाञ्चादाय मथुरामागत्य कंसाय समर्पितवान्। कथमिव देववाणी मिथ्या जाता, देवक्या अष्टमगर्भाद्बालिका समुत्पन्नेति विचारयन् कंसस्तां शिलायां पोथयितुं हस्ते गृहीतवान्, यावत्तावदेव बालिकाकाशस्थिताष्टभुजान्विता च भूत्वा कंसं प्रोवाच—रे! दुष्ट मया हतया किन्ते कार्यं भविष्यति? तव महारकारकः कुत्रापि जन्म लब्धवान्। इत्युक्त्वा सा देवी विन्ध्याचले निवासं कृतवती। परमविस्मितमनाः कंसो नन्दगेहस्थितं कृष्णं हन्तुं विविधोपायान् कृतवान्, किन्तु साफल्यन्नैव लेभे। कृष्णश्च नन्दगोकुले विविधा बालक्रीडा रासलीला गोपीचीरहरणं कालीयनागदमनं गोवर्धनाचलधारणादिकं कृत्वा मथुरामागत्य कंसं स्वमातुलं हतवान्। कंसमृत्युसमाचारं श्रुत्वा जामातृवधजनितक्रोधाकुलो जरासंध. सप्तदशवारं मथुरामाक्रान्तवान्, किन्तु पराजित एव जातः। वर्तमानेऽष्टादशे संग्रामे सबलः सबान्धवश्च भगवान् श्रीकृष्णो मथुरां विहाय द्वारकाम्

गात्। ततोग्रसेनं यादववृष्णिप्रभृतीनां नृपं विधाय स्वयं तदादेशे वर्तमानोऽभूत्।

द्वारका च मगधराड्दूरवर्तिन्यासीत्। तत्र जरासन्धान्मगधेशात् किमपि भयं नासीत्। किन्तु कथमपि जरासन्धविनाशो भवेदिति चिन्ताकुलः कृष्णो युधिष्ठिरराजसूयमखमिषेण भीमसेनेन जरासन्धं घातितवान्। युधिष्ठिरश्च सम्राट् जातः। पुनर्गमनात् श्रीकृष्णो जरासन्धसहायकान् सर्वानेव भूपाञ्जघान। हतेष्वप्येतेषु दुष्टमहीपेषु पृथ्वीभारो नैव समाप्तोऽभूदिति विचारयन् बभूव भगवान्।



: ९ :

# महाभारतयुद्धम्

एतस्मिन्नेव समये पाण्डवोत्कर्षचिन्तिता कौरवा पाण्डवान् पराजेतु कृतसकल्पा बभूवु । युद्धे पाण्डवाना पराजयो नैव कदापि भविष्यतीति विचार्य कौरवा द्यूतक्रीडार्थं तानाहूतवन्त । प्राचीनकाले यथा युद्धात्पलायन क्षत्रियाणा कृतेऽपमानजनक तथा द्यूताह्वानास्वीकरणमप्यपमानजनकमेवासीत् । अत पाण्डवा अपि द्यूतनिमन्त्रण स्वीकृत्येन्द्रप्रस्थतो हस्तिनापुर जग्मु । द्यूतकर्मणि कुशलो गन्धारभूप शकुनि कौरवाना मातुल आसीत् । तस्य साहाय्येन छलेन च कौरवा पाण्डवान् द्यूतकर्मणि जितवन्त । पाण्डवाना सर्वस्वमेव द्यूते हृतवन्त । द्यूतनियमानुसारेण पाण्डवा द्वादशवर्षपर्यन्त वनवासार्थम् एकवर्षञ्च अज्ञातवासार्थं स्वकीय सर्व राज्यादिक विहाय वन प्रस्थिता ।

पाण्डववनवासमध्ये हस्तिनापुरनिवासिन कौरवा पूर्णशक्तिसम्पन्ना बभूवु । द्यूते पराजितत्वात्पाण्डवानामिन्द्रप्रस्थेऽपि कौरवाणामेवाधिकार त्रयोदशवर्षाणि यावदासीत् । वनवासाज्ञातवासावधिसमाप्त्यनन्तर पाण्डवा पुनर्हस्तिनापुरमागत्य कौरवेभ्य स्वकीय राज्य याचितवन्तो द्यूतनियमानुसारम् । किन्तु दुर्योधनो नैव तद्राज्यमदात् । बहवो राजानश्च पाण्डवराज्यप्रदापनेऽसफला बभूवु । तदा स्वयमेव भगवान् श्रीकृष्ण पाण्डवदूतो भूत्वा दुर्योधन सम्बोधयितु हस्तिनापुरञ्जगाम । अयदाया धनराज्यसमाविहीना पाण्डवा कथमिव सत्तो राज्य ग्रहीष्यन्तीति विचार्य दुर्योधन कृष्णमुक्तवान्—युद्धमन्तरा सूच्यग्रमपि नैव दास्यामि भूमिम् । किन्तु पाण्डवाना सहायका अपि बहवो राजान आसन् । वृष्णिप्रधान श्रीकृष्ण पाण्डवाना परम सखा सम्बन्धी चासीत् अन्येऽपि बहवो राजान पाण्डवाना साहाय्यमकुर्वन् । एतस्मिन् समये कौरवपाण्डवाना यो हि संग्रामोऽभूत्त महाभारतयुद्धमिति वदन्ति जना । आर्यावर्तस्य सर्व एव राजानोऽस्मिन् युद्धे सम्मिलिता अभूवन् ।

मगधराज सहदेवः युद्धे पाण्डवपक्षं गृहीतवान्, विदेहाङ्गवङ्गकलिङ्गदेशभूपा आसामदेशभूपो भगदत्तश्च कौरवपक्षावलम्बिनो बभूवुः। कैकयशिबिसिन्धुसौवीरगान्धारत्रिगर्तमद्रक्षुद्रकमालवाम्बष्ठ काम्बोजादीनां पश्चिमोत्तरभागस्थदेशानां भूपा अपि कौरवाणां पक्षेऽभूवन्। एतेषु सिन्धुदेशभूपो महाप्रतापशाली दुर्योधनभगिनीपतिर्जयद्रथः प्रधान आसीत्। युधिष्ठिरमातुलो मद्रदेशभूपः शल्यः कोशलवत्सविदर्भादीनां भूपाश्चापि कौरवपक्षमेव गृहीतवन्तः।

विराटमत्स्यराजयोः स्वतन्त्राभूता नाम्ना पूर्वं कोशलस्य पाञ्चालस्य मत्स्यस्य चेदिदेशस्य काश्यस्य मगधस्य च राजानः पाण्डवपक्षेऽभूवन्। वृष्णिवाहिनी कौरवपक्षे तथा वृष्णिप्रधानः श्रीकृष्णश्च पाण्डवपक्षेऽभूताम्। पाण्डवानां प्रधानसहायकः परामर्शप्रदाता च भगवान् श्रीकृष्ण एवासीत्। अन्यान्यपि यादवानामनेकानि साधारणराज्यानि कौरवपाण्डवपक्षयोरभूवन्।

पाण्डवानां सेना मत्स्यदेशे कौरवाणां सेना हस्तिनापुरसमीपवर्तिनि प्रदेशे चैकत्रिताऽभूताम्। कुरुक्षेत्रे युद्धमभूत्। तत्र मोहमापन्नायार्जुनाय कृष्णेन यज्ज्ञानमुपदिष्टं तदेव गीताऽभूत्। पाण्डवानां विजयो जातः, भ्रातृपुत्रामात्यबान्धवसहिताः कौरवा युद्धे मरणमापेदिरे। भीष्मद्रोणकर्णप्रभृतयोऽनेके वीराश्चास्मिन् युद्धे वीरगतिमाप्तवन्तः। महाभारतयुद्धे यादृशो नरसंहारोऽभूत् तादृशो नरसंहारोऽन्यस्मिन् कस्मिन्नपि युद्धे नाभूत्।

विजयानन्तरं युधिष्ठिरो हस्तिनापुरे हतबान्धवानां स्त्रीणां क्रन्दनध्वनिं श्रुत्वोदासीनमना राजसिंहासनं परित्यक्तुं तत्परो जातः। किन्तु श्रीकृष्णस्तं प्रबोध्याश्वमेधयज्ञमकारयत्। कृतेऽपि यज्ञे युधिष्ठिरः शान्तिं नाप्तवान्। पुनः शरशय्यायां शयानस्य भीष्मस्य समीपं युधिष्ठिरं नीतवान् भगवान् श्रीकृष्णः। तत्र भीष्मस्योपदेशेन

प्रशान्तमना युधिष्ठिरो हस्तिनापुरराजसिंहासनमधिकृत्य षट्त्रिंशद्वर्षाणि यावदखिलं राज्यं धर्मपूर्वकञ्चकार। श्रीकृष्णश्च द्वारकां जगाम।

अथ तारितेऽपि भूभारे वृष्णियादवकुलं मदान्धमवलोक्य श्रीकृष्ण एकस्मिन् दिवसे विचारितवान्—यद्यहमसंहृत्य स्वकुलं प्रयास्यामि स्वकीयं धाम, तदा पुनरपि प्रमत्तैर्मद्वंशजैः पृथ्वी प्रपीडितैव भविष्यति। निर्धार्य भगवान् ब्राह्मणशापेन प्रभासे स्वकुलमपि संहृतवान्। संहृत्य स्वकुलं स्वयमपि स्वधाम सम्प्राप्तवान्।

श्रीकृष्णे स्वधामगते तद्विनाशभूता द्वारकापुरी समुद्रे निमग्ना। तत्रस्था यादवावशिष्टाः श्रीकृष्णबान्धवा यत्र तत्र निवासञ्चक्रिरे।

युधिष्ठिरादयः पाण्डवाः श्रीकृष्णं स्वधामगतं श्रुत्वा पौत्रं परीक्षितं राज्यसिंहासनासीनं विधाय परमं पदमवापुः।

महाभारतयुद्धे भारतीयक्षत्रियाणां विनाशेन विविधराज्यानां दशा-तीव शोचनीया जाता। पाण्डवार्जुनपुत्रोऽभिमन्युरासीत् तत्पुत्रः परीक्षित् तक्षकनागदंशनेन मृत्युमवाप। तत्पुत्रो जनमेजयो यदा कुरुराज्याधिकारी बभूव तदाऽसौ महान्तं सर्पयज्ञं कृत्वा बहून् नागान् विनाशितवान्। अयञ्च कुरुप्रतिष्ठायाः पुनरुद्धारञ्चकार। जनमेजयमृत्योः परं तत्पुत्रः शतानीको हस्तिनापुरराजसिंहासनासीनो बभूव। शतानीकपुत्रोऽश्वमेधदत्तस्तत्-पुत्रोऽधिसीमकृष्णश्चाभूत्। अधिसीमकृष्णानन्तरं तत्पुत्रो निचक्षुर्हस्तिना-पुरराजसिंहासनमलञ्चकार। एतस्य शासनकाल एवास्मिन् बहुमहत्व-पूर्णं वर्तनं। एतस्य समये गङ्गाया महाप्रवाहेण हस्तिनापुरं जलधारायां निमग्नमभूत्तदा निचक्षुः परित्यज्य हस्तिनापुरं वत्सदेशं गतवान्। तत्र कौशाम्बीं स्वराजधानीं विधाय राज्यशासनञ्चकार। निचक्षुसमय एव पुनरन्यत्र वंशे पौरवराजोऽभूत्। पुनरस्मिन्नुदयनप्रभृतयोऽनेके प्रसिद्धा राजानो बभूवुः, किन्तु ते वत्सराजनाम्ना प्रसिद्धाः, न तु कौरव-नाम्ना पौरवनाम्ना वा।

# तत्त्वचिन्तकाः भूपाः

दैवज्ञो वदति—इदानीं भारतीयतत्त्वचिन्तकभूपानां किञ्चिद्वर्णनं क्रियते। सावधानतया शृणु मुक्ताभणे!

विदेहजनकनाम्ना मिथिलायां प्रसिद्धा भूपा बभूवुः। एतस्मिन्नेव वंशे इक्ष्वाकुनरामचन्द्रस्य विवाहः सीरध्वजपुत्र्या सीतया सह बभूवेति श्रुतं त्वया।

जनकराजानो विद्वांसः तत्त्वदर्शिनश्चाभयदातारोऽभूवन्। बृहदारण्यकोपनिषदि जनकराजसभायामेकत्रितानां मुनीनां ब्राह्मणानाञ्च कथा वर्तते, यत्र याज्ञवल्क्यद्वाराऽन्ये विद्वांसः पराजिता बभूवुः। एकदा राजा जनको बहुदक्षिणान्वितं यज्ञमेकञ्चकार। तत्र कुरुपाञ्चालानां बहवो विद्वांसो ब्राह्मणाः समवेता बभूवुः। जनकः प्रोवाच—भो ब्राह्मणाः! भवत्सु यो हि ब्रह्मज्ञानसम्पन्नः, स इमाः सहस्रसंख्यान्विता गाः गृह्णातु नाम, यासां प्रत्येकं शृङ्गयोः सुवर्णस्य दश दश पादा निबद्धा वर्तन्ते। श्रुत्वैव जनकवचनं सर्वे एव ब्राह्मणा मौनीभूताः, किन्तु याज्ञवल्क्यः सर्वा एव गाः सर्वान् विदुषः पराजित्य गृहीतवान्।

विदेहजनक इव केकयस्याश्वपतिभूपोऽपि महान् तत्त्वज्ञानमग्न आसीत्। छान्दोग्योपनिषदि वर्णनमेकं वर्तते यद् उद्दालक-आरुणि-नामैको विद्वान् स्वसार्थसहितोऽश्वपतेः समीपं गत्वा अध्यात्मसम्बन्धिनीनां शङ्कानां समाधानं ततोऽलभत। अश्वपतिर्न केवलं तत्त्वज्ञानी, किन्तु योग्यशासकोऽपि बभूव।

'मम जनपदे न कोऽपि चौरो न कोऽपि मद्यपो न कोऽपि विद्याविहीनो न कोऽप्ययज्ञकारको न कोऽपि व्यभिचारी, तदा व्यभिचारिण्यः स्त्रियः कुतो भविष्यन्तीति छान्दोग्योपनिषदि तस्य कुशलशासकस्य गर्वोक्तिर्वर्तते इति।

तत्कृत्वा प्रतिज्ञामपि स्मारितवती। किन्तु ब्रह्मज्ञानमग्नस्य जनकस्य मनसि पत्नीवचन किञ्चिदपि नैव स्थिरमभूत्। अन्ते तच्छासना-सन्तुष्टा प्रजास्तं राज्यच्युतं कारितवत्यः। कौटलीयार्थशास्त्रे लिखित-माचार्यचाणक्येन यद् ब्राह्मणकन्यया सह कृते बलात्कारे दाण्डक्य-भोजराजो राज्यच्युतोऽभूत्। तथापि विदेहस्यापीदनेन दशाभूत्। आचार्यचाणक्यो लिखितवानस्ति कौटिल्यदर्शने ह्यनाविवेकेन राज्यच्यु-भूत्वा बहवो राजानः प्रजाभ्यो विनाशमापेदिरे।



: ११ :

# वैदिक-साहित्य-विचारः

अधुना दैवज्ञो वैदिकसाहित्यं विचारयति मुक्तामणिं समीपेतद्यथा—ऋग्यजुः सामाथर्वसंज्ञकाश्चत्वारो वेदाः। प्राचीनभारतस्य सभ्यतायाः संस्कृतेर्जीवनस्य धर्मस्य च परिचयं ज्ञातुं वेदज्ञानमावश्यकम्। ऋग्वेदो दशमण्डलेषु विभक्तो वर्तते। शुक्लकृष्णभेदेन यजुर्वेदो द्विधा, शुक्लयजुर्वेद एव वाजसनेयी संहितेति कथ्यते। वाजसनेयिसंहितायाः काण्वमाध्यन्दिनीयनामके द्वे शाखे। काठककपिष्ठलमैत्रेयीतैत्तिरीयनामिकाः कृष्णयजुर्वेदस्य चतस्रः शाखा वर्तन्ते। यजुर्वेदस्य वाजसनेयिसंहिता चत्वारिंशदध्यायेषु विभक्ता विविधयाज्ञिकानुष्ठानमन्त्रसंग्रहा च वर्तते।

यजुर्वेदस्यान्तिमोऽध्यायोऽध्यात्मविचारपरिपूर्णेशावास्योपनिषद् वर्तते। कौथुमशाखा, राणायनीयशाखा, जैमिनीयशाखेति, तिस्रः शाखाः सामवेदस्येदानीमुपलभ्यन्ते। वर्तमानसमये कौथुमशाखाधिक प्रचलिता वर्तते। आर्चिकोत्तरार्चिकश्चेति सामवेदस्य द्वौ प्रधानभेदौ।

शौनकशाखापिप्पलादशाखा चेति द्वे शाखेऽथर्ववेदस्योपलभ्येते। अथर्ववेदे विंशत्यध्यायाः वर्तन्ते। आयुर्वेदो धनुर्वेदः शिल्पवेदो गान्धर्ववेदश्चेति चत्वार उपवेदा वर्तन्ते। चरकसुश्रुताद्याचार्यैर्विलिखिता ग्रन्था इदानीमायुर्वेदस्याम्र उपलभ्यन्ते। धनुर्वेदस्य शिल्पवेदस्य गान्धर्ववेदस्य चेदानीमेकोऽपि ग्रन्थो नैव समुपलभ्यते। एतैरुपवेद नामभिरियं ज्ञायते यत् प्राचीनभारतीयमानवा न केवलं याज्ञिकानुष्ठान-ब्रह्मविद्याचिन्तका एवासन्, किन्तु चिकित्सायां युद्धविद्यायां शिल्पशास्त्रे सङ्गीते चान्यासु विद्या-कलास्वपि निपुणा आसन्। अस्मिन्विषये छान्दोग्योपनिषदि सुन्दरमुपाख्यानं वर्तते। तद्यथा—महर्षिसनत्कुमारेण पृष्टो नारदः प्रोवाच—भगवन्, मया ऋग्यजुः सामाथर्ववेदा अधीता इतिहासपुराणमयः पञ्चमो वेदश्चाधीत इति।

एतदतिरिक्ता पितृविद्या राशिविद्या ( गणितशास्त्रम् ), निधिविद्या ( भूगर्भशास्त्रम् ), वाक्योवाक्यविद्या ( तर्कशास्त्रम् ), एकायनविद्या ( नीतिशास्त्रम् ), देवविद्या, ब्रह्मविद्या ( अध्यात्मशास्त्रम् ), क्षत्रविद्या ( युद्धशास्त्रम् ), नक्षत्रविद्या ( ज्योतिःशास्त्रम् ), सर्पविद्या, देवयजन विद्या चाधीता इति। एतेनोपाख्यानेनानुमीयते यदन्या अपि बहुविधा विद्या भारते प्रचलिता आसन्।

तथा च अन्यविद्या इव राजधर्मशास्त्रस्याप्युन्नति प्राचीनभारते आसीत्।

महाभारतस्य शान्तिपर्वणि राजधर्मस्य विशद वर्णनं विद्यते। यद्यपि कौटिलीयार्थशास्त्रस्य रचना बौद्धकालानन्तरं बभूव, किन्तु तत्रार्थ शास्त्रे बहूना प्राचीनराजनीतिज्ञाना मतवर्णनमकारि चाणक्येन। तद्यथा—कतिपयाचार्या भरद्वाज विशालाक्ष पराशर पिशुन-कौणपदन्त वातव्याधि-बाहुदन्तीपुत्र बार्हस्पत्यप्रभृतयः। किंबहुना किं कथयामि दुःखामहे! इदानीं भारते नैवोपलभ्यन्ते एतेषामाचार्याणां नीतिशास्त्राणि।

### षडङ्गानि

शिक्षाकल्पनिरुक्तज्योतिषव्याकरणछन्दांसीति षड् वेदाङ्गानि। शिक्षायां वैदिकवर्णानां शब्दानाञ्चोच्चारणस्य सिद्धान्ता विद्यन्ते। एतस्य शास्त्रस्य प्राचीनग्रन्थः प्रातिशाख्यमस्ति। शौनकविरचितऋग्वेद-प्रातिशाख्यम्, तैत्तिरीयप्रातिशाख्यसूत्रम्, कात्यायनविरचितवाजसनेयि-प्रातिशाख्यसूत्रम्, अथर्ववेदप्रातिशाख्यञ्चेति चत्वारि प्रातिशाख्यानि वर्तन्ते। एतदतिरिक्तानि भरद्वाजवशिष्ठव्यासयाज्ञवल्क्यनिर्मितान्यपि प्रातिशाख्यान्यासन्। प्राचीनकाले शब्दानां शुद्धोच्चारणस्याधिकं महत्त्वमासीत्। शब्दानां कस्मिन् वर्णे कस्यां मात्रायामधिकं बलं प्रदेयमिति पूर्वमहर्षीणां दृशावधिकं महत्त्वपूर्णं मासीत् यतः यज्ञानुष्ठाने वेदमन्त्राणां विनियोगः तदैव पूर्णं फलं प्रदातुं शक्नुयात् यदा तेषां शुद्धोच्चारणं भवेत्।

करणञ्चैव सरलमिति कृत्वा वैदिकानुष्ठानानां संक्षेपेण वर्णनं श्रौतकल्पे कृतम्। श्रौतकल्पस्तु ब्राह्मणग्रन्थसारभूतोऽस्ति। गृहस्थानां जन्मत आरभ्य मृत्युपर्यन्तानां संस्काराणां वर्णनं गृह्यसूत्रे वर्तते। तथा चैको मानवोऽन्यं मानवं प्रति कीदृशं व्यवहारं कुर्यात्, कांश्च नियमान् पालयेत् एतेषां वर्णनं धर्मसूत्रकल्पे वर्तते इति।

वर्तमानसमये निम्नलिखिताः सूत्रग्रन्था उपलभ्यन्ते—

गौतमधर्मसूत्रम्, बौधायनसूत्रम्, आपस्तम्बसूत्रम्, मानवसूत्रम्, काठकसूत्रम्, कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, आश्वलायनगृह्यसूत्रम्, आश्वलायनश्रौतसूत्रम्, शाङ्खायनश्रौतसूत्रम्, शाङ्खायनगृह्यसूत्रम्, लाट्यायनश्रौतसूत्रम्, गोभिलगृह्यसूत्रम्, कौशिकसूत्रम्, वैतानसूत्रञ्च।

भारतीयप्राचीनपरम्परानुसारेण षड् दर्शनशास्त्राणि साङ्ख्ययोगन्यायवैशेषिकमीमांसावेदान्तसञ्ज्ञकानि वर्तन्ते।

साङ्ख्यदर्शनस्य मुख्यः सिद्धान्तः सत्कार्यवादः। एतदनुसारेण असतः सदुत्पत्तिर्नैव भवितुमर्हति। सर्वा एव सत्ता अव्यक्तरूपेण स्वकारणेषु विद्यमाना भवन्ति। उत्पत्तेरभिप्रायोऽयमेव यत् कारणस्य कार्यरूपेणाभिव्यक्तिर्जायते। विनाशश्च कार्यस्य कारणे लीनत्वमेव। तस्या अपि विद्यमानायाः सत्ताया सर्वथा विनाशो नैव भवति, किन्तु सा स्वकारणे विलीना भवति। मृत्तिकया घटोत्पत्तिः, वस्तुतो घटो मृत्तिकारूपेण पूर्वमपि विद्यमान आसीत्। घटोत्पत्तिसमये मृत्तिकैव घटरूपे परिणता व्यक्तीभूता वा। घटनाशस्यायमेवाभिप्रायो यद् घटः पुनरपि मृत्तिकारूपे परिणतः।

इममेव सत्कार्यवादमवलम्ब्य साङ्ख्यशास्त्रे संसारस्य कारणं प्रकृतिरिति स्वीकृतम्। संसारः प्रकृतिरूपान्तरपरिणाम एव। प्रकृतिश्च नित्या अनादिभूता च। संसारोऽव्यक्तरूपेण सर्वदैवावतिष्ठते। यदा सः स्वं व्यक्तं करोति तदा संसारो भवति। सत्त्वरजस्तमोगुणाः संसारस्याधारभूताः। एतेषां त्रयाणां साम्यावस्थाया नाम प्रकृतिः। यदैतेषां साम्या-

वस्था न भवति तदा कस्याप्येकस्य गुणस्य प्राधान्येन संसारस्य विविधवस्तूनां निर्माणं भवति। किन्तु प्रकृतिः स्वयं संसाररूपे व्यक्ता न भवति। सा स्वयं जडीभूता। अतस्तस्याः पुरुषस्यापेक्षा भवति। प्रकृतिः पुरुषश्चेति द्वे मूलानादितत्त्वे स्तः। एतयोः संयोगेन संसारस्य निर्माणं भवति। प्रकृतिपुरुषयोर्दशा पङ्ग्वन्धयोरिव वर्तते। न चैवमन्धो निर्दिष्टस्थानं गन्तुं शक्नोति, न च केवलं पङ्गुः। किन्तु यदि पङ्गुरन्धस्य स्कन्धस्थितो भवेत्तदा द्वावपि समुद्दिष्टं स्थानं प्राप्तुं शक्नुयाताम्। एवमेव प्रकृतिपुरुषावपि परस्परसहयोगेन सृष्टिनिर्माणं कुरुतः। अथ च प्रकृतिः संसाररूपेण व्यक्तसमयेऽनेकासु दशासु गच्छति। ताश्च दशाः महदहङ्कारपञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियमनःपञ्चतन्मात्रापञ्चमहाभूतानीति। सांख्यदर्शने सृष्टिविकासस्य भिन्नदशानां विशदं विवेचनं विद्यते।

सांख्यदर्शनानुसारेण पुरुषः स्वप्रकाशस्वरूपश्चेतनः। सुखदुःखकामक्रोधलोभमोहादीनां सम्बन्धः पुरुषेण सह नास्ति, किन्तु प्रकृत्या सह। परञ्च प्रकृतिसंयोगेन पुरुषोऽपि विभिन्नपदार्थेषु ममत्वस्याहङ्कारस्य च बुद्धिं करोति। संसारे यत्किञ्चिदपि भवति, तस्य कारकं नैव पुरुषः। किन्तु प्रकृतिः सर्वं कार्यं करोति। परं यदा प्रकृतिसंयोगेन पुरुषोऽहङ्कारविमूढो भवति तदा प्रकृत्या क्रियमाणानि कार्याणि कर्ताहमिति मन्यते। वस्तुतः पुरुषः कर्ता नैव भवति। यदा पुरुषः सम्यक्तया 'नाहं कर्ता, किन्तु प्रकृतिरेव सर्वं करोति' इति निश्चिनुते, तदासौ अहङ्काराद्विमुक्तो जायते। एतस्यैव नाम मोक्ष इति।

सृष्टिनिर्माणस्थितिप्रलयेषु सांख्यः ईश्वरस्यावश्यकतां नैवानुभवति। अत एव तन्मूलं (संसारमूलं) तत्त्वेषु नास्तीश्वरपरिगणनम्, न च वेदान्तिनां ब्रह्म इव मूलतत्त्वस्योऽप्युच्चरूपेण तस्य सत्तास्वीकरणम्। किन्तु सांख्यवेत्तारः ईश्वरस्य खण्डनमपि नैव कुर्वन्ति, स्वकीयपद्धतौ ते ईश्वरस्यावश्यकतामेव न मानयन्ति।

साङ्ख्यदर्शनस्य प्रवर्तकः कपिलमुनिरासीत्। स एव साङ्ख्यसूत्राणां रचनाञ्चकार। पञ्चशिखाचार्यकृतं षष्ठितन्त्रमेव तच्छास्त्रस्य प्रामाणिकग्रन्थ आसीत्, किन्त्विदानीं नैवोपलभ्यते। ईश्वरकृष्णस्य साङ्ख्यकारिका विज्ञानभिक्षुकृतं प्रवचनभाष्यं गौडपादभाष्यञ्चैतच्छास्त्रस्य प्रामाणिकग्रन्थाः विद्यन्ते सुलभाश्च।

योगदर्शनमिदमेव प्रतिपादयति यन्मनुष्यः केन प्रकारेण चित्तवृत्तीनां निरोधं कुर्यात्। वस्तुतः चित्तवृत्तिनिरोधस्यैव नाम योगो वर्तते। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो योगस्य अष्टाङ्गानि वर्तन्ते।

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाणां नाम यमः। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानां नाम नियमः। चित्तवृत्तीनां निरोधार्थमेकासनस्थितेर्ये विविधाः प्रकारास्तेषां नामासनम्। श्वासप्रश्वासयोर्यो नियन्त्रणकरणमेव प्राणायामः। यदेन्द्रियाणि विषयान्परित्यज्यान्तर्मुखानि भवन्ति, तदेतस्या दशाया नाम प्रत्याहारः।

कस्मिंश्चिन्निश्चिते स्थाने उपविश्य मनोध्यानं वा स्थिरीकरणं धारणा। चित्तैकाग्रदशाया नाम ध्यानम्। यदा मानवस्य सर्वा एव वृत्तयस्तद्दशवर्तिन्यो भवन्ति, तस्या एव दशाया नाम समाधिः।

योगदर्शने योगसाधनायाः—एतस्या सर्वेषामङ्गानां विशदवर्णनं वर्तते। एतस्य दर्शनस्यादिप्रवर्तकः पतञ्जलिः योगसूत्राणां रचनां कृतवान्। तस्मिन् व्यासस्य भाष्यमतीव प्राचीनं प्रामाणिकञ्च वर्तते। पश्चाद्वाचस्पतिमिश्रस्तत्त्ववैशारदीं तथा विज्ञानभिक्षुश्च योगवार्तिकटीकां कृतवन्तौ।

न्यायदर्शनस्य प्रधानलक्ष्यमिदमेव यत्तदिदं निश्चितं कुर्याद् यन्निश्चितज्ञानार्थं कियन्ति कानि च प्रमाणानि वर्तन्ते। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। यं विषयं वयं साक्षाद्रूपेण जानीमस्तदेव प्रत्यक्षम्। नेत्रनासिकाकर्णजिह्वात्वच एतानि पञ्चज्ञानेन्द्रियाणि। यदा कस्यापीन्द्रि-

यस्य स्वविषयेन सह साक्षात्सन्निकर्षः सम्बन्धः सम्पर्को वा भवति तदा तस्य विषयस्य ज्ञानं जायते, इदमेव ज्ञानं प्रत्यक्षज्ञानम्। श्रमनरसनामिनेत्र-नासिकाकर्णजिह्वात्वग्भिरनुभूतं ज्ञानं प्रत्यक्षमिति यावत्।

यदा कस्यापि वस्तुनोऽस्माकं प्रत्यक्षज्ञानं न भवति, किन्तु केनापि हेतुना तस्य ज्ञानं भवति, तज्ज्ञानमनुमानज्ञानम्। यथास्माभिः कस्यापि दूरवर्तिनः पर्वतस्य शिखरे धूमो विलोकितस्तस्मादनुमानं कृतं यत्तत्राग्निर्वर्तते। यत्र यत्र धूमो भवति तत्र तत्राग्निरवश्यमेव भवति। अतो धूमसत्तयाग्निसत्तास्माभिरवधारिता। एतादृशमेव ज्ञान-मनुमानज्ञानम्। यदा कस्यापि ज्ञातस्य वस्तुनः साधर्म्येण वयमज्ञातस्य वस्तुनो ज्ञानं कुर्मस्तदोपमानज्ञानं भवति। यथा कश्चिन्मानवो गां सम्यक्तया जानाति, किन्तु गवयं न जानाति। तं कश्चित् कथयति यद् गवयोऽपि गोसदृश एव भवति। स च वने पशुमेकं पश्यतिऽयस्याकृतिः गोसदृशी। तेनासौ जानाति यदसौ पशुर्गवयो वर्तते। इत्थं ज्ञानमेवो-पमानज्ञानम्। किन्तु बहवो विषया एतादृशा अपि वर्तन्ते यान् वयं प्रत्यक्षानुमानोपमानैर्न ज्ञातुं शक्नुमः तज्ज्ञानसाधनं केवलं शब्द एव। राजा अशोको भारते शासनं कुर्वन्नासीत्तथासौ भारते धर्मविजयनीत्यनुस-रणञ्चकार। एतद्वार्ता वयं केवलं शब्देन जानामः। भूमण्डलस्योत्तरभागे ध्रुवप्रदेशा वर्तन्ते, ये सदैव हिमेनाच्छादिताऽस्ति, इमामपि वार्तां वयं शब्देनैव जानीमः। एतादृशा बहवो विषया येषां ज्ञानस्याधारः शब्दादृते नान्यः कोऽपि घटते।

ज्ञानाधारभूतानामेतेषां प्रमाणानां विस्तारपूर्वकं विवेचनं न्यायदर्शनेऽस्ति। ज्ञानसाधनानां विवेचनं कृत्वा पुनस्तत्र संसारस्य विविधानां तत्त्वानां विचारोऽपि कृतः। न्यायदर्शनानुसारेण, ईश्वरो जीवः प्रकृतिश्चेति त्रयो मूलपदार्थाः जीवात्मा शरीराद्भिन्नश्च। चार्वाकाः शरीरजीवात्मनोः कमपि भेदमेव न स्वीकुर्वन्ति। तेषां कथनं यन्मृत्युना सह जीवात्मनोऽपि समाप्तिर्जायते। किन्तु नैयायिका

चार्वाकमतखण्डन कृत्वा सिद्धमिदं कृतवन्तो यज्जीवात्मनः पृथग्वर्तते। स च शरीरमनोबुद्धिभ्यो भिन्न स्वतन्त्रश्च पदार्थोऽस्ति। एवमेवेश्वरस्य प्रकृतेश्च स्वरूपस्यापि न्यायदर्शने विस्तृत विवेचन क्रियते।

न्यायदर्शनस्य प्रवर्तको महर्षिर्गौतिमो वर्तते। स च सूत्ररूपेण न्यायदर्शनस्य रचनाञ्चकार। गौतमविरचितन्यायसूत्रेषु वात्स्यायनविरचित विस्तृत भाष्य वर्तते। सूत्रभाष्यरचनानन्तर न्यायदर्शनसम्बन्धिनोऽनेके स्वतन्त्रा ग्रन्था अप्यन्यैराचार्यैर्विरचिताः। तेषु वात्स्यायनभाष्यव्याख्यानभूत उद्योतकरविरचित न्यायवार्तिकम्, वाचस्पतिमिश्रलिखिता तात्पर्यटीका तात्पर्यटीकाव्याख्यानभूत, उदयनाचार्यविरचितः तात्पर्यपरिशुद्धिनामको ग्रन्थ., एते त्रयो ग्रन्था अतीव प्रसिद्धाः। न्यायरूपेण भारतीयाः प्राचीनमहर्षय एतादृश तत्त्वज्ञान प्राप्तवन्तो येन पदार्थाना ज्ञाने सत्यासत्यनिर्णये महत्साहाय्यमाप्नुवन्ति जनाः।

वैशेषिकदर्शनानुसारेण ज्ञानस्य चत्वारि साधनानि। प्रत्यक्ष लैंगिक (अनुमानम्) स्मृतिरार्षज्ञानञ्च। ज्ञानेन्द्रियैर्मनसात्मना यज्ज्ञानमुत्पद्यते तदेव प्रत्यक्षज्ञानम्। लैंगिकज्ञानस्यापरं नाम, अनुमानाख्यमानशब्दैतिह्यभेदैः। अनुमानस्यार्थ ऐतिह्यम्। पूर्वं ज्ञातस्य वस्तुनः स्मरणेन यज्ज्ञानमायते तदेव ज्ञान स्मृतिशब्देन व्यवह्रियते। स्मृतिरपि ज्ञानसाधिका। ऋषयो यद्ज्ञान मन्त्रद्रष्टृया प्राप्तवन्तस्तदेव ज्ञानमार्षज्ञानम्। वय बहूनि वस्तूनि केवलेनार्षज्ञानेनैव जानीम.।

वैशेषिकदर्शनानुसारेण ससारस्य सर्वे एव पदार्था. द्रव्यगुणकर्मसामान्यविशेषसमवायाभावेषु विभक्ता वर्तन्ते। पदार्थस्याभिप्रायो ज्ञानम्। ससारस्य प्रत्येकवस्तुनः प्रत्येकभावस्य चैतेषु सप्तभागेष्वन्तर्गति कर्तुं शक्नुमः।

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि। एतेषु नवसु पूर्व पञ्च महाभूतानि। कालोदिक्चैतादृशे द्रव्ये स्तो याभ्या बहिर्विश्वस्य कापि सत्ता नास्ति कल्पिता। आत्मामन-

श्चैतादृश्यौ सत्ते स्त, यया सम्बन्धो भौतिकपदार्थेन सह नास्ति। पृथ्वीजलादय पञ्च भौतिकपदार्था। एतेषान्निर्माणं परमाणुभिरभूत्। परमाणुश्च नित्य शाश्वतश्च। तत्तत्त्वम् यस्य विभागो नैव भवति कदापि, तदेव परमाणुशब्देनोच्यते। परमाणूना सम्बन्धेनैव पृथिवीजलादीना द्रव्याणान्निर्माण भवति।

रूपरसगन्धस्पर्शसख्यापरिमाणपृथक्त्वसयोगविभागपरत्वापरत्वगुरुत्व-द्रवत्वस्नेहशब्दबुद्धिसुखदु खेच्छाद्वेषप्रयत्नधर्माधर्मसस्कारा एते चतुर्विंशतिर्गुणा। एतेषा गुणाना सत्ता द्रव्यात् पृथङ्नैव कदापि भवति।

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानीति पञ्च कर्माणि। अयुत सिद्धयोर्वस्तुनो नित्य सबन्ध समवाय इति। वस्तूना सत्तानाञ्च परस्पर नित्यसम्बन्ध एव समवायशब्देनाभिधीयते। गुणगुणिनो क्रियाक्रिया-वताश्च यो हि सम्बन्धो असौ नित्य। एवमेव कार्यकारणयो सम्बन्धो नित्य। य खल्वेकोऽपरस्मात्पृथङ् न भवितु प्रभवति तयो सम्बन्धो नित्य सम्बन्ध, स च समवाय इति निष्कर्ष। वैशेषिकदर्शनस्य प्रवर्तक कणाद आसीत्। स एव वैशेषिकसूत्राणि व्यरचयत्। कणादसूत्रेष्वाचार्यप्रशस्तपादेन भाष्य व्यलेखि, यत्प्रशस्तपादभाष्यमिति कथयन्ति। पश्चाद् व्योमशिवाचार्या व्योमवती, उदयनाचार्य किरणावली श्रीधराचार्या न्यायकन्दली वल्लभाचार्यो न्यायलीलावतीञ्च व्यरचयन्।

मीमासादर्शनस्य मुख्य प्रयोजनमिदम्वर्तते यदद कर्मकाण्डस्य शास्त्रीयरूप प्रतिपादयेत्। शास्त्रीयकर्मकण्डे यत्र विरोधोऽसङ्गतिर्वा लक्ष्येत तत्र तद्विरोधस्य निराकरण धार्मिकनियमस्य वास्तविकी मीमासाञ्च कुर्यात्। एतद्दर्शनानुसारेण वेदविहितकर्मैव धर्म। तेषा कर्मणा करणे नापूर्वस्य ( प्रारब्धस्य ) उत्पत्तिर्जायते। मनुष्याणा यानि सुखदु खैश्वर्य दारिद्र्यादीनि वर्तन्ते तेषा मूलकारणमपूर्वमेव। प्रत्येक मानव स्वस्वकर्मभिरपूर्वनिर्माण करोति। वैदिककर्मकाण्डेषु कस्यचिद्विशेषफलस्य प्राप्त्यै विशेषस्यानुष्ठानस्य कर्मकाण्डस्य वा विधान वर्तते। किन्तु वयं

पश्यामो यत् कर्मकाण्डेनाभीष्टं फलं शीघ्रमेव न प्राप्यते जनैः। अतो मीमांसादर्शनेनेदमेव प्रतिपादितं यत् कर्मकाण्डद्वाराऽपूर्वस्योत्पत्तिर्भवति यः खलु मनुष्येण सह तिष्ठति । एतदपूर्वपरिणामस्वरूपमेव पश्चाद-भीष्टफलमाप्नुवन्तिजनाः।

मीमांसका वेदमपौरुषेयमिति मानयन्ति। वेदाः प्रकृतिपुरुषाविव नित्या अनादयश्च वर्तन्ते। तेषु सर्वेषामेव धर्माणां विधानं यत् कृत्वा मनुष्याः स्वाभीष्टफलं प्राप्तुं शक्नुवन्ति। मीमांसादर्शनस्य प्रवर्तक आचार्यं जैमिनिरासीत्। तदुपरि शबरमुनिना शाबरभाष्यं व्यलेखि। शाबरभाष्योपरि कुमारिलभट्टः प्रभाकरभट्टश्च व्याख्यां लिखितवन्तौ। कुमारिलभट्टविरचितौ श्लोकवार्तिकतन्त्रवार्तिकनामकौ द्वौ प्रामाणिक-ग्रन्थौ निर्मितौ। अयं च कुमारिलो बौद्धानां खण्डनं कृत्वा वेदप्रामाणिक-तायाः पुनरुद्धारञ्चकार।

वेदान्तदर्शनानुसारं संसारस्य वास्तविकसत्ता ब्रह्म। ब्रह्मैव सत्य-मान्यत्किमपि। ब्राह्मण पार्थक्येन जीवस्य पृथग्भूता कापि पारमार्थिकी सत्ता नास्ति।

प्रकृतिर्ब्रह्मण एव समुत्पन्ना। ब्रह्मणो भिन्ना तस्याः कापि वास्तविकी सत्ता नास्ति। निर्विशेषं चिन्मात्रमेव ब्रह्मणः स्वरूपम्। सांख्यदर्शनमतप्रतिपादितयोः प्रकृतिपुरुषयोरपि विकासं एतस्माद्ब्रह्मणः सकाशादेव जातः।

वेदान्तदर्शनप्रवर्तको बादरायणो भगवान् व्यासोऽस्ति। स एव वेदान्तसूत्राणां रचनाञ्चकार। एतेषु सूत्रेषु विविधाचार्याः स्वस्व-मतानुसारं भाष्यं लिखितवन्तः। एतेषु प्रधानं भाष्यं श्रीशंकराचार्य कृतं शांकरभाष्यमेव। वस्तुतः श्रीशंकराचार्यः वेदान्तस्यैकं नवीनं सम्प्रदायं प्रारब्धवान्, यमद्वैतसिद्धान्तं कथयन्ति जनाः। एतदनु-सारेण समस्तं जगन्मिथ्यास्ति। यथा रात्रौ मनुष्यस्य रज्जौ सर्पभ्रमो

भवति, तथैव संसारे दृग्गोचराणि सर्वाण्येव वस्तूनि भ्रमरूपाणि वर्तन्ते। जगन्मायातिरिक्तं किमपि नास्ति। मायायाः परमार्थेन कापि सत्ता नास्ति। यदा ब्रह्म माययावच्छिन्नं भवति तदेश्वरः कथ्यते। जीवात्मा वस्तुतो ब्रह्मैव विद्यते। यथैक एवाकाशो घटे घटाकाशरूपेण मठे मठाकाशरूपेणावभासते, किन्तु वस्तुत आकाश एक एव, एवमेवान्तःकरणावच्छिन्नो जीवात्मा ब्रह्म एव जीवात्मरूपेणावभासते। ब्रह्मणो व्यतिरिक्तः पृथग्वा जीवात्मा नास्ति, ब्रह्मैवास्ति, तथैव सर्वव्यापक आकाशः घटाकाशान्मठाकाशाद्वा व्यतिरिक्तो नास्ति। वेदान्तसूत्रोपरि रामानुजाचार्य-मध्वाचार्य, निम्बार्काचार्य वल्लभाचार्याणामपि भाष्याणि वर्तन्ते। किन्त्वेतेषां मतं शंकराचार्यमताद्भिन्नमस्ति।

रामानुजाचार्यः प्रकृतिजीवात्मनोः पृथक् सत्तां स्वीकुर्वन्नपि तौ ब्रह्मण्याश्रिताविति मन्यते। ब्रह्मणः पृथक् प्रकृतिजीवात्मनोः किमपि प्रयोजनमास्ति एवं तन्मतं विशिष्टाद्वैतमिति कथ्यते। मध्वाचार्यः प्रकृतिजीवात्मनोः पृथक् स्वतन्त्रा सत्ता स्वीकरोति, अतस्तन्मतं द्वैतवाद इति कथ्यते। एकस्यैव ब्रह्मसूत्रस्य विविधैराचार्यैर्भिन्नभिन्नरूपेण व्याख्याः कृताः। किन्तु ब्रह्मणः सत्ता सर्वोपरीति सर्वैरेव स्वीकृतं समानरूपेण। उपनिषदां प्रमाणं मत्वैवैतस्य दर्शनस्य प्रधानत्वेन विकासोऽभूदिति।

१. सन्तानोत्पत्त्यर्थं गर्भाधानसंस्कारः।
२. पुरुषसन्तानप्राप्त्यर्थं पुंसवनसंस्कारः।
३. गर्भरक्षार्थं सीमन्तोन्नयनसंस्कारः।
४. सन्तानोत्पत्तौ जाताया जातकर्मसंस्कारः।
५. उत्पन्नस्य सन्तानस्य नामकरणार्थं नामकरणसंस्कारः।
६. सन्तानस्य प्रथमान्नभोजनेऽन्नप्राशनसंस्कारः।
७. सन्तानस्य प्रथमबालच्छेदने चूडाकर्मसंस्कारः।
८. विद्याध्ययनकरणात्पूर्वं यज्ञोपवीतप्रदानसमये उपनयनसंस्कारः।
९. शिक्षासमाप्तौ समावर्तनसंस्कारः।

१०. गृहस्थाश्रमप्रवेशार्थं विवाहसंस्कारः ।

११. गृहस्थानां कृत इदमावश्यकं यदसौ प्रतिदिनमग्निहोत्रं कुर्यात् । इदमेव देवयज्ञनाम्नाऽभिधीयते ।

१२. पितृयज्ञः पितॄणां श्राद्धादिकरणम् ।

१३. अतिथियज्ञोऽतिथीनां सेवा ।

१४. भूतयज्ञः पशुपक्षिकृमिकीटादीनां कृते दीयमानो बलिः ।

१५. ब्रह्मयज्ञो विदुषां प्रतिष्ठितानां सेवा, देवपितृभूतातिथिसेवा । ब्रह्मयज्ञश्च पञ्चमहायज्ञ इति नाम्नाभिधीयते, यस्य सम्पादनं प्रत्येकगृहस्थस्य कर्तव्यम् ।

१६. अष्टकायज्ञः कार्तिकमासादारभ्य माघमासपर्यन्तं प्रत्येकमासस्य कृष्णपक्षाष्टम्यामेतस्य यज्ञस्य सम्पादनं कर्तव्यम् ।

१७. श्रावणी श्रावणमासपूर्णिमायां क्रियमाणो यज्ञः ।

१८. आग्रहायणी आग्रहायणमासस्य पूर्णिमायां क्रियमाणो यज्ञः ।

१९. चैत्री चैत्रमासस्य पूर्णिमायां क्रियमाणो यज्ञः ।

२०. आश्वयुजी आश्विनमासपूर्णिमायां क्रियमाणो यज्ञः ।

२१. दर्शपौर्णमासौऽमावास्यापूर्णिमायाञ्च क्रियमाणौ यज्ञौ ।

२२. आग्रहायणः उत्पन्नेषु नूतनसस्येषु क्रियमाणो यज्ञः ।

२३. चातुर्मास्यः शीतग्रीष्मवर्षर्तूनां प्रारम्भे क्रियमाणो यज्ञः ।

२४. सौत्रामणी अश्विनोः पूजनार्थं क्रियमाणो यज्ञः ।

२५. अग्निष्टोमः सोमपानार्थं क्रियमाणो यज्ञः ।

२६. व्रात्यस्तोमः व्रात्यानां शुद्ध्यर्थं क्रियमाणो यज्ञः ।

२७. राजसूयः नूतननृपाणां राज्याभिषेकात्पूर्वं क्रियमाणो विविधजनैर्जनप्रतिनिधिभूतैरभिषेकरूपः ।

२८ अश्वमेधो यदा कश्चिद्राजा दिग्विजयं कृत्वा स्वशक्तिविस्तारमकरोत्तदा विजययात्रोपलक्ष्ये क्रियमाणो यज्ञः ।

मुक्तामणे ! एते सरकारा यथा चाधिकमहत्त्वशालिनो वर्तन्ते। किन्त्वेतेभ्योऽतिरिक्ता अपि बहवो यथा भारते भवन्त्य आसन्, येषां वर्णनं ब्राह्मणग्रन्थेषु श्रौतसूत्रेषु गृह्यसूत्रेषु च वर्तते। वैदिकसाहित्ये चतसृभ्यः संहिताभ्योऽतिरिक्ता ब्राह्मणग्रन्था अपि सम्मिलिता भवन्ति। एतेषु ब्राह्मणग्रन्थेषु येषु वैदिकानुष्ठानेषु ये च मन्त्राः प्रयुज्यन्ते, तेषां विशद वर्णनमस्ति। प्रत्येक ब्राह्मणग्रन्थस्य येन वेदेन सह सम्बन्धस्तस्य वेदस्यैवासौ ब्राह्मणग्रन्थ इति मानयन्ति।

ऋग्वेदस्य प्रधानब्राह्मणग्रन्थ ऐतरेयब्राह्मणं वर्तते। प्राचीनानुश्रुत्यनुसारेणैतस्य रचयिता महीदास ऐतरेय आसीत्

ऋग्वेदस्यैव द्वितीयो ब्राह्मणग्रन्थ. कौशीतकीब्राह्मणं वर्तते।

कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणमस्ति। शुक्लयजुर्वेदे कृष्णयजुर्वेदे चायमेव मुख्यो भेदो यच्छुक्लयजुर्वेदे केवलं मन्त्रभाग एव कृष्णयजुर्वेदे ब्राह्मणभागोऽपि तदन्तर्गत एव।

अतस्तैत्तिरीयब्राह्मणे रचनादृष्ट्या कृष्णयजुर्वेदान्नास्त्यधिको भेदः।

शुक्लयजुर्वेदस्य शताध्यायसम्पन्नं चतुर्दशकाण्डेषु विभक्तं शतपथब्राह्मणं वर्तते। शतपथब्राह्मणे सप्रयोजनानां याज्ञिकानुष्ठानानां वर्णनं च वर्तते। एतस्य रचयिता याज्ञवल्क्यः।

सामवेदस्य ताण्ड्यब्राह्मणं षड्विंशब्राह्मणं जैमिनीयब्राह्मणं चेति त्रीणि ब्राह्मणानि वर्तन्ते।

अथर्ववेदस्य गोपथब्राह्मणं विद्यते।

प्राचीनभारताय महात्मान ऋषयो राजानश्च विविधयज्ञादिकर्म कुर्वन्तोऽपि दार्शनिकाध्यात्मिकपारलौकिकविषयाणामपि परिचिन्तका बभूवुः। आत्मा कः, सृष्टेरुत्पत्तिः केन प्रकारेण कैस्तत्त्वैर्निर्मिता, अस्याः कर्ता नियामकश्च कः, जडप्रकृतेर्भिन्नायाश्चेतनायाः किं स्वरूपम्, का च सत्तेति प्रश्नानां विचारका महर्षयः प्रायेणारण्ये कानने च निवसन्तो बभूवुः।

यत्र च ते स्वकीयाश्रम विधाय निवसन्त आरण्यकोपनिषदां निर्माणं कृतवन्तः। एतासामुपनिषदां संख्या द्विशतादप्यधिकाः।

ऋग्वेदस्यान्तिमो भागः कौशीतकिब्राह्मणोपनिषत्। तथैवैतरेय-ब्राह्मणस्यैको भाग ऐतरेयोपनिषदपि वर्तते।

यजुर्वेदस्यान्तिमोऽध्याय ईशावास्योपनिषद् अथ च शुक्लवेदब्राह्मण-ग्रन्थः शतपथब्राह्मणस्यान्तिमो भागो बृहदारण्यकोपनिषदपि वर्तते।

कृष्णयजुर्वेदस्य ब्राह्मणग्रन्थान्तर्गतश्वेताश्वतरकठतैत्तिरीयोपनिषदो वर्तन्ते।

सामवेदसम्बन्धिन्यौ केनच्छान्दोग्योपनिषदौ वर्तेते।

अथर्ववेदेन सह मुण्डकप्रश्नमाण्डूक्योपनिषदां सम्बन्धः।

आरण्यका उपनिषदश्च गद्यपद्येषु वर्तन्ते। भाषाछन्दोदृष्ट्या एते वैदिकसंहिताभ्यो भिन्नाः।

उपनिषत्स्वनेकेषु कथानकेषु बहूनां ब्रह्मर्षीणाञ्च दार्शनिक-विचारस्य वर्णनमुपलभ्य इति।

## षष्ठो विवाहः

विवाहस्याष्टौ प्रकाराः प्राचीनकाले प्रचलिता आसन्। तद्यथा—

१. ब्राह्मविवाहः—यस्मिन् वस्त्राभूषणालङ्कृतां कन्यां पिता योग्याय वराय प्रयच्छत्यसौ ब्राह्मविवाहः।

२. प्राजापत्यविवाहः—यस्मिन् वरकन्ययोः, प्राजापत्यधर्मपूर्त्यर्थं (सन्तानोत्पत्त्यर्थं) विवाहो भवेत्। पिताप्येतदुद्देश्येनैव योग्याय वराय स्वकीयां कन्यां प्रयच्छेदसौ प्राजापत्यविवाहः।

३. आर्षविवाहः—एतस्मिन्विवाहे वरपक्षीयाः कन्यायै गवायुगुपहारं प्रयच्छन्ति तथा वधूप्राप्त्यै वरः कन्यापक्षीयेभ्यो दक्षिणामपि ददाति।

४. दैवविवाहः—यज्ञकर्माणि ऋत्विककर्मकुर्वता जामात्रा सह कन्यामलङ्कारालङ्कृत्य विधाय यो विवाहो भवत्यसौ दैवविवाहः।

५. गान्धर्वविवाहः—परस्परं स्वच्छन्दप्रेम्णा वरकन्ये स्वेच्छया यं विवाह कुरुतोऽसौ गान्धर्वविवाहः ।

६. आसुरविवाहः—कन्यापक्षीयान् प्रचुरधनैः सन्तोष्य सम्प्राप्य च तेभ्यः कन्या यो विवाहो भवत्यसौ आसुरविवाहः ।

७. राक्षसविवाहः—बलात्कन्यामपहृत्य कृतो विवाहो राक्षसविवाहः ।

८. पैशाचविवाहः—मद्यादिसेवनेन प्रमत्तया कन्यया सह सस्थापितो विवाहसम्बन्धः पैशाचविवाहः । एतेषु पूर्ववर्णिताश्चतुरो विवाहान् धर्मानुकूल मानयन्ति, अपराश्चतुरो धर्ममर्यादाविरुद्धान् । किन्तु प्राचीन-भारत खल्वेतेषा विवाहानामपि प्रचलनमासीत् । अथ च कन्याविवाहार्थं स्वयवरस्यापि प्रचलन तस्मिन् समये बभूव । रामायणमहाभारता ध्ययनेनेद ज्ञायते यदेकः पुरुषो बह्वीभिः कन्याभिः सह विवाह कुर्वन्नासीद् अवगुण्ठनस्यापि प्रथा प्राचीनभारत आसीत् । महा-भारतस्य स्त्रीपर्वणि पतिपुत्रादिमृत्युशोकेन युद्धभूमौ रुदन्तीना स्त्रीणा सम्बन्धे विलिखित यत् याः पूर्व देवैरप्य दृष्टास्ता एवेदानीं सर्वेषा सम्मुखे रुदन्ति इति ।

एवमेव शल्यपर्वणि दुर्योधनस्त्रीणा सम्बन्धेऽपि असूर्यम्पश्येति विलिखितम् ।

भागवतधर्मः

वैदोत्तरमिश्रसमये हिंसाप्रधानयज्ञाना तपसाञ्च विरुद्धा एका जागृतिः समुत्पन्ना । उपनिषत्सु यज्ञतुलना सच्छिद्रनावा कृता, यत्र स्थित्वा मनुष्यः कदापि ससारसागरपारन्नैवाप्नोति । यज्ञकर्मकाण्डविरुद्धाया यस्या जागृतेरारम्भो ऽभूत्सा श्रीकृष्णद्वाराऽधिकं बलमासादवती । श्रीकृष्णस्य या विचारसरिणी प्रादुर्बभूव सैव भागवतधर्मे परिणता जाता । एतस्य धर्मस्योल्लेखाः महाभारतेऽनेकस्थलेषु वर्तते । अथ च भागवतधर्मस्य सर्वोत्कृष्टं रूपं गीतायां । मिलति वर्तमानहिन्दुधर्मोपरि

गीताया अधिकः प्रभावो विद्यते। गीतानुसारेण आत्मा नित्योऽनश्वरश्च, शरीरनाशेन सम आत्मनो विनाशो न भवति इति निश्चितं वर्तते।

कामनावासनाभ्यां मनो दूरीकृत्य स्वकर्तव्ये समाधातव्यमिति मानवकर्तव्यम्। कर्तव्यं पालयन्नपि फलाकाङ्क्षां नैव कुर्यात्। सुखदुःखलाभहानिजयपराजयविचारं विहाय मानवो जीवनसंघर्षे तत्परो भवेत्। स च इन्द्रियाणि वशीकृत्य स्थितप्रज्ञो भवेत्। निष्कामभावेन कृतं कर्म मानवबन्धनकारणं न भवति। ज्ञानपूर्वकं त्यागभावनया कृतेन कर्मणा मनुष्यो लिप्तो न भवति। यदि सर्वे मनुष्या निष्कामभावेन स्वकर्मणि तत्परा भवेयुस्तदैव मानवसमाजस्य कल्याणम्। मनुष्यः स्वशरीरं कष्टमयं कुर्याद्यथवा कर्तव्यं सांसारिकं कर्म परित्यज्य कर्मविहीनो हीनोः, अथ नास्ति योगः। किन्तु कर्मणि कुशलतया नाम योगः। आहारविहारकर्मचेष्टानिद्रादीन् सुनियन्त्रितान् विधायैव मनुष्यः सत्यं सुखं प्राप्तुं शक्नुयात्। गीताया निष्कामकर्मणि यत्राधिकं बलं प्रदत्तं तत्रैव भक्तेर्माहात्म्यमपि प्रकटितम्। स्वं भगवते समर्पयेदित्येव मानवकर्तव्यम्।

यत्किञ्चिदपि कर्म कुर्यान्मनुष्यस्तत्सर्वमेव भगवते समर्पयेत्।

गीतासम्मतौ तपःस्वाध्यायज्ञानयज्ञा एव वास्तविकयज्ञाः। ज्ञानप्राप्तिश्च स्वाध्यायचित्तशुद्धिसंयमैः एतेषां यज्ञानामनुष्ठानमतु विधाने। उपनिषत्सु यो हि धर्मः प्रतिपादितस्तमेव श्रीकृष्णोऽधिकं विकासितवान्। इत्थं भागवतधर्मे वेदान्प्रति श्रद्धाप्राचीनपरम्परायाः संरक्षणञ्चापि विद्येते। गीतायामुपनिषदां सारो भगवता श्रीकृष्णेन प्रतिपादित इति।

महाभारतम्

वेदव्यासनिरचितो लक्षश्लोकसम्पन्नोऽद्भुतो महाभारतग्रन्थ एतस्मिन् सर्वेषामेव विषयाणां समावेशो भगवता बादरायणेन कृतः। अस्मिन्नष्टादश पर्वाणि वर्तन्ते। यद्यप्यस्मिन् कौरवपाण्डवपक्षीयैः सर्वैर्नियैः सहस्रशो राजभिः कुरुक्षेत्रे कृतस्य महायुद्धस्य वर्णनमेव, किन्तु

प्रसगत ऐतिहासिकानुश्रुते स्तत्त्वज्ञानस्य धर्मशास्त्रस्य राजधर्मस्याध्यात्मिकस्य मोक्षशास्त्रस्य च विशदरूपेण वर्णनं विद्यते । अत एनामुं भारतीयज्ञानस्य विश्वकोषकथनमपि नायुक्तिमगतम् ।

महाभारतस्य शान्तिपर्वणि राजधर्मस्य मोक्षशास्त्रस्य च विवेचना वर्तते । शरशय्याया शयान परमज्ञानिन भीष्म युधिष्ठिरो विविधविषयाणा प्रश्न पृष्टवान् । तस्योत्तरं भीष्मोऽत्यन्तरोचक प्रदत्तवान् । भगवतः श्रीकृष्णस्य गीतापि महाभारताङ्गभूता । कुरुक्षेत्रे यदा कौरवपाण्डवयोः सेना परस्पर युद्धाय समुपस्थिता तदा गुरुजनसम्बन्धिमित्रप्रियजनान् सम्मुखे शत्रुरूपेण समुपस्थितानवलोक्य हृदये समुत्पन्नवैराग्योऽर्जुनो विहाय युद्धस्थल पलायितुमैच्छत् । तस्मिन् समयेऽर्जुन प्रति य उपदेशः श्रीकृष्णेन प्रदत्तोऽसावेव गीतारूपेण प्रादुर्बभूव । तत्त्वज्ञानस्य धर्मस्य च दृष्ट्या गीता ससारेऽद्भुतपुस्तिका वर्तते ।

वैदिककालाद् भारते तत्त्वचिन्तनस्य यदान्दोलन समुद्भूत तत् श्रीकृष्णश्चरमसीमान प्रापयत् । किंकर्तव्यविमूढा अर्जुनसदृशाऽसख्येया जना इदानीमपि गीताशास्त्रात् स्वकर्तव्याकर्तव्ये निर्णेतु शक्नुवन्ति ।

रामायणम्

इक्ष्वाकुवशीयभूपरामचन्द्रस्य वृत्तान्तो विस्ताररूपेण रामायणे वर्तते । सस्कृतभाषाया आदिकविर्वाल्मीकिरिद सस्कृतभाषापद्यमयं लिखितवान् । रामायणकथामवलम्ब्य सस्कृतप्राकृतहिन्दीभाषासु सहस्रशः पुस्तकानि लिखितानि वर्तन्ते । प्रायेण सर्व एव भारतीया रामकथया परिचिताः । आदर्शपुत्र आदर्शभ्राता आदर्शपतिश्च राम आसीत् । रामायणस्य प्रत्येकमेव चरित्रमादर्शभूतम् । कौशल्येव माता लक्ष्मणसदृशो भ्राता सीतेव पत्नी हनुमानिव सेवको राम इव प्रजापालकः ससारसाहित्ये कुत्रेऽप्यन्वेषणे नैव प्राप्स्यन्ते जनैः ।

वैदिककालात्परवर्तिन्या बौद्धकालात्पूर्ववर्तिन्याश्च भारतीयसभ्यतायाः संस्कृतेश्च विज्ञानार्थं रामायणमहाभारताभ्यामतिरिक्तो

नास्ति कोऽपि ग्रन्थः। महाभारतसदृशाद्विशालग्रन्थाद् विविधजीवनानां विचाराणाञ्चोपलब्धिर्भवति।

वैदिकसाहित्यं धर्मपरिपूरितम् अत एतेन तत्कालीनधर्मस्याधिकः परिचयः प्राप्यते। वैदिककाले इन्द्रवरुणमित्रयमाग्निदेवानां तृप्त्यर्थं विविधानुष्ठानं कुर्वाणा बभूवुर्जनाः। संसारोत्पत्तिपालनसंहारकारक एक एवेश्वरः, किन्तु तत्तत्फलप्रदातारोऽन्येऽपि परमात्मनोंऽशभूता देवा वर्तन्त इति निश्चितो विश्वास आसीत् तत्कालीनमानवानां सर्वेषामेव। एतेषां विविधदेवानां पूजनार्थमेवानेकयज्ञानुष्ठानादिकं तेऽकुर्वन्। यज्ञकुण्डेऽग्न्याधानं कृत्वा घृतदुग्धाज्यानामाहुतिं ददाना अग्नौ प्रदत्तानि द्रव्याणि देवाः प्राप्नुवन्तीति विश्वासवन्तः सर्व एव जना आसन्।

बौद्धधर्मविकासात् पूर्वमस्मिन् भारते यज्ञस्य प्रचारो बाहुल्येनासीत्। किन्तु बौद्धानामाक्रमणेन यज्ञस्य ह्रासो जातः। पुनः शङ्कराचार्यो बौद्धान्विजित्य वैदिकयज्ञप्रचारं कृतवान्।

ब्राह्मणग्रन्थेषु राज्याभिषेकवर्णनं विशदरूपेण वर्तते। राजा राज्यसिंहासनारोहणात् पूर्वमेकां प्रतिज्ञां करोति स्म यस्यामसौ कथयत्यासीत् यदहं प्रजाभिः सह केनापि प्रकारेणात्याचारं कुर्यां तदा मम सर्वमेवेष्टापूर्तं विनश्यतु यदहं जन्मत आरभ्य मृत्युपर्यन्तं करोमि। राजा धृतव्रतेनो सत्यधर्मो भवेत्, अभिषेकसमये च कृतां प्रतिज्ञामपरिपालयेत्। प्रतिज्ञानन्तरं राज्ञः पृष्ठे सामान्यवेत्राघातो भवति स्म येनान्यदण्डप्रदानमिवाहमपि राजधर्मविनिर्लिवो दण्डितो भविष्यामीति राजा जानीयात्। आपस्तम्बसूत्रानुसारेण दण्ड्यानदण्डको राजा दण्डनीयो भवति। गौतमधर्मशास्त्रानुसारेण कर्तव्यमपालयन् राजा प्रायश्चित्तं कुर्यात्। बौधायनसूत्रानुसारं चोरमदण्डयन् राजा स्वयं चोरसमानः। विविधसूत्रानुसारेण वेदशास्त्रपुराणादिप्रतिपादितनियमानुसारेणैव राजा नियमं विदध्यात्।

नहि राजा राजनियमं, माना स्रोता किन्तु वेदपुराणादि प्रतिपादित-नियमानुकूलानां विविधजनपदचरित्रानुसारिणा कृषक शिल्पिव्यापारि-प्रभृतिव्यवहारानुगानामेव नियमानां निर्माणं कुर्यात्। अथ च नियमोल्लघन-कराणां दण्डप्रदानार्थं न्यायाधीशान्नियुज्यात्। आपस्तम्बधर्मसूत्रानुसारेण पूर्णो विद्वान् पवित्रकुलोत्पन्नो वृद्ध तर्कनिपुण स्वकर्तव्यपालने दक्षश्च अभियोगनिर्णयार्थं न्यायाधीशपदमलङ्कुर्यात्। राजनियम सर्वेषामेव कृते समान, किन्तु दण्डप्रदानसमयेऽपराधिन स्थितिविचारमवश्य कुर्यात्।

ऐतरेयब्राह्मणे साम्राज्य भोज्य स्वाराज्य वैराज्य राज्य सञ्ज्ञकानां पञ्चानां शासनविधीनां समुल्लेखो विद्यते। मगध कलिङ्ग-वङ्गादि-देशशासकानां साम्राज्यार्थमभिषेको भवति, तथा ते सम्राजपदभाज। दक्षिणदिशि शासकानां राज्य भौज्यम्। ते च भोजशब्देन व्यवह्रियन्ते।

प्रतीच्यां सुराष्ट्र कच्छ सौवीरादिशासकानां शासनप्रकार स्वाराज्यम्, ते च स्वराट्-पदभाज आसन्।

उत्तरस्यां दिशि हिमालयक्षेत्रशासका वैराज्यपदभाज, ते विराट्पदभाजश्चासन्। मध्यदेश कुरु-पञ्चाल कोशलादि शासका राज पदभाजो राजान आसन्। एव पञ्चविधस्य शासनस्य समुल्लेखो भारतीयप्राचीनशास्त्रेषु वर्तते।



# चातुर्वर्ण्यम्

ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रश्च इति चत्वारो वर्णाः, ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-सन्याससञ्ज्ञकाश्चत्वार आश्रमाश्चासन्। तत्र ज्ञानाध्यक्षो ब्राह्मणो बलाध्यक्षः क्षत्रियो धनाध्यक्षो वैश्यः सेवापरश्च शूद्रः। ब्रह्मचर्याश्रमे विद्याध्ययनं कृत्वा कृतविवाहो गृहस्थाश्रमं प्रविश्य पुत्रमुत्पादयेत्। पुत्रस्यापि पुत्रे जाते तपः कर्तुं वानप्रस्थावलम्बनं कुर्यात्। ततोऽशक्ते तपसि शिखा सूत्रं विहाय सन्यासाश्रमं स्वीकुर्यात्, तत्र कौपीनोत्तरीयमात्रपरिधानो गृहीतदण्ड एकरात्रविधिना ग्रामेषु वसन् स्त्रीद्रव्यस्पर्शरहितोऽनग्निरनिकेतश्च भवेत्। किन्तु चातुर्मास्ये तत्रैकत्रैव निवसेन्नान्यत्र गच्छेत्। एवं चतुर आश्रमान् यथाकालं साधयित्वा परमं पुरुषमाप्नुयात्।

वैदिककाले स्त्रियोऽपि शिक्षिता पातिव्रत्यधर्मरताः शास्त्रार्थनिपुणाश्च बभूवुः। अनेकाः स्त्रियो ब्रह्मविद्यायामपि निपुणाः ब्रह्मविषयेऽध्यात्मविद्यायाञ्च तर्ककारिण्य आसन्। वैदेहजनकस्य सभायां ब्रह्मवादिनीनां स्त्रीणामप्येका सा आसीदस्य प्रमुखी गार्ग्यासीत्। सा च जनकस्य राजसभायामेव याज्ञवल्क्येन सह ब्रह्मविद्यायाः शास्त्रार्थमकरोत्। ऐतरेयब्राह्मणे परमविदुषीनां वक्तृतायाश्चतुराणां कृते गन्धर्वगृहीतेति शब्दस्योल्लेखो विद्यते। विवाहद्वारैव स्त्रियो गृहस्थधर्मं प्रविशन्त्य आसन्। एतस्मिन् मातुः स्थानमत्युच्चमासीत्। धर्मशास्त्रे लिखितं उपाध्यायाद्दशगुणप्रतिष्ठित आचार्यः, आचार्याच्छतगुणप्रतिष्ठितः पिता, पितुः सहस्रगुणप्रतिष्ठिता माता। मातुः पदं प्रत्येव आदरं भारतीयसंस्कृतेरेकं महत्त्वपूर्णं वैशिष्ट्यम्।

विवाहानन्तरं गृहस्थाश्रमे स्त्री पुरुषसहधर्मिणी शब्देनाभिधीयते। विवाहावसरे पतिः पत्नी च कतिपयप्रतिज्ञाः कुरुतः, यासां प्रयोजनं परस्परं कर्तव्यपालननिश्चय एवास्ति। पतिपत्न्योः परस्परसम्बन्धविच्छेदो

कदापि नैव भवति । आपस्तम्बगृह्यसूत्रे विलिखितं यो हि पुरुषोऽन्यायेन स्वभार्यां त्यजेदसौ गर्दभचर्माच्छादितशरीरः प्रतिदिनं सप्तगृहेषु अहमन्यायेन स्वभार्यां परित्यक्तवानस्मीति वदन् भिक्षां याचेत् । एवमेव भिक्षया षण्मासान् यावत्स्वजीविकासञ्चालनं कुर्यात् ।

राजा प्रजाभ्यः करं गृहीत्वा तस्योपयोगं प्रजानां हिताय कुर्यात् । महाभारतस्य शान्तिपर्वणि भीष्मस्य युधिष्ठिरम्प्रति वचनं यथा—हे कुरुनन्दन प्रजाभ्यस्तेषामायस्य षष्ठांशग्रहणं कुरु, तथा तस्योपयोगस्तासां रक्षार्थमेव कर्तव्यः । अथ च करमात्रास्थिरीकरणसमये सर्वदैवेदमवधेयं यदुत्पादकानां कियत्युत्पत्तिरस्ति, कियन्तमसौ श्रमं करोति, कस्याप्युद्योगस्य करग्रहणसमये ईदृशी दृष्टिरवश्यमेव रक्षणीया यद् व्यवसायिना व्यवसायफले राज्ञो भागो भवेत् । व्यवसायविनाशकारकः करः कदापि च नैव भवेत्, यो हि राजा व्यवसायिभ्योऽधिकं करं गृह्णाति तं प्रजाः द्विषन्ति, अथ तस्य राज्ञः कदापि श्रेयो न भवति । करनियोजनसमये राजा प्रजां गां इव पश्येत् । यदि कश्चिन्मानवो गोः सर्वमेव दुग्धं निष्कासयेत्तदा गोवंशः कस्मैचित्कार्याय न कल्पते । एवमेव प्रजाभ्योऽधिके करे गृहीते प्रजानां कार्यकरणशक्तिरेव विनष्टा भवति ।

गणराज्यविषयेऽपि भीष्मेण प्रतिपादितं यद् गणराज्ये मन्त्रगुप्तिगोपनं कठिनम् । तस्य नेतॄणां मध्ये परस्परद्वेषेण मनोमालिन्यञ्च जायते । अतस्तद्राज्यविजयो नैव कठिनः । अथ च गणराज्ये सर्व एव नेतारः परस्परं जातिकुलदृष्ट्या स्वं समानमेव मानयन्ति । यद्यपि ते बुद्धिरूपधनकुलदृष्ट्या सर्वे समाना नैव भवन्ति । अत एव तेष्वेकोऽपरं न सम्मानयति तथा तेषु मनोमालिन्यं समुपजायते ।

यदि कश्चिद्राजा राज्याभिषेकसमये कृतां प्रतिज्ञां समुल्लङ्घयेत्तदासौ राज्यच्युतोऽपि भवितुं शक्नुयात् । रागद्वेषवशीभूतो वेनः प्रजास्वत्याचारं धैर्यधर्मोल्लङ्घनञ्च कृतवानतो ब्रह्मवादिन ऋषयः प्रसन्नं स्वमन्त्रबलेन राज्यच्युतमकुर्वन् । एवमेव प्रजारञ्जनेऽसमर्थस्य सगरेणासमञ्जस्यापि विरुद्धं

प्रजाना विद्रोहोऽभूत् । त राज्यच्युत कृत्वा तत्पुत्र सुवर्चसं राज्यसिंहासनासीनं कृतवन्तः ।

राजवरणसम्बन्धे जनानामेतादृश अधिकार आसीद्येन ते सामान्य-दोषसम्पन्नमपि स्वकीयमूपमभ्यीयुर्वन् आसन् । महाभारतकथानुसारेण राज. प्रतीपस्य ज्येष्ठः पुत्रो देवापिरासीत्सर्वगुणसम्पन्नः । मम ज्येष्ठपुत्र एव मत्तः पर भूपो भवेदिति प्रतीपस्येच्छासीत् । किन्तु कुष्ठरोगाक्रान्तत्वात्त प्रजाः स्वकीय भूप मन्तुमनिच्छा प्रकटितवत्यः,अतस्तत्कनिष्ठो भ्राता शन्तनु राज्यसिंहासनमलङ्कार । प्रजारञ्जनमेव राज्ञः प्रधान कर्तव्यम् । यः खलु प्रजाः रञ्जयत्यसावेव राजा । कस्यामपि दशाया राजा निर्लेम्व-स्याचार कुर्यात् वृद्धनिरानिवाना साहाय्यञ्च दद्यात् । अथ च राजा केनापि सह कदापि पक्षपातमकृत्वा नीत्यनुसारमपराधिन स्वपुत्रमपि दण्डयेत् ।

पूर्वं मात्स्यन्यायेन बलवन्तो निर्बलान् भक्षयन्तो बभूवुः, अतः सर्व एव जना मिलित्वा सर्वजनयोग्यमेक जनाधिप विदधुः । असावेव राजपदमलभत । तस्मादेव समयाद्राजशासनपद्धतिश्च प्रचलिताभूत् । अथ च सर्व एव जनास्तस्मै स्वकीयायस्य षष्ठांश तस्मै ददुः । राजा राज्यसिंहासनारोहणसमये निम्नलिखिता प्रतिज्ञा करोति स्म । अहं प्रजाजन ब्रह्म इव मत्वा पालन करिष्यामि । य आर्यधर्मानुकूलो दण्डनीत्याभिमतः तमशंकी भूत्वाह करिष्यामि । कदाप्यह स्ववशो नैव भविष्यामि ।

राज्ञः कृते ब्रह्म इव प्रजारञ्जनमस्य पालनमुपाक्षनञ्च राज्ञः परमं कर्तव्यम् । स खलु कदापि स्वेच्छाचारी न भवेत् । अथ चाग्रको भूत्वा राजनीतिसम्मत धर्मानुकूलञ्च कर्तव्य पालयेत् । राज्याभिषेकसमये कृतया प्रतिज्ञयैतस्य युगस्य शासनभावना स्पष्टमुद्भासते ।

यदा राजा पूर्वप्रवर्तिता प्रतिज्ञा स्वमुखतो भणति स्मतदा पूर्वं न्तमुपदिशति स्म—तुभ्यमस्ति कोऽपि प्रियोऽप्रियो वा, सर्वेमानवैः

सह त्वया समानव्यवहारः कर्तव्यः, समानदृष्ट्यावलोकनीयाश्च सर्वे। कामक्रोधालोभादिवशीभूतेन त्वया कदापि नैव भवितव्यम्। यः कोऽपि मानवस्तव राज्ये धर्मच्युतो भवेदसौ त्वया शक्त्या शासनीयो दण्डनीयश्च।

राज्यसिंहासनारोहणात्पर राजा न केवलमेकाकीशासन कुर्वन्नासीत्, किन्तु त सञ्चालयितु राजान नियन्त्रयितुञ्च समिति-सभानामिकेद्वे संस्थेऽप्यभूताम्। तत्र कतिपयप्रमुखमानवा सम्मिलिता भवन्त आसन्। सभायां समित्या वैकनिता मानवा विचारणीयविषयेषु विवादमपि कुर्वन्तो बभूवुः। विवादे भाषणे वा प्रावीण्य अतीव महत्त्वपूर्णा वार्तासीत्। अथर्ववेदस्यैकस्मिन् सूक्ते मानवः प्रार्थना करोति यदह कुशलवक्ता भूत्वा स्वयुक्त्या ज्ञानेन भाषणकलया वा सर्वानेव जनान् वशीभूतान् कुर्याम्। नि सन्देह समित्या विविधविषयेषु विचारो भवन्नासीत्। तथा विविधजनास्तत्र स्ववक्तृत्वशक्तिचमत्कारं प्रदर्शयन्तश्चासन्। समित्या केवल राजनीतिकविषयाणामेव विचारो नैव भवन्नासीत्, अपितु गूढाध्यात्मिकविषये विचारोऽपि। बृहदारण्यकोपनिषदि समित्या ब्रह्मविचारस्याप्युल्लेखो विद्यते। श्वेतकेतुः पञ्चालजनपदसमित्यामुपस्थितो भूत्वाऽध्यात्मविषये शास्त्रार्थञ्चकार। तत्र पञ्चालराजः प्रवाहणजैवालिरप्युपस्थित आसीत्। समितिरिव सभापि जनपदाना महत्त्वपूर्णा संस्थासीत्। वेदेषु समितिः सभा वा प्रजापति-दुहितेति कथितम्। समित्यपेक्षया सभा लघ्वी संस्था। तस्याः सदस्याः केवलं वृद्धजना एवाभूवन्। तस्याः प्रधान कर्म न्यायकरणमेव। किन्तु समित्यां सर्वेषामेव विषयाणां विचारो भवन्नासीत्।

इत्थ मुक्तामणे! वैदिककालस्य सर्वं एव विषयाः सक्षेपेण वर्णिताः। अधुना जरासन्धपुत्रसहदेवराजस्तनवृत्तान्त अन्येषाञ्च भारतीयभूपानां वर्णन सावधानतया शृणु।

सहदेवात्पर विंशतितमे वर्षे रिपुञ्जयो (पुरञ्जयः) नाम भूपो

मगधे महान् प्रतापशाली बभूव। किन्तु तस्य मात्यः पुलिकः (शुनकः) तं हत्वा स्वपुत्रं राजानञ्चकार। एतस्मिन् समये भारतीयराज्येषु मगधः परमोन्नतिं प्राप्तवान्। अनन्तरं शिशुनागः काकवर्णः क्षेमधर्मा क्षेमजो बिम्बिसारोऽजातशत्रुर्दर्भकोऽजयो नन्दिवर्धनो महानन्दिश्चैते शिशुनागवंशीया राजानो मगधे शासनमकुर्वन्। ततो महानन्दिपुत्रो नन्दः परमप्रतापी राजा बभूव। बिम्बिसारसमये पश्चाच्च मगधसाम्राज्यस्य महत्त्वमुन्नतिरभूत्। क्रमशो मगध उत्तरभारते राजनीतिकशक्तौ सर्वोत्कर्षमाससाद। प्राचीनभारते अन्यान्यपि कतिपयसाधारणराज्यानि जनपदनाम्नाऽभिधीयमानानि क्रमशः शक्तिशालीनि भूत्वा महाजनपदरूपे परिणतान्यभूवन्। बौद्धसाहित्ये षोडशमहाजनपदानां नामोल्लेखो वर्तते।



: १३ :

# षोडश महाजनपदाः

१. अंगः—अयं मगधस्य पूर्वस्यां दिशि वर्तमानो बभूव। मगधाङ्गयोर्मध्ये प्रवहन्ती चम्पानदी द्वयोर्जनपदयोरेकस्मादपरस्य पृथक्करिणीबभूव। अंगस्य राजधान्यपि चम्पासीत्। बौद्धकाले बृहत्तमेषु भारतीयपण्यनगरेष्वेका चम्पाप्यासीत्। अन्यानि पञ्चनगराणि राजगृहम्, श्रावस्ती, साकेत, कौशाम्बी, वाराणसी चासन्। चम्पायाः गंगायाश्च जलमार्गेण बहवो व्यापारिणः सुवर्णभूमिं (पेगूमालमीन) गच्छन्तश्च बभूवुः। एतौ परस्परं संघर्षरतावभूवतु किन्तु महात्मनो बुद्धस्य समयेऽङ्गो मगधाधीनो जातः।

२. मगधः—एतस्य राजधानी गिरिव्रजोऽथ च बार्हद्रथ-पुलकवंशयोरवसाने बुद्धस्य समये बिम्बिसारो मगधस्य राजासीत्।

३. काशी—वर्तमाना वाराणसी। बौद्धजातककथाः सूचयन्ति यद् बौद्धकाले वाराणसी भारतस्य सर्वविशाला द्वादशयोजनविस्तृता नगरी बभूव।

४. कोशलः—एतस्य राजधानी अचिरावती राप्ति नदीतीरस्थिता श्रावस्त्यासीत्। कोशलदेशस्यापरा प्रसिद्धा नगरी साकेतम्(अयोध्या) आसीत्। कोशलस्य पश्चिमे पञ्चालजनपदः पूर्वे गण्डकनदी दक्षिणे स्यन्दिकासरिदुत्तरे नेपालपर्वतमाला चासन्। कोशल एव वर्तमानावधप्रान्तः, अस्मिन् सूर्यवंशीयक्षत्रियाणां राज्यमासीत्।

५. वृजिवज्जिः—अस्मिन् विदेहलिच्छविज्ञातृकगणमुख्यान्यष्ट गणराज्यानि सम्मिलितान्यासन्। वर्तमानविहारप्रदेशो गंगाया उत्तरवर्ती हिमालयस्य दक्षिणवर्ती तिरहुतप्रदेश एव वज्जिजनपद आसीत्। वज्जिसंघसम्मिलिता अष्ट [illegible] पृथगा [illegible] विदेहस्य राजधानी मिथिला ज्ञातृकगणरा [illegible]
जैनतीर्थंङ्करस्य प्रादुर्भावोऽभ [illegible]

सम्पूर्णम्यवज्जिसंघस्य राजधान्यासीत्। बुद्धसमये वज्जिसंघोऽतीव शक्तिशाली समृद्धश्च बभूव।

६ मल्ल —कुशीनारापावामल्लसहिताऽयमपि जनपद संघरूपेण व्यवस्थितो वज्जिसंघात्पश्चिमभागे बभूव। वर्तमानगोरखपुरमण्डल मेव पूर्वं मल्लसंघो बभूव।

७ वत्स —एतस्य राजधानी कौशाम्बीदानीं प्रयागमण्डले यमुनातीरस्थकोसमग्रामे भग्नावशिष्टं उपलभ्यते। बौद्धकाले वत्सोऽपि पूर्णा-भ्युन्नत। परमप्रतापशालिन प्रसिद्धस्य च उदयनस्य नरपतेरुदयनस्य कथया संस्कृतसाहित्यं परिपूर्णम्।

८. चेदि —वर्तमानबुन्देलखण्ड एव चेदिराज्यं तस्य च राजधानी शुक्तिमतीनद्यास्तीरे बभूव।

६ पञ्चाल —अयं खलु कोशलवत्सयो पश्चिमे चेदिदेशस्योत्तरभागे व्यवस्थितो दक्षिणोत्तरपञ्चालयोर्विभक्तश्च बभूव। वर्तमानरुहेलखण्ड उत्तरपञ्चाल। कानपुरफरुखाबादप्रदेशौ दक्षिणपञ्चालश्चास्ताम्। आस्ताम् उत्तरपञ्चालस्य राजधानी अहिछत्रम्, दक्षिणपञ्चालस्य काम्पिल्य।

१० कुरु —अयं खलु वर्तमानदिल्लीसमीपे यमुनातीरेऽस्यासीत्। एतस्य राजधानी इन्द्रप्रस्थश्च बभूव। हस्तिनापुरम्, मेरठो दिल्लीप्रदेशश्चैत दन्तर्गता आसन्।

११ मत्स्य —वर्तमानजयपुरमण्डले वर्तमान विराट्नगरमेतस्य राजधान्यासीत्। अयं यमुनापश्चिमभागे कुरुदक्षिणे चावस्थितो बभूव।

१२ शूरसेन —महाभारतसमयप्रसिद्धान्धकवृष्णिनिवासभूता मथुरैतस्य राजधानी। बौद्धसाहित्ये शूरसेनराजस्यावन्तिपुत्रस्य बुद्धसमकालीन-स्योल्लेखो विद्यते।

१३ अश्मक —इदं राज्यं गोदावरीसमीपवर्तिनि प्रदेशेऽवस्थितम्, एतस्य राजधानी पोतना बभूव।

आसीच्च मोक्षप्राप्तिर्न यज्ञेन कर्मकाण्डेन वा भवति, किन्तु स्वकीयशुद्धाचरणेन विचारपवित्रतया च भवितुमर्हति। एतत्सम्प्रदायानुयायिनः सङ्गठिता भूत्वा विभिन्नदलेषु स्वकीयमुपदेशं जनेषु प्रदातुमारभन्त। तेषां पवित्रतया तपसा सौकार्येण च बहवो जना आकृष्टा बभूवुः तथाल्पसमयेनैव च तेषां बहवोऽनुयायिनोऽभूवन्।

एतेषु मुख्यौ बौद्धजैनसम्प्रदायावास्ताम्। तौ च वैदिकक्रियां परित्यज्य ब्राह्मणानां श्रेष्ठतामपि नैव स्वीकृतवन्तौ। तौ मोक्षप्राप्त्यर्थमन्यसाधनान्वेषणतत्परौ च बभूवतुः। अनयोरुपदेशप्रभावः क्षत्रियकुलानामुपरि विशेषरूपेणासीत्।

बौद्धजैनधर्मयोरतीव सादृश्यम्। किन्त्वेष निर्विवादो विषयो वर्तते यत् बौद्धधर्मापेक्षया जैनधर्मोऽधिकः प्राचीनः। वस्तुतो जैनधर्मः खलु वैदिकसनातनधर्मस्यैव विकृतं रूपं वर्तते। एतच्च विषये पुराणेष्वेवं विलिखितं यत् प्रथमे कल्पे, सत्ययुगे सृष्टेः प्रारम्भकाले महाराजस्य नाभेर्मेरुदेव्यां भगवदंशभूत ऋषभदेवो नामा पुत्रो जातः। स एव व्यतीते वयसि स्वकीयं राज्यं धनं कोषं पशून् प्रजाश्च विहाय धृताजगरवृत्तिर्वनमेव जगाम। तत्र गत्वा जडान्धमूकबधिरपिशाचोन्मत्तवदवधूतवेषो जनैरभिभाष्यमाणोऽप्यब्रुवन्, शृण्वन्नप्यशृण्वन्, पश्यन्नप्यपश्यन् पुरग्रामाकरखेटवाटशिबिरव्रजघोषवनादिषु सर्वत्रावनीचरापसदैरभिभूयमान अहम्ममाभिमानशून्य एकाकी पृथिवीं बभ्राम। भूमौ शयान एव खादति पिबति मूत्रपुरीषोत्सर्गादिकर्माणि करोति। इत्थं विचरन्नसौ कोङ्कवेङ्ककुटकदक्षिणकर्णाटकदेशान् स्वेच्छयैवागतः। तत्र कोङ्कवेङ्ककुटकदक्षिणकर्णाटकानां राजा अर्हन्नामा भवितव्येन प्रेरितो भूत्वा श्रुत्वा च तदाचरितम् अयमपि कश्चिद्धर्म एवेति निश्चित्याकुतोभयं वैदिकं सनातनधर्मं विहाय निजबुद्ध्या तदाचरितेनैव सर्वत्र प्रचारार्थं यतमानो बभूव। किन्तु तस्मिन् समये विशेषरूपेण नैव तस्य प्रचारो जातः। कलौ च स्वविधियोगशौच-

चारित्र्यहीना देवहेलनानि अस्नानाचमनाशौचकेशोल्लुञ्चनादीनि कर्माणि कुर्वाणा जैनसम्प्रदायावलम्बिनः सञ्जाता।

एवरीत्या बौद्धधर्मापेक्षया जैनधर्मस्य प्राचीनत्व मुस्पष्टमेव। जैन-सम्प्रदायावलम्बिनामपि मतानुसारेण ऋषभदेव एव जैनधर्मस्य प्रथमः प्रवर्तकस्तदनन्तरमन्येऽपि द्वाविंशतितीर्थङ्करा अभूवन्। इत्थ ऋषभदेव-सहितानां त्रयोविंशतितीर्थङ्कराणां समये जैनधर्मस्य तादृशः प्रचारो नैवाभूत्, यादृशश्चतु विंशतितीर्थंत्तरमहावीरस्य समये समभूत्।

तस्य नाम वर्द्धमान महावीरस्वामी आसीत् वैशाल्या प्रजातन्त्र-राज्याधि स पतेर्गृहे जन्मालभत। किन्तु त्रिंशद्वर्षदेशीय एव वर्द्धमानः स्वकीय राजभवन राज्यञ्च विहाय तपसि सल्लग्नो जातः। तत्र भोजने सयम इन्द्रियाणां दमनम् अहिंसाव्रतस्य पूर्णतया पालनञ्चासन्। द्वादश-वर्षपर्यन्त कृते तपसि तेन ज्ञान प्राप्तम्। तस्य शिष्या नग्ना एव भ्रमन्त आसन्। तेन ते निर्ग्रन्था अभूवन्। महात्मनो बुद्धस्येव महावीरस्वामी शरीरस्य मनसश्च पवित्रतायामहिंसाव्रतपालने चाधिक प्रभावमदात्।

परमानन्दे विलीन एवत्मामोक्षपदेनाभिधीय,ते महावीरस्वामिनो मतेन। त्रिंशद्वर्षपर्यन्तमस्यैवसिद्धान्तस्य प्रचार कुर्वन्नसौ द्विसप्ततिवर्षे राजगृह समीपे पावानामकस्थाने स्वशरीरत्यागमकरोत्। महावीरोपदेश-स्यायमेवसारो यः खलु जैनो निर्वाण पदमाप्तुमिच्छत्यसौ स्वकीया-चरणविश्वासज्ञानानि निश्चितानि करोतु। जैनधर्मावलम्बिना कृते तपः करण मावश्यक कर्तव्य उपवासश्च तपोऽङ्गभूतोऽतीवावश्यकः स्वरूपश्च ध्यानाचरणतपोभिर्विना मनुष्यः स्वकीयान्तिम ध्येयन्नैव प्राप्तु शक्नोति। महावीरः पूर्णा हिंसाया पूर्णतया प्रभावमदात्ततः प्रभृति अहिंसा जैनधर्मस्य प्रधानमङ्गमभूत्।

पश्चाद्दिगम्बरश्वेताम्बरनामभ्यां जैनधर्मेविभागद्वयञ्जातम्। दिग-म्बरानग्नामूर्तिमुपासन्ते, श्वेताम्बरा. श्वेतावस्त्राच्छन्नामूर्तिम्र। अनन्तर श्वेताम्बरजैनस्य शाखाप्येका समभूत्। यस्या नाम,

तेरापन्थीति बभूव (तत्र भगवतो मार्गावलम्बी) नियमानामत्यन्त काठिन्याज्जैनधर्मस्य जनसाधारणेषु प्रचारो नाभूत्कदापि।

नेपालदेशस्य समीपे शाक्यवंशीयानां क्षत्रियाणां राज्यमासीत्। कपिलवस्तुनगरी च तेषां राजधानी। तत्र शुद्धोदननामा भूपः कोशलराज्याधीनो भूत्वा राज्यमकरोत्। तस्यैकमात्रपुत्रस्य नाम सिद्धार्थ आसीत्। एतस्य जन्म लुम्बिनीनामकस्थाने अभूत्। सिद्धार्थस्यैवापरनाम गौतमोऽप्यासीत्। वैराग्यमार्गाभिलाषिणं विचारशीलञ्च तं विज्ञाय तत्पिता शुद्धोदनः सांसारिकसुखनिलिप्तं तं कर्तुमिच्छन् परमसुन्दर्या यशोधरानाम्न्या कन्यया सह तस्य विवाहमकरोत्। समुचिते च समये सिद्धार्थस्य राहुलनामैकः पुत्रोऽपि समजनि।

स चैकदा वृद्धरोगिमृतान् मानवानवलोक्य महादुःखसंततो बभूव। तेन ज्ञातं यदेकस्मिन्दिवसे ममाप्येतादृशी गतिर्भविष्यत्यवश्यमेव। रोगात्, वार्द्धक्यात्, मृत्यो च मम मुक्तिः कदापि नैव भविष्यति। अनन्तरमेकस्यां रात्रौ नवजातं राहुलनामकं पुत्रं, प्रियपत्नीं यशोधरां, सम्पूर्णं राज्यं, राजभवनं बान्धवान् सुहृदः पशून् वाहनानि च विहाय बहिर्निरगच्छत्। तस्मिन् समये तस्यावस्था त्रिंशद्वर्षीयासीत्। निःसृत्य राजभवनादसौ दर्शनशास्त्राध्ययनं ब्राह्मणानामाश्रयं ज्ञानान्वेषणे ब्राह्मणैः सह बहुषु स्थानेषु भ्रमणञ्चकार। किन्तु तस्य चेतसि शान्तिर्नैव समायाता। तदनन्तरमसौ गयामागत्य कठोरं तपः प्रारब्धवान्। तेन बहव उपवासाः कृताः, बहुभिः कष्टैः शरीरशोषणं कृतम्, सर्वविधं दुःखमपि सोढम्, किन्तु तस्य हृदये ज्ञानोदयो नैव सञ्जातः। तस्य स्वास्थ्यमतीव क्षीणं चर्मास्थ्यवशेषञ्च जातम्। षड्वर्षानन्तरन्तेन ज्ञातमेताः शरीरकष्टदायिन्यः क्रिया व्यर्था वर्तन्ते इति। तथासावनशनव्रतञ्च विजहौ। परित्यक्तेऽनशनव्रते तपसि चास्य पञ्च शिष्यास्तं भ्रष्टोऽयमिति मत्वा तं परित्यज्यान्यत्र गतवन्तः। अन्तेऽसौ गया-

सरित्क्रोशदूरवर्तिनि स्थाने निरञ्जनानद्यास्तटे समाधिं विधायैकस्य पिप्पलवृक्षस्य छायायामतिष्ठत्। समाधिभङ्गानन्तरमेव तस्य चेतसि ज्ञानप्रकाशो बभूव सांसारिकदुःखेभ्यो मुक्त्यर्थं तेन साधनमपि प्राप्तम्।

तदेव ज्ञानं लब्धवानेन यस्यान्वेषणार्थं सर्वैश्वर्यालङ्कृतं स्त्रीपुत्र बान्धवसहितं भवनं विहाय निर्गतश्चासीत्। इत्थमसौ बुद्धो ज्ञानवानभूत्। तस्य स्थानस्य नाम बुद्धगया चाभूत्। बुद्धगयात॰ प्रचलितोऽसौ वाराणसीसमीपं सारनाथं जगाम। कियत्कालानन्तरं तस्य बहवः शिष्या अभूवन्। स च दीर्घ जीवनं कोशले, मगधे च ग्रामं ग्रामं स्वकीयोपदेशांश्च वारं वारं व्यतीयाय। अन्तेऽशीतिवर्षा-वस्थायां गोरखपुरमण्डले कुशीनगरनामकस्थाने स्वशरीरं जहौ।

भगवान् बुद्धदेव एकस्मिन् समये स्वकीयशिष्यमानन्दमुपदिष्टवान् तद्यथा, आत्मदीपो भव।

अत एव हे आनन्द त्वं स्वयं स्वस्मै प्रदीपो भव। त्वं स्वस्मै स्वयमाश्रयो भव च। सत्यं धर्मश्च तव प्रदीपौ। तावेव स्वकीयमाश्रयं मत्वा स्थिरो भव।

आत्मानमन्तरा द्वितीयस्याश्रयेच्छां मा कुरु।

उपदेशोऽयं सर्वसाधारणभाषायामभूत्तस्मात्तस्य प्रभावोऽधिको बभूव। तथा च तस्य सेनायामनेके समुत्साहिनः शिष्या आसन्, ये च सुदूरदेशं गत्वा तस्योपदेशं श्रावितवन्तः।

सर्व एव जनास्तस्योपदेशं श्रुतवन्तश्च। भगवतो बुद्धस्य मरणानन्तरं तस्य शिष्यास्तस्य कार्यं तस्योपदेशांश्च लिपिबद्धमकुर्वन्।

पश्चादेतस्य धर्मग्रन्थस्य नाम त्रिपिटकोऽभूत्। त्रिपिटकश्च त्रिषु भागेषु विभक्तो जातः। विनयपिटकसूत्रपिटकाभिधम्मपिटकनामभिस्त्रयः पिटका विख्याता अभूवन्।

विनयपिटके मठस्थितानां भिक्षूणां आचरणसम्बन्धिवर्णनम्, सूत्रपिटके भगवतो बुद्धस्योपदेशस्य संग्रहोऽभिधम्मपिटके दार्शनिकवादविवादानां संग्रहश्च वर्तते। यदा कदाप्येतेषां धर्मग्रन्थानामर्थविषये सन्देहोऽभूत्तदैव तत्कालीनभिक्षूणां समाभूत्तथा तत्कालीनप्रतिष्ठिता भिक्षवस्तस्यार्थस्य निर्णयञ्च कृतवन्तः। ईदृशी च सभा वारचतुष्टयमभूत्। प्रथमा सभा बुद्धनिर्वाणानन्तरं राजगृहे तस्य प्रधानशिष्येण महाकश्यपेन कृता। ततः शतवर्षानन्तरं वैशाल्यां द्वितीया सभा समभूत्। तृतीया सभा अशोकस्य, चतुर्थी च कनिष्कस्य समये समभूताम्।

बुद्धदेवो न खलु केवलं महामहोपदेशक., प्रत्युत महान् संगठनकर्त्ताप्यासीत्। तस्यानुयायिनः श्रेणीद्वये विभक्ता। एके गृहस्थाः सन्तः समुपासका, अपरे भिक्षवः सन्यासिजीवनयापकाश्च वर्तन्ते। पुन. भगवतो बुद्धस्य कथनमासीत् यत् पुन. जन्मग्रहणेनैव दु.खस्योत्पत्तिर्भवति। गमनागमनचक्रमेव दुःखस्य मूलकारणम्। गमनागमनकारणं सांसारिकपदार्थान्प्रति नियोगानुराग एव। यावदस्माकं हृदयादभिलाषो नैव नि.सरिष्यति तावद्गमनागमनबन्धन एव बद्धा भविष्यामः। शोकाद् दु.खाच्च मुक्तयर्थं मनुष्यैर्मध्यममार्गस्यावलम्बनं कर्त्तव्यम्। न च घोरकष्टे शरीरं पातनीयम्, न च जीवनमानन्दे निमग्नं कर्तव्यम्। सम्यग्दृष्टिसम्यक्समाधिसम्यक्सङ्कल्पसम्यग्वाक्सम्यक्कर्मान्तप्रभृतिमध्यममार्गः। महात्मनो बुद्धस्य निश्वास आसीद् यदेतन्मार्गावलम्बनेनैव निर्वाणप्राप्तिर्भविष्यति। निर्वाण एव मनुष्यजीवनस्य प्रधानं लक्ष्यम्। निर्वाणमन्तरा दुःखाच्छोकाद्वा मुक्तिं प्राप्तुं नैव शक्नुवन्ति जनाः।

ईश्वरास्तित्वे तेन कोऽपि विचारो नैव प्रकटितः। निर्वाणपदप्रापणमेव तस्य प्रधानमुद्देश्यमासीत्। वर्णव्यवस्थाया अपि तेन विरोध एवाकारि। उच्चनीचयोर्भेदो मानवगुणानुसारेणैव मान्यः। तेन यज्ञस्यापि कृतो महान्विरोधो, निर्वाणप्राप्तौ स च यज्ञो निरर्थक इत्यभ्यधायि।

कर्मकाण्डं ब्राह्मणश्रेष्ठत्वञ्च तेन खण्डितमेव । कस्मैचिदपि कार्याय पशुहिंसाया आज्ञा तेन नैव प्रदत्ता ।

सदाचारस्योपरि भगवान् बुद्धोऽधिकं बलमदात् । स च कथयन्प्यासीद्यदि कश्चिन्मानवोऽस्मिन् जीवने श्रेष्ठं कर्म करिष्यत्यसौ जन्मान्तरे श्रेष्ठमेव जीवनमाप्स्यति । एवं रीत्या प्रत्येकजन्मनि तस्य जीवनं श्रेष्ठतरं श्रेष्ठतमञ्च भविष्यत्यन्ते निर्वाणमप्याप्स्यति । नीचकर्मभिर्जीवनमतिनीचं नीचतरं नीचतमञ्च भविष्यति । नैवान्ते च निर्वाणमाप्तुं शक्ष्यति । सत्यं जीवनपावित्र्यं दानशीलत्वञ्चैते एतादृशा गुणा वर्तन्ते, येषां प्राप्तये मनुष्यैः सततं प्रयतितव्यम् ।



## : १४ :

# मौर्यराज्यम्

महापद्मनन्दस्याष्टौ पुत्राः प्रधानराज्ञ्या बभूवुरेका गणिकाया मुरानाम्न्या मातुरनेकश्चन्द्रगुप्तो नाम पुत्रश्च जातः। इत्थं नवसु पुत्रेषु चन्द्रगुप्तश्चतुरो वाग्मी वदान्यो राजनीतिनिपुणः शस्त्रे शास्त्रे च पारगः सर्वराजगुणसम्पन्नश्चासीत्। किन्तु गणिकासुतत्वादसौ राज-सिंहासनानधिकारी बभूव। अथ च तस्य मनसि राजसिंहासनप्राप्त्यै बलवती चिन्ता निरन्तरमवर्तत। तदर्थं सततं यतमानोऽपि चन्द्रगुप्तः प्रधानराज्ञ्याः समुत्पन्नानष्ट पुत्रानतिक्रम्य सफलमनोरथो न जात आसीत्।

किन्त्वहो भाग्यस्य प्राबल्यम्। भाग्येनैव दरिद्रा अपि कदाचिद् राजसिंहासनासीना राजाधिराजाश्च दृष्टा भवन्ति।

महाराजनन्दस्य शकटारनामा प्रधानमन्त्री बभूव। तस्य केनापि हेतुना नन्देन सह मानसिकविरोधो जातः। शकटारस्य चेतसि नन्दवंश-परिसमाप्त्यर्थं क्रोधज्वाला प्रज्वलिता च जाता। एकस्मिन्दिवसे पाटलीपुत्राद्बहिर्गच्छन् शकटारः ग्रीष्मकालीनमध्याह्नसमये कुशानु-त्पाट्य तन्मूलेषु तक्रप्रदानं कुर्वन्तं कृष्णवर्णं शीर्णाङ्गोपवस्त्रपरिधान-युक्तमेकं स्वकर्मणि दत्तचित्तं श्रमजनितस्वेदस्नातं कञ्चिद्ब्राह्मणं ददर्श। दृष्ट्वा च प्रोवाच शकटारः—महानुभाव, भवतः किं नाम, क्व वासस्थितिः क्व च गम्यते कुशानुत्पाट्य। मूलेषु तक्रप्रदाने को हेतुः। यदि श्रावयितुं योग्यानि कारणानि तर्हि श्रोतुमिच्छामि, दृष्ट्वा ग्रीष्म-मध्याह्नसमये श्रमयुक्तं भवन्तं कार्ये मे मनसि स्वेच्छयैव पृच्छा समभूत्। नास्त्यन्यत् किमपि कारणं प्रश्नस्य।

ब्राह्मणः प्रोवाच—सर्वविद्यापारङ्गमश्चाणक्यनामा ब्राह्मणोऽहमिदानी-मध्ययनं कृत्वा वाराणसीतः पाटलीपुत्रनिवासिनो मगधराजस्य नन्दस्य गृहे स्वजीविकाप्राप्त्यर्थं गच्छन्नासम्।

किन्तु गच्छतो मम पादे प्रविष्टश्चैकः कुशस्तेन मत्पादे महती

वेदना सञ्जायते, कम्पते च हृदयम्। विचारितं मया यदेते कुशा मदीयाः शत्रवः। एतेषां समूलं विनाशः कर्त्तव्योऽवश्यमेव। रसायन शास्त्रे विलिखितं यत् कुशान् समुत्पाट्य मूलेषु तक्रप्रदानेन पुनस्तत्स्थानेषु कुशाः नैव समुत्पद्यन्ते। इति कृत्वा श्रमजनितस्वेदस्नातोऽप्यहं कुशानुत्पाट्य मूलेषु तक्रप्रदानं करोमि, येनैते मम शत्रवो निर्मूला भवन्तु नाम। श्रुत्वा चाणक्यवचनं शकटारेण विचारितं, यदि ब्राह्मणेनानेन सह कयापि युक्त्या नन्दस्य विरोधो भवेत्तदायं मयूरस्य नन्दस्य विनाशमवश्यमेव विधास्यतीति मनसि सम्यग्वारं वारं विचार्य शकटारश्चाणक्यं समुवाच। भूदेव, आगम्यतां मया सह, भवानपि साम्प्रतं मया नैव गमिष्यतेऽन्यत्र। किन्तु भवन्तमेवादाय पाटलिपुत्रं गमिष्यते। तत्र गत्वा भवतो जीविकार्थमेका संस्कृतपाठशाला संस्थापयिष्यामि। तत्र चाध्यापनकार्यं करोतु भवान्, स्वजीविकासञ्चालनञ्च। शकटारेणैवमुक्तश्चाणक्यस्तेन सह पाटलिपुत्रं गत्वा तत्र शकटारसंस्थापितायां संस्कृतपाठशालायामध्यापनकार्यं कुर्वन् निवासञ्चक्रे।

एकस्मिन्दिवसे मगधराजस्य नन्दस्य गृहे श्राद्धमासीत्। श्राद्धे भोजनकर्तॄणां ब्राह्मणानां निमन्त्रणभारं शकटारस्योपर्येव प्रदत्तो महापद्मनन्देन तस्मिन् श्राद्धकर्मणि। शकटारोऽन्यैर्ब्राह्मणैः सह चाणक्यमपि निमन्त्रितवान् राजभवने। निमन्त्रणं प्राप्य परमं प्रसन्नश्चाणक्यः श्राद्धकालात्पूर्वमेव राजभवनं गत्वोच्चासने समुपविष्टः। समुपविष्टे चाणक्ये नन्दः स्वेच्छया भ्रमस्तत्रैव समाजगामोपविष्ट आसीद्यत्र चाणक्यः। कृष्णवर्णमुन्नतवेशं रक्तनेत्रमूर्ध्वशिखं आढानर्हं ब्राह्मणलक्षणरहितं विलोक्य चाणक्यं क्रोधाविष्टो नन्दः पृष्टवान्—कथमिह त्वमिहायातः केनाहूतश्च। तेनोक्तम्—राज्यस्य प्रधानमन्त्रिणा श्राद्धे भोजनार्थं निमन्त्रणमवाप्य समागतोऽस्मि, न च स्वेच्छया नृप। तेनातीव क्रोधाविष्टो नन्दस्तस्य बद्धां शिखां प्रगृह्यासनाच्च भूमौ पातयामास अग्रासनादाकर्षणसमये तस्य शिखा बन्धनरहिता सञ्जाता। बन्धनरहिता शिखा-

मवलोक्यचाणक्यस्तत्रैव प्रतिज्ञातवान् यदाह समूलं नन्दवंशं विनाशयिष्यामि, तदैव बद्धशिखोऽपि भविष्यामि। यश्च कश्चापि वीरस्य मगधराज्यप्राप्तेरिच्छा वर्ततेऽसौ मया सहागच्छतु च। श्रुत्वैव चाणक्यवचनं काङ्क्षं प्रतीक्षमाणश्चचन्द्रगुप्तस्तेन सहाभूत्। तस्यैव सेवायां सर्वदा संलग्नश्च जातः इति।

नन्दवंशविनाशस्य शकटारसमुत्थापितचाणक्यक्रोध एव प्रधानं कारणमभूत्। अहो भाग्य, यदा विपरीतम्भवति तदा स्वजना अपि शत्रवो भवन्ति। चाणक्यश्चन्द्रगुप्तेन सह नन्दवंशविनाशार्थं कृतप्रयत्नो बभूव।

एकस्याः राज्ञी नन्दस्य एकाकारान् प्रलोभ्य तत्धनञ्च दत्वा विषप्रयोगेणाष्टभिस्तनुजैः सह नन्दं घातितवान् चाणक्यश्चचन्द्रगुप्तं राज्यसिंहासनासीनञ्च चकार।

चन्द्रगुप्त एव भारतस्य प्रथमो नृपतिरभूत् शूद्रागर्भोद्भवः। चाणक्यश्च राज्यप्रधानमन्त्री भूत्वा स्वबुद्धिकौशल्येन बहुवैभवसम्पन्नमन्त्रिभवनं राजभवनञ्च विहाय वनवासीव तृणकाष्ठविनिर्मित पर्णोटजे निवसन् सम्पूर्णस्य मौर्यराज्यस्य शासनव्यवस्थामकरोत्। निवासस्थानमेव छात्रानध्यापयन्नप्यासीदसौ। चाणक्येनैक सर्वाङ्गपरिपूर्णमर्थशास्त्रञ्च व्यलेखि। यस्याद्यावधिनापि महत्त्वं विश्वस्याखिलभागेषु वर्तते। यस्मिन्नर्थशास्त्रे राज्यशासनस्य सर्व एव विषयाः सम्यग्विलिखिता वर्तन्ते। सर्ववैभवसम्पन्नस्य चन्द्रगुप्तराजस्य वर्णनं चीनयवनादिदेशगामिनोऽपि कृतवन्तः।

चन्द्रगुप्तराज्यसमय एव सिकन्दरसेनापतिः सिल्यूकसनाईकेटरः सिकन्दरराज्याधिपतिरभूत्। भारतविजयमिच्छन्नसौ सिन्धुनदीपारञ्चकार। किन्त्वसफलीभूतः ■ चन्द्रगुप्तेन सह सन्धिं कृत्वा अफगानिस्तानबलोचिस्तानप्रदेशौ स्वकन्याञ्च तस्मै प्रदत्तवान्। अयं च मेगस्थनीज

नामक राजदूतमपि चन्द्रगुप्तराज्यसभायां प्रैषयत्। स च मेघस्थनीज-श्चन्द्रगुप्तराज्यशासनप्रबन्धविवरणं लिखितवानस्ति।

चतुर्विंशतिवर्षपर्यन्तं राज्यकरणानन्तरं चन्द्रगुप्तः स्वपुत्रं बिन्दुसारं राज्याधिकारिणञ्चकार। भारतेतिहासे चन्द्रगुप्तमौर्यशासनं महत्त्वपरिपूर्णं वर्तते। तस्य शासनप्रबन्धे सुव्यवस्थिते यस्मिन्नेकोऽपि विद्रोहः कदापि शान्तिभङ्गो वा न बभूवतु। यूनानीया अपि भयभीता भूत्वा शत वर्षाणि यावद्भारतं समाक्रमणन्नैव कृतवन्तश्च।

भगवन् नास्तिकवर्य! चाणक्येन यदर्थशास्त्रं विलिखितन्त-स्मिन्विषये किमपि भवता वर्णनं विधेयमित्युक्ते मुक्तामणौ पुनरपि दैवज्ञ प्रोवाच—मुक्तामणे! कौटिल्यश्चाणक्योऽर्थशास्त्रं परिलिखितवान्। तस्मिन्नसौ राज्ञः शासनव्यवस्था कीदृशी भवदितिविषये सुन्दरं विवचनं कृतवान्। लिखितवांश्चाणक्या यद् राजनयश्चत्वारो वा मन्त्रिणा भवयुरेतेभ्योऽतिरिक्ता चैका परामर्शदात्री परिषदपि भवेत् किन्तु परिषद् सदस्यसंख्या निश्चिता नैव कृता। सन्निधातृकार्यं कश्चिद्राज बान्धव एव कुर्यात्तथा सन्निधातैव राजकोषस्य राजमुद्रायाश्चापि प्रबन्धं कुर्याच्छासनसञ्चालनं प्रायेण। पञ्चविंशतिसदस्यैरध्यक्षैर्भवत्।

समाहर्ता करग्रहणं मूल्यग्रहणञ्च कुर्यात्। एतेऽध्यक्षा मन्त्रिणामुच्चाधिकारिणाञ्चाधीना भूत्वा कार्यं कुर्वन्त आसन्। आचार्यः कौटिल्यः प्रान्तीयस्थानीयशासनव्यवस्थाया विषये विस्तृतं विवचनं कृतवान्। न्यायालयप्रबन्धः कथं भवदिति विषयेऽपि तेन विवचनं कृतम्। प्रजाभिः सह दयामयो व्यवहारस्तासां हितकरणञ्च इदमेव राज्ञः प्रधानं कर्तव्यम्। अपराधिना कृतं गुरुतरापराधानां लघ्वपराधानां च कृते तेन मृदुलकठोरदण्डविधानानि कृतानि। प्राणदण्डविधानमपि तेन वर्णितम्। चाणक्यमनेन परराष्ट्रं प्रति कस्या अपि नीतेर्व्यवहार उचितः, परराष्ट्रं प्रत्युचितानुचितयोर्विचारो निरर्थक एव एतत्सर्वं अर्थशास्त्रे सुष्ठु विचारितं चाणक्येन।

चन्द्रगुप्तमौर्यपुत्रस्य बिन्दुसारस्य शासन-काले नैव कापि महत्त्वपूर्णा घटना घटिता । केवलं यूनानवासिभिः सह तस्य मित्रतासीत् । बिन्दुसारानन्तरं तत्पुत्रोऽशोको राज्याभिकामनामानो बभूव । पूर्वमशोकः क्रूरहृदयो युद्धप्रियश्चासीत् । भारतस्यानेकान् देशान्विजित्य स स्वकीयं राज्यं विस्तारयामास । तस्य सैन्यशक्तिरपि दृढतरा समभूत् । एकदा अशोकः कलिङ्गदेशोपरि आक्रमणं चकार । तस्मिन् जनभीतिकरसमरे बहवो जना मरणमापेदिरे । अनेके विच्छिन्नसर्वाङ्गा रुधिरस्रावितशरीराः, अपरे चार्धमृताः सम्बभूवुः । असंख्या नार्यश्च विधवाः सञ्जाताः । किन्त्वन्तेऽशोको विजयं प्राप । सेनापतिः समागत्य जयशब्दपूर्वकं तद्विजयवृत्तं श्रावितवान् । प्रसन्नमना अशोको हतपतिकानां नारीणां करुणक्रन्दनं नहि शुश्राव तेन च स भृशं खिन्नोऽभवत् । अनन्तरे अशोकस्य समीपमागत्य पीतवस्त्रः पीतच्छत्रो मुण्डितशिराः कश्चित् बौद्धधर्मगुरुः समागत्य प्रोवाच—महाराजाधिराज ! विजयो लब्धस्तत्र भवद्भिः किन्तु लक्षशोऽनाथा विधवाः । भग्नहस्तपादशिरोग्रीवान् मृतान् सैनिकान् युद्धभूमौ वहन्तीं रक्तधारां, शून्यान् जनपदान्, मांसभोजनं कृत्वा मृतानां सैनिकानामुपरि स्वेच्छया भ्रममाणान् प्रमत्तान् कुक्कुरान्, शृगालान् गृध्रान् वायसान् पश्यत । युद्धेन भवद्भिर्देशा विजिताः, किन्तु युद्धेन विजयं नैव प्रशंसन्ति सज्जनाः । दयामार्गं परित्यज्य भवता नैष्ठुर्यं स्वीकृतम्, दयाधीनो विजयः प्रेमपरिप्लुतो वा विजयः श्रेयान्, किं ते हृदि दयायाः किञ्चिदपि स्थानं नास्ति ? मेधाविन् ! नहि राज्यविस्तार एव सर्वस्वं जगति त्वयि मृते विजितः कलिङ्गो विस्तृतं राज्यं, कोशोः दन्तिनोऽश्वा रथा विशालं भवनं, सैनिकाश्च त्वया सह किं यास्यन्ति ? देव ! मनसि दयायाः पदं प्रदीयताम् । हिंसाऽत्र परित्यज्यताम् सर्वजनोपकारकमहिंसाव्रतं परिपाल्यताम् ।

संन्यासिवचनं विधवानामार्तनादं च श्रुत्वा मृतार्धमृतजनसमाकुलां युद्धभूमिञ्च विलोक्य अशोकस्य हृदयपरिवर्तनं सञ्जातम् । क्रूरभावस्थाने

दयाभावो, हिंसाया स्थानेऽहिंसाभावो, राज्यविस्तारभावस्थाने राज्यपरित्यागभावो, धनसंग्रहणस्थाने सर्वस्वदानभावो, विशालराजभवन निवासस्थाने वनवासभाव, सर्वविधराजकीयालङ्कारधारणस्थाने सन्यासग्रहणभावो, युद्धकरणस्थाने शान्तिभाव, प्रजाभ्यः करग्रहणस्थाने सर्ववैभवपरित्यागभावश्च सहैव सविनिश्चुरशोकस्य चेतसि।

बौद्धसन्यासिवचनं श्रुत्वा सविनयं प्रोवाच सम्राडशोक—'महात्मन्! त्वमेव मम शान्तिप्रदाता। मयाऽतीव निष्ठुरं कर्म कृतम्। अद्य प्रभृति भवदुपदेशानुकूलं सर्वमेव आचरिष्यामि। भवानिव सन्यासिवेषं निधाय बौद्धधर्मस्याहिंसायाश्च प्रचारं विधास्यामि इति।

तदाप्रभृत्येव अशोकः पूर्णसन्यासिवेषं विधाय बौद्धधर्मस्य प्रचारे संलग्नः। ते बौद्धधर्माय पूर्णं प्रश्रयं प्रदत्तं। कियत्कालानन्तरमेव स बौद्धप्रधानाचार्यो बभूव।

तस्य शासनस्यैकविंशतितमे वर्षे बौद्धधर्मावलम्बिनामेका महती सङ्गीतिः पाटलपुत्रे सम्बभूव। बौद्धधर्मस्य विभिन्नताया समुल्लेखो निर्णयोऽपि च सञ्जातस्तस्याम्। सङ्गीत्या सम्पन्नाया कश्मीरे, गान्धारे, हिमालयप्रदेशे, दक्षिणभारते, तीब्रप्रदेशे च धर्मप्रचारका प्रेषितास्तेन। धर्मप्रचारकाणां यन्मण्डलं लङ्कामगमत् तन्नेता नेत्री च अशोकपुत्रो महेन्द्रः पुत्री सङ्घमित्रा चास्ताम्। बुद्धगयाया यस्य बोधिवृक्षस्याधो गौतमो ज्ञानमलभत तस्यैव एका शाखापि तेन मण्डलेन सहैव नीता लङ्काम्।

अशोको गिरिवनप्रदेशेषु शिलाया प्रस्तरखण्डेषु प्रस्तरस्तम्भेषु च बौद्धसिद्धान्तान् धर्मांश्च प्रचारार्थं समुट्ङ्कितान् कारयत्। तेषु च पित्रोः समादर, वृद्धानामाज्ञापालनं, गुरूणां सत्कारो ब्राह्मणानां बौद्धश्रमणकाश्च पूजनम्, सम्बन्धिभिर्भृत्यैश्च सह समुचितो व्यवहार, जीवेषु दयाभाव सर्वथा हिंसानिषेध, दानं शुद्धाचरणञ्च सत्यमादयो धर्मा समुट्ङ्किता सन्ति।

अशोकस्तु बौद्धधर्मावलम्बी भूत्वाऽपि सर्वेषामेव धर्माणां समादर

कृतवान्। केनापि धर्मेण सह तस्य विरोधो नासीत्। अहिंसाधर्मस्य प्रचारार्थं तेन बहवः कर्मचारिणो नियुक्ताः, ये खलु तत्तत्स्थानेषु गत्वा जनसाधारणेषु पूर्णाहिंसाधर्मस्य प्रचारं कृतवन्तः। अशोकराज्यसमये नासीत्कस्यापि जीवस्य हिंसा, प्रत्युत हिंसात्मकयज्ञानामपि तेन निषेधः कृतः। तस्य राज्ये मृगयायाः कस्यापि चर्चापि नासीत्। येषु पशुहिंसा, युद्धमृगयादीनां प्रदर्शनमासीत्, तादृशानां नाटकानां प्रदर्शनमपि तेन निवारितम्।

सम्राडशोकेन स्वयं भारतीयसनातनधर्मतीर्थानां भगवतो बुद्धस्य जन्मभूमेश्च दर्शनं कृतम्। स प्रजानामनुग्रहार्थं स्वास्थ्यरक्षणार्थञ्च सर्वत्र मानवचिकित्सालयं, पशुचिकित्सालयं कूपानां तडागानाञ्च निर्माणं कारितवान्। एवं स सर्वत्र भ्रमणं कुर्वन् प्रजावस्थामधीतवान्। यदि कदापि प्रजानां दुःखप्रदं वृत्तं समागच्छेत् तदा तस्मिन्नेव समये सूचनीयोऽहमिति तेन कर्मचारिणः सन्निर्दिश्य समाज्ञप्ताः

अशोकस्य राष्ट्रियादर्शोऽप्युत्कृष्ट आसीत्। असौ कथयन्नासीत् सर्वा एव प्रजा मदीया सन्ततिः। स च भूयोभूयः अकथयत् ममाभिलाषो-ऽयं यन्मम सन्ततिरस्मिल्लोके परलोके च सुखशालिनी भवेत्। सर्वा एव प्रजा लोकद्वये सुखशालिन्यो भवन्तु, इति। पूर्वतनानां भारतीय-भूपानां मध्येऽशोकस्य सम्मानपूर्णमुच्चस्थानं वर्तते। राजनीतावसौ धार्मिकादर्शस्य समावेशमकरोत्।

सत्यद्वारा प्राप्तो विजय एव वास्तविको विजय इत्येव सिद्धान्तो तस्यासीत्। सर्वा एव प्रजा अशोकस्य दृष्टौ समाना। नैव केनापि सह तस्य पक्षपातः। वस्तुतस्त्वशोक एको महान् धर्मप्रचारकः स्वयं स्वकीये धर्मे वर्तमानोऽन्यानपि धर्मान् सम्मानयन्नासीत्। तद्राज्ये ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारोऽपि वर्णाः सुखिन आसन्। भारतीयेति-हासेऽशोकश्चन्द्र इव प्रकाशमानः। अन्यदेशेष्वपि जनास्तस्य नाम सम्मानेन गृह्णन्ति।

आध्यात्मिकोन्नतौ विशेषबलप्रदानेन तस्य सैन्यशक्ति क्षीणा बभूव क्रमशो राज्यपतनञ्च समारब्धम्। अशोकस्य उत्तराधिकारिणो राजानः शक्तिहीना सर्वथा साम्राज्यप्रबन्धेऽसमर्थाश्च बभूवुः।

धर्मप्रचारे संलग्नमतिरशोकः सैनिकानुपेक्षितवान्। तत्पुत्राः पौत्राश्च रक्तपातसङ्कुल संग्राम परित्यज्य धैर्येण नम्रतया च कार्यकरणस्य शिक्षा प्राप्तवन्त। तेषु संग्रामशक्तिरपि नासीत्। तस्य मृत्योः परं भारते विदेशीयकानामाक्रमणमभूत्। मौर्यसम्राट् तानवरोद्धुं नाशक्नोत्। साम्राज्यपतनस्य मुख्य कारण बाह्यप्रान्तानां प्रान्तपाला प्रजास्वत्याचार कृतवन्त। तेन प्रजाः सन्तापाद्व्याप्ताः। अत एव यदा विदेशीया भारतमाक्रमन्तस्तदा तैः सह योद्धुं केऽपि समर्था नाभूवन्।

मौर्यवंशस्यान्तिम सम्राज बृहद्रथ तस्य ब्राह्मणसेनापति पुष्यमित्रो हत्वा स्वयं सम्राट् बभूव। किन्तु पश्चादप्यसौ स्वं सेनापतिमेवाकथयत्। तस्य साम्राज्य दक्षिणे नर्मदानदीपर्यन्त विस्तृतमासीत्। पुष्यमित्रराज्यकाले यूनानी राजा डिमिट्रियस उत्तरीयभारतोपरि समाक्रमणञ्चकार किन्तु पुष्यमित्रस्तं पराजित्य यूनानं पलाययत्। अश्वमेधयज्ञद्वयं कृत्वा पुष्यमित्रो ब्राह्मणधर्मस्यापि पुनरुद्धारञ्चकार। एतद्वंशीया सर्व एव राजानो हिन्दूसनातनधर्मानुयायिनो भूत्वापि बौद्धधर्माचार्याणामुपरि कीदृशमप्यत्याचारं नैव कृतवन्त। पुष्यमित्रमरणानन्तरं तत्पुत्रो अग्निमित्रो राज्यसिंहासनासीनो बभूव। तदनन्तर तत्पुत्रो वसुमित्रश्च राजा, किन्तु कियत्कालानन्तरमस्य वंशस्य दशम राजान देवभूमि तस्य मन्त्री वसुदेवकाण्वो हत्वा शुङ्गवंश समापितवान्।

काण्ववंशस्य राज्य काले मगधप्रदेश एवासीत् कियत्कालपर्यन्तमेव। पश्चाद्दक्षिणभारतस्य शातवाहनराजानः काण्ववंशस्य समाप्तिमकुर्वन्। पुराणेषु शातवाहना एवान्ध्रा कथ्यन्ते। शातवाहनभूपानां सौभाग्योदयोऽभूत्। अतएव तेषां साम्राज्यं हिमालयादारभ्य तुङ्गभद्रा नदीपर्यन्त परिव्याप्तम्।

शुङ्गवंशस्य काण्ववंशस्य च राजानो जात्या ब्राह्मणा आसन्। यदा तेषामाधिपत्यमासीत्तदा ब्राह्मणधर्मः परामृद्धिं गतः। संस्कृतभाषायाः, वैदिकानां यज्ञानाञ्च पुनः प्रचारः सम्बभूव। पुष्यमित्रशासनकाल एव पतञ्जलिना पाणिनीयव्याकरणस्य प्रसिद्धं महाभाष्यं व्यरचि। धर्मशास्त्राणां संग्रहः, प्राचीनग्रन्थानाञ्च क्रमः सुस्थिरः सञ्जातः। विद्वद्भिस्तेषामध्ययनाध्यापनमपि बहुशः कृतम्। रामायणस्य महाभारतस्य च पुनः सम्पादनमभूत्। मनुस्मृत्यनुसारेण राजनीतेः समाजव्यवस्थायाः धर्मस्य च सुव्यवस्था अभूत्। अशोकसमये परमोन्नतिं प्राप्तस्य बौद्धधर्मस्य ह्रासोऽपि क्रमशः सम्बभूव। एतत्समयस्य सर्वोत्कृष्टो नियमग्रन्थो मनुस्मृतिरासीद् यस्यां सर्वे शासनविषया निरूपिता सन्ति।

अस्मिन् समये दक्षिणभारते शातवाहनस्य परमशक्तिसम्पन्नं राज्यमासीत्। शातवाहनस्याभ्युदयकाले मगधाधिपस्य सर्वा शक्तिर्विनष्टा। इत्थं कालक्रमेण मगधराज्यस्य विनाशोऽपि सम्बभूव। शातवाहनराज्यस्य संस्थापकः सीमुकः तद्राजधानी च प्रतिष्ठानपुरमासीत्। शतवर्षं यावत् शातवाहनस्य तद्वंशीयानां च राज्यमभवत् भारतस्योत्तरे दक्षिणे च भागे, किन्तु शकानामाक्रमणेनैतस्य वंशस्य महती हानिः सम्बभूव। मालवाकाठियावाड्याः क्षत्रपराजानः शातवाहनेभ्यो राज्यस्य कञ्चिद्भागं जितवन्तः। मध्यभारते सर्वप्रधानः क्षत्रपभूपो नहपाण आसीत्। स च शातवाहनेभ्यः महाराष्ट्रप्रदेशमपहृत्य एकं विशालं राज्यं संस्थापितवान्। उत्तरभारते अजमेरपर्यन्तमेतस्य राज्यं विस्तृतमासीत्। तदाऽस्मिन्नेव राज्ये पश्चिमीयमालवप्रान्तः उत्तरीयकोकणं नासिकमण्डलं पूनामण्डलञ्च सम्मिलितमासीत्।

तदनन्तरं शातवाहनवंशे गौतमीपुत्रः शातकर्णिनामा महाप्रतापी राजा बभूव। तच्छासनकाले पुनरप्यस्य वंशस्य समुन्नतिः सम्बभूव। स क्षत्रपं नहपाणराजानं पराजित्य युद्धे तस्य सम्पूर्णमेव राज्यं स्वकीयराज्ये विलीनीकृतवान्। पञ्चविंशतिवर्षानन्तरं तत्पुत्रो वशिष्ठीपुत्र-

पुलोमावि राज्यसिंहासनमलञ्चकार। एतस्मिन्नेव समये पश्चिमीयक्षत्रपो राजा रुद्रदामा मालवाप्रान्तं काठियावाड़प्रान्तञ्च विजित्य शकराज्ये विलीनीकृतवान्।

मुक्तामणे! एतादृशी किंवदन्ती श्रूयते यद् रुद्रदामा शातवाहनभूपैः सह बहुकालं युद्धं कृत्वा विजयी बभूव। अथ च पुलोमाविभूपस्य विवाहो रुद्रदाम्नः पुत्र्या सहाभूत्, तेन कियत्कालपर्यन्तं युद्धं स्थगितं बभूव। किन्तु पुनरपि युद्धारम्भः सम्बभूव। शातवाहनवंशीयोऽन्तिमो राजा यज्ञश्री शातकर्णी बभूव। स खलु बहुषु युद्धेषु विजयं प्राप्यापि क्षत्रियभूपानां प्रभुत्वं विनाशयितुं नाशक्नोत्, प्रायः पञ्चाशदुत्तरशतनयवर्षाणि यावच्छातवाहनसाम्राज्यं चकासितं। ततश्च विछिन्नम्। शनैः सह युद्धं, प्रान्तीयशासकानां विद्रोहो नागानामाभीराणामन्यजातीनां चाक्रमणमेव तत्साम्राज्यस्य पतने प्रधानं कारणमभूत। पश्चिमीयक्षत्रपाः दक्षिणभारतस्य कञ्चिद्भागं विजित्य शतवर्षाणि यावत्तत्र राज्यश्चक्रुः। कालान्तरे कदम्बाभीरेक्ष्वाकुनामकेषु वंशेषु तद्राज्यं विभक्तम्। एतस्मिन् समयेऽपि चेरचोलपाण्ड्यवंशीया भूपाः शातवाहनसाम्राज्यपतनानन्तरमपि दक्षिणभारते स्वकीयामुन्नतिं कुर्वन्त एवासन्।

अशोकमरणानन्तरं यूनानीया भारतं समागताः। पूर्ववर्णितस्य डिमित्रियस वंशस्य प्रसिद्धो राजा मिलिन्दो भारतमाक्रम्य स्यालकोटस्थानं स्वाधिकृतमकरोत्। बौद्धसाहित्ये मिलिन्दस्यातीव वर्णनं विद्यते। असौ बौद्धधर्मे दीक्षित आसीत्। मिलिन्दश्च साहसी वीरः प्रसिद्धो योद्धा रणकर्मविशारदः प्राचीनभूपानामिव सर्वविद्यानिष्णातः शास्त्रार्थविचारे च सदैव विजयशीलश्चासीत्। तस्य सविधे विपुलं धनं, विशाला सुशिक्षिता युद्धकर्मविशारदा च सेनाप्यासीत्। बौद्धसाहित्ये लिखितमस्ति यत् मिलिन्दो भारतागमनानन्तरमेव बौद्धधर्मं

परिगृहीतवानिति। न्यायप्रियस्य मिलिन्दस्य मरणानन्तरं प्रजाजनो महान् दुःखितो बभूव।

पुनर्मुक्तामणिः नाक्षत्रिकं पप्रच्छ—भगवन्! शकाः क आसन्? एतेषां च भारते कथमिवागमनमभूत्। दैवज्ञः प्रोवाच—मुक्तामणे! मध्यैशियायां भ्रमणकारिषु जातिषु समुत्पन्नाः शकाः। आमूनद्याः पारप्रदेशे निवसन्त आसन्। मध्यैशिया-निवासिषु यदा महत् सकोलाहलं परिवर्तनं प्रारब्धम्। तदा चीन-सम्राट् हूणानां दमनं कर्तुमियेष। हूणाश्च यूचीजात्या सह युद्धमारेभे यूचीजातयः पराजिताः सन्तो युद्धात्पलायनं कृत्वा मार्गे शकैः सह सम्मिलिताः। किन्तु यूचीभयाच्छकाः पलाय्य सिन्धुनद्यास्तटे समागत्य बैक्ट्रिया निर्जित्य पश्चिमोत्तरभारते राज्यमेकं संस्थापितवन्तः, यस्मिन् पञ्चाबसिन्धुसंयुक्तप्रान्तराजस्थानप्रदेशाः सम्मिलिता आसन्। प्रथमः शकनरेशो मोगानामा बभूव। स खलु अफगानिस्तानं पञ्चाबसहितं स्वाधीनं चकार। मथुरायास्तक्षशिलायाश्च राजानः एतदधीना बभूवुः। मोगानरेशस्योत्तराधिकारिणौ, एजेस-प्रथमैजेसद्वितीयौ बभूवतुः। शकनरेशा इण्डोपार्थियनैः पराजिताः। इण्डोपार्थियनाः बहुकालं ईरानेऽवसन्, तत्रत्यसभ्यतामग्रह्णन्। अतएव भारतागमनानन्तरं ते इण्डोपार्थियननाम्ना प्रसिद्धिं गताः। एतस्याः शाखायाः गोंडोफर्नीज नामाप्रसिद्धो भूपो बभूव।

एष खलु भूपः ईसामसीहस्य समकालीन आसीत्। इण्डोपार्थियनराज्यं कतिपयप्रान्तेषु विभक्तमासीत्। प्रतिप्रान्तान् क्षत्रिया एव शासका आसन्। एतेषु क्षत्रपशासकेषु कतिपये क्षत्रपाः स्वतन्त्रं राज्यं स्थापितवन्तः। अथ चैतेषु क्षत्रपभूपेषु तक्षशिलामथुरोज्जैनसौराष्ट्रिया तथा दक्षिणभारतीया क्षत्रपाः प्रसिद्धा आसन्।

गुजरातदक्षिणभारतमध्यभारतेषु च स्वप्रभुतां संस्थापयितुं तैः सार्कं शकानां बहुकालं यावन्महद् युद्धं समजनि। रुद्रदामा गुजरातप्रान्तान्मध्यभारताच्च शकान्निष्कासयामास। किन्तु दक्षिणभारते

कञ्चित्कालपर्यन्तमेव, तेषां राज्यमासीत् कालान्तरे तदपि उच्छिन्नं जातम्। तस्य स्थाने बहूनि राज्यानि परिलघूनि समजायन्त। तेषां यूचीनां शाखैका पल्लवभूनद्या उत्तरतटे निवसमाना आसीत्। स खलु पञ्चसु लघुराज्येषु विभक्ता समभूत्। एतानि राज्यानि हिन्दुकुशपर्वतस्योत्तरभाग आसन्। ततश्च कुशाणजातिप्रधानं कुजूला कडफिसीजप्रथमः एतेषां सर्वेषामेव राज्यानामेकीकरणं कृत्वैकं विशालं साम्राज्यं संस्थापितवान्। स अफगानिस्तानस्य पञ्चनदस्य च कतिपयभागान् विजित्य स्वकीयसाम्राज्ये व्यलीयत। तस्य साम्राज्यमीरानादारभ्य सिन्धुनदीपर्यन्तं विस्तृतमासीत्। तस्य पुत्रः कडफिसीजद्वितीयोऽपि पितृतुल्यः पराक्रमी वीरश्चासौ पञ्जाबमारभ्य वाराणसीपर्यन्तं स्वकीयराज्यं विस्तारयामास। कडफिसोजद्वितीयस्य मरणानन्तरं कनिष्को राज्यसिंहासनं समलञ्चकार। एतेनैकं विशालं साम्राज्यं संस्थापितम्। एतद्राज्यविस्तारः काबुलादारभ्य वाराणसीं यावत्तथा दक्षिणे विन्ध्याचलपर्यन्तं यावद् बभूव। काश्मीरं निर्जित्यासौ कनिष्कपुरनगरमेकमवासयत्। वीरः कनिष्कोऽसौ भारतविजयेनासन्तुष्टः पार्थियनैः साकमपि युद्धं चकार। विजितवांश्च, चीनीयतुर्किस्तानभागेष्वपि विजयं लेभे। ततः चीनसाम्राज्यभागाः काशगरयारकन्दखोतानाश्च तदधीना बभूवुः। स चैकं पुरुषनगरं ( पेशावरनगरं ) निर्माय तमेव स्वां राजधानीमकरोत्। तत्र तेनैकं चैत्यं निरमायि। यद् दृष्ट्वा विदेशियात्रिणश्चकिता समभवन्। अशोक इव कनिष्कोऽपि युद्धविभीषिकां विलोक्य बौद्धधर्मानुयायी बभूव। तदा बहुकालेभ्यो बौद्धधर्मावलम्बिनां परस्परं महान् मतभेद आसीत्। कनिष्कः काश्मीरप्रदेशस्य कुण्डलवननामकस्थाने बौद्धानामेकां महतीं सभामायोजितवान्। तस्यां सभायां बौद्धधर्माचार्या बौद्धधर्मस्य भेदद्वयं कृतवन्तः — बौद्धसिद्धान्तरक्षकाणां कृते हीनयानसम्प्रदायस्तथा मूर्तिपूजकानां कृते वज्रयानसम्प्रदायश्च। कनिष्कस्य राजसभापण्डितोऽश्वघोषो बुद्धचरितनामकमेकं सर्वाङ्ग-

परिपूर्णं सुललितं काव्यमपि निर्ममे। अन्येऽपि चरकप्रभृतयः पण्डिता अस्य राजसभामलञ्चक्रुः। चरकेन चरकसंहितानामकः आयुर्वेद-शास्त्रस्य एकः ग्रन्थोऽपि व्यलेखि। कनिष्के पञ्चत्वं गते वासिष्को राज्योत्तराधिकारी जातः, तदनन्तरं हुविष्कश्च। कुशानवंशस्यान्तिमो नरपतिर्वासुदेवो बभूव। ततः परमपि कतिपयराजान एतद्वंशे सम-भूवन्, किन्तु अन्ते कनिष्कराज्यं विच्छिन्नमभूत्।

दैवज्ञप्रवर! क्षत्रपराजानो भवता कथिताः। के चेमे राजान इत्यपि भवान् कथयतु।

दैवज्ञः पुनरुवाच—पश्चिमीयक्षत्रपवंशस्य स्थापकः चष्टन आसीत्। असौ शातवाहनराज्यं जितवान्। शकयवनपल्लवभूपनिनाशकेन गौतमीपुत्रेण महानपि तस्य पराभवोऽभवत्। चष्टन उज्जयिनीनगरमपि जित-वान्। चष्टनपौत्रो रुद्रदामा अतीव योग्यः शासको बभूव। दक्षिणदेश-वासकानामपि राज्यानि स्वायत्तीकृतानि तेन। चन्द्रगुप्तमौर्यनिर्मितायाः सुदर्शननिर्झरिण्या अपि जीर्णोद्धारमसौ चकार। स्वभावे दयालुता, युद्धे वीरता, व्यवहारे पाटवम्, साधुगुरुजनविषये आदृतिः, शठे शठता, वैदिकसनातनधर्मे श्रद्धाभावश्च तस्यासीत्। व्याकरणराजनीति-सङ्गीततर्कादिशास्त्रेष्वपि असौ प्राप्तनैपुण्यः पण्डितो बभूव रुद्रदामा। रुद्रदाम्नो वंशस्य गौरवं दीर्घकालपर्यन्तं सुस्थिरं नातिष्ठत्, किन्तु शक-नरपतिभिरेवमासते गुप्तकालपर्यन्तं राज्यं कृतवान्। अन्ते चन्द्रगुप्त-विक्रमादित्येनासौ पराजितः।

शातवाहनवंशीयानां राज्ञां शासनकाले भारतीयसनातनधर्मस्य पूर्णः प्रचारोऽभूत्। वर्णधर्मव्यवस्थायाः पूर्णरूपेण पालनं ब्राह्मणानां समादरो यज्ञप्रचारः सर्वेषामेव देवानां पूजनञ्च बाहुल्येनाभवत्। शातवाहन-राजानः स्वयं ब्राह्मणधर्मानुयायिनः सन्तोऽपि बौद्धधर्मविरोधिनो नासन्। राजा शातकर्णी प्रथमः प्रायेण विशतिसंख्यकानश्वमेधान् कृतवानिति प्रसिद्धिः। तस्मिन् समये राजानो ब्राह्मणेभ्यो बौद्धभिक्षुभ्यश्च समान-

महान् कविश्चतुरो गायकश्चासीत्। विद्वांसस्तस्मै कविराजेत्युपाधिना समलङ्कृतवन्तः। स्वकीयमुद्रासु सरस्वतीमपि समुट्टङ्कितवान् सः। विदुषां सङ्गे स महान्तमानन्दमन्वभवत्। वीरयोद्धा भूत्वाप्यसौ सुकोमलहृदय आसीत्। दीनेभ्यः अनाथेभ्यश्च साहाय्यं कर्तुं सदैवोद्यत आसीत्।

समुद्रगुप्तस्य देहावसानानन्तरं तत्पुत्रो द्वितीयश्चन्द्रगुप्तः राज्य-सिंहासनमलञ्चकार। स चातीव वीरो युद्धविद्यायां निपुणः साहसोत्साह-सम्पन्नश्चासीत्। प्रथमं तावत् स मथुरानिवासिनं सिंदिपनरेशं निर्जित्य पश्चिमभारतराज्याधीशं चरमं शकशासकं जिगाय। मालवप्रदेशं काठियावाडञ्च जित्वा महाराष्ट्रराजस्य कन्यया प्रभावत्या सह स विवाहं चकार। इदानीं तस्य राज्यमरबसागरपर्यन्तं विस्तृतं जातम्। शक-विजयानन्तरमसौ स्वतः श्रीमत्संवत्सरान्मानमुपक्रमेण विक्रमादित्योपाधिं धृतवान्। संस्कृतभाषाया राजरीत्युपाधिश्च दधार। पुनश्च सः चन्द्रगुप्त-विक्रमादित्यो महाराजाधिराज-राजाधिराज राजर्षि श्रीविक्रमसिंह विक्रम-स्वामिनेति परमभट्टारक-परमभागवतप्रभृत्युपाधिभिश्च विराजितो बभूव। अस्य रत्नानि साहित्यस्य च परिपोषको विदुषामाश्रयदाता भगवत्-श्रीविष्णोरनन्यभक्तः सर्वधर्मसमादरकर्ता चासीत्। अस्य शासनकाले यूरोपादिदेशैः सह समुद्रतो व्यापारः सुवर्णरजतताम्रादिमुद्राणां निर्माणञ्च बभूवतुः।

एतस्यैव महाराजस्य शासनसमये सुप्रसिद्धचीन-यात्री फाहियानो भारतीयप्रसिद्धतीर्थानां दर्शनार्थं भारतभ्रमणार्थञ्च समागतः। स च यात्री पञ्चवर्षाणि यावद्भारते स्थित्वा पुरुषपुरं तक्षशिलां मथुरां कान्यकुब्जं कपिलवस्तु पाटलिपुत्रं गुप्तं तथान्यान्यपि स्थानानि ददर्श। यद्यप्यसौ अतिशयेन स्वकीयसमयं बौद्धतीर्थानां दर्शने धार्मिक-विषयाणामन्वेषणे च प्रवर्तितवान्, तथापि तत्कालीनभारतीयसमाजस्य निका-चरणानां राजनीतिकपरिस्थितेश्च विशदं वर्णनमपि विदधे। तद्वर्णनेन

एतत् ज्ञायते भवति यत् गुप्तसाम्राज्ये चाण्डालानां नगराद्बहिर्वास-स्थानम्, शूकराणां कुक्कुटानाञ्चापालनम्, सुरामांसादिमादकद्रव्य-विक्रयाभावः, लशुनस्य पलाण्डोश्चाभक्षणम् सनातनधर्ममन्दिराणां बौद्धविहाराणाञ्च निर्माणबाहुल्यम्, वारंवार कृतेऽपराधेऽङ्गच्छेदनम्, सर्वत्र कूपतडागौषधालयानाञ्च व्यवस्था, प्रजाभूपयोर्मध्ये प्रेमपूर्ण-व्यवहारः, दयायाः दानशीलतायाश्च प्राचुर्यम्, खाद्यपदार्थानां सर्वत्र प्राचुर्यम्, लुण्ठकानाञ्चोराणाममभावश्च आसन्। एवं सर्व एव ब्राह्मणाः सुशिक्षिताः शास्त्रार्थनिष्णाताः, राजा स्वयमेव स्वोत्तराधिकारिनियोजकः, मार्गेषु भयाभावः, वृद्धाः सन्मतिप्रदातारः राजकुलोत्पन्ना एव प्रान्तीय-प्रशासकाश्चासन्।

चन्द्रगुप्तद्वितीयानन्तरं तत्पुत्रः कुमारगुप्तो राज्यसिंहासनासीनो बभूव। तत्परं तस्य पुत्रः स्कन्दगुप्तः। स्कन्दगुप्तश्चापि स्वपितामह इव परमशक्तिसम्पन्नो युद्धकर्मणि निपुणश्च आसीत्। युद्धे महासाहसिकः स्कन्दगुप्तः कतिपयरात्रिषु युद्धभूमावेव सुष्वाप। अल्पकालीनशासकः स्कन्दगुप्तः स्वकीयं समयं प्रायेण हूणानां पराजये एव व्यतीयाय। तस्य मरणानन्तरं हूणास्तत्साम्राज्यस्य कतिपयभूभागान् विजित्य अधिकृतवन्तः। तस्योत्तराधिकारिणो नैतादृशः शक्तिशालिन आसन्, यत् साम्राज्ये समापतन्तमुपद्रवं निवारयेयुः। बुद्धगुप्त एवास्य वंशस्यान्तिमो नृप आसीत्। भानुगुप्तस्य समये वंशस्यैतस्य गौरवदिवा-करोऽस्तं जगाम।

*गुप्तकालो भारतीयेतिहासे स्वर्णयुगेति प्रथितो वर्तते।* कलायाः साहित्यस्य ब्राह्मणधर्मस्य च असाधारणी उन्नतिरस्मिन् समये बभूव। धनधान्यपरिपूर्णं भारतं वर्षमासीत्। वाणिज्यव्यापारस्य भारतीयधर्मस्य *चोन्नतिरप्येतस्मिन् समये समभूताम्।*

: १५ :

# हर्ष-साम्राज्यवर्णनम्

विक्रमसंवत्सरस्य प्रारम्भविषये कथा चैवादृशी यदुज्जयिनीनिवासिना विक्रमादित्यनामकेन भूपेन सिदियनजातिषु विजयप्राप्त्यनन्तरं तत्स्मारकरूपेणाथ विक्रमसंवत्सरः समारब्धः ।

एतस्यैव विक्रमादित्यस्य राज्यसभायां कालिदास हरिषेण वीरसेन-शूद्रक विशाखदत्त प्रभृतयः कवय आसन् । तेषु कालिदासो रघुवंश-मेघदूत-कुमारसम्भवनामकानि काव्यानि तथा अभिज्ञानशाकुन्तल-विक्रमोर्वशीय मालविकाग्निमित्रनामकानि नाटकानि चालिखत् । शूद्रकेण मृच्छकटिकनाटकम्, विशाखदत्तेन मुद्राराक्षसनाटकञ्च व्यलेखि । हरिषेण-वीरसेनाभ्यामपि विविधानि काव्यानि व्यरचिषत ।

गुप्तवंशीयराजानो वैष्णवधर्मोपासका आसन् । तेषां संरक्षणे वैष्णव-धर्मस्य ब्राह्मणधर्मस्य विष्णुभक्तेश्च महान् प्रचारो देवमन्दिराणां निर्माणानि चाभूवन् । जैनधर्मस्य बौद्धधर्मस्य चापि प्रचार आसीत् । एतद्धर्मोपासकान् प्रति नासीदत्याचारश्च । विनष्टे गुप्तसाम्राज्ये उत्तरभारतं अनेक-स्वतन्त्रराज्येषु विभक्तं जातम् । गुप्तराजानो हूणैः सह साहसपूर्वकं युद्धं कृतवन्तः, किन्त्वसफला एव आसन् । तोरमाणपुत्रो मिहिर-कुलो हूणानां राजा बभूव । शैवधर्मावलम्बी मिहिरकुलो महा-नत्याचारी बौद्धधर्मावलम्बिनां परिपीडकः बौद्धविहाराणां विना-शकः क्रूरः कठोरहृदयश्चासीत् । हूणानामत्याचारमवरोद्धुं मध्यभारतस्य राजा यशोवर्मा संघमेकं विनिर्माय मगधराजस्य बालादित्यस्य साहाय्येन सिन्धुनद्यास्तटे हूणान् पराजितवान् । युद्धे पराजितो भूत्वा मिहिरकुलः काश्मीरं पलायितः ।

यशोवर्मणः मृत्योः परं पुनरपि सम्पूर्णं भारतवर्षमनेकस्वतन्त्र-राज्येषु विभक्तमभूत् । मगधे उत्तरप्रदेशे मौखरीवंशजा गुप्तवंशजैः सह

अत्र दशसहस्रसंख्यकाश्छात्रा भागमभिलेभिरे. सर्वशास्त्रशास्त्रिभ्योऽध्यापनकर्मनिपुणेभ्यो विद्वद्भ्योऽध्ययनमकुर्वन्। विविधशास्त्रेषु प्रायः शास्त्रार्थः प्रचलति स्म। यद्यप्ययं विश्वविद्यालयो बौद्धधर्मशिक्षार्थमेव तत्कालीनराजभिः संस्थापितः, शतसंख्यकाः ग्रामाः प्रदत्ताश्च तद्विश्वविद्यालयसञ्चालनार्थम्, तथापि तत्र सर्वधर्मशिक्षाप्रदानमभूत्। हर्षसाम्राज्यं सर्वाङ्गपरिपूर्णं सर्वैश्वर्यसम्पन्नं स्वर्णरत्नबहुलं सुखिजनसङ्कुलमासीत्। किन्तु हर्षे अवसिते सम्पूर्णमेव तद्राज्यं छिन्नभिन्नं विलुप्तञ्च जातम्। तस्य किञ्चिच्चिह्नमप्यवशिष्टमिदानीं नास्ति।

हर्षस्य जीवनकाल एव काश्मीरे दुर्लभवर्धनः कार्कोटवंशस्य संस्थापनञ्चकार। मैत्रकराजानो गुर्जरे स्वाधीनं राज्यं संस्थापितवन्तः। मगधे गुप्तभूपानां शक्तिः प्रावर्धत। एतस्य वंशस्य आदित्यसेनो नाम राजा शक्तिशाली बभूव। किन्तु कन्नौजभूपो यशोवर्मा महान् विजयी कवीनां सम्मानदायकः संस्कृतसाहित्यस्य महाकवेरुत्तररामचरितनाटकनिर्मातुर्भवभूतेराश्रयदाता महतः साम्राज्यस्य संस्थापकश्चासीत्। किन्तु काश्मीरप्रदेशीयो ललितादित्यभूपस्तस्य प्रतिस्पर्धी बभूव। तयोर्युद्धे सम्प्रवृत्ते ललितादित्यस्यैव विजयो बभूव। एतावता कान्यकुब्जस्य राज्यश्रीः काश्मीराधीना सञ्जाता।

ललितादित्यो महान् वीरः समुत्साहसम्पन्नो निरङ्कुशश्च शासक आसीत्। तस्य साम्राज्यविस्तारं विलोक्य जना मौर्यसाम्राज्यमस्मरन्। किन्तु ललितादित्यस्य मरणानन्तरं तद्वंशोद्भवा भूपाः शक्तिहीना बभूवुः। काश्मीरस्य पतनसमये भारते कतिपयानां नूतनानां राज्यानां समुदयो जातः। वङ्गदेशे पालक्षत्रियाणां राज्यं गुर्जरे प्रतिहारराज्यञ्च समुदभवताम्।

: १६ :

# भारते मुहम्मदीयानां प्रवेशः

यस्मिन् समये कान्यकुब्जे यशोवर्मणः शासनं समुन्नतं राजस्थाने च गुर्जरप्रतीहारराज्यानि शक्तिसम्पन्नान्यासन्, तस्मिन्नेव समये मुहम्मदधर्मावलम्बिना भारतस्य सिन्धप्रदेशे प्रत्याक्रमणं समजनि। बहुषु च स्थानेषु तेषामाधिपत्यमपि जातम्। भारतोपरि मुहम्मदीयानामिदं प्रथमं समाक्रमणमासीत्। हजरत-मुहम्मदो मक्कायां जन्मालभत। पित्रोर्दारिद्र्यातिशयेन तत्परिपालनं पितृव्येन कृतम्। बाल्यकालादेवारभ्य हजरत मुहम्मद एकेश्वरवादी देवभक्तो धर्मकार्येषु च श्रद्धावान् आसीत्। निजदेशीयो हजरतो अरबनिवासिना वैदिकधर्मावलम्बिना धर्मं हीनदृष्ट्या विलोकितवान्, एकेश्वरवादी भूत्वा स्वकीयधर्मप्रचारञ्च प्रारभत। तस्य धर्मस्य निम्नलिखित सिद्धान्तोऽस्ति. एक एव परमात्मा, केवलं तस्यैव पूजा कर्तव्या। परमात्मनो भिन्ना सर्व एव प्राणिनः पूजानर्हाः। एतादृशस्य परमशक्तिशालिनः परमात्मनः कृते मानवैः स्वकीयं सर्वस्वमेव समर्पणीयम्। प्रतिदिनं पञ्चवारं नमाजपठनं रमजानमासे मासैकपर्यन्तमुपवासः केवलं दिवैव कर्तव्यः। तीर्थयात्रासु केवलं मक्कायात्राकरणमेव इत्यादि। एवमतिसुलभस्तद्धर्मसिद्धान्तः। कुरानशरीफ एव तस्य प्रधानो धर्मग्रन्थः। धर्मप्रचारको मुहम्मदः स्वकीयं धर्मं जनेषु प्रचारयन् भ्रातृभावञ्च प्रदर्शयन् मक्कायामेव न्यवसत्। किन्त्वेतादृशस्य धर्मस्य विरोधिनोऽपि बहवो जना मक्कायां सञ्जाताः। तस्मात् व्यथितहृदयो मुहम्मदो मक्कां परित्यज्य मदीनानगरीमागत्य स्वकीयधर्मप्रचारकार्ये संलग्नो बभूव। मुहम्मदजन्मसमयादेव हिजरीसंवत्सरस्यारम्भो जातः। मदीनायामसौ स्वधर्मप्रचारे पूर्णं साफल्यमवाप्तवान्। क्रमशः अनेकेषु नगरेषु पत्तनेषु स्थानेषु च तस्य धर्मप्रचारो बभूव। क्रमशः तद्धर्मावलम्बिनां संख्या प्रावर्धत। सर्वेऽपि तद्धर्मानुयायिनस्तं देवदूतमपि मानितवन्तः।

इनरतो नदुभिर्युद्ध स्वकीयधर्मप्रचारञ्च कुर्वन् स्वकीय जीवन व्यतीयाय। कुशनशरीफे हजरतस्य शिक्षाया पूर्णं वर्णन विद्यतेतराम्। देवदूतस्य हजरतस्य मरणात्पर विंशतिवर्षाभ्यन्तर एव तदनुयायिन स्वधर्मप्रचारपूर्वक सीरिया पैलेस्टाइनमिश्रेरानप्रदेशान् जितवन्त। ईरानविजयानन्तर ते पूर्वदेशविजयमैच्छन्। अरबनिवासिना मुहम्मदीयाना प्रथमा क्रमण भारतोपरि मुहम्मद बिनकासिमस्याध्यक्षत्वे सिन्धप्रदेशे समभवत्। तत्रत्य दाहिरनामक ब्राह्मणभूप युद्धे पराजित्य स त जघान। तत्रत्य स्वपतेर्दाहिरस्य युद्धे विजयाशामदृष्ट्वा चिताप्रवेश कृतवत्य।

मुहम्मद बिनकासिमस्य समये शासनप्रबन्ध सुव्यवस्थित प्रजाश्च स्वतन्त्रा आसन्। किन्तु 'जजिया' करप्रदान कुर्वन्त एव हिन्दवो निवास चक्रिरे। किन्तु विजयानन्तरमेव बिनकासिमविरोधिना मुहम्मदाना इस्लामधर्मप्रमुखसमीप गत्वा त निन्दितवन्त। तेन क्रुद्धो धर्मप्रमुखो बिनकासिम शूलमारोपितवान्। शूलमारोपिते बिन कासिम सिन्धविजयोऽपूर्ण एवाभूत्। अरबदेशवासिना मुहम्मदीयाना मवस्थापि पतितैव जाता। अरबवासिनो भारतीयब्राह्मणेभ्य बहुविधा विद्यामपि पठितवन्त। संस्कृते लिखिताना बहूना ज्यौतिषदर्शना युर्वेदशास्त्रग्रन्थाणा अरबाभाषायामनुवादो जात। किंवदन्ती चेय वर्तते यत् कश्चिन्मुस्लिमधर्मप्रमुखो हिन्दूचिकित्सकद्वारा स्वकीया चिकित्सा कारितवान्। एतेनानुमीयत यन्मुहम्मदीयाना हिन्दून्प्रति महानुदारभाव आसीत्।

अथ दैवज्ञो भुक्तामणि कथयति—मुक्तामणे! अर्बलोपर्वतस्य शिखरे ब्रह्मणोऽग्निकुण्डात् समुत्पन्नाश्चौहानक्षत्रिया इव प्रतिहारक्षत्रिया अपि स्वोत्पत्ति तादृशीमेव वदन्ति। ते खलु पूर्व राजस्थानस्य भीनमालस्थाने निवसन्त आसन्। यदा अरबवासिन सिन्ध विजित वन्तस्तस्मिन् समये प्रतिहारक्षत्रिया अतीव बलशालिन आसन्।

त एवारब्यवासिना सिन्धादग्रे गमनं निरोधितवन्तः। पुनर्वत्सराजनामा प्रतिहारभूपः समस्तमुत्तरभारतं विमथ्य कान्यकुब्जं वङ्गञ्च जितवान्। वत्सराजपुत्रो नागभट्टद्वितीयो वङ्गदेशीयभूपं धर्मपालं विजित्य वङ्गं कान्यकुब्जं च स्वाधिकृतवान्। धर्मपालपुत्रेण देवपालेन विजिते प्रतिहारवंशे बभूव भोजप्रथमनामा कुमारः, तेन प्रतिहारवंशः पुनः सबलीकृतः। स खलु पुनः कान्यकुब्जं विजित्य पञ्जाब मध्यभारत-गुजरात संयुक्तप्रदेशेषु स्वाधिकारं संस्थाप्य साम्राज्यं शक्तिसम्पन्नं कृतवान्। पश्चादेतस्य वंशे राज्यपालनामैको भूपो बभूव, यः खलु महमूदस्याधिपत्यं स्वीचकार।

प्रतिहारराज्यविलोपानन्तरं चन्देल-कलचूरि परमार-चालुक्य-चौहान-गहरवार कच्छप-घटनामोपाधिधारकाः क्षत्रियाः पुनः सुप्रसिद्धा अभूवन्। सर्वेऽप्येते मनुसमुद्भूतानां क्षत्रियाणामेव वंशजाः, किन्तु तत्तत्प्रदेशेषु निवसन्तस्तत्तदुपाधिधारका बभूवुः।

प्रतिहार साम्राज्य पतनानन्तरं चन्देलवंशीयो भूपो यशोवर्मा बहुभिर्भूपैः सह युद्धं कृत्वा देशान्विजित्य च कालञ्जर पर्वते एव स्वराय दुर्गं निर्मितवान्। धंगनामकस्य भूपस्य शासनकाले चन्देलवंशस्य महती समुन्नतिरासीत्, यमुनापर्यन्तञ्च तस्य राज्यविस्तारोऽभूत्। गजनी-बादशाह-सुबुक्तगीनेन सह युद्धं कर्तुं यो हि संघो निर्मायि तत्कालीन-भूपैः, तस्मिन्नयमप्यासीत्। धंग एव खजुराहोस्थितं सुप्रसिद्धमन्दिरं निर्मितवान् बुन्देलखण्डे। तत्पुत्रो गण्डनामा भूपो गजनीनिवासिना महमूदेन सह युद्धसमये आनन्दपालस्य साहाय्यं चकार। किन्तु महमूदो युद्धमकृत्वैव गण्डस्याधीनतां स्वीचकार। तदनन्तरं च गण्ड राज्यपालस्योपरि समाक्रमणं कृत्वा तं युद्धे निहतवान्। किन्तु यदा महमूदः प्रतीकारार्थं पुनः गण्डं प्रत्याक्रमणं चकार, तदा गण्डो युद्धमकृत्वैव पलायितः। पुनः पृथ्वीराजचौहानो महमूद

भारतान्निष्कासितवान्। तदनन्तर कुतुबुद्दीनः चन्देलराज्यमधिकृतवान्। किन्तु परमर्दिनः पुत्रः पुनरपि नष्टां स्वीयां शक्तिमेकीकृत्य मुहम्मदीयान्निष्कासितवान्।

## श्री शङ्कराचार्यावतारः

अत्रान्तरे विक्रमसंवत्सरस्य पञ्चचत्वारिंशदधिकसप्तशततमे वर्षे वैशाखशुक्लपञ्चम्यां केरलप्रान्तस्य वृषाचले पूर्णानदीतटस्थकालडिग्रामे शङ्कराचार्यस्य जन्माभूत्। तस्य पितुर्नाम शिवगुरुर्माता च सुभद्रासीत्। श्रीशङ्कराचार्यः साक्षात् शङ्करस्यावतार आसीत्। एकदा कैलाशपर्वते सर्वे देवा एकत्रीभूय शङ्करं प्रत्यकथयन्—देव! बुद्धावतारस्यात्याचारेण अधुना वैदिकधर्मस्योच्छेदो जायते। भवानेवास्य धर्मस्य रक्षक इति। देवगणवार्तां श्रुत्वा शङ्करोऽकथयत्—देवाः! वैदिकधर्मस्य रक्षार्थमहं स्वयमेव मर्त्यलोकेऽवतारं ग्रहीष्यामि। भवन्तोऽपि मर्त्यलोकेऽवतारान् गृह्णन्तु इति। ततो ब्रह्मा मण्डनमिश्रनाम्ना स्वामिकार्तिकेयः कुमारिलभट्टनाम्ना विष्णुः सङ्कर्षणनाम्ना च यथाक्रममवतीर्णाः।

श्रीशङ्कराचार्यः प्रथमवर्षे वर्णपरिचयं द्वितीयेऽक्षरलेखनं तृतीये श्रुतार्थग्रहणं कुर्वन्, अष्टवर्षाभ्यन्तर एव सम्पूर्णां विद्यां पठितवान्।

तदनन्तरं स श्रीगोविन्दभगवत्पादाचार्यस्य सकाशं गत्वा तेन सन्यासञ्च गृहीत्वा धर्मप्रचारमकरोत्। वैदिकसनातनधर्मप्रचारकर्मणि बौद्धक्षपणकैः सह तस्य महान् शास्त्रार्थो बभूव। शास्त्रार्थे सर्व एव बौद्धाः शङ्कराचार्येण पराजिता भूत्वा पलायिताः। एवं बौद्धान् पराजयमानो ब्रह्मज्ञानं प्रचारयन् तत्र भवान् शङ्कराचार्यो मिथिलायां ब्रह्मणोऽवतारभूतेन कर्मकाण्डनिष्ठेन मण्डनमिश्रेण सह शास्त्रार्थमकरोत्। मण्डनमिश्रे पराजिते तद्धर्मपत्न्या कामशास्त्रमवलम्ब्य कृते शास्त्रार्थे शङ्कराचार्यः पराजितो बभूव। बालब्रह्मचारित्वात्तस्य नासीत् कामशास्त्रज्ञानम्। तदनन्तरं तस्याः सकाशात् मासैकस्यावकाशं गृहीत्वा

स कस्यचित्सद्योमृतस्य राज्ञः शरीरे स्वात्मानं परकायप्रवेशविद्यया प्रावेशयत्, स्वीयं पाञ्चभौतिकं शरीरञ्च गिरिगुहायां संस्थाप्य तद्रक्षणाय स्वशिष्यानादिशत्। मासैकेन राजकुमारशरीरप्रविष्टः शङ्कराचार्यो निखिलं कामशास्त्रमवगम्य पुनः स्वशरीरे परावृत्तः। पूर्वशरीरेण पुनः शास्त्रार्थे शूरे मण्डनमिश्रधर्मपत्नी पराजिता। ततो मण्डनमिश्रः शङ्कराचार्यस्य सुरेश्वराचार्यनामा शिष्यो बभूव।

सुरेश्वराचार्यातिरिक्ता अन्ये शङ्कराचार्यस्य त्रयः शिष्याः पद्मपाद-हस्तामलकत्रोटकनामान आसन्। तांश्च स भारतस्य चतुर्दिक्षु चतुरो मठान् निर्माय संस्थापितवान्। तद्यथा—पश्चिमे द्वारकायां सुरेश्वरा-चार्यो मठाधीशत्वेऽभिषिक्तः। तन्मठस्य नाम द्वारकायां शारदापीठ इति बभूव। सुरेश्वराचार्यशिष्यास्तीर्थोपाधियुक्ताः केचनाश्रमोपाधियुक्ताश्च बभूवुः। तत्र देवः सिद्धेश्वरो देवी च भद्रकाली तीर्थं गोमती वेदः सामवेदश्चाभूवन्। द्वितीयो गोवर्धनमठो जगन्नाथपुर्यां पूर्वस्यां दिश्य-भूत्। तन्मठाधिपतिः पद्मपादः। पद्मपादशिष्या वनारण्योपाधियुक्ता बभूवुः। तत्र पुरुषोत्तम क्षेत्रं जगन्नाथो देवता विमलादेवी तीर्थं महोदधिर्वेदश्च ऋग्वेद एवाभवन्। तृतीयो ज्योतिर्मठस्तदधिपश्च त्रोटकाचार्यो बभूव। तस्य शिष्या गिरिपर्वतसागरोपाधियुक्ता अभूवन्। बदरी क्षेत्रम् तीर्थमलकनन्दा वेदस्त्वथर्ववेद अभवत्। चतुर्थः शृङ्गेरीमठस्याधिपतिर्हस्तामलकः। तस्य शिष्याः सरस्वती-भारतीपुरीनामकोपाधियुक्ता बभूवुः। तस्य क्षेत्रं रामेश्वराख्यमादि-वाराहो देवता देवी कामाक्षी तुङ्गभद्रा तीर्थं वेदो यजुर्वेदश्चाभवन्।

इत्थं चतुर्षु मठेषु ये शिष्या अभूवन्, त एव दशनामधारकाः सन्यासिनः। एतेषामधुनापि परम्परा भारते समुपलभ्यते। किन्त्वेतेषु बहव इदानीं गृहाश्रमिणो बभूवुः।

मुक्तानन्द ! श्रीशङ्कराचार्यो विवर्तवादस्यानिर्वचनीयख्यातेश्चोप-क्रममादाय प्रतीयमानं जगत् ब्रह्मणो विवर्तं मनुते। जीव ईश्वरादयः,

प्रकृतिरपि ब्रह्मशक्तावधिष्ठिता। एतयोरधिष्ठानं ब्रह्मणः अतिरिक्तं किमपि नास्ति। सदसद्विलक्षणा माया असत्यपि प्रतीयते। माया स्वयमसती, किन्तु सद्रूपब्रह्मण एकदेशे स नूनं निवसति, अत एव सतीव प्रतीयते। किन्तु वास्तवरूपेण माया सदसद्विलक्षणैव। मायाया अत्यन्ताभावो ज्ञानमन्तरा न भवति। ज्ञानेऽधिगते माया तत्रैव तिरोहिता भवति। मायाया व्यावहारिकं रूपं सत्यम्, परं तस्या सत्ता स्वनिष्ठा नहि विद्यते। ज्ञानी पुरुषः सर्वत्रैव ब्रह्म पश्यति। तद्दृष्ट्या मायाया ब्रह्मणा सह कोऽपि सम्बन्धो नास्ति। निर्गुणं निष्क्रियं आनन्दस्वरूपं ब्रह्म। मायायाः कार्यं सगुणं दुःखमयञ्च। अत एव ज्ञानिनो मायाचक्रं विहाय सर्वत्र ब्रह्मसत्तामेव पश्यन्ति।

शंकरसिद्धान्तेऽद्वैतं ब्रह्म सत्यम्। इदं सप्रपञ्चं जगद् मायिकं मायायाः कार्यम्। जीवो ब्रह्मणोंऽशो परममहत्परिमाणश्च प्रकृतिश्चापि ब्रह्मण एव प्रकटीभूता। अनन्तकालपर्यन्तं शुद्धब्रह्मानन्दानुभव एव मुक्तिः। ब्रह्मणोऽतिरिक्तं सर्वमेव मिथ्या। इदमेव जगत्प्रसिद्धं योगिजनश्रेयश्च श्रीशङ्कराचार्यमतम्।

भगवान् शंकराचार्यो भारते बौद्धमतं परिसमाप्य वैदिकसनातनधर्मं प्रचारञ्च कृत्वा द्वात्रिंशद्वर्षावस्थायामेव कैलासवासी बभूव।

## श्री कुमारिलभट्टपादाः

बुद्धानुगामिनो यदा यज्ञस्य वेदानां यज्ञस्थलानां वेदज्ञानां विदुषाञ्च विनाशमकुर्वन्, तदा काशीराजकन्याया हृदये वेदरक्षणस्य चिन्ता प्रादुर्बभूव। अथैकस्मिन् दिवसे कार्तिकेयस्यावतारः कुमारिलभट्टः काश्यां मणिकर्णिकाघट्टे सन्ध्यां कुर्वन् काशीराजपुत्र्या मुखात् "किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति" इति श्लोकार्धमश्रौषीत्। तेन भट्टपादस्य चेतो नितरां खेदमाप। शीघ्रमेव सन्ध्यां समाप्यासौ राजकुमार्याश्चिन्तां दूरीकुर्वन् समुवाच—"मा विषीद

वरारोहे भट्टाचार्योऽस्ति भूतले" इति। काशीराजस्य साहाय्यं समवाप्य भट्टपादेन सर्वमपि बौद्धमतमक्षरशः खण्डितम्। स कृत्रिम-बौद्धस्वरूपं विधाय बौद्धाचार्याणां सविधे गत्वा सर्वमेव बौद्धतत्त्व-मधिगतवान्। ततश्च स बौद्धेभ्यः पृथग् भूत्वा तेभ्यो गुरुदक्षिणां दातु-मारभत। स तन्त्रवार्तिकनामकमद्भुततमं ग्रन्थं विरच्य बौद्धानां दर्पदलनं चकार।

भट्टपादेन बौद्धसहयोगिनो जैनधर्मावलम्बिनोऽपि जिताः। अत एव शङ्करदिग्विजये विलिखितं यत् "कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु। निष्प्रत्यूहमनंस्त श्रुतिशाखाः समन्ततः॥" इति। भट्टपादस्य तर्का अलौकिका आसन्। एकस्मिन् दिवसे केचिन्नास्तिका मृतकश्राद्धविषये तं किञ्चित्प्रष्टुं समाजग्मुः। भट्टपादस्तेषामाशयं विज्ञाय कथितवान्— "यद्यस्ति परलोकोऽपि कर्तव्यः पुत्रसंग्रहः। नास्ति चेन्नास्ति नो हानिरस्ति चेन्नास्तिको हतः॥" इति। श्रुत्वैव पद्यमिमं नास्तिकानां हृदयं शुष्कमभूत्। प्रसङ्गवशादेकस्मिन् दिवसे भट्टपादो जगन्नाथपुरीं जगाम भगवतो दर्शनार्थम्। गच्छतस्तस्य सायंकालो जातः। समस्ताश्च भगवतो जगन्नाथस्य मन्दिरकपाटं पिधाय स्वावासं गतवन्तः। गतेषु सर्वेषु भट्टपादः कपाटच्छिद्रेण भगवन्तं दृष्ट्वा प्रोवाच—"ऐश्वर्यमद-मत्तोऽसि मां त्वं नानुकम्पसे। समायातेषु बौद्धेषु मदधीना तव स्थितिः॥" एतत्पद्यपठनानन्तरमेव कपाटौ स्वयमेव समुद्घाटितौ बभूवतुः। भगवतो दर्शनं कृत्वा कुमारिलः परमानन्दं लेभे। समाप्ते चावतारकार्ये भट्टपादो बौद्धगुरुद्रोहदोषशान्त्यर्थं त्रिवेणीतटे तुषाग्निना चितां विधाय स्वशरीरमाजुहाव।

इत्थं मण्डनमिश्रः कर्मप्रचारेण, शङ्कराचार्यो ब्रह्मज्ञानप्रचारेण, कुमारिलभट्टस्तर्केण युक्त्या तन्त्रवार्तिकलेखनेन च सर्वानेव बौद्धान्वि-जितवन्तः। किन्तु यथार्थमेव सर्वं शङ्कराचार्यस्य कार्यमतीव गौरव-पूर्णमासीत्। शङ्करयत्नैरेव बौद्धधर्मावलम्बिनः प्रायेण ब्राह्मणधर्म-

वैश्यशूद्राणां बौद्धधर्मात्पुनः स्वधर्मे स्वजातौ च प्रत्यावर्तनञ्च कृतम्। जैनबौद्धाभ्यां विनष्टानां भारतीयमन्दिराणामुद्धारकार्यकरणम्, तत्र तत्र मूर्तिप्रतिष्ठापनम्, वैदिकधर्मप्रचारद्वारा भारतस्य जीर्णोद्धारकरणादीनि अन्यान्यपि कार्याणि तेन कृतानि।

## श्रीरामानुजाचार्यः

भगवतो रामानुजाचार्यस्य प्राकट्यं मदरासप्रान्तस्य पेरुम्बूदूर-नामकस्थानेऽभूत्। तत्र हारितगोत्रीयो याज्ञिको ब्राह्मणः केशवजीयो निवसन्नासीत्। स च कैरविनीनद्यास्तटे पार्थसारथिनामकविष्णुमन्दिरस्य समीपे पुत्रेष्टियज्ञमकरोत्। तत्फलस्वरूपः सङ्कर्षणावतारभूतो रामानुजाचार्यः प्रादुर्बभूव। पञ्चमे वर्षे विद्यारम्भेजातेऽष्टमे वर्षे यज्ञोपवीत-संस्कारानन्तरममौ स्वपितुरेव वेदाध्ययनप्रारम्भमकरोत्। पुनर्यादव-प्रकाशात्पपाठ। षोडशवर्षावस्थायां तस्य विवाहोऽभूत्। विवाहानन्तर-मसौ भूतपुर्यामेव निवासमकरोत्।

किञ्चित्कालानन्तरमेवासौ धर्मप्रचारार्थं सन्यासाश्रमं गृहीतवान्। वरद-राजस्य समक्षे यतिधर्मग्रहणानन्तरं अस्य वेषो यतिधर्मविमण्डितो बभूव। स च वैष्णवधर्मप्रचारार्थं वेदार्थसंग्रहवेदान्तसारवेदान्तदीपश्रीभाष्य-गीताविवृतिप्रभृत्युत्तमग्रन्थान् लिलेख। एतेषां ग्रन्थानां मूलाधारो बौधायनवृत्तिनामकं प्राचीनग्रन्थं एव। शारदापीठादिमं ग्रन्थमादाय श्रीरंगं गतवान् रामानुजाचार्यः। तत्र स्थित्वा ■ चतुःसप्ततिमठान् सगस्थापयत्। स्वमतानामाग्रहेण त्रीणि स्वकीयचित्राणि निर्मितवान्। तेष्वेकं श्रीरंगधाम्नि द्वितीयं भूतपुर्यां तृतीयं शैलकोटानामकस्थाने स्थापितम्। अत्र श्रीचत्रारि तद्विधाणि तत्तत्स्थाने सरक्षितानि बभूवुः।

रामानुजाचार्यमतस्यायमेव निष्कर्षो यत् जगत्सत्यम्, जीवो भगवतः स्वभावेनैव स्थिरदासः। तत्प्राप्यश्च सगुणो विष्णुदेवः। चिदचिदधी-श्वरस्य समस्तदेवाः स्वभावतोंऽशाः। एतदेव रामानुजाचार्यमतम्।

ग्वालियरस्यान्त पूर्वं प्रतीहारसाम्राज्यान्तर्गतो भाग आसीत्। किन्तु कलचुरिवंशीयैकः सम्राट् तं प्रदेशं विजित्य स्वीयं राज्यं संस्थापितवान्। तद्वंशे महाराजाधिराजो गाङ्गेयदेवविक्रमादित्यो नाम नृपो बभूव। तस्योत्तराधिकारी राजा कर्णः सञ्जातः। तं चन्देलाः चेदिवंशीयाः पराजितवन्तः। कर्णः काश्यां शिवमन्दिरं कर्णावतीनाम्नीं स्वीयां राजधानीं च निर्मापितवान्। कर्णानन्तरं तद्वंशीयमन्तिमं नृपं विजयसिंहं देवगिरेर्यादवा जितवन्तः।

चन्देला इव मालवप्रदेशवर्तिनः परमारराजानोऽपि प्रतीहारसाम्राज्याधीना आसन्। परमारवंशे कृष्णराजनामा पराक्रमशाली नृपो बभूव। कालान्तरेऽसौ स्वाधीनोऽभूत्। तदनन्तरमेतस्मिन् वंशे भोजनामा सुप्रसिद्धो नृपो बभूव। एतस्य शासनकाले कलानां साहित्यस्य काव्यस्य नाटकस्य ज्योतिःशास्त्रस्य दर्शनशास्त्रस्य च महत्युन्नतिरभूत्। विद्वत्समाश्रयदानकोऽसौ ग्रन्थरचनाहेतु काव्यालङ्कारादिशास्त्राणि उद्धरित्वा विद्यालयेषु सम्पादितवान्। राजा भोजो गुर्जरनृपभीमचेदिभूपैश्च युद्धं कृत्वा पराजितो बभूव। भोजस्योत्तराधिकारिणः कतिपयवर्षाणि यावद् युद्धं कृतवन्तः, किन्तु अन्तिमतः कदापि निर्णयो नैव बभूव।

परमारवंश्यान्तिमो नृपो भोजो द्वितीयः अलाउद्दीनबादशाहेन पराजितः, तद्राज्यं दिल्लीसाम्राज्यान्तर्गतमभूत्।

चन्देलपरमारादिवत् सोलङ्कीपदभाजा अपि (चालुक्यवंशीयाः) प्रतिहारसाम्राज्याधीना आसन्। एतस्य वंशस्य संस्थापको मूलराज प्रथम आसीत्। [illegible] च स्वतन्त्रं राज्यं संस्थापितवान्। द्वितीयः सम्राट् भीमः प्रथमो बभूव। सोलङ्कीभूपतीनां राजधानी अणहिलवाडनामिका आसीत्। अस्मिन् वंशेऽपरः प्रतापी नृपः कुमारपालो जैनधर्मस्याश्रयदाता जैनाचार्यहेमचन्द्रसूरेः शिष्य आसीत्। कुमारपालनृपतेरनन्तरं

चौलुक्यादिक्षत्रियाणां शक्तिह्रासः समभूत्। अल्लाउद्दीनखिलजी चौलुक्य-क्षत्रियान् विजित्य तद्राज्यं दिल्लीसाम्राज्याधीनं चकार।

कान्यकुब्जस्य गहरवारक्षत्रियाणामुदयस्तदाभूद्यदा प्रतीहार-क्षत्रियाणां राज्यं प्रायेण विलुप्तम्। एतद्वंशस्य सर्वप्रतापी राजा गोविन्दचन्द्रो बभूव। स च विहारप्रदेशस्य पश्चिमभागपर्यन्तं राज्य-विस्तारं मुहम्मदीयाक्रमणकारिभिर्घोरं सगरञ्च चकार। तस्य पौत्रो जयचन्द्रः पृथ्वीराजेन सह संग्राममकरोत्। तस्य राज्यं वाराणसी-पर्यन्तं विस्तृतमासीत्। यदा मुहम्मदगोरी पृथ्वीराजोपरि समाक्रमणं चकार, तदा जयचन्द्रेण किमपि साहाय्यं नैव कृतम्। तराइनयुद्धे मुहम्मदगोरिणा पृथ्वीराजः पराजितो बभूव। एकवर्षानन्तरं स जयचन्द्र-मपि युद्धे निहतवान्। तदनन्तरं जयचन्द्रपुत्रो राज्यसिंहासनासीनो बभूव। किन्तु कान्यकुब्जराज्यमतीव सीमितं जातम्।

## पृथ्वीराजश्चौहानः

दिल्लीनगर्याः शासनकारकः परमविक्रमशाली खड्ग तोमर प्रासादि-शस्त्राणां सञ्चालने दक्षः दीर्घश्मश्रुशोभितः सुपुष्टभुजविराजितशरीरो विशालनेत्रः आयतवक्षाः सिंहस्कन्धः शत्रूणां पराजये पटुर्मूर्तिमद्वीरत्व-मिव विराजमानश्चौहानक्षत्रियकुलोत्पन्नः परमदयालुर्ब्राह्मणभारतभक्तः पृथ्वीराजचौहाननामा भूपो बभूव। पूर्वं भारतीयनरेशैः पराजितोऽपि महमूदनिवासी गजनीगोरीनामा मुहम्मदीयस्तदुपरि समाक्रमणं चकार। पृथ्वीराजोऽपि पदातिभिरश्वारोहिभिः रथोपरि विराजमानैः हस्तिपृष्ठवि-रूढैः बहुविधास्त्रसञ्चालननिपुणैः स्वमातृभूमिरक्षायां दत्तचित्तैः क्षत्रिय-कुलोत्पन्नैर्वीरैः सैनिकैरन्यैश्चापि समलङ्कृतो महमूदेन सह युद्धं कर्तुं दिल्लीनगर्याः बहिस्तराइननामकं युद्धस्थलमाजगाम।

तत्र 'जयतु भारतमिति शब्दमुद्घोषमाणानां वीराणां क्षत्रियाणाम् 'अल्ला हो अकबर' इति शब्दमुच्चरतां मुहम्मदीयसैनिकानां परस्परं

क्लीबानां देशरक्षाव्रतविहीनानां भयङ्करः च पटहादिवाद्यध्वनिपरिपूर्णो वीराणां महाकोलाहलसंकुलो रथारोहिणां रथारोहिभिरश्वारोहिणा-मश्वारोहिभिर्गजारोहिणां गजारोहिभिः पदातीनां पदातिभिश्च सह प्रासतोमरखड्गभुशुण्डीबाणयष्टिकादिभिः शस्त्रैर्महान् समरः सम्बभूव। पृथ्वीराजेन प्रताडितो मुहम्मदगोरी गजनीदेशं पलायितवान्। एवं सप्तदशवारं युद्धं बभूव, किन्तु महमूदस्य विजयो नाभूत्।

मुक्तामणे! पृथ्वीराजजयचन्द्रयोर्महती शत्रुतासीदिति तु उक्तपूर्वम्। अधुना यथा जयचन्द्रसाहाय्येन मुहम्मदेन पृथ्वीराजो घातितस्तच्छृणु।

एकदा कन्नौजाधिपतेर्जयचन्द्रस्य संयोगितानाम्न्याः कन्यायाः स्वयंवरो बभूव। स पृथ्वीराजसविधे निमन्त्रणं नाप्रेषयत्। सोऽवमन्तुं तं सुवीरं न निमन्त्रितवान्, प्रत्युत पृथ्वीराजस्य प्रतिमां स्वकीयमहाद्वारे द्वारपालपदे संस्थापितवान्। किन्तु संयोगिता पृथ्वीराजस्य वीरत्वं साहसं धैर्यञ्च श्रुत्वा तस्मिन्ननुरक्तासीत्। पृथ्वीराजोऽपि संयोगितायाः प्रेमवार्तां कर्णाकर्णि श्रुतवानासीत्। स्वयंवरदिवसे पृथ्वीराजः शीघ्र-गामिनमश्वमारुह्य समाययौ कान्यकुब्जं जयचन्द्रनगरम्। संयोगिता समागतेषु राजसु पतिम्निर्वाचयितुं हस्ते महासुगन्धिं पुष्पमालामादाय स्वभवनान्निःससार। तत्र समागतान् सर्वानेव नृपान् विहाय सा द्वारपालस्थानविराजितपृथ्वीराजप्रतिमायामेव मालां निःशङ्कं समर्पितवती। प्रच्छन्नः पृथ्वीराजोऽपि शीघ्रमेव समादाय संयोगितामाहूय दिल्ली-माजगाम। पृथ्वीराजस्यैतेन कर्मणा जयचन्द्रचेतसि महान् क्रोधाग्निः प्रज्वलितः। किन्तु तेन सह योद्धुं तस्य साहसं नासीत्, अतः स किङ्कर्तव्यविमूढोऽभवत्। तत आरभ्य सर्वदैव जयचन्द्रस्य चेतसि पृथ्वीराज-पराजयविचारो वर्धमानो बभूव।

पृथ्वीराजश्च संयोगितया सह कृतविवाहः दिल्लीनगर्यां सर्वसौख्य-सम्पन्ने स्वीयराजमन्दिरे तल्लावण्यलुब्धो भोगान् भुञ्जानस्तस्थौ।

अथ अवसरं प्रतीक्षमाणो मुहम्मदगोरी महता सैन्येन सह गजनीतो

भारत पुन पृथ्वीराज विजेतु प्रत्यागाम । वार्तामिमां श्रुत्वा जयचन्द्रो मुहम्मदगोरीसमीपमागत्य तेन सह सन्धि चक्रे । पृथ्वीराजनिनयानन्तरं त्वामेव दिल्लीश्वरं विधास्यामीति गोरी प्रतिज्ञातवान्। तेन च हृष्टात्फुल्लमानसो जयचन्द्रो विदेशवासिनो भारतपराधीनकारकस्य मुहम्मदगोरिण सर्वत साहाय्य चकार । जयचन्द्रप्रस्तावितेन मार्गेणागतो पृथ्वीराजेन सह युद्ध कृतवान् । समरागणे बहूना गजा समूहमग्रे कृत्वैव युद्धघोषणा चकार गोरी । पृथ्वीराजस्तु मुहम्मदीयसैनिकानामग्रे गजा समूहमवलोक्य शस्त्रप्रहाराद्विरतो बभूव । ससैनिको जयचन्द्र-साहाय्यो मुहम्मदगोरी निखिलान् सैनिकान् विजित्य जीवन्तमेव पृथ्वीराज गृहीतवान् ।

पृथ्वीराजो गोरिण प्रत्युवाच—सप्तदशवार विजित्यापि त्वामह मुक्तवान्, पर त्व मामकवार तु विमुञ्च । किन्तु दुरात्मा मुहम्मदः प्रत्युवाच—त्व बालिशमति, अत एव सप्तदशवारं पराजित स्व हस्तगत रिपु मुक्तवान्, नाह तथेति ।

मुहम्मद पृथ्वीराज गजनीं निनाय, पुनश्च समाक्रमण कृत्वा मुहम्मदीयकाष्ठपुत्तलिकाभूत देशद्रोहिण जयचन्द्रमपि घातितवान् । हन्त, मानवमृगेन्द्र पृथ्वीराज गजनीं नीत्वा मुहम्मद स्वकीये कारागारे निक्षिप्तवान्। यो हि दिल्लीश्वर स्वराजधान्या देववद्विहरन्ना सीत्, स एव कालक्रमेण गजनीकारागारे दिवसान् निनाय । एकस्या रात्रौ मुहम्मदगोरिनरपिशाचेनादिष्टै कतिपयै क्रूरैर्मुहम्मदीयै समागत्य कारागार तप्तसूच्या पृथ्वीराजस्य नेत्रे निष्काश्य तत्र तिक्तचूर्णं परिपूरितम् । जलपानार्थञ्च तस्य सविधे मृन्मैका वधना (जलपात्रम्) आसीत्, वस्त्रमपि तस्य जीर्णशीर्णमवाभूत् ।

अथ चन्दवरदाईनामा भट्टवंशीय पृथ्वीराजमित्र कवि पृथ्वीराजस्य पराजय गजनीकारागारे [illegible] समय जीवनञ्च श्रुत्वा दु खदग्ध हृदय केनापि प्रकारेण गजनीं समवाप, स्वकाव्यकौशलेन मुहम्मद

प्रमाय पृथ्वीराजसमीपं प्राप्तवांश्च। पृथ्वीराजेन सह मन्त्रणां कृत्वा चन्दवरदाईकविः शब्दवेधिबाणकौशलदर्शनार्थं मुहम्मदं प्रोत्साहितवान्।

एकस्मिन् दिवसे सुसज्जितायां सभायामुच्चासने मुहम्मदे समुपविष्टे तदन्तिके एकत्र सभासदोऽपरत्र दर्शका अन्यत्र चन्दवरदाईकविश्च स्थितः। पश्चात्समानीतोऽन्धो बाणशरासनसम्पन्नः पृथ्वीराजः बैधिन्मुहम्मदीये.। पृथ्वीराजेन बहुशः स्वबाणकौशले प्रदर्शिते सर्व एव जनाः परमं मोदमापुः। सुलतानोऽपि पृथ्वीराजबाणकौशलं प्रशंसितवान्।

अथ चन्दवरदाईकविः सङ्केतेन पृथ्वीराजमुक्तवान् यद् सुलतान इतस्मानदूरवर्तिस्थाने समुपविष्ट वर्तते। श्रुत्वैव पृथ्वीराजः शब्दवेधिबाणेनैकेन तं जघान सुलतानम्। पश्चात् कविभूपावपि परस्परं प्रहारं कृत्वा पञ्चत्वमापन्नौ। पृथ्वीराजस्य पराजयानन्तरं चौहानक्षत्रिया रणथम्भौरे जयचन्द्रवंशजाश्च योधपुरे स्वं स्वं राज्यं स्थापितवन्तः।

## राजपूतकालीना सभ्यता

पुनः सुधामयिर्देवशं पप्रच्छ—भगवन्! राजपूताः के सन्ति, कथमेतेषामुत्पत्तिः समभूत् इति?

देवशः प्रोवाच—इमे सर्वे एव राजपूता वैवस्वतमनोर्वंशजा एव। राजपुत्रशब्दस्यापभ्रंशो राजपूतो समूत्। पूर्वमेव मया वर्णितं यदेते सूर्य-चन्द्रवंशजाः। कतिपये चौहान परमार-सोलङ्की-प्रतीहार क्षत्रियाः स्वोत्पत्तिं ब्रह्मणोऽग्निकुण्डाद्वदन्ति। भारतीयेतिहासे राजपूतानां वीरता प्रशंसनीया। एते खलु प्राचीनायाः संस्कृतेः प्राचीनस्य च वैदिकसनातनधर्मस्य संरक्षका युद्धेभ्योऽपराङ्मुखा जातीयसम्मानप्रतिष्ठारक्षार्थं प्राणानपि प्रदातुं तत्पराः स्वकीयकथितवाक्यात्पदमेकमपि नैव विचलन्तः युद्धसमयेऽपि विश्वासघातकर्मणां दयाभावसम्पन्नाः

सदैव सत्यभाषिणो युद्धेष्वपि स्त्रीषु बालकेषु च प्रहारमकुर्वाणाः स्त्रीणां सदा समादरकर्तारश्चाभूवन्। कतिपये राजपूता इदानीमप्येतादृशाः सन्ति। एतेषां स्त्रियोऽपि युद्धे वीरतायाञ्च पुरुषेभ्योऽन्यूना आसन्। शत्रुभ्योऽरक्षणं बुद्ध्वा ताः स्वपातिव्रतधर्मरक्षार्थं स्वेच्छयाग्निप्रवेशमपि अकुर्वन्।

गुणा इव दोषा अपि राजपूतेषु बहव आसन्। युद्धे पूर्णा रुचिः कीर्तिलाभस्य प्रबलेच्छा, ईर्ष्या द्वेषः सहयोगाभावश्च तेषां महान्तो दोषाः। सत्स्वप्येतेषु दोषेषु तेषां कीर्त्या भारतमुखमिदानीमप्युज्ज्वलं वर्तते। तेषां युद्धगाथा कीर्तिगीतिश्च सर्वत्र गीयते जनैरिदानीमपि।

## सेनवंश वर्णनम्

दैवज्ञः प्राह-मुक्तामणे! उत्तरीयभारतस्य राजवृत्तान्तं श्रुतम्। इदानीं वङ्गदेशीयराजवृत्तान्तं कथयामि, सावधानतया शृणु। वङ्गे समुत्पन्नायामराजकतायां जना गोपालनामकमेकं भूपतिं निर्वाचितवन्तः। ततः परं तत्सूनो धर्मपालो राज्यसिंहासनमधिरूढः। धर्मपालः कान्यकुब्जराजानमिन्द्रायुधं पराजित्य चक्रायुधं राजानं स्वाधीनं चकार। पराजित इन्द्रायुधो मरुस्थलीयगुर्जरप्रतीहारभूपात् नागभट्टद्वितीयात्साहाय्यं याचितवान्। नागभट्टो मरुस्थल-पञ्जाबवासिना जादानामकं संघं संस्थापितवान्। तेन च धर्मपालं कान्यकुब्जभूपं चक्रायुधं पराजितवान्, उत्तरीयं भारतञ्च स्वाधिकृतवान्।

धर्मपालपुत्रो महीपालः कलायाः साहित्यस्य आश्रयदाता नालन्दामन्दिरस्य जीर्णोद्धारकर्ता च बभूव। स स्वीयं साम्राज्यं वाराणसीपर्यन्तं विस्तीर्णमकरोत्। किन्तु निरन्तरमेव समरे संलग्न आसीत्। तेन साम्राज्यशक्तिः क्षीणा जाता। महीपालद्वितीयस्य कनिष्ठो भ्राता रामपाल एकस्य वंशस्य गौरवोद्धारकर्मणि संलग्नोऽभवत्, किन्तु तदुत्तराधिकारिणः शक्तिहीना बभूवुः।

विजयसेनस्तान् बङ्गान्निष्कासयामास। पालवंशीया राजानो यद्यपि बौद्धधर्मानुयायिन आसन्, तथाप्यन्यधर्मावलम्बिभिः सह तेषां कोऽपि विरोधो नासीत्। यः खलु पालसाम्राज्यं विध्वंसितवान्, असौ विजयसेन एव सेन-साम्राज्यस्य संस्थापकः। सेनवंशीया व्यवसाय कुर्वाणा दक्षिणभारताद्बङ्गं समाजग्मुः।

विजयसेनमृत्योः परं तत्पुत्रो वल्लालसेनो राज्यसिंहासनमलङ्कार। सेनवंशीयराजानो हिन्दव आसन्। तेषां समये ब्राह्मणधर्मस्य पुनरभ्युदयो बभूव। वल्लालसेनानन्तरं लक्ष्मणसेनो राज्याधिकारी जातः। स च परमोत्साहसम्पन्नः पराक्रमशाली च राजासीत्। स च मगध कान्यकुब्जञ्च विजित्य पालराज्यं समुद्धर्तुं पुनरपि चेष्टामकरोत्। कलायाः साहित्यस्य च अस्मिन् राज्ये समुन्नतिर्बभूव। गीतगोविन्दकारो जयदेवो धायीनामा कविश्चैतस्यैव राज्ये बभूवतुः। पश्चान्मुहम्मदीयानामाक्रमणेन सेनराज्यं विच्छिन्नम्।

चालुक्य-वंशवर्णनम्

दक्षिणभारतीये शातवाहनवंशे विनष्टे आभीरप्रभृतयो दक्षिणभारतमध्यभागस्य राजानो बभूवुः। तद्वंशीयः रुद्रसेनो द्वितीयचन्द्रगुप्तस्य कन्यया सह विवाहमकरोत्।

अथ पुलकेशिनः प्रथमस्याध्यक्षतायां चालुक्याम् परानितवन्तः। धातारी (वादामी)-नगरोपरि पुलकेशिन अधिकारो बभूव। पुलकेशिन उत्तराधिकारिणः स्वकीयं राज्यमतीव विस्तृतं चक्रुः। सम्पूर्णे बम्बई हैदराबादे च तेषामधिकारो जातः। एतस्मिन् वंशे पुलकेशिन् द्वितीयः शक्तिशाली राजा बभूव। स च गुर्जरदेशं मद्रदेशीय-तेलगूभाषाभाषिभागञ्च जितवान्। स हर्षवर्धनमपि पराजितवान्।

एतस्मिन् वंशेऽन्तिमो राजा कीर्तिवर्मा बभूव। त राष्ट्रकूटवंशेशो

दन्तिदुर्गः पराजितवान्। राष्ट्रकूटानां राज्यं दन्तिदुर्गस्याध्यक्षताया प्रादुर्बभूव, मान्यखेते राजधानी च सम्बभूव।

दन्तिदुर्गस्य पितृव्यः कृष्ण प्रथमो गिरेः प्रस्तरं भेदयित्वा एलोरा-गुफायां महान्तं विशालं कैलासमन्दिरं निर्मापितवान्। राजा ध्रुवः सैन्यपरिवृतः उत्तरभारतं प्रस्थितवान्, भीनमालस्य च प्रतीहारभूपान् जिगाय। एकोऽपरो राष्ट्रकूटवंशीयः कृष्णः तृतीयश्चोलराजान पराजितवान्।

पश्चिमीयचालुक्यवंशस्य संस्थापकस्तैल आसीत्। तदनन्तरं तत्पुत्रो राज्यसिंहासनमलञ्चकार। तत्र चोलराजो राजराजः पराजित-वान्। षष्ठो विक्रमादित्यश्चोलान् पराजित्य स्वापमानप्रतीकारं कृत-वान्। असौ विदुषां महानाश्रयदातासीत्। तत्सभायां बिल्हण-विश्वेश्वरनामानौ कवी आस्ताम्। तन्मृत्यौ परं वंशत्रयस्य समुत्पत्ति-र्बभूव—द्वारसमुद्रस्य होयसलवंशो देवगिरेर्यादववंशः वङ्कस्य काकतीय-वंशश्चेति।

द्वितीयचालुक्यवंशीयनृपस्य विज्जलस्य शासनकाले लिंगायतनाम-कस्य नूतनस्य धार्मिकसम्प्रदायस्य समुत्पत्तिर्बभूव। एतस्य सम्प्रदायस्य प्रवर्तको बसव आसीत्। लिंगायतसम्प्रदायावलम्बिनोऽद्यापि दक्षिणभारते प्रचुरसंख्याया वर्तन्ते। ते च शिवोपासनामेव कुर्वन्ति। भक्तेरन्ते भगवति विलयनमेव तेषां मुख्यः सिद्धान्तः। वर्णव्यवस्था श्राद्धादयश्च तेनैव मन्यन्ते स्म पूर्वम्, किन्त्वधुना एते ब्राह्मणधर्मीयान् बहून् सिद्धान्तान् सम्मानयन्ति।



# दक्षिणभारतीय-राज्यानि

देवगिरेर्यादवानां प्रसिद्धो राजा सिंहन आसीत्। तस्य राज्यं विन्ध्याचलादारभ्य कृष्णानदीपर्यन्तं बभूव। किन्तु तदीयं रामचन्द्रम् अल्लादीनखिलजीः पराजित्य तद्राज्यं स्वकीयसाम्राज्याधीनं चकार। रामचन्द्रमृत्योरनन्तरं तत्पुत्रः शंकरदेवो राज्याधिकारी भूत्वा दिल्लीश्वरस्य सविधे करप्रेषणमरौत्सीत्। किन्तु काफूरो देवगिरेरुपरि समाक्रमणं कृतवान् पराजितवांश्च तत्रस्थान् भूपान्। शंकरस्यौत्तराधिकारी हरपालदेवो विद्रोहमकरोत्। तत्र मुहम्मदीयाः पराजितवन्तः। दिल्ल्याः खिलजीसुलतानः कुतुबुद्दीनमुबारकस्तस्य चर्मोत्पाटनमकारयत्।

देवगिरेर्यादवा इव काकतीया अपि पश्चिमीयचालुक्यानामधीना आसन्। ते च तेलङ्गनाया राज्यमकुर्वन्, यस्मिन् निजामराज्यस्य पूर्वीयभागः सम्मिलित आसीत्। एतस्य वंशस्यान्तिमो भूपो गणपतिर्द्विषष्टिवर्षपर्यन्तं राज्यमकरोत्, पार्श्ववर्तिनो भूपान् युद्धे पराजितवांश्च। तस्य मृत्योरनन्तरं पुत्राभावात् तत्पुत्री रुद्रम्मा राज्याधिकारिणी बभूव। किन्तु दिल्लीस्थमुहम्मदीयानां दक्षिणभारते राज्यविस्तार-समये काकतीयानामुपरि समाक्रमणं जातम्। प्रतापरुद्रदेवराजानं मलिककाफूरः पराजित्य करदमकरोत्।

द्वारसमुद्रं स्वकीयराजधानीं विधाय होयसलवंशीया मैसूरे राज्यमकुर्वन्। एतस्य वंशस्यैकः प्रसिद्धो भूपो विट्टिगो वैष्णवधर्माचार्यस्य श्रीरामानुजाचार्यस्य शिष्य आसीत्। एतस्य वंशस्यान्तिमो राजा वीरबल्लालस्तृतीयः सन्निवर्तिमुहम्मदीयभूपैः सह जीवनपर्यन्तं युद्धं कृत्वाऽपि मुहम्मदीयमलिककाफूरेण पराजितो भूत्वाऽन्ते दिल्लीराज्यसुलतानस्याधीनतां स्वीचकार।

पूर्वीयगङ्गवंशस्याभ्युदयः कलिङ्गदेशे बभूव। एतस्य वंशस्य राजा अनन्तवर्मा चोडगङ्गो राज्यसिंहासनासीनो बभूव। स च कलिङ्ग-

नगरोपरि पूर्णाधिकारमकरोत्। तत्साम्राज्यं गङ्गातः आरभ्य गोदावरी-पर्यन्तं विस्तृतमासीत्। परमधार्मिकोऽसौ उत्कलप्रदेशं विजित्य स्व-राज्ये विलीनमकरोत्, पुर्यां प्रसिद्धं जगन्नाथमन्दिरं च निर्मितवान्। एतस्य वंशस्य राज्यं द्विशतवर्षाणि यावत्सस्थितमभूत्। पश्चात् तद्राज्यं विलीनम्।

पल्लवराज्यस्य संस्थापनं काञ्चीनगर्यामभूत्। एतस्य राज्यस्योन्नतिः सिंहविष्णुभूपस्य समये प्राचुर्येणाभूत्। तदनन्तरं महेन्द्रवर्मा राजाभूत्। एनं चालुक्यवंशीयः पुलकेशिन् द्वितीयः पराजितवान्। किन्तु महेन्द्र-वर्मणः उत्तराधिकारी राजा नरसिंहवर्मा चालुक्यवंशीयभूपान् वाप-मानं पराजितवान्। त्रयोदशवर्षाणि यावत्तेषां राजधानी तेन स्ववशे स्थापिता रक्षिता च। पल्लवानां न केवलं चालुक्यैः सह, किन्तु मैसूरस्य पश्चिमीयगंगवंशोद्भवैः पाण्ड्यराजवंशीयैश्चापि युद्धमभूत्, ये सुदूरस्यां दिशि वर्धमाना आसन्। पाण्ड्याश्चोलाश्च सहैव मिलित्वा पल्लवान् नितान्तं पराजितवन्तः।

चोलवंशीया अशोकस्य समयेऽपि पूर्णं प्रसिद्धा आसन्। यदा आदित्यचोलः पल्लवराज्यप्रदेशान् विजितवान्, तदा तेषां पूर्वापेक्षयाधिका प्रसिद्धिः सञ्जाता। 'राजराज' एतस्य वंशस्य महान् पराक्रमी राजा-ऽभूत्। स च सैनिकानां नाविकानाञ्च साहाय्येन लङ्का मैसूर कुर्ग-मुक्कलञ्च विजितवान्। तस्य पुत्रो महेन्द्रचोलप्रथमः पीगू मर्तवान निकोबारद्वीपसमूहं गंगापर्यन्तविस्तृतवंगसमुद्रतटवर्तिप्रदेशांश्च विजित्य एतदुपलक्ष्ये गंगकोंडस्योपाधिं विधृतवान्। स गंगकोंडपुरं नाम नगरञ्च विनिर्मितवान्। असौ केवलं विजयी भूप एव नासीत्, किन्तु शासनप्रबन्धेऽपि सुदक्षः उपचारिण्यालङ्कृतश्चासीत्। समीपवर्तिनां राज्ञां वैमनस्येन सामन्तानां विद्रोहेण मुहम्मदीयानां वर्धमानशक्त्या च चोलवंशस्यान्तो बभूव।

सुदूरदक्षिणभारते सुप्रसिद्धं पाण्ड्यराज्यमासीत्। एतस्मिन् राज्ये

मदुरातिन्नेवेल्लीविराङ्कुरराज्यानां कतिपये भागाः सम्मिलिता आसन्। राजराजश्चोलः पाण्ड्यान् पराजितवान्। विवशाः पाण्ड्या विजयिनश्चोलस्याधीनतां स्वीकृतवन्तः, प्रायेण द्विशतवर्षपर्यन्तं तदधीनाश्च आसन्। किन्तु सुन्दरपाण्ड्यनामैको महाप्रतापशाली भूपस्तस्य वंशस्य पुनरुद्धारकारको बभूव। तस्य राज्यविस्तारो नीलौरादारभ्य कन्याकुमारीपर्यन्तमासीत्। पाण्ड्यराज्यस्य प्रजानां पोतेभ्यो महाँल्लाभ आसीत्। अरबनिवासिन एतस्मिन् राज्ये समागत्य घोटकव्यापारमपि कुर्वन्त आसन्। अन्ते एतस्य राज्यवंशस्य भ्रातृद्वयमध्ये राज्यसिंहासनार्थं कलहे समुत्पन्ने मलिककाफूरः पाण्ड्यराज्ये समाक्रमणं कृत्वा तदन्तं चकार, तद्राज्यञ्च दिल्लीश्वरस्य सुलतानस्याधीनमभूत्।

चेरराज्यमपि सुदूरदक्षिणभारत आसीत्। स्वराज्यसंस्थापनसमये केरलपुत्रा इम आसन्। पाण्ड्या इव चेरवंशीया अपि महाशक्तिशालिन आसन्। किन्तु मलिककाफूरेण दक्षिणभारते यदा आक्रमणं कृतं तदा तद्विरुद्धो महाजवः समभवत्, यस्मिन् चेरवंशीयराजा रविवर्माप्यासीत्। अन्ते चेरराज्यमपि सुलतानाधीनमभूत्।

## भारतीया सभ्यता

वैद्य कथयति—मुसाफिरे! बौद्धजैनधर्मौ भारतीयवर्णव्यवस्थाया विरोधं कृतवन्तौ। ह्वेनसाङ्गेन चतसृणां वर्णानां समुल्लेखः कृतोऽस्ति। तदा ब्राह्मणा एव सर्वश्रेष्ठा आसन्, ये स्वगोत्रेण वासस्थानेन च परिचिता जायन्ते स्म। शङ्कराचार्यसमये पञ्चगौडाः पञ्चद्राविडाश्च ब्राह्मणा बभूवुः। पश्चादुत्तरभारते दक्षिणभारते च स्वस्वास्थाननाम्ना स्ववेदशाखानाम्ना चान्येऽपि बहुविधा ब्राह्मणा बभूवुः। समाजे क्षत्रियाणामप्युच्चं स्थानमासीत्। धारानरेशभोजवत् शाकम्भरीनरेशविग्रहराजचतुर्थवत् वा कतिपये क्षत्रिया विद्वांसः संग्रामनिपुणाश्चासन्। पूर्वं सूर्यवंशीयचन्द्रवंशीयभेदेन द्वावेव क्षत्रियावास्ताम्। किन्तु पश्चात्

तेषां बहव उपभेदा बभूवुः। एवमेव वैश्यानां शूद्राणामप्युपभेदाः समभूवन्। अन्ये चान्त्यजाश्चतुर्वर्णेभ्यः पृथग्भूता आसन्।

राजपूतराज्यसमये कलायाः साहित्यस्य च महत्युन्नतिरभूत्। राजपूताः स्वयमेव विद्याव्यसनिनो विदुषामाश्रयप्रदातारश्चासन्। राजपूतराज्यसमये काव्यगीतनाटकराजनीतिगणितायुर्वेदज्यौतिषादि-विषयाणां बहवो ग्रन्था विरचिता बभूवुः। एतेषु जयदेवकृतः गीतगोविन्दो गीतिग्रन्थः भवभूतिकृतानि महावीरचरितोत्तररामचरितमालतीमाधव-नामकानि नाटकानि, राजशेखरकृता कर्पूरमञ्जरीनाटिका हितोपदेश-राजतरङ्गिणीविक्रमाङ्कदेवचरितभोजप्रबन्धप्रभृतयो ग्रन्था अतीव प्रसिद्धा वर्तन्ते।

---

# भारते मुहम्मदीयमाक्रमणम्

अरबदेशवासिना प्रयत्नः सिन्धे निष्फलोऽभूत्। अत एव मुहम्मदीयप्रभुत्वविस्तारः चिरकालपर्यन्तमवरुद्धः। किन्तु पुनरपि तुर्का भारतोपरि स्वदृष्टिं कृतवन्तः। एतस्मिन् समये खलीफाशक्तिः क्षीणा अभवत्, बहवो राजवंशाश्च संस्थापिताः। एतेषु राजवंशेषु सामानीवंशोऽतिप्रसिद्धिमवाप्य पुनः क्षीणो जातः। सामानीवंशस्य तुर्कदासाः बलवन्तो बभूवुः। अलप्तगीननामकस्तुर्को गजनीं विजित्य स्वतन्त्रराज्यं संस्थापितवान्। तन्मृत्योः परं तत्सुतो गजनीदेशस्य भूपो बभूव। किन्त्वसौ अतीव शक्तिहीन आसीत्, अत एव तद्राज्यं तत्सैनिकानां हस्ते गतम्। तेषु सेनापतेरस्य नाम सुबुक्तगीन आसीत्। स एव गजनीसिंहासनमधिरूढः। स खलु स्वराज्यविस्तारमैच्छत्, भारतोपरि समाक्रमणञ्च चकार। मूर्तिपूजकानां विनाशो मुहम्मदीयधर्मप्रचारश्चैतद्द्वयमेव तस्य मुख्यं कार्यमासीत्।

अथ हिन्दूराजा जयपालो युद्धेन तं दमयितुं गजनीदेशे आक्रमणमकरोत्। किन्तु अन्ततः स सन्ध्यर्थमेव विवशोऽभूत्, बहूनि द्रव्याणि दुर्गाणि च सीमान्तस्य तस्मै प्रदत्तवान्। पुनः जयपालेन सन्धिविच्छेदे कृते सुबुक्तगीनो महत्या सेनया भारतोपरि समाक्रमणं चकार। जयपालश्चान्यैरपि भूपालैः संघं निधाय तेन सह महद्युद्धमकरोत्, परमन्ते पराजितः। अनन्तरं सुबुक्तगीनः खुरासानप्रदेशं जितवान्, स्वकीयपुत्रं महमूदं तत्रत्यप्रान्तपालं चाकरोत्। वर्षद्वयानन्तरं स्वोत्तराधिकारिणे विशालं साम्राज्यं दत्त्वाऽसौ पञ्चत्वमगात्।

सुबुक्तगीने उपरते इस्माईलो महमूदश्च राजसिंहासनार्थं परस्परं कलहं चक्रतुः। किन्तु अन्ते इस्माईलः पराजितः महमूद एव राजसिंहासनाधिरूढो बभूव।

भ्रातृजयी महमूदो वर्षाभ्यन्तर एव खोरासानं विजित्य स्वराज्य-

मकरोत्। एतद्विजयवृत्तं श्रुत्वा खलीफाऽस्तस्मै श्रमीनुद्दौलेत्युपाधिं प्रदत्तवान्। प्राप्ताधिकारेण प्रमत्तेन महमूदेन भारते प्रतिवर्षमेवाक्रमणं प्रारब्धम्। एवं तेन सप्तदशवारमाक्रमणं कृतम्। प्रथमाक्रमणसमय एव सीमान्तप्रदेशीयानेकमण्डलानि विजित्य तेन तेषु स्वकीयाः प्रबन्धका नियुक्ताः। द्वितीयाक्रमणं जयपालराज्ये कृत्वा सम्पूर्णपञ्जावप्रान्ताधिपतिं जयपालं वशीचकार। जयपालपुत्र आनन्दपालो महमूदस्योन्नतिमत्याचा- रञ्च विलोक्य व्यथितमनास्तं विजेतुं सघमेकं संस्थापितवान्। तस्मिन् सघे भारतस्य प्रायः सर्वे जनास्तं साहाय्यं प्रदत्तवन्तः। स्त्रियोऽपि स्वाभू- षणानि विक्रीय धनानि प्रेषयन्ति स्म। पुनरपि सम्प्रवृत्ते युद्धे बहवो मुहम्मदीया हताः, किन्तु विजयो महमूदस्यैवाभूत्। ततो ज्वालामुखी- मन्दिरं भङ्क्त्वाऽतुलां धनराशिमादाय महमूदो गजनीं परावृत्तः।

पुनः कान्यकुब्जं विजितवान्। मथुरामागत्य मन्दिराणि विनाश्य पञ्चाशत्सहस्रस्वर्णमुद्रा अन्यामप्यतुलां सम्पत्तिमादाय गजनीं गतः। एतदाक्रमणावसरे बुलन्दशहरमप्यरौत्सीत् महमूदः। तत्रस्थो राजा चान्ते तदधीनतां स्वीचकार। कालिञ्जरचन्देलस्य राजा गण्डस्तद्विरुद्धं युद्धं कर्तुं स्वपुत्रं प्रेषितवान्। युद्धे महमूदपक्षसमर्थ- कस्य राज्यपालस्य मृत्युरभूत्, तेनासन्तुष्टो महमूदः पुनरपि भारत- माक्रान्तवान्। चन्देलराजा तदागमनं श्रुत्वा प्राणरक्षार्थं पलायितः। द्वितीयाक्रमणे पुनः चन्देलो महमूदेन समं सन्धिं कर्तुं विवशो जातः।

अन्तिमाक्रमणे महमूदश्चन्द्रस्य तपसा प्रसन्नं सोमनाथमन्दिरं दक्षिणसमुद्रतीरस्थं विलोक्य चकितो बभूव। तत्रैकसहस्रसंख्याका ब्राह्मणा शिवस्य पूजायां संलग्नाः सहस्रघटैस्तस्याभिषेकं प्रतिदिनमेव कुर्वन्त आसन्। अतुलवैभवसम्पन्नं मन्दिरमिदं काठियावाडराजभि- र्यावच्छक्ति रक्षितम्, अपूर्वोत्साहेन महमूदेन समं युद्धमपि कृतम्। परमन्ते ते विफलता गताः। पराजितेषु राजसु महमूदो क्षत्रियान् ब्राह्मणांश्च घातितवान्, सोमनाथमन्दिरस्य विध्वंसमकरोत्, मूर्तिं भङ्क्त्वा अन्ते मन्दिरस्थां सर्वामेव सम्पत्तिमादाय स गजनीं प्रस्थितः।

महमूदस्य सर्वान्तिममाक्रमणं मुलतानसमीपवर्तिषु जाटेषु बभूव। सोमनाथमन्दिरं विध्वस्य यदा महमूदो गजनीं गन्तुमासीत्, तदा जाटास्तमवरुद्ध्य युद्धं कृतवन्तः, किन्तु अन्ते तेषां पराजय एवाभूत्। तत्प्रतीकारार्थं स पुनः समागत्य जाटान् पूर्णतया पराजित्य गजनीं जगाम। ततो ज्वराक्रान्तः क्षयरोगाक्रान्तश्च महमूद उनषष्टिवर्षदेशीय एव पञ्चत्वमगात्।

भारतस्यातुलं वैभवमेव महमूदं तत्राक्रमणानि विधातुं विवशमकरोत्। तदा भारतमनेकेषु राज्येषु विभक्तमासीत्। तेन च तत् शक्तिसम्पन्नमपि नासीत्। एवमेव पारस्परिककलहो राजपूतानां देशस्नेहाभावोऽनुशासनहीनता च एवमादीनि देशविनाशस्य कारणान्यभूवन्। महमूदसैनिकाः पुनर्धार्मिकशक्तिसम्पन्नाः धर्मार्थं युद्धे प्राणानपि प्रदातुं समर्था विशेषतो हिन्दुभिः सम युद्धे प्रभूतशक्तिसम्पन्ना आसन्। एतान्येव तेषां विजये कारणान्यभूवन्। महमूदो द्रव्यं सर्वाधिकं मन्यते स्म। असौ महान्तमेकं सर्वविधरत्नसम्पन्नं कोषं परित्यज्य ममार। स मुहम्मदीयधर्मस्य प्रचाराभिलाषी चासीत्।

महमूदो यान् देशान्विजितवान्, तेषु स समुचितां परिपूर्णाञ्च शासनव्यवस्थां नैव कृतवान्। अत एव तन्मरणानन्तरमेव तस्य साम्राज्यस्य मूलं प्रकम्पितम्। महमूदस्योत्तराधिकारिणः शक्तिहीना आसन्। नैकोऽप्येतादृश आसीत्, साम्राज्यं रक्षितुं क्षमः। महमूदानन्तरं मसूदमुत्तराधिकारिणं सालजूकतुर्काः सम्मानं पराजितवन्तः। लाहौरे पुनः शक्तिसम्पन्नानपि हिन्दून् गजनीसैनिकाः पराजितवन्तः। गजनी च तुर्कानामधिकारे बभूव। किन्तु गजनीमुलतानानामन्तिमं पतनं सूरापगानैरेव बभूव। महमूदस्य समये सूरापगानास्तदधीना आसन्। तन्मृत्योः परं ते स्वाधीना भवितुमचेष्टन्त। गजनीदेशस्य सुलतानो बहरामः सूरापगानानामेकं प्रधानं घातितवान्। तस्यैव भ्राता, अलादीनो बहरामं युद्धे पराजितवान्।

# भारते मुहम्मदीय-साम्राज्यम्

गजनीशक्तिः शीघ्रमेव क्षीणता गता। तत्र गोरवंशस्य प्रभुत्वं जातम्। अल्लाद्दीनस्य भ्रातृपुत्रो गयासुद्दीनो गजनीं पूर्णतया स्वाधिकारेऽकरोत्, स स्वभ्रातुर्मुईजुद्दीनस्याधिकारगताञ्च कृतवान्। असावेव मुईजुद्दीनो मुहम्मदगोरीनाम्ना भारतेतिहासे विख्यातो वर्तते। अयमेव मुहम्मदगोरी दिल्लीश्वरं मानवमृगेन्द्रं पृथ्वीराजं सापमानं घातितवानिति पूर्वमेव वर्णितम्। मुहम्मदगोरी एतद्विजयानन्तरं स्वकीयदासं कुतुबुद्दीनैबकं दिल्लीसाम्राज्याधिपतिं विधाय गजनीं जगाम।

कुतुबुद्दीनः स्वस्वामितः कथमपि न्यूनो नासीत्। द्विमासाभ्यन्तरं एवासौ हांसीं मेरठमजमेरञ्च निर्जितवान्। एवं कुतुबुद्दीनैबकः उत्तर-पश्चिमभारते विजयं कृतवान्, अन्यत्र च गोरिसैन्योऽपरः सेनापतिरिख्तियारुद्दीनो वङ्गं विहारञ्च विजेतुमग्रेसरो बभूव। स च विहारं जित्वा भारतस्य ज्ञाननिधिं नालन्दाविश्वविद्यालयीयमहापुस्तकालयं ददाह। कथ्यते जनैरेव यद् नालन्दापुस्तकालये प्रक्षिप्तो वह्निर्नवमासपर्यन्तं ज्वलन् पुस्तकानि भस्मसाच्चकार। प्रायेण बौद्धानां विहारा अपि विध्वस्तास्तेन। विहारविजयानन्तरमसौ वङ्गमाक्रम्य वङ्गदेशाधिपतिं नवद्वीपनिवासिनं लक्ष्मणसेनं प्रपलाय्य वङ्गेऽपि स्वाधिकारं चकार, लखनौतीञ्च वङ्गराजधानीमकरोत्।

अथ कुतुबुद्दीनैबके कालिञ्जरविजयार्थं गते भारतोत्तरभागे पुनरशान्तिर्जाता। युद्धे कालिञ्जरराजा चन्देलः पराजितो भूत्वा करं दातुं स्वीचकार। किन्तु तस्मिन् उपरते तन्मन्त्री करं निरोधितवान्। तं दण्डयितुमैबकः कालिञ्जरदुर्गमाक्रान्तवान्। दुर्गं विजित्य अपारधन-राशिञ्च स्वायत्तीकृत्य स महोबा क्षणेनाल्पायासेन जिगाय। मुहम्मदगोरी खोखरविद्रोहं शान्तं विधाय यदा गजनीं परावृत्तः, तदैवैकेन मुला-हिदासम्प्रदायावलम्बिना स हतः।

पराजितो भूत्वा पारस्देशं पलायितः, तत्र चानेकः शत्रुर्निहतवान्। तदनन्तर मुगलाः स्वदेशं परावृत्ताः।

यद्य रणथम्भोरं मालवामुज्जयिनीं च विजित्यापि इल्तुतमीशो मेवाड़राज्यविजयेऽसफल एवाभूत्। तद्राज्य हिमालयादारभ्य नर्मदापर्यन्तं वगादारभ्य सिन्धुनदीपर्यन्तञ्च विस्तृतमासीत्।

इल्तुतमीशस्य सर्वे एव पुत्रा अयोग्या आसन्। अत एवासौ स्वपुत्रीं रजियामेव राज्याधिकारिणीं कृतवान्। मृते खलु इल्तुतमीशे रजियैव राज्यसिंहासनमलङ्कृतवती। धनिकाना सभासदा कृते खल्वेकस्याः स्त्रिया अधीनत्वे कार्यकरणमसम्मानजनकमभूदिति कृत्वा ते रुकनुद्दीन मिल्तुतमीशपुत्रं राज्यसिंहासनासीनञ्चक्रुः। पुनस्तं दुश्चरित्र विलासिनञ्च दृष्ट्वा रजियामेव राज्यसिंहासनाधिकारिणीमकुर्वन्।

रजिया हि अतुलसाहससम्पन्ना बुद्धिमती राज्यसञ्चालनदक्षा नार्यासीत्। राज्यस्योन्नयनमेव सा स्वीयं परमं कर्तव्यं मनुते स्म। सा नारीजनोचित वेषं परित्यज्य पुरुषवेषं विधायैव सभासदां समक्षं कार्यमकरोत्। याकूतनामकेन केनापि दासेन सह तस्या मैत्री सञ्जाता। सा तस्मिन् विशेषां प्रीतिं चकार। किन्तु सर्वे एव सभासदः एतस्य कार्यस्य निन्दां विरोधञ्च कृतवन्तः। तदा सा स्वशक्तिसंवर्धनार्थं केनापि अल्तूनियानामकेन मुहम्मदीयेन सह विवाहं कृतवती। इत्थेऽप्येतद्विवाहे कोऽपि लाभो नाभूत्। प्रत्युत सर्वे एव सभासदो रजिया तत्पतिञ्च कारागारे निरुध्य घातितवन्तः।

पश्चादिल्तुतमीशपुत्रो नासीरुद्दीनो राज्यसिंहासनाधिरूढो जातः। किन्त्वसौ महानयोग्य आसीत्। पारदभक्षणं कृत्वा स जलपूर्णतटाके शयानः सर्वदैव व्यभिचारकर्मणि संलग्नश्चाभूत्। नासीरुद्दीनराज्यकाले सर्वे एव भारतीयक्षत्रिया अन्येऽपि धनिकाः प्रजाजनाश्च नितान्तं क्रुद्धा आसन्। तथापि नासीरुद्दीन बलबननामकस्य सुयोग्यस्य मन्त्रिणः कौशलेन राज्यकार्यं सुव्यवस्थितं चकार। पुनरपुनस्व

नासीरुद्दीनस्य मृत्योः परं समयं समीक्ष्य बलवन एव राज्याधिकारी सम्बभूव।

बलवनस्य शासनमतीव कठोरमासीत्। हिन्दुषु स महान्तमत्याचारमकरोत्। वनप्रदेशं प्रायेण निर्वृक्षं कारयित्वा चोराणामुपद्रविणाञ्च निर्मूलमुन्मूलनं चकार। दोआवनामकस्थाने स्वयमेव गत्वा दुर्गं निर्माय तेन कटहरमण्डले सर्वेऽतावन्तो राजद्रोहिणो घातिताः येषां दुर्गन्धेन गङ्गानदीपर्यन्तं वायुर्दूषितोऽभवत्। बलवनः स्वकुमारं मुहम्मदं सीमान्तप्रदेशे प्रेषितवान्। तत्र च प्राचीनदुर्गाणि भग्नीकृत्य स नूतनानि दुर्गाणि निर्मितवान्, सैनिकांश्च संस्थापितवान्।

बङ्गस्य तुमरिलखानेन विद्रोहः कृतः, तच्छान्त्यर्थं स्वयमेव बलवनो महत्या सेनया जगाम। बलवनं समागतं श्रुत्वा तुमरिलः पलायाञ्चक्रे, किन्तु राजसैनिकास्तं प्रगृह्य घातितवन्तः। तस्य सार्थाना लक्षनौत्यापणे बलवनस्तथा निर्दयतापूर्णं वधं कृतवान् यथा दर्शकाः श्रोतारश्च मूर्च्छिता सम्बभूवुः। पुनः स्वपुत्रं बुगराखानं बङ्गप्रान्तपं विधाय दिल्लीं परावृत्तो बलवनः।

यद्यपि बलवनो निरङ्कुशशासकः श्रूयते, तथापि स्वसम्बन्धिभिर्मित्रैश्च असौ महान्तं स्नेहं कुर्वन्नासीत्। यदा मुगलैः सह युद्धं कुर्वन्तस्य प्रियपुत्रो मुहम्मदो मृतस्तदा महाशोकाभिभूतो बलवनो वर्षाभ्यन्तर एव मरणमापेदे।

ततः परं तत्पुत्रो बुगराखानो राज्यसिंहासनाधिरूढो बभूव। किन्तु महानकर्मण्योऽसौ राजकीयकार्यं विहाय वङ्गदेशे विलासमयं जीवनं यापयन्नासीत्। राजमन्त्रिणश्च तत्पुत्रं कैकुबादमून्विंशतिवर्षदेशीयं राजसिंहासनासीनं चक्रुः। परमसौ पितुरप्यधिको विलासप्रियो बभूव। एकदा तत्पिता तं समुपदेष्टुं वङ्गाद्दिल्लीनगर्यामागतः, किन्तु बहुशः प्रबोधितेऽपि किमपि फलं नैव सञ्जातम्। पश्चाद्राज्याधिकारिणो द्विधा विभक्ताः—एकः खिलजीवर्गीयः, अपरस्तुर्कवर्गीयः। उभावपि

स्व-स्वप्रभुत्वसंस्थापनार्थं परस्परं विवादं चक्रुः। विलासितामयजीवन-यापनात् कैकुबादो रक्तरोगेण पीडितो भूत्वा ममार।

खिलजीसंघस्य नेता जलालुद्दीनखिलजीः तुर्कसंघं विजित्य स्वयमेव दिल्लीनगर्याः सुलतानो जातः। बलबनस्यैकमात्रोत्तराधिकारी सामन्तो भूत्वा सैन्यजीवनं निनाय। राज्यप्राप्तिसमये खिलजीः सप्ततिवर्षदेशीय आसीत्। वृद्धत्वादस्य राज्ये किमपि परिवर्तनं नाभूत्। तथापि नूनं मुगलवंशाक्रमणकारिणस्तेन पराजिताः।

जलालुद्दीनस्य भ्रातृजो जामाता च अल्लाउद्दीनखिलजीः परमोत्साही क्रूरहृदयश्चासीत्। एकदासौ जलालुद्दीनं मालवविजयाय गच्छेत्युक्त्वा स्वयं देवगिरिनिवासिनं हिन्दुभूपं रामचन्द्रमाक्रान्तवान्। विजित्य च रामचन्द्रं बहुसुवर्णरजतादिसम्पन्नो गृहमागच्छन् अल्लाउद्दीनः स्वागतार्थं मार्गे समागतं स्वपितृव्यं जलालुद्दीनं निहत्य स्वयमेव दिल्लीश्वरो बभूव। अल्लाउद्दीनो दिल्लीसम्राडभूत्, किन्तु तस्य राज्यस्थितिः शोभना न बभूव।

जलालुद्दीनपुत्रसमर्थका बहवो राज्यकर्मचारिणो रुकनुद्दीननामानं जलालुद्दीनसुतं राज्यसिंहासनाधिरूढं कृत्वा अल्लाउद्दीनस्य दिल्ली-प्रवेशमवरोद्धुं चेष्टितवन्तः, किन्तु साफल्यन्नैव प्रापुः। रुकनुद्दीनः पलाय्य मुलतानं गतः। पुनः दिल्लीप्रवेशं सोत्साहं कृतवानल्लाउद्दीनः।

दिल्ल्यां स्वस्थितिं सुव्यवस्थितां कृत्वाल्लाउद्दीनः स्वसेनापतिद्वय-मुलुगखान नुसरतखानश्च गुर्जरं बघेलखण्डं कर्णञ्च विजेतुं विससर्ज। राजा कर्णो रणक्षेत्रात् पलाय्य देवगिरेः राज्ञः रामचन्द्रस्य शरणं गतः। तस्य महाराज्ञी कमला शत्रूणामधीना जाता। अन्हवाड खम्भातञ्च विजित्य अपारधनराशिसम्पन्नौ द्वावपि सेनापती बभूवतुः। एतौ काफूर-नामकमेकं दासं क्रीतवन्तौ। काफूरो मुगलराज्ये महतीमुन्नतिं चकार। पूर्वमपि काफूरस्य वृत्तान्तं विचारितमस्ति।

यद्यपि मुगला भारतस्य कमपि भागं विजित्य स्वाधिकारे नैव

यान्तीनां राजरमणीनां कृतेऽनवरतं शीतलं स्वच्छं जलं क्षरन्त्या गोमुखगङ्गाया जलपरिपूरितेन तटाकेनोपशोभितस्य सायं प्रातः सर्ववेदविद्भूदेवगणपठितसूर्यस्तोत्रवता रक्तवस्त्र रक्तचन्दन-रक्तपुष्प-माला रक्तालङ्कारोद्भासितत्रता दुर्गनिवासिक्षत्रियगणादिभूतस्य भगवतो भास्करस्य मूर्त्या सर्वपूजोपकरणशोभिना गगनचुम्बिना श्रीसूर्यमन्दिरेणोपशोभितस्य सूर्यरश्मिनेव परमपवित्रपरिपूतेन नैकेन सूर्यकुण्डेनोद्भासमानस्य, परितः उपवनवातायनादिसम्पन्नपद्मिनीनिवासभवनेनालङ्कृतस्य वीराणां क्षत्रियाणां निवासार्थं पृथक्पृथक् विनिर्मितैर्बहुविधोपलप्रासादैः राणारत्नसिंहनिवासभवनेन च सम्पन्नस्य, तत्र निवासिनां पुरोहितानां वेदविदुषां ब्राह्मणानाञ्च गृहैः प्रपूरितस्य, शस्त्रनिर्मातॄणां लौहकाराणां सूत्रकराणां रथकाराणां दास दासीनाञ्च भवनैर्बलवद्भाण्डारगृहेण विविधवृक्षोपशोभित पवनेन निर्झरिण्या शुक तित्तिर पारावतादिपक्षिगण भवनेन शस्त्रागारेण कुलदेवीमन्दिरेण च विराजमानस्य, सूर्यवंश-प्रसूतस्य मेवाडाधिपतेर्निवासस्थानस्य सर्वेषामेव वीराणां कृतेऽनेयस्य तत्र निवासिनां धीराणां वीरस्य तत्समकालीनसर्वललनाभ्योऽधिक ललामभूतायाः नवयौवनोद्भासितशरीरायाः राणारत्नसिंहमहाराजस्य धर्मपत्न्याः पद्मिन्याः सर्वाधिकरमणीयतासम्पन्नं सौन्दर्यञ्च श्रुत्वा व्यथित-हृदयः खिलजीमोहनः पद्मिनीप्राप्त्यर्थमधीरो बभूव।

एकदा कतिपयसैनिकैः सह स चित्तौरदुर्गं जगाम। गत्वा च पद्मिनी-दर्शनार्थं ययाचे रत्नसिंहम्। किन्त्वहो क्षत्रियाणां तेजः स्वाभिमानश्च! रत्नसिंहः स्पष्टमेवोक्तवान्—दूरमपसर कामकीट! चित्तौरदुर्गात्। पुनः कदापि नैव वक्तव्यम्। किं क्षत्रियाणां तेजो नैव जानासि? क्षत्रिया गर्जनाञ्च कदापि नैव श्रुतवानसि, येनेत्थं विकत्थसे?

पुनः खिलजीमहोदयः सम्प्रार्थितवान्—प्रभो! वारमेकमपि दर्शय पद्मिनीमुखं दूरत एव। धैर्यपूर्वकं रत्नसिंहः प्रोवाच—दर्पणे दर्शनं मपितुमर्हतीति। स्वीकृतवान् प्रस्तावममुं खिलजी।

तत एकत्र पद्मिनी संस्थिता, यत्र च खिलजीः। मध्ये एको महान् दर्पणः सन्धापितः। दर्पणगतमेव पद्मिनीप्रतिबिम्बमवलोकितवान् दुरात्मा। विलोक्यासौ दुराचारी कुटिलो विलासिप्रवरमानी खिलजीः प्रोवाच—दृष्टा पद्मिनी प्रभो! एतादृशी रूपलावण्यसम्पन्ना ललना मया अदृष्टपूर्वा। सौभाग्यं भवतो यदेतादृशी ललना धर्मपत्नीत्वेनाधिगता। गच्छामि स्वां राजधानीमिति।

प्रस्थितेऽलाउद्दीने शिष्टाचारानुसारं रत्नसिंहोऽपि चित्तौड्दुर्गाद्बहिर्निःससार। तावदेव स कुटिलो दुरात्मा सैनिकैः रत्नसिंहं बन्दिनं विधाय शीघ्रं दिल्लीकारागारे निगडितवान्, प्रेषितवांश्च पत्रं चित्तौड्दुर्गं यदत्र पद्मिनी समानेष्यति तदैव रत्नसिंहं मोक्ष्यामीति।

पठित्वा पत्रं पद्मिनी मूर्च्छिता बभूव। सामन्ता राजकर्मचारिणश्च किंकर्तव्यविमूढाः सञ्जाताः। प्राप्तचेतना पद्मिनी नवविवाहितौ किशोरौ, किन्तु पराक्रमेणातिसम्पन्नौ गोरा-बादलौ समाहूय सरदश्रुधारा सर्वं स्वमनो दुःखं ताभ्यां समुवाच।

श्रुत्वैव सर्ववृत्तान्तं विलोक्य चाश्रुधाराप्लावितं पद्मिनीमुखं अतिस्वाभिमानरक्षकान् द्वादशशतसङ्ख्यकान् युद्धकर्मविशारदान् विविधशस्त्रभृतः क्षत्रियान् सप्तशतेषु दोलासु संस्थाप्य दोलावाहकानपि वीरान् क्षत्रियानेव नियुज्य तेषां कृतेऽपि शस्त्राणि दोलासु निवेश्य मध्येऽतीव रमणीया पीनकौशेयवस्त्रावगुण्ठिता सर्वप्रासादिकाल्प-सहिता वाहकपुरुषान्विताञ्च दोलां विधाय श्रीगणेशं सम्पूज्य नासत्रा-न्त्वद्वाय नमस्कृत्य खिलजीशिविरंगामिनीऽत्मानोऽत्र पद्मिनीपतिं रत्नसिंहं मोचयितुं सप्तदोलाः पद्मिनीसन्दासु तदात्व इति ज्ञापयन्तौ गोराबादलौ चित्तौड्दुर्गाद्दिल्लीं प्रतस्थाते।

सर्वे एव स्वमातृभूमिरक्षका क्षत्रिया गच्छन्तो निम्नलिखितं गानं समुच्चेरुः—

अधुना न दिल्ली दूरे गम्यतां गम्यताम् !
क्रूरशत्रुः खिलजीरस्ति, चल्यताम्, चल्यताम् ।
अरे सैन्यशक्तिरस्ति मयि, राजभक्तिरस्ति मयि, गम्यताम् गम्यताम्।
करिष्यति स धर्षणम्, करिष्यामश्च भक्षणम्, गम्यताम् गम्यताम्।
अग्रे गिरिर्वर्तते, चूर्ण्यतां चूर्ण्यताम् !
एका नदी दृश्यते, लङ्घ्यतां लङ्घ्यताम् !
धेनुरेका गच्छति, रक्ष्यतां रक्ष्यताम् !
बाल एको विद्यते, लाल्यतां लाल्यताम् !
भूसुरः स याति किम् ! प्रणम्यतां प्रणम्यताम् !
देवीरिह भाति मे, प्रार्थ्यतां प्रार्थ्यताम् !
चल्यतां चल्यताम् गम्यतां गम्यताम् !
सिंह एको दृश्यते, बध्यताम् बध्यताम् !
मेवाडभूमिरक्षणम्, भविष्यति भविष्यति ।
विदेशीयो दुराचारो, मरिष्यति मरिष्यति !
नारीधर्मरक्षणम्, चिन्त्यते प्रतिक्षणम् !
राजपूतवीरता, त्यज्यतां न धीरता ।
साहसं न त्यज्यताम् । धर्मो नैव त्यज्यताम् ।
गम्यतां गम्यताम् ! चल्यतां चल्यताम् ।

प्र.—स्वकीयनारीरक्षणम् ।
द्वि.—स्वकीयदेशरक्षणम् ।
तृ.—स्वकीयधर्मरक्षणम् ।
अन्ये—करोति यो न मानवः ।
अपरे—न दानवो न मानवः ।
सर्वे—गम्यतां गम्यताम् । चल्यतां चल्यताम् ।
प्र.—भारतवर्षरक्षणाय नोऽत्र
द्वि.—सर्वं ध्रुवं भविष्यति !

रा—प्रभो. सुकार्यमस्य नश्र,
श्र.—सर्वथा भविष्यति ।
सर्वे—गम्यता गम्यताम्, चल्यता चल्यताम् ।

राजभक्तिपरिपूरितमानसा मेवाडवासिनः सर्व एव क्षत्रिया वायुसवेगाः हनुमदिवोच्छलन्तो मेघवद्‌गर्जन्तो दिल्लीमधापुगोरावादलसहिताः ।

तत्र गत्वा गोरावादलौ सुलतान प्रार्थितवन्तौ यत् प्रभो! समागता पद्मिनी । किन्तु भाण्डागारस्य कोशस्य चावश्यक कुञ्चिकादय तस्या एव सविधे वर्तते । तस्मा स्वपति समर्प्य तेन सह काश्चिदावश्यकीमन्तिमा वार्ता कृत्वा भवतः सकाशमागमिष्यति । यथा पद्मिनीरत्नसिंहयोर्मेलन भवेत्तथा व्यवस्था शीघ्रमेव विधेया इति ।

पद्मिनीसमागमनवार्ता श्रुत्वा महामोदसम्पन्नो वर्षाकालीनभेक इव समुच्छलत् सुलतानो दम्पतीसम्मेलनार्थं सर्वामेव व्यवस्था कृतवान् । यावद् व्यवस्थापका दम्पत्योर्मेलन कारयन्ति, तावदसौ खिलजीः स्वा तनुमलङ्कृत्य कृष्णकद्रव्येण ( खिजाबेन ) श्वेतश्मश्रुकूर्चजात कृष्ण चकार । एतदभ्यन्तरे कारागारद्वारे सलग्नाया मध्यदोलिकायामुपविश्य रत्नसिंहो वीरैः क्षत्रियैर्वाह्यमानः किञ्चिद्दूर गत्वा पूर्वोपस्थित सुसज्जितमश्वमारुह्य चित्तौड्‌दुर्गं पलायितवान् । दोलाभ्यो नि.सृताश्च सर्व एव क्षत्रिया वाहकाश्च गोरावादलयोर्नेतृत्वे युद्धसन्नद्धा बभूवु. ।

नासीत्पद्मिनी, किन्तु दोलासु सर्व एव क्षत्रिया आसन्निति वार्ता श्रुत्वा खिन्नमना खिलजीः स्वसैनिकान् युद्धाय समादिदेश । युद्धकर्मविशारदाना क्षत्रियाणा मुहम्मदीयैः सह महान् समरः समभूत् । तस्मिन् सर्व एव क्षत्रिया गोरावादलसहिता निहता., किन्तु रत्नसिंहश्चित्तौड्‌दुर्गमवाप्य पद्मिनीमुखमवलोक्य परमानन्दसन्दोहमलभत ।

अथ दग्धहृदयो खिलजीमहाशयो महता सैन्येन समावृतः चित्तौड्‌दुर्गमवरोध । दुर्गावरोध श्रुत्वा रत्नसिंहसहिता सर्व एव

क्षत्रियाः स्वजीविताशां विहाय गैरिकवस्त्रान् परिधाय युद्धोत्साह-सम्पन्ना विविधास्त्रसुसज्जिताश्चित्तौडदुर्गाद्बहिः सृताः। अनन्तरं चित्तौड-दुर्गनिवासिन्यः पद्मिनीप्रमुखा असूर्यम्पश्याः सर्वाः क्षत्रियरामाः भाविनं क्षत्रियपराभवं समीक्ष्य पातिव्रत्यरक्षणतत्पराः चित्तौडदुर्गस्य सूर्यकुण्डे स्नात्वा सूर्यायार्घ्यं प्रदाय चितां निर्माय प्रज्वाल्य च तत्र स्वशरीरा-हुतिं चक्रुः षोडशसहस्रसंख्यकाः। परमोत्साहसम्पन्नाः युद्धं कुर्वाणाः सर्वे एव क्षत्रिया वीरगतिं प्रापुः। किंवदन्त्यपि श्रूयते यन्मृतानां क्षत्रियाणां चतुःसप्ततिमनपरिमितानि यज्ञोपवीतानि प्रतोलितानि बभूवु-श्चित्तौडदुर्गपतनसमये इति।

अस्मिन् समरे विजयी भूत्वा दुराचारी दुष्टात्मा परस्त्रीगमन-लालसो खिलजीसुलतान 'अल्ला हो अकबर' इति ध्वनिं कुर्वन् कति-पयावशिष्टैः सैनिकैः सह परमहर्षितमनाः पद्मिनीप्राप्त्यर्थं चित्तौडदुर्गं विवेश। किन्तु तत्र पद्मिनीभस्मराशिमवलोक्य हतप्रभो विस्फारितनेत्र-श्चकितचकितो बभूव। किंकर्तव्यविमूढो भूत्वा सोऽतीव दुःखितोऽवशिष्टैः सैनिकैः सह दिल्लीं प्रतस्थे।

पुनः अल्लादीनः क्रमशः उत्तरभारतीयान् सर्वानेव भूपान् विजित्य तत्र तत्र स्वाधिकारञ्च संस्थाप्य दक्षिणभारतं जेतुमियेष। तस्मिन् समये दक्षिणभारते प्रथमं देवगिरियादवानां द्वितीयं वाराङ्गलाधिपतेः रुद्रदेवस्य तृतीयं द्वारसमुद्रे हौसयलवंशीयवल्लालस्य चतुर्थं मदुरायां पाण्ड्यस्य पञ्चमं चेरवंशीयरविवर्मणश्चेति पञ्चसाम्राज्यान्यासन्। किन्तु दक्षिणभारतीयेभ्य एतेभ्यो भूपेभ्योऽल्लादीनस्य किमपि भयं नासीत्। पूर्वकथितं गुलामवंशजं काफूरनामकं सेनापतिं देवगिरेः रामचन्द्रं विजेतुं सर्वप्रथमं विससर्ज। देवगिरेर्महाराजो रामचन्द्रो बहुकालं युद्ध्वाऽपि काफूरेण पराजितः। अथ रामचन्द्रेण सन्ध्यर्थं प्रार्थितः काफूरस्तं दिल्लीं प्रेषितवान्। तत्र सुलतानस्तेन सह सौजन्यपूर्णं व्यवहारं कृत्वा रायरायानेत्युपाधिं प्रदाय च स्वदेशं परावर्तितवान्।

पुनः काफूरस्तैलङ्गनाधिपतेः काकती यवराजस्य प्रतापरुद्रदेवस्य राजधानीमवरुरोध। कृतेऽपि महति युद्धे प्रतापरुद्र देवः पराजितो भूत्वा सन्ध्यर्थं प्रार्थितवान् काफूरम्। राज. प्रताप रुद्रदेवस्य सर्वस्वमादाय काफूरः सन्धिप्रार्थना स्वीचकार। त च करद विधाय एकसहस्रोष्ट्रैर्वाह्यमान स्वर्णरजतहीरकादिद्रव्य ममादाय दिल्लीं समाययौ।

देवगिरिवारङ्गलविजयानन्तर प्रवृद्धाभिमानोऽल्लादीनो हौसयलभूप विजेतु महत्या सेनया समावृत देवगिरिवारगलभूपसहाय काफूरं विससर्ज। हौसयलराशीयनरेशो वल्लालो महतीं सेनामवलोक्य सन्ध्यर्थं सेनापतिं काफूर प्रार्थितवान्।

वल्लालस्य सर्वां सम्पत्तिमादाय त करद विधाय काफूरः पाड्यनरेश प्रत्याक्रमणञ्चकार। तस्मिन्नेव समये पाड्यभ्राता पाड्येन सह कलहं विधाय दिल्लीं समागतवान्। काफूरश्च पाड्य विजित्य रामेश्वरपर्यन्त जगाम। तत्र गत्वा मस्जिदमेक निर्माय केरलविजय कुर्वन्नेव दिल्लीमाजगाम। किन्तु रामचन्द्रमृत्यौ पर तत्पुनः शकरदेवो दिल्लीं प्रेष्यमाण करमवरुद्धवान्। पुन. काफूरस्त युद्धे पराजित्य निहतवान्। इदानीमल्लादीनसाम्राज्यमुत्तरे दियालपुर लाहौरादारभ्य दक्षिणे मदुरा-द्वारसमुद्रपर्यन्त वङ्गादारभ्य सिन्ध गुर्जरञ्च यावद्विस्तृतमासीत्।

अल्लादीनः स्वेच्छाचारी निरङ्कुशश्च शासक आसीत्। स दयाभाव परित्यज्य कठोरतमदण्डप्रदान कुर्वन्नासीत्। स स्वकीयबाहुबलेनैव विस्तृत साम्राज्य सस्थापितवान्। मुगलाक्रमणेभ्योऽपि देशरक्षां कुर्वाणोऽसौ शासनस्यैतादृशीं सुव्यवस्था चकार, यथा राज्यकर्मचारिण कृषकेभ्य· करादतिरिक्त किमपि ग्रहीतु नाशक्नुवन्। पशुष्वपि करो निर्धारित आसीत्। मद्यपाने कठोरतम· प्रतिबन्ध· आसीत्, मद्यक्रयविक्रयकारिणो महति कूपे प्रक्षिप्यमाणाश्चासन्। सुलतानानुमतिमन्तरा कोऽपि स्वसुतासुतयोर्विवाहमपि नैवाकरोत्। दासाना पशूनाञ्च निर्धारित-

मासीन्मूल्यम् । तदा धर्माद् राजनीतेर्महत्त्वं न्यूनतममासीत् । अत एव मुलतानोऽपि राज्यकार्येषु धर्माचार्यैः सह सर्वदा परामर्शं कुर्वन्नासीत् । एते धर्माचार्याः सर्व एव मुहम्मदीया आसन् । किन्तु पश्चादल्लादीन एकमादेशं प्रचार्य सुस्पष्टं समुद्घोषितवान् यद् राज्यहिताय धर्माचार्याणामादेशं नैव ग्रहीष्यामि । धर्मः पृथग्विषयो वर्तते, राजनीतिस्तस्मात् सर्वथा पृथग्भूता भविष्यतीति ।

मद्यपानाधिक्येन अनियमितजीवनयापनेन च अल्लादीनस्य स्वास्थ्ये ह्रासः सम्भभूव । अगस्त्याऽसौ राजकीयकार्याणि परित्यक्तवान् । स्त्रियः पुना अपि स्वेच्छयैव कार्यं कुर्वाणास्तदर्थं किमपि नैव चक्रुः । राज्याधिकारिणोऽपि स्वशक्तिवर्धनार्थं कूटकृत्यमेव कुर्वाणाः सम्बभूवुः । अस्वस्थतयाऽसुलतान किमपि कर्तुं न शशाक । गुजरातमेवाडदेवगिरिभूपा अपि विद्रोहं कृत्वा स्वतन्त्रा बभूवुः । अतीव चिन्तितमना अल्लादीनो कियता कालेन मरणमवाप ।

जानात्येव मुक्तामणे ! यन्निरङ्कुशस्य स्वेच्छाचारिणः शासकस्य सर्व एव दोषा मरणानन्तरमेव प्रकटीभवन्ति । तदेव अल्लादीनमरणात्परं सम्बभूव । अल्लादीनो येषु धनिके महान्तमत्याचारं कृतवान्, ये च हिन्दुभूपाः गायमानं तेन स्वबलेन वशीकृताः, कठोरतमदण्डभयाद् ये च कदापि प्रजाभ्य उत्कोचमेव गृहीतवन्तः, ते सर्वे अवसरं सम्प्राप्य सर्वेऽस्मिनु स्वतन्त्राः सम्बभूवुः । यद्यस्तु तन्मरणात्परं महान्तमुत्सवं जनेषु मिष्टान्नवितरणञ्च चक्रुः ।

अल्लादीनस्य सर्व एव पुत्रा राज्यशासनानर्हाः, आसन्, तथापि ज्येष्ठपुत्रः शाहजादा खिज्रखानो राज्यसिंहासने प्रतिष्ठापितो लोकैः । पश्चात्सम्पूर्णराज्यशासनाधिकारकामुकः काफूरस्तमपदस्थं कृत्वा पञ्चवर्षदेशीयं शहाबुद्दीनं राज्यसिंहासनासीनं कृतवान् । किन्तु पञ्चत्रिंशद्दिवसाभ्यन्तर एव काफूरो निहतः । पश्चाद् धनिका राज्यकर्मचारिणश्चाल्लादीनद्वितीयपुत्रं मुबारकखानं राज्यसिंहासनासीनं चक्रुः । कर्तव्यनिपुणः

शासनकर्मणि कुशलश्च मुबारकखान. सावधानतया राजशासनकार्यं चकार। गुजरातनिवासिनः पूर्वं हिन्दुजातिसमुत्पन्नस्य पश्चात्स्वीकृत-मुहम्मदीयधर्मस्य हसननामकस्यैकस्य मानवस्य वशीभूतो मुबारकस्तं 'खुसरोखाने'त्युपाधिना विभूष्य राजमन्त्रिणं चकार।

प्रारम्भिकजीवने साफल्यमेव मुबारकमाचरणभ्रष्टं चकार। स खलु सर्वदैव विलासितायां निमग्नो मद्यपाननिरतो समस्त मिष्टभाषकाणां सम्मानकारकः सभ्रान्तानां धनिकानाञ्चापमानकारकश्च बभूव। खुसरोखानश्च राजशासनं सम्प्राप्तुं यतमानश्चासीत्। एकस्यां रात्रौ स्वकीयैर्दुष्प्रमार्थैः सह खुसरोखानः मुबारकस्य शयनकक्षं प्रविश्य सहसा-मेव तं हतवान्।

इत्थं खुसरोखानो मुबारकं तद्बालकांश्च घातयित्वा दिल्लीराज्य-सिंहासनाधीशो जातः। राजसिंहासनाधिरूढोऽसौ 'नासीरुद्दीन' नाम्ना प्रसिद्धो बभूव, स्व मुहम्मदीयधर्मानार्यस्य दक्षिणहस्त घोषयामास च। दिल्लीसिंहासनासीनो भूत्वा खुसरो स्वकीयराज्यसभायामुपवेशितुं धनिका-नपि निरधीरणवान्। ते च तस्याज्ञापालनं कुर्वन्तो राजसभायां समुपस्थिताः। किन्तु फखरुद्दीनजूनानामा कुमारो यः खलु पश्चात् 'तुगलक'नाम्ना भारतीयेतिहासे प्रसिद्धिं गतः, कथमपि दिल्लीतो निःसृत्य स्वपितुर्गाजीमलिकसमीपे दिपालपुरं गत्वा सर्वमेव दिल्लीवृत्तं तस्मै अकथयत्। दिल्लीश्वरस्य खुसरोखानस्य सर्वमुदन्तजातं स्वेच्छा-चारित्वञ्च श्रुत्वा गाजीमलिकः सेनया सहागत्य दिल्लीमवरुरोध। सैन्यसंगठनं कृत्वा कृतेऽपि युद्धे पराजितः खुसरोखानो गाजीमलिक-सेनया निहतः। दिल्लीनगरनिवासिनः सहस्रस्तम्भनिर्मिते भवने गाजीमलिकस्य महान्तं सम्मानं कृतवन्तः। तैः प्रार्थितोऽसौ दिल्ली-सिंहासनासीनो बभूव। गाजीमलिक एव 'गयासुद्दीन'नामा बादशाहो बभूव।

किन्तु यस्मिन् समये गयासुद्दीनो राजसिंहासनमलञ्चकार, तस्मिन्

समये साम्राज्यं छिन्नं भिन्नञ्चासीत्। नवीनः सुल्तानो महता परिश्रमेण साम्राज्यशासनं सम्पादयाञ्चकार। कुतुबुद्दीनस्य खुसरोखानस्य च राज्यकाले शासनप्रबन्धोऽतीव शिथिलो जातः। तं सुव्यवस्थितं कृत्वा गयासुद्दीनोऽवरोधकस्य तैलाङ्गनाधिपतेः काकतीयभूपस्योपरि समाक्रमणमकरोत्। तत्र काकतीयभूपस्य पराजयो जातः, दुर्गे च मुहम्मदीयानामधिकारोऽभूत्। तस्मिन्नेव समये वारङ्गलस्य सुलतानपुरं नाम जातम्। तत्र शासनप्रबन्धकारी चैको मुहम्मदीय एव बभूव।

बङ्गे बलवनवंशीय एकः शाहजादः स्वभ्रातृविरुद्धां सुलतानसहायतां याचितवान्। तत्साहाय्यार्थं गतः सुलतानः ततः परावर्तनसमये दिल्लीसमीप एव स्वपुत्रकृतवृक्षकृत्येन पञ्चत्वमवाप।

स्वपितुर्मरणात्परं शाहजादा जूनामुहम्मदतुगलकनामा दिल्लीसिंहासनासीनो बभूव। अयं खलु परमविद्वान् स्वसामयिकसकलकलापारगोऽलौकिकस्मरणशक्तिशाली विज्ञानवेत्ता धाराप्रवाहभाषणकर्ता तर्कशास्त्रविज्ञश्चासीत्। असौ स्वधर्मनिष्ठः परधर्मसम्मानकारकः सतीप्रथानिरोधचेष्टासम्पन्नो महापराक्रमशाली वीरश्चाभूत्। तस्य राज्यं त्रयोविंशतिप्रान्तेषु विभक्तमासीत्। तस्य राज्यं पूर्वे वङ्गादारभ्य पश्चिमे सिन्धुपर्यन्तम्, उत्तरे लाहौरादारभ्य दक्षिणे द्वारसमुद्रपर्यन्तं विस्तृतमासीत्।

तुगलकशाहस्य भ्रातुः सिपहसालाररजबस्य पुत्रः फिरोजः आसीत्। तस्मिंस्तुगलकशाहस्य सविशेषा कृपा बभूव। अनपत्यत्वात्तुगलकस्तमेव राज्याधिकारिणमघोषयत्। धार्मिकविचारशाली फिरोजो राज्यशासनभारान्मुक्तिमिच्छन्नपि धनिकानां प्रधानराजकर्मचारिणाञ्च महताऽऽग्रहेण राज्यसिंहासनमधिष्ठितवान्। फिरोजः परमो दयालुः प्रजाहितकारी महदुदारशासक आसीत्। किन्तु राज्यहितविधायिनोरल्लादीनतुगलकमुहम्मदयोरिव तस्य स्वभावो नासीत्। स खल्वक्षरशः कुरानमवलम्ब्य सर्वकार्यमकरोत्। अल्लादीन इव मुहम्मदतुगलक इव यासौ वीरो

राज्याभिलाषी वा नासीत्। किन्तु प्रजाहितसाधने तत्परो दीनानाथ-सहायकः साधुदर्शनाभिलाषी स्वयमीश्वरभक्तः प्रजास्वपीश्वरभक्ति-प्रचारकर्ता च सम्बभूव। फिरोजेन द्वादशशतसंख्यकान्युपवनानि समारोपितानि। मस्जिदा यात्रिनिवासास्तटाकाश्चानेके निर्मिताः। फतहाबाद फिरोजाबाद जौनपुरनगरञ्च असावेव वासितवान्।

फिरोजमरणानन्तरं राज्येऽशान्तिः सिंहासनप्राप्त्यर्थं पुत्रेषु कलहश्च सहैव प्रादुर्बभूवतुः। राजनैर्घृणा कृते एतस्मिन् समये स्वकार्यसाधनस्य समीचीनोऽयसरो लब्धः। तैन च सर्व एव ते स्वमनोऽनुकूल कार्यं कृतवन्तः।

तुगलकवंशस्यान्तिमोऽधिकारी महमूदतुगलकोऽयोग्यः शक्तिहीनश्च बभूव। एतस्मिन्नेव समये तैमूरलङ्गस्य भारते समाक्रमणं बभूव। तैमूरलङ्गो बरलासवंशस्य तुर्को योद्धासीत्। महान् विजेता ■ पश्चिमे-शिया विजित्य स्वकीयं साम्राज्यं संस्थापितवान्। चत्वारिंशत्सहस्र-पदातिसैनिकैर्दशसहस्राश्वारोहिभिर्विंशतिसहस्रहस्तिपृष्ठाधिरुढैश्च सैन्यैः सहितस्तैमूरः समरकन्दात्प्रस्थानं कृत्वा सिन्धुनद्यास्तटे विश्रम्य मुलतानं भटनेरञ्च विजितवान्। ततश्च प्रचलय स दिल्लीमवरुरोध। तद्भयाद्भीतो महमूदतुगलको गुर्जरदेशे पलायितः।

विजयी तैमूरो दिल्लीं स्वेच्छया निर्बाधञ्च प्रविश्यैकां सभां चकार। सभायां समुपस्थिताः प्रतिष्ठितनागरिकास्तैमूरं प्रार्थितवन्तो यत् प्रभो जनानां प्राणदण्डो निरोध्यतामिति। एतां प्रार्थनां तैमूरः स्वीकृतवान्, तथापि स्वेच्छाचारिभिः सैनिकैर्निरपराधिनो बहवो मानवाः स्त्रियश्च बालका निहताः। दिल्लीनगर्या विशालानि बहुवैभवसम्पन्नानि सुन्दराणि भवनानि विलोक्य तैमूरश्चकितचकितो बभूव। धनिकेभ्यो राजभवनाच्च बहूनि रत्नमाणिक्यधनानि कलाकारांश्चादाय स पुनः समरकन्दं जगाम।

तैमूराक्रमणसमये प्रायेण दिल्लीनगरी विनष्टा जाता। कस्मिन्नप्या-

भ्रमणे भारते धनस्य जनस्य सम्पत्तेश्च नैतादृशी क्षतिरभूत्। तैमूरा-क्रमणेन भारते महती अव्यवस्था समुत्पन्ना। सर्वा दिल्लीनगरी विनष्टा। तुर्काणां सुन्दराणि भवनानि विनष्टानि। दुर्भिक्षस्य महामारीदाना च महान् प्रकोपो बभूव। तेन जनानां महत्कष्टमभूत्। सहस्रशो जना मृताः।

फिरोजानन्तरं येऽपि सुलतानाः अभूवन्, सर्व एव प्रायेणायोग्या-श्चासन्। अत एव प्रान्तपालाः सर्वेऽपि स्वकीयानि स्वतन्त्रराज्यानि स्थापितवन्तः। हिन्दूराजानोऽपि सर्व एव तुगलकविनाशस्यावसरं प्रतीक्षमाणाः प्राप्तेऽवसरे स्वतन्त्राः सम्बभूवुः। इत्थं तुगलकवंशस्य पतनमभूत्।

तुगलकवंशराज्यपतनानन्तरं बहूनि स्वतन्त्राणि राज्यान्यभूवन्। तेषु वङ्ग जौनपुर मालव राजस्थान बहमनी विजयनगर राज्यानि विशेषतः प्रसिद्धान्यासन्। प्रान्तीयराज्यानां प्रादुर्भावेण भारतीयैकताया विनाश-स्त्वयश्यमेव बभूव, किन्तु विप्लवस्याशान्तेश्च क्वापि नामापि नासीत्। नूतनराज्याधिकारिषु प्रान्तीयताया भावः समुत्पन्नः, तेन पारस्परिक-कलहः प्रादुरभूत्।

वङ्गे सुलतानतुगलकस्य समय एव स्वाधीनराज्यस्य संस्थापनमभूत्। फिरोजो वङ्गस्य दिल्लीसाम्राज्ये विलयनार्थं महान्तं प्रयत्नमकरोत्, किन्त्वन्तेऽसफलो बभूव। तदा वङ्गे हुसेनशाहो राज्यं कुर्वन्नासीत्। स हुसेनवंशस्य संस्थापनमकरोत्। स तिरहुतप्रदेशं विजित्य स्वराज्ये विलीनीकृतवान्। नुसरतशाहस्य मरणानन्तरं हुसेनवंशस्यान्तो बभूव। अकबरसाम्राज्यसमये वङ्गो मुगलाधीनो जातः।

मलिकसरवरशाहख्वाजो, य महमूदतुगलः कन्नौजाद्बिहारपर्यन्त-देशस्य शासनाधिकारिणं नियुक्तवानासीत्, जौनपुरराज्यसंस्थापन-मकरोत्। एतस्य वंशस्य स सर्वशक्तिशाली प्रतिभासम्पन्नश्च शर्की इब्राहिमशाह एव शासक आसीत्। अस्मिन् वंशेऽन्तिमः शासको

हुसैनशाहो बहलोललोदिना पराजितः, जौनपुरराज्यं च दिल्ली-साम्राज्याधीनमभूत् ।

तैमूरस्याक्रमणसमय एव मालवप्रदेशे स्वतन्त्रराज्यस्थापनमभूत् । तस्य संस्थापको दिलवरखानगोरी बभूव । दिलवरखानगोरिणो मृत्योः परं तद्राज्याधिकारी हुसङ्गशाहो बभूव । स मण्डू इत्यस्मिन् स्थाने स्वकीयां राजधानीं माण्डूमकरोत् । तत्र च बहूनि भवनान्यपि निर्मापितवान् । तन्मन्त्री महमूदखिलजीस्तत्साम्राज्यं बलात्गृहीत्वा स्वयं राज्याधिकारी बभूव । तदनन्तरं महमूदद्वितीयं गुजरातबादशाहो महमूदशाहो युद्धे पराजित्य मालवराज्यं गुजरातराज्याधीनं चकार । हुमायुरिदं राज्यं गुजरातराज्यस्याङ्गमेवाज्ञासीत् ।

जफरखानः, य दिल्लीसुलतानो गुजरातस्य शासकं नियुक्तवाना-सीत्, गुजराते स्वकीयं स्वाधीनं राज्यं संस्थापितवान् । तन्मृत्योः परं महम्मदशाहो राज्याधिकारी जातः । असावेव साभ्रमतीनद्यास्तटे 'अहमदाबाद' नगरं निर्मितवान् । अहमदशाहः स्वधर्मनिष्ठो मुहम्मद आसीत् । असौ हिन्दुमन्दिराणां भङ्गं कृत्वा हिन्दूनपि मुहम्मदीयधर्म-परिग्रहार्थं बाधितवान् ।

गुर्जरस्य प्रसिद्धः सुल्तानो महमूदबेगडः चम्पानेरस्य जूनागढस्य च राजपूतभूपान्विजित्य पुनः पुर्तगाल्याभिभिः स्वयमपि पराजितो जातः । स्वतन्त्रगुर्जरस्यान्तिमः प्रसिद्धः शासको बहादुरशाहो मालव-सुलतानं पराजित्य स्ववशीचकार । तस्माद्भयभीतो हुमायुसुल्तानस्यापि स्वयं पराजितः । बहादुरशाहः पुर्तगालवासिनो निष्कासयितुं कृत-प्रयत्नोऽपि साफल्यं नालभत, प्रत्युत पुर्तगालाभिजनानां दुरभि-सन्धिना निहतोऽभूत् । तन्मृत्योः परमकबरस्तु गुर्जरप्रदेशं मुगलबादशाह आत्मनः दिल्लीसाम्राज्याधीनमकरोत् ।

भारतस्यान्यभाग इव राजस्थानमपि अल्लाउद्दीनेनाक्रान्तम् । रणथम्भोर-दुर्गमधिकृत्य तत्रत्यराजशक्तिमसौ मेवाडाधिपतिमपि स यथा निगाय,

तद् पूर्वमेव वर्णितम्। किन्तु मृतेऽल्लादीने राजपूता मुहम्मदीयाना शिविर भङ्क्त्वा मेवाड स्वतन्त्र चक्रुः। राणा हम्मीर एकस्मिन्समये दिल्लीसुलतानमपि पराजितवान्। राणाकुम्भा ( कुम्भल ) राज्यसमये मेवाडशक्ति परमोत्कर्षं गता। कुम्भासिंहोऽपि गुर्जरस्य मुगलशासकैः सह बहुवार युद्ध कृतवान्। एतेषु सगरेषु कदाचित् मुहम्मदीयाना कदाचिच्च कुम्भासिंहस्य विजयो बभूव। एकस्मिन् युद्धे माल्वसुल्तान पराजित्य बन्दिनञ्च विधाय षण्मासपर्यन्त चित्तौडदुर्गे रक्षितवान् राणा कुम्भासिंह.। एतद्विजयस्मारके निर्मित कीर्तिस्तम्भ कुम्भाविक्रम रत्नयन्नद्यापि चित्तौडेऽवलोक्यते जनै.।

मालवाया गुर्जरस्य च सुलतानौ राणाकुम्भासिंह विजेतु बहुधा आक्रमण कृतवन्तौ, किन्तु सर्वदैव तेन पराजितौ भूत्वा पश्चात्तदायेव सम्भूतौ। न केवल राणाकुम्भासिंहोऽजेयवीर आसीत्, किन्तु महान् राजनीतिज्ञो विद्वान् दार्शनिको विविधकलासु विज्ञाने च पारगो विदुषामाश्रयसम्मानप्रदाता विभिन्नविषयकग्रन्थलेखको वशीवादन-पटुस्तटाकयूपादीना निर्माताप्यासीत्। तन्निर्मितः कीर्तिस्तम्भस्तदीया-साधारणगौरवस्य मूकसाक्ष्य इवदधुनापि चित्तौडे नूतन इव विभाति।

राणाकुम्भासिंहस्योत्तराधिकारिषु राणासग्रामसिंहः ( राणा सागा ) लोकोत्तरसाहससम्पन्नो युद्धकर्मणि कुशलो दिल्ली-मालवसुलतानयोर्विजेता सम्पूर्णहिन्दुसमाजस्य नेता विशालसैन्यसम्पन्नश्चासीत्। तस्य युद्ध-कौशलेन व्याकुलीभूतः प्रभावितो बाबरः स्वकीयात्मकथाया त प्रशस्य भारतस्य प्रसिद्धो वीरो राणासग्रामसिंह इति सबहुमानमुल्लिखितवान्।

पूर्ववर्णित-चन्द्रवंशीयामन्तवर्मचोडगगस्योत्कलराज्य कपिलेन्द्र-स्याधीन भूत्वा पुनः अकबराधीन जातम्।

### श्रीनिम्बार्काचार्यः

अनान्तरे गोदावरीतटेऽरुणाश्रमस्थितस्यारुणमुनेर्गेहे जयन्तीदेव्या निम्बार्काचार्यस्यावतरणमभूत्। सुदर्शनावतारस्यास्य पूर्वनाम भास्करा-

चार्य आसीत् । पञ्चवर्षदेशीयायास्मै यज्ञोपवीतसंस्कारसमये नारदः स्वयमेव समागत्य गोपालमन्त्रदीक्षामदात् । द्वैताद्वैतसिद्धान्त एवास्य मतम् । नारदद्वारा शिक्षाग्रहणानन्तरमस्य नाम नियमानन्द इति प्रथितम् ।

श्रीनियमानन्दो वेदान्तसूत्रेषु पारिजातसौरभनामकं भाष्यं विलिख्य सर्वप्रथमं शंकराचार्यं बौद्धसम्प्रदायवादिनं समुद्घोषितवान् । एतस्य प्रधानस्थानं यमुनायास्तटे ध्रुवक्षेत्रमासीत् ।

एकदा केनचिज्जैनसन्यासिना सह चर्चाप्रसङ्ग एव सूर्योऽस्तमगात् । ततश्च जैनसाधुना भोजनेऽस्वीकृते श्रीनियमानन्दः श्रीकृष्णं संस्मृत्य निम्बवृक्षोपरि तं सूर्यप्रकाशमदर्शयत् । ततः प्रभृत्येव एते निम्बार्काचार्य इति नाम्ना प्रसिद्धिं गताः । निम्बार्कसम्प्रदाये राधाकृष्णयोः पूजनं भागवतशास्त्रञ्च प्रधाने स्तः ।

निम्बार्काचार्याणां सर्वाण्येव कार्याणि प्रशस्तान्यभूवन्, परं तैर्भगवन्तं शंकराचार्यं समाक्षिप्य नोचितं कृतम् । सम्प्रदायभेदे सत्यपि परस्परमाचार्याणां विद्वेषं नाहं सुष्ठु मन्ये ।

## श्रीचैतन्यमहाप्रभुः

फाल्गुनशुक्लपूर्णिमायां सिंहलग्ने वङ्गप्रदेशस्य नवद्वीपनगरे जगन्नाथमिश्रधर्मपत्नीशचीदेव्याम्मातुः चैतन्यमहाप्रभोरवतारः समजनि । स्व मातुकाः श्रीराधावतारं कथयन्ति । एतेषां सिद्धान्तो द्वैताद्वैतमेव । एते चतुर्विंशतिवर्षाणि यावद् गृहस्थाश्रमे निवासं विधाय सन्यासिषु भक्तिमार्गप्रचारार्थं स्वयं केशवभारतिसन्यासिनः सकाशाद् दीक्षां गृहीतवन्तः ।

प्रकाण्डो विद्वान् महाप्रभुर्न्यायशास्त्रस्य विद्वत्तापूर्णमेकं ग्रन्थं लिलेख । तस्यैकः सुहृदपि न्यायविषयकमेव अन्यग्रन्थं लिलेख । यदैकस्मिन्समये द्वावपि सुहृदौ मिलितौ, तदा महाप्रभोर्विलोक्य ग्रन्थं मित्र-

सुखं दुःखमभूत् । अत एव श्रीचैतन्यमहाप्रभुः स्वशरीरं प्रति महाघातं प्रदाहितवान् । अस्य त्यागमयचर्याणि अद्भुतं दृश्यते । महाप्रभोः सम्पर्केण वेदान्तनिष्ठावपि वासुदेवसार्वभौम-प्रकाशानन्दौ जगाई-मधाईनामकौ पतितावपि च भगवद्भक्तिनिष्ठौ जातौ ।

श्रीचैतन्यो वारंवारं चतुर्भुजरूपेण श्रीकृष्णस्वरूपेण च प्रादर्शयत् । शेषजीवने नीलाचले वाससमये एकदा मधुन आवश्यकतायामपि स एव मधुमयं चकार, तदद्यापि 'मधु पुष्करिणी' नाम्ना प्रसिद्धमस्ति । स्वशिक्षाष्टके भगवन्नामकीर्तनं भगवन्नामजपं जीवनोद्धारस्य मुख्यं साधनमकथयन्महाप्रभुः । स्वशिष्यान्देवाराधनद्वारा देशोत्थानसहायाय च आदिदेश । तदन्तिके गत्वा यः कश्चिदपि सन्यासी शिष्यत्वमापेदे । परस्त्रीभिः सह वार्तालापोऽपि तेन न्यषेधि । माधवीनाम्न्या वृद्धया सह वार्तां कुर्वन्तं हरिदासनामकं स्वशिष्यं स सर्वथा परित्यक्तवान् ।

### श्रीवल्लभाचार्यः

अग्निदेवावतारभूतस्य वल्लभाचार्यस्य लक्ष्मणभट्टधर्मपत्न्या इल्लमादेव्या गर्भाद्वैशाखकृष्णैकादश्यां चम्पकारण्ये प्राकट्यमभूत् । अयं खलु तैलङ्गब्राह्मण आसीत् ।

एकादशवर्षदेशीय एवासौ समाप्य सर्वविद्या वृन्दावनात्तीर्थयात्राया प्रचलन्, विजयानगरभूपकृष्णदेवस्य सभाया सर्वानेव पण्डिताञ्जिगाय । सर्वेषां पण्डितानां समक्षमेवासौ भूपस्तस्य कनकाभिषेकं चकार, यस्मिन् बहुसुवर्णमाप्तवान् वल्लभाचार्यः । तीर्थयात्रां समाप्य समागत्य चोज्जयिन्यामसौ क्षिप्रायास्तटे पिप्पलवृक्षाधस्तले स्वनिवासमकार्षीत् ।

श्रीवल्लभाचार्यस्य अष्टयामसेवा सर्वत्र प्रसिद्धा । सेवया प्रसन्नः श्रीकृष्ण एतस्य गृहे विट्ठलनाथनाम्ना पुनरूपेण जनिमलभत । चैतन्यमहाप्रभोः समकालीनत्वादनयोः परस्परं मेलनमप्यभूत् । जीवन-

स्यान्तिमे भागे काश्यां निवसन्नसौ हनुमद्घट्टे प्रकटिते ज्योतिषि प्रविश्य सदेह स्वर्गमासवान्।

श्रीवल्लभाचार्यो भागवतस्य सुबोधिनीं टीकां वेदान्तसूत्रस्य सुन्दर-मणुभाष्यञ्च व्यलिखत्। एतस्य सम्प्रदायस्यापरं नाम पुष्टिमार्ग इति। तस्य सिद्धान्तः सम्पूर्णमेव जगत् कृष्णरूपं सत्यम्, जीवोऽणुः सच्चिदानन्द-स्वरूपश्च आसीत्। सर्वसारभूतः श्रीकृष्णप्रापको भक्तिमार्ग एव। व्रजे क्रीडाकारकः साकारः श्रीकृष्ण एव ब्रह्म। स एव सच्चिदानन्दरूपेण सर्वत्र विराजते इदमपि तस्य मतम्।

## श्रीरामानन्दाचार्यः

श्रीरामानन्दाचार्यस्य प्राकट्यं माघकृष्णसप्तम्यां कुम्भलग्ने चित्रा-नक्षत्रे प्रयागस्थेकस्यपुण्यब्राह्मणस्य धर्मपत्न्या सुशीलादेव्या गर्भाद-भूत्। पूर्वं रामदत्तनाम्ना प्रसिद्धोऽयमपदेशीयोऽसौ यज्ञोपवीतसंस्कारा-नन्तरं राघवानन्दस्वकाशाद्विद्याध्ययनं विधाय षडक्षररामतारकमन्त्र-दीक्षां गृहीतवान्। ततो विशिष्टाद्वैतसिद्धान्तप्रतिपादकग्रन्थानधीत्याय वेदान्तसूत्रोपरि चमत्कारपरिपूर्णमानन्दभाष्यं लिलेख। रामार्चनपद्धति-वैष्णवमताब्जभास्करप्रभृत्यनेकग्रन्थान्विलिख्य असौ स्वसिद्धान्तप्रचार-कार्यमारब्धवान्। काश्यां पञ्चगङ्गातटे स्वकीयं मठं निर्माय निवसन्नसौ एकादशाधिकशतवर्षदेशीयो भूत्वा स्वदेहं परित्यक्तवान्।

श्रीरामानन्दीयमतस्य परमोपास्याधिष्ठात्री देवी श्रीजानकी परमो-पास्यदेवो भगवान् रामचन्द्रश्च वर्तेते। तुलसीदासप्रभृतयो गण्यमान्य-भक्ता एतन्मतप्रचारकाः। रामतारकमन्त्र एव मन्त्रराजः। ये च हिन्दवो मुहम्मदीयैर्बलात्स्विधर्मयज्ञसूत्रविहीना विहितास्ते तारकमन्त्रप्रभावेणैतेन शुद्धीकृताः। हिन्दूजातीनामाचारशुद्धयर्थमेका पृथग्जातिश्चानेन निर्धा-रिता। साधुवेषं विधाय हिन्दून् भ्रष्टान् कुर्वतो मुहम्मदीयान् बहिष्कर्तुमयं स्वयमपि वैष्णवधर्मानुकूलं जीवनमयापयत्।

एकस्या रात्रौ वाल्मीकिः स्वप्ने दर्शनं प्रदाय अमु समादिदेश यद् वेदवेद्य. श्रीराम एव पुरुषोत्तमावतारः। तद्गुणवर्णनार्थं ब्रह्मणा प्रेरितोऽहं रामायण निर्मितवान्। भवता तस्यैव रामायणस्य प्रचारः कर्तव्य इति। पश्चाद्वाल्मीकिन ज्ञानगुरु मत्वासौ रामायणप्रचारमप्यकरोत्।

दैवज्ञः प्रोवाच—'मुक्तामणे' एव मुहम्मदीयसाम्राज्यकाले चत्वारो हिन्दूधर्मान्तर्गतप्रमुखसम्प्रदायाचार्या अन्येऽपि च आचार्यपादाः जनिमलभन्त। तत एव एतादृग्विपत्तिकालेऽपि हिन्दूधर्मः कथमपि प्राणान्धारयन्नासीत्। एतेषामाचार्याणां हिन्दूधर्मरक्षणे उद्धरणे च महत्तम स्थानमैतिहासिकदृष्ट्या वर्तते। इत' पर मुगलसाम्राज्यस्योत्तरकालिक महत्त्वपूर्णं वृत्त मया वक्ष्यते, सावधानतया शृणु' इति।

## विजयनगर-बहमनराज्ये

मुहम्मदतुगलकस्य समये विदेशिनो धनिका सघीभूय दक्षिणे साम्राज्यमेक सस्थापितवन्त। तेषा प्रधानो हसन आसीत्। हसनः स्व फारसस्य बहमविनईशाहन्दियारवशज समुद्घोष्य बहमनीनाम्ना प्रसिद्धोऽभूत्। तद्वशजा बहमनिनो विख्याता'। किन्तु नवीनविजयनगरराज्यसस्थापकौ हरिहर-बुक्कनामकौ द्वौ भ्रातरौ तस्य जन्मजातशत्रू आस्ताम्। बहमनशासका स्वेच्छाचारिण आसन्।

परस्पर स्पर्धमानयोर्बहमनविजयनगरराज्यशासकयोः प्रचलति सग्रामे कदाप्येकस्य कदाप्यन्यस्य च विजयो भवन्नासीत्। बहमनशासका. स्वेच्छाचारिणो निरङ्कुशाश्च भूत्वा सर्वत्रात्याचारमकुर्वन्। हसनस्योत्तराधिकारिणौ मुहम्मदशाह' प्रथम फीरोजश्च तुङ्गभद्राकृष्णानद्योर्मध्यगता सर्वामिव भूमि स्वायत्तीकृत्य विजयनगरशासकै' सह महान्त सगर विधाय असख्यहिन्दूना वध कृतवन्तौ। योग्यशासकमुहम्मदजवानप्रधानमन्त्रिसहितस्य मुहम्मदशाहतृतीयस्य राजत्वकाले

बहमनराज्यपतनलक्षणं दृष्टिगोचरमभूत्। शाघवः छलेन बहमनशासकं निहतवन्तः। तत एव बहमनराज्यपतनं समारब्धम्।

पूर्वोक्तविजयनगरराज्यस्य प्रथमशासकस्य हरिहरस्य मरणान्तरं बुक्को राज्याधिकारं लब्धवान्। बुक्कमरणान्तरं देवरायोऽधिपतिर्बभूव। एतस्य समये निकोलोकोण्टीनामा इटलीदेशीयः अब्दुलरज्जाकनामा अरबदेशीयश्च राजदूतौ समायातौ विजयानगरमिति श्रूयते। किन्तु देवरायभूपात्परमेतद्वंशशासकाः राज्यप्रतिष्ठारक्षणं कर्तुं नाशक्नुवन्, विजयनगरराज्यं चान्यस्य राजवंशस्याधिकारे बभूव।

एतस्य वंशस्य सर्वयोग्यो राजा कृष्णदेवो विदुषामाश्रयदाता विद्वान् कविसम्मानकारको धार्मिको विदेशीयजनसत्कारकारी परमोदारस्वभावो बीजापुरोत्कलराज्यपराजयकर्ता पुर्तगालनिवासिजनमित्रभूतोऽनेकानेकहिन्दूमन्दिरनिर्माणविधायकश्च बभूव। किन्तु कृष्णदेवान्तरं सर्वे एव राजानः शक्तिहीनाः सञ्जाताः। तद्वंशीयोत्तराधिकारिणं सदाशिवरायं निर्बलमवाप्य तन्मन्त्री रानारामः सर्वमेव राज्यशासनं स्वायत्तीचकार। पश्चाद्दक्षिणदेशस्य चत्वारो मुहम्मदीयराजानः सङ्घीभूय तालीकोटस्य जनशून्यस्थाने ( मैदान में ) रानारामेण सह युद्धं कृत्वा निहत्य च तं विजयनगरं विनष्टं विध्वस्तञ्च चक्रुः।

विजयानगरराज्यपतनान्तरं दक्षिणदेशस्य चतुर एव मुहम्मदीयराज्याधिकारिणः निर्भयान् स्वेच्छाचारिणः परस्परं कलहायमानान् दृष्ट्वा मुगलशासकास्तान् पराजित्य तद्राज्यानि मुगलसाम्राज्याधीनानि चक्रुः।

पश्चात् ( १ ) इमादुलमुल्केन बरारे संस्थापितमिमादशाहीराज्यं मुहम्मदराज्याधीनं जातम्। ( २ ) निजामशाहसंस्थापितं निजामशाहिराज्यमकबरेण स्वायत्तीकृतम्। ( ३ ) आदिलशाहसंस्थापितं बीजापुरे स्वतन्त्रराज्यमौरङ्गजेबेन मुगलराज्यान्तर्गतमकारि। ( ४ ) गोलकुण्डास्थाने कुतुबशाहसंस्थापितं कुतुबशाहिराज्यमौरङ्गजेबेन स्वायत्तीचकार।

( ५ ) बरीदेकासीमबरीदनिर्मितं बरीदशाहिराज्यमपि बीजापुरराज्यान्तर्गतं बभूव । एतेषु बरारराज्यं विहाय सर्वाण्येव राज्यानि सघीभूय विजयनगरराज्यमाक्रम्य विध्वंसितवन्त इति पूर्वमेव वर्णितम् ।

मुहम्मदतुगलकमरणात्पर यस्मै मूरोमुलतानलाहौरयोराधिपत्यं प्रदत्तवानसौ खिज्रखानो दिल्लीनगरं स्वाधिकारे संस्थापयामास । तन्मृत्यो. परमदूरदर्शिन. शक्तिशासनशून्या अन्येऽपि त्रयः शासका बभूवुः । तद्वंशीयान्तिम शासकमालमशाहं पञ्चनदसामन्तो बहलोललोदी राज्यच्युतं कृत्वा दिल्लीसिंहासनासीनो बभूव । आलमशाहश्च बदायूनगरे शान्तिमय जीवनं यापयन् पञ्चत्वमगात् ।

अथ बहलोललोदी तुगलकमुलतानापेक्षयाधिकं चतुरो वीर उदारहृदयो युद्धकालाया निपुणश्चासीत् । तस्मिन् दिल्लीराज्यसिंहासनासीने जाते देश' समृद्धिशाली सौख्यसम्पन्नो नवीनचेतनालङ्कृतश्च बभूव ।

बहलोलात्परं तत्पुत्र खिज्रखानो दिल्लीसिंहासनमारुह्य दिल्लीसिंहासनार्थमिच्छमान स्वकीयभ्रातरं बारबकखान पराजित्य बन्दिनं चकार । अनन्तरमसौ बङ्गमुलतानेन सह सधिं विधाय हुसेनशाहशर्किनं पराजित्य विहारप्रदेशं दिल्लीसाम्राज्याधीनं कृत्वा स्वप्रभावं संस्थापयामास । अथ धौलपुरग्वालियरचन्देरीराज्यशासकानपि विजित्य स्वनिर्मित-नवीनगरनामकस्थानं स्वराजधानीमकरोत् । अथ बहूनि मन्दिराणि विध्वस्य मस्जिदान् निर्मितवान् ।

तन्मृत्यो. परं तत्पुत्र इब्राहिमलोदी राज्याधिकारमाप्तवान् । किन्तु राज्यविभागेच्छुभिस्तत्कालीनस्वार्थसाधकैर्धनिकै जौनपुरे राज्यसिंहासीनो विहित इब्राहिमभ्राता जलाल इब्राहिमेनैव घा तितः ।

इब्राहिमलोदिनः स्वेच्छाचारेण कठोरदण्डेनासन्तुष्टा राजानः स्वतन्त्रा भवितुमिच्छन्तिस्म । कतिपये स्वतन्त्रा अपि बभूवुः । तदत्याचारेण त्रस्तः पञ्चनदप्रदेशाधिपतिर्दौलतखानो भारतमाक्रमितुं काबुलप्रदेशाधिपतिं बाबरं निमन्त्रितवान् । इब्राहिममुल्तानपितृव्य आलमखानोऽपि-

न्याबरादेव तद्विरुद्धं साहाय्यमभ्यर्थितवान्। इत्थं द्वाभ्यामेव प्रार्थितो महत्या सेनया सन्नद्धो बाबरो भारतमाक्रम्य पानीपतस्थाने सुल्तानेन सह युद्धं विधाय पराजित्य च तं स्वयं दिल्लीश्वरो बभूव।

## पूर्वमध्यकालीना सभ्यता

अपरिमितशक्तिसम्पन्नानां स्वेच्छाचारिणां सैनिकशासकानां दिल्लीसुलतानानामवरोधकः कुरानशरीफ एवैक आसीत्। तथापि कतिपये सुल्तानास्तमप्यनादृत्य स्वेच्छाचारपराः केचन च धर्माचार्यस्योपदेशं मानयन्तोऽपि निरङ्कुशा आसन्। स्वोत्तराधिकारस्याव्यवस्थया सुयोग्यः क्रीतदासोऽपि राज्याधिकारमाप्नुवन्नासीत्। केचन सुलताना अयोग्यान् स्वतनयान्विहायान्यानेव स्वोत्तराधिकारिणोऽकुर्वन्। यथा—इल्तुतमीशो रजियामेव स्वोत्तराधिकारिणीं निर्वाचितवान्। राज्ये मुहम्मदीयविदुषां धर्माचार्याणाञ्च प्रचुरः प्रभाव आसीत्। प्रायेण सुलतानास्तेषां परामर्शेन कार्यमकार्षुः, किन्त्वलाउद्दीनतुगलकौ तेषां परामर्शमपि नैव मानितवन्तौ। किन्तु सिकन्दरलोदिफिरोजतुगलकयोः शासनकाले धर्माचार्याणां प्रभावेऽभिवृद्धिः सञ्जाता।

राज्यकर्मसु साहाय्यार्थं बादशाहानां सविधे प्रधानमन्त्रिप्रतिनिधिमन्त्रिप्रधानन्यायाधीशप्रधानसेनाध्यक्षाश्वारोहिसैनिकाध्यक्षप्रभृतिविभागाध्यक्षाश्च संस्थिता आसन्। अन्येऽपि तत्तत्कार्यनिपुणा राजकर्मचारिण आसन्। प्रदेशाधिकारी सुलतानप्रतिनिधीत्युपाधिना विभूषितश्च भवति स्म।

साम्राज्येऽत्युच्चपदाधिकारिप्रमाणपत्रं दुर्लभम्, अथ चैतस्य पदस्य कोऽपि विश्वासोऽपि नासीत्। उच्चोच्चतराच्चपदप्रापणं नीचतमपदप्रापणं वा सुलतानेच्छाधीनमासीत्। यदा कदा राज्यहितमभिकाङ्क्षन्तो विदेशिनोऽपि बादशाहकृपया सर्वोच्चराजकर्मचारिपदमाप्तवन्तः। सर्वेऽपि नूतना बादशाहाः प्राचीनराजकर्मचारिणः निष्कास्य तेषां स्थानेषु

नूतनकर्मचारिणो नियोजयन्त आसन्। प्रान्तपालाः स्वकीय वेतन-रूप द्रव्यमादायावशिष्ट सर्वमेव द्रव्य सुलतानमभिपे प्रेषयन्ति स्म। प्रायः सर्वाधिकद्रव्यसंग्रहिण एव प्रान्तपालपदेषु नियोज्यन्ते स्म सुलतानैः भूमिकर विहायान्येऽपि बहुविधाः कराः प्रजासु समारोपिताः, किन्तु जजियाकरः केवल हिन्दुप्रजास्वेवासीत्। युद्धसमये प्रान्तपालाधीनहिन्दूसेनयान्वीय सुलतानसेना द्विगुणा जायते स्म। अश्वाः पदातयो दन्तिन उष्ट्राश्च प्रधानतया सेनायामन्विता भवन्ति स्म। सीमान्तप्रदेशरक्षार्थं कुशलसैनिका अपि असंख्या आसन्। मुगलाक्रमणावरोधार्थं कतिपयनूतनानि दुर्गाण्य पिनिर्मितानि सम्बभूवुः।

हिन्दूना धर्मशास्त्रानुसारं मुहम्मदीयाना हदीसानुसारञ्च दण्डव्यवस्थाविधानमभवन्। अपराधिनां कृते कठोरदण्डस्य शारीरिकयन्त्रणाप्रदानस्य च व्यवस्थया जनमत विरुद्ध जातम्। अत एव फिरोजतुगलकेन तादृशदण्डविधाननिर्मूलनस्य प्रायेण व्यवस्था कृता। धनिनो मुहम्मदीयाः स्वकीयदाससहिता वैभवपूर्णं जीवन यापयामासुः। यदा कदा प्रचलित द्यूत मद्यपानञ्चावरोद्धु सुलतानैर्व्यवस्था विहिता। दिल्लीनगरी च प्रस्तरेष्टकानिर्मितानेकसुन्दरभवनशालिनी बभूव।

कलाकोविदाना विदुषामाश्रयदायकाना मुहम्मदीयसुलतानाना समये मीरहसन देहल्वी-बदरचाचा-मीरखुसरोप्रभृतयोऽधिक प्रसिद्धाः पारसीभाषाकवयः क्रमबद्धेतिहासलेखका बभूवुः। धर्मशास्त्रस्य ज्योतिःशास्त्रस्य चानेके ग्रन्था विनिर्मिता बभूवुः। तथा बहूना संस्कृतपुस्तकानामरबीभाषायामनुवादोऽपि बभूव। मिथिलायां मैथिलीभाषायाः संस्कृतभाषायाश्च परमोन्नतिरासीत्। मैथिलकविकोकिलो विद्यापतिरेतस्मिन्नेव काले मैथिलीभाषाया बहूनि पद्यानि रचितवान्। विजयनगरसाम्राज्ये संस्कृतभाषायाः परमोन्नतिरभूत्।

उत्तरभारते हिन्दीभाषायाः परमोन्नतिः प्रचारश्चाभवत्। एतस्मिन्नेव समये सर्वप्रथमो हिन्दीकविः पृथ्वीराजसमकालीनश्चन्द्रवरदाई

तथा गोरक्षनाथरामानन्दकबीरप्रभृतयश्च हिन्दीभाषायां पद्यानि निर्माय महत्तमं योगदानमकार्षुः। प्रान्तीयभाषायाः समुन्नतौ च मुहम्मदीयशासकानां सहानुभूतिः सर्वदैवासीत्।

इल्तुतमीशकुतुबुद्दीनकाले निर्मितानां कलात्मकभवनानां मध्ये अजमेरमस्जिदः दिल्लीस्थकुतुबमस्जिदः कुतुबमीनारश्चातिप्रसिद्धाः। हिन्दूनां संन्यासिन इव तपस्त्यागमयजीवनसम्पन्ना मुहम्मदीयफकीरा अपि स्वकीयं धर्मं प्रचारयन्त आसन्।

मेवाडक्षत्रियवंशसमुद्भूतया मीराबाईनाम्न्या क्षत्रियकुलालङ्कारया च श्रीकृष्णभक्तिपरिपूर्णगानैर्भक्तिप्रचारो व्यधायि तस्मिन्नेव समये भारते वर्षे।

## बाबर-राज्यम्

यद्यपि बाबरो दिल्लीमागराञ्च जितवान्, तथापि भारतसम्राड् नाभूत्, यतोऽद्यापि राजपूताना विशेषतो मेवाडाधिपतेः संग्रामसिंहस्य विजयस्वप्नमनाशिष्टमेवासीत्। मेवाडाधिपतेरद्भुतयोद्धुः रणकर्मविशारदस्य युद्धे छिन्नैकपादभुजस्य शरीरस्थानि बहूनि व्रणचिह्नान्येव तस्यालौकिकं शौर्यं साहसिकत्वञ्च सूचयन्ति स्म।

आत्मकथायां बाबर उल्लिखति यद् यदाहं काबुलप्रदेशे आसम्, तदैव पत्रद्वारा संग्रामसिंहो मामसूचयत् यदिदानीमेव यदि भवान् दिल्ल्यामाक्रमणं कुर्यात्तदाहं भवतः साहाय्यं करिष्यामीति। किन्तु मयि समागते भारते स किमपि साहाय्यं नाकरोत्। कदाचिदनेनैवं विचारितं स्याद्बाबरो विजित्य दिल्लीं पराङ्मुखो भविष्यति तदा स्वेच्छयाहं सर्वत्राक्रमणं कृत्वा देशान् विजेष्यामीति। किन्तु दिल्लीं विजित्याप्यहं तत्रैवातिष्ठम्। तदा संग्रामसिंहस्य समक्षं युद्धादन्यः कोऽप्युपायो नैवावशिष्ट इति।

अत एव अफगानानां राजपूतानाञ्च महतीं सेनामादाय संग्रामसिंह

## हुमायु-राज्यम्

बाबरमरणानन्तरं तत्पुत्रो नासीरुद्दीनापरनामा हुमायुः राज्यसिंहासन-मलञ्चकार । कामरानोऽस्करी हिन्दालश्चेति त्रयोऽन्येऽपि बाबरस्यौरसाः पुत्रा आसन् । मरणसमये बाबरः स्वकीयं ज्येष्ठपुत्रं हुमायुं समुपदिष्टवान्—'तात ! स्वानुजान्प्रति सर्वदैव स्नेहपूर्णव्यवहारः कर्तव्यः । यथैतेषु कोऽपि क्लेशं नाप्नुयात्तथा कर्तव्यं त्वया' इति । पितृप्रदत्तोपदेशं सर्वदैव परिपालितवान् हुमायुः । किन्तु भ्रातरस्तं सर्वदैव क्लेशितवन्तः ।

अथ पक्षप्रथानुसारं राज्यं विभक्तमभूत् । हुमायुराज्याधिकाद्य काबुलकाश्मीरौ कामरानः सम्भलमक्करिमेवातालवरौ च हिन्दालः प्राप्तवान् ।

राज्यशासनमवाप्य हुमायुः सर्वप्रथममफगानान् विजेतुमियेष । युद्धेऽफगानप्रधानः पराजितो महमूदलोदी समारब्धे । अथाफगान-प्रधानत्वं शेरशाहः सम्प्राप्तवान् । भारताद्बहिर्निष्कासनार्थं प्रयतमानं शेरशाहं प्रति हुमायुराक्रमणञ्चकार, किन्तु युद्धमकृत्वैव तस्याधीनतां स्वीचकार शेरशाहः । सङ्ग्रामपराजिताफगानशरणदायकं गुजराताधिपं बहादुरशाहं विजित्य स्वाधिकारं सम्स्थाप्य यावदेव ततः परावृत्तो हुमायुस्तावदेव विजितो बहादुरशाहः समस्तगुजराते स्वाधिपत्यं सम्स्थापयामास । एतस्मिन्नेव समये माल्वाप्रदेशोऽपि मुगलहस्तान्निर्गतः ।

शेरशाहस्य पूर्वतनं नाम फरीद आसीत् । आजमगढान्तर्गत-सासारामक्षेत्रस्य सामन्त आसीत्तज्जनकः । विमातुर्दुर्व्यवहारेण दुःखितः शेरशाहः परित्यज्य सासारामं जौनपुरं गत्वा महता परिश्रमेण फारसी-भाषां समधीत्य स्वपितुर्निकेतं परावृत्तः । अथ तस्य योग्यतां विचार्य तज्जनकः स्वशासनाधीनग्रामाणां शासनप्रबन्धे तमेव नियुक्तवान् । सुव्यवस्थितशासनः फरीदः सामन्तानन्यानपि जिगाय । किन्तु सुप्रबन्धेन व्यथितहृदयाया विमातुर्दुर्व्यवहारेण स पुनरपि गृहं परित्यज्य विहार-प्रदेशीयस्यैकस्य सामन्तस्य गेहे दासभावं स्वीचकार ।

अथैकदा सिंहमेकं हत्वा स 'शेरशाहः, शेरखानो' वेत्युपाधिमाप्तवान्। क्रमशः शेरशाहः समस्त विहारप्रदेशं जित्वा वङ्गोपरि समाक्रमणञ्चकार। तथैव रोहताशदुर्गं विजित्य स स्वशक्तिसंवर्धनमप्यकरोत्। संवर्धितशक्तेः शेरशाहात्कालो हुमायुः शीघ्रमेव विहारं प्रस्थित्य चुनारदुर्गं स्वायत्तीचकार।

राजनीतिकुशलः शेरशाहः प्रत्यक्षयुद्धे स्वपराजयं विचार्य हुमायुं वङ्गे प्रस्थापितवान्। तत्र गत्वा विलासप्रियो हुमायुः व्यर्थमेव महान्तं कालं व्यतीयाय। अथ यदा हुमायुः स्वगृहं प्रस्थितस्तदा मध्येमार्गं तमवरुध्य शेरशाहो गङ्गातटवर्ति-'चौंसा'नामकग्रामसमीपे तेन सह महान्तं सङ्ग्राममकरोत्। तत्र पराजितो हुमायुः स्वप्राणरक्षार्थं गङ्गायां पपात, परं केनापि नाविकेन तत्प्राणरक्षणं कृतम्। इत्थं शेरशाहः सम्पूर्णं विहारं वङ्गञ्च स्ववशीचकार।

अथ हुमायुः कथमपि आगरायामागतः। कियता कालेन सैन्याभिनिवेशं कृत्वा स कन्नौजप्रदेशे गङ्गातटे शेरशाहेन सह युयुधे। किन्तु युद्धे मुगलान् पराजितान् दृष्ट्वा कथमपि प्राणान् रक्षन् स युद्धस्थलात्पलायितः। एवं दिल्ल्यामागरायाञ्च शेरशाहस्याधिपत्यं बभूव।

हुमायुरपि भारतसाम्राज्यं विहाय मरुस्थले सिन्धप्रदेशे च भ्रमन् एकस्मिन् दिवसेऽतिक्लेशितः अमरकभूपेन महान्तं सत्कारं लब्ध्वा परमां प्रीतिमविन्दत। अत्रैव भारतस्य परमप्रतिभाशालिनः सम्राजोऽकबरस्य जनिरभूत्। निर्धनत्वात् कमपि पुत्रजन्मोत्सवं नैव चकार हुमायुः। पुनः कान्धारस्थितेन स्वभ्रात्राप्यपमानितो भूत्वा स फारसं जगाम।

शेरशाहो दिल्लीसाम्राज्यं लब्ध्वा मालवा रायसीनं सिन्धञ्च विजित्य जोधपुरनरेशं मालदेवं चातुर्येण स्ववशीकृत्य कालञ्जरमाक्रान्तवान्। कालञ्जरविजयसमय एव रासायनिकद्रव्येऽग्निः सलग्नः, तेन ज्वलितशरीरः शेरशाहः सन्ध्यायां मरणमापेदे।

मध्यकालीनभारतीयशासकेषु शेरशाहस्य नाम सबहुमानं गृह्णन्ति

जना.। स राज्यस्यात्युच्चादर्शं रक्षन् कथयति स्म यन्मानवो यथोचितद्रव्यैः समलङ्कृतो भवेत्तथैव बहुपरिश्रमशीलोऽपि भाव्य इति। अत्याचारात्प्रजानां रक्षणमत्याचारदमनं साम्राज्ये सुखशान्तिसंस्थापनं राजमार्गनिर्माणं सैनिकानां सौविध्यप्रदानञ्चेति तस्य शासनस्य पञ्च लक्षणान्यासन्। शेरशाहो विदुषामाश्रयदाता विद्यालयमहाविद्यालयसंस्थापकः प्रजाहितचिन्तको हिन्दुभिः सह भ्रातृवद्व्यवहारकारकः सनियमजीवनयापकः सुन्नीसम्प्रदायावलम्बी मुहम्मदीय आसीत्। स प्रातः समुत्थाय कृतस्नानो नमाज पठित्वा राजकर्मणि संलगति स्म। केवलं भोजनसमय एव क्षणं कार्येभ्यो विरम्य पुनः स्वकार्ये दत्तावधानो भवति स्म। तस्मै कृषकाः प्राणेभ्योऽपि प्रिया आसन्।

शेरशाहमृत्योः परं तद्राज्याधिकारिणोऽतीवोग्रस्वभावस्य बलशालिनः शासनेच्छोस्तत्पुत्रस्य जलालसलीमस्यैव समयेऽफगानदेशस्यैकता विनष्टा। सलीममृत्योरनन्तरं तत्पुत्रं द्वादशवर्षदेशीयं राज्यसिंहासनासीनं फिरोजं निहत्य मुबारकखानः स्वयमेव राज्यसिंहासनमलञ्चकार। स राज्यसञ्चालनकार्यं हेमूनाम्नि मन्त्रिणि समर्प्य चुनारगढमधिवसन् विलासमयं जीवनं यापयामास।

पारसनादशाहप्रदत्तचतुःसहस्रसैनिकसम्पन्नो हुमायुर्विजित्य कामरानं काबुलकन्दहारयोः स्वाधिकारं संस्थाप्य पुनर्भारतं विजेतुं प्रतस्थे। लाहौरं विजित्य सरहिन्दसमीपे सिकन्दरञ्च पराजित्य दशवर्षानन्तरं स पुनर्दिल्लीं जिगाय। महोदारचेता दयालुः बान्धवैः सह सौजन्यप्रदर्शको ज्योतिःशास्त्रपारगो हुमायुरेकदा स्वकीयपुस्तकालयसोपानात्पतित्वा ममार।

## अकबरराज्यम्

हुमायुमरणानन्तरं त्रयोदशवर्षीयस्तत्पुत्रोऽकबरो राज्यसिंहासनासीनो बभूव। अकबरराज्यसिंहासनारोहणकाले अतीव सङ्कटसम्पन्ना

मेवावधार्य ग्रमुनाऽऽलोचित यद् यावदह शिशोदियाकुलशेखरीभूत मेवाडाधिपति न जेष्यामि तथा चित्तौड रणथम्भोरयोः स्वाधिपत्यन्नैव सस्थापयिष्यामि तावद्भारताधीशोऽपि नैव भविष्यामीति ।

बहुविचारानन्तर महत्या सेनया सह अकबरश्चित्तौडदुर्गं विजेतुं प्रस्थितवान् । तत्कालीनचित्तौडाधिपती राणोदयसिंहोऽकबरभयात् पलायितः, किन्तु सेनापतिर्जयमल्लो मुहम्मदीयैः सह युद्धं कुर्वन् वीरगतिमापेदे । अनन्तर विलुप्तधैर्याः क्षत्रिया गैरिकवस्त्र परिधाय स्वभार्याश्चिताप्रवेशार्थमादिश्य युद्ध कुर्वाणा एव पुरन्दरपुरातिथयो जाताः । एव चित्तौडदुर्गेऽकबरस्याधिपत्यमभूत् । उदयसिंहस्तु चित्तौडदुर्गादन्यत्र उदयपुरनामक नगरन्निर्माय स्वावास व्यधत्त ।

चित्तौडपतनात्परमकबरो रणथम्भोरदुर्गं कालञ्जरदुर्गञ्च सखेल जिगाय । अन्येऽपि बीकानेर जैसलमेराद्यधिपतयोऽकबराधीनता स्वीचक्रुः । एवं राजस्थानेऽकबरस्य पूर्णः प्रभावो जातः । किन्तु मेवाडयुद्धस्याधुनापि नान्तो बभूव । उदयसिंहमरणात्पर तत्पुत्रः प्रतापसिंहो मेवाडाधिपतिर्भूत्वा पुनश्चित्तौडदुर्गं विजेतुं दृढं सकल्पितवान् । परमोत्साहसम्पन्नस्याद्वितीययोद्धू राणाप्रतापसिंहस्य मनसि राणाकुम्भा सग्रामसिंहयोर्वीरत्वपूर्णां सग्रामगाथा श्रुत्वा अपूर्वा चेतना जागरिता । तेन मुगलैः सह सन्धिमस्वीकृत्याशो युद्धायैव स्वमनसि विचारितवान् ।

एकदा क्षत्रियैः सह कृतवैवाहिकसम्बन्ध स्वाभिमानसम्पन्नश्चाकबरः परमविक्रमशालिन क्षत्रियकुलाङ्गार बुद्धिमन्त सम्राजः प्रियपात्र विश्वासभूमिञ्च स्वश्यालपुत्र मानसिंह क्षत्रियकुलालङ्कारस्य महाराणाप्रतापसिंहस्य समीपे स्वाधिपत्यस्वीकरण सन्देशं प्रदाय विससर्ज । तस्यागमनवार्ता श्रुत्वा प्रतापः ससम्मान त स्वागतेनाभिनन्द्य भोजनावासव्यवस्थामकरोत्तस्य । किन्तु भोजनसमये सहभोजनार्थं नागतवान् प्रतापः । भोजनपरिवेषणकर्मणि सलग्नं प्रतापपुत्र पप्रच्छ मानसिंहः—क्व वर्तते प्रताप-

सिंहः ? मया सह भोजनार्थं स नागमिष्यति किमि'ति। 'तस्य शिरसि महती वेदनाऽस्ति, अतोऽसावद्य भोजनमेव न करिष्यती'ति प्रोक्तं प्रतापपुत्रेण। ज्ञातकारणो मानसिंहस्त्वरितमेव भोजनं विहायोत्तिष्ठन् प्रोवाच—'शीघ्रमेव समादाय शिरोवेदनौषधमागमिष्यामि दिल्लीतः' इति। वचनमिदं श्रुत्वैव परमाभिमानी प्रतापः 'स्वपितृस्वसृपतिना सहैवागन्तव्यमि'ति प्रोवाच। एतेन प्रतापवचनेन क्रोधज्वालामालाकुलितमना मानो घोटकमारुह्य दिल्लीं प्रतस्थे। गतवति तस्मिन् क्षत्रियकुलदूषणे प्रतापसिंहो भोजनस्थानं गङ्गाजलेन पवित्रीकारितवान्।

दिल्लीं गत्वा मानसिंहः स्वकीयापमानकरं क्षत्रियकुलभूषणस्य वचनमभिमानञ्च श्रावितवानकबरम्। श्रुत्वैव मानसिंहवचनमकबरः सर्वसाङ्ग्रामिकास्त्रसुसज्जितां महतीं सेनां मानसिंहेन सह महाराणाप्रतापसिंहं विसर्जयामास। सा च गत्वाऽउदयपुरमवरुरोध। किन्त्वहो साहसं क्षत्रियाणाम्! मुष्टिमेयसैनिकसम्पन्नोऽपि प्रतापः प्रियघोटकं चेटकमारुह्य मुगलैः सह योद्धुं हल्दीघाटीनामकं स्थानमाजगाम।

तत्र पदातीनां पदातिभिरश्वारोहिणामश्वारोहिभिर्गजारोहिणां गजारोहिभी रथारोहिणां रथारोहिभिश्च चमच्चमायमान-खड्गतोमरप्रासकुन्तादिशस्त्राणां खणत्खणायमानेन प्रवृद्धश्मश्रूणां मुण्डितकेशचूडानां मुहम्मदीयानां हस्तशिरोग्रीवाद्यङ्गकर्तनसमुत्पन्नछपच्छपायमानध्वनिना वीरारोहिणां धावतां सैनिकानां चूर्णतां हस्तिनाञ्चीत्कारेण वायुवेगसमानानां विविधयुद्धालङ्कारालङ्कृतानां वागुरासम्पन्नानामावर्तशुक्तिदेवमणिलक्षणलक्षितानामश्वानां हेषितेन लम्बायमानगलानामुष्ट्राणां विकृतेन विरावेण शीघ्रगामिनां ध्वजपताकातोरणोपशोभितानां रथानां कचकचायमानचक्रस्वनेन हन्यतामाक्रम्यतां बध्यतां कर्त्यतामित्यादिशब्दं कुर्वतां धावतां वीराणां गर्जनेन महत्कोलाहलपरिपूर्णः सैन्यादिपादाभिघातसमुत्थितधूलिसम्पन्नः समरः समजनि।

तत्र 'हर हर महादेव, जयत्वेकलिंग.' इति गर्जतां वीराणां ध्वनिर्गगनं पुस्फोट । अपूर्वशक्तिसम्पन्नाः स्वमातृभूमिरक्षणतत्पराः क्षत्रिया अभूतपूर्वोत्साहसम्पन्नं महान्तं समरं मानसिंहसरक्षितैर्मुहम्मदीयैः सहाकुर्वन् । युद्धभूमौ मानसिंहमन्विष्यतो मुहम्मदीययूथमध्यगतस्य प्रतापस्य समुत्पन्ने प्राणसङ्कटे स्वामिभक्तिसम्पन्नौ क्षत्रियकुलभूषणौ मन्नाझलानामकौ वीरौ 'छत्रेण परिज्ञायमानं प्रतापं मुहम्मदीया धक्ष्यन्ति चेत् क्षत्रियाणां गौरवमेव समाप्तिमाप्स्यती'ति विचार्य तयोरेकः प्रतापशिरसि संस्थितं छत्रं स्वशिरसि अधारयत् । तेन चायमेव प्रताप इति मत्वा स युद्धाभिरतैर्मुहम्मदीयैर्निहतः ।

ततोऽपि भयङ्करे प्रवृत्ते युद्धे प्रतापो मरणात्पलायनमेव वरं विचार्य रणस्थलात्पलायितो बभूव । किन्तु द्वौ मुहम्मदीयौ तत्पृष्ठगावेवास्ताम् । अकबरदासभूतः प्रतापसिंहभ्राता शक्तिसिंहस्तस्य पदे पदे प्राणसङ्कटमवलोक्य मुहम्मदीयौ तरसैव खड्गेन निहत्य प्रतापचरणयोः पपात । भ्रात्रोरपूर्वं प्रेमसम्मेलनं बहुवर्षानन्तरमभूत्तत्र ।

प्रतापस्य प्रियघोटकश्चेटकस्तत्रैव ममार । चेटकार्थं विलपमानः प्रतापः शक्तिसिंहप्रदत्तमश्वमारुह्य कतिपयावशिष्टसैनिकभार्यापुत्रपुत्रीसम्पन्नः काननमाश्रितवान् । प्रतापसिंहमलब्ध्वा मानसिंहो विजयिनमप्यात्मानमविजयिनमेव मेने ।

भार्यापुत्रपुत्रिकाक्षत्रियामात्यानुचरसहितः प्रतापः कष्टमयजीवनं यापयन् यदा कदा घासरोटिकां भक्षयन् अरावल्याः कानने पर्वतगुहासु चक्राम । तत्रापि मानसिंहादिप्रधानसहिता मुगलास्तमन्विष्यमाणा अत्र प्रतापोऽद्य श्वो वा प्रेक्ष्याम इति विचारयन्तो धावन्त एव बभूवुः । किन्त्वभूतपूर्वसङ्कटमग्नोऽपि मानी सूर्यकुलयशोवर्धनो हिन्दुमानरक्षकः प्रतापो मुगलाधीनतामयशस्करीमवधार्य वनवासमेव श्रेयस्करं मेने ।

किन्तु प्रतापस्य धैर्यस्खलनमेकस्मिन्दिवसे तदा जातं यदा

धनमार्जारेण हस्ताद् बलादधृताया घासरोटिकाया तत्कुमारी करुण-ध्वनिपरिपूर्णं रोदनञ्चकार। तस्मिन्समये शिलाखण्डशिरा नमान- प्रतापो घटनामिमां विलोक्य इत्थं विचारितवान्—यो हि राज मुकुटस्तत्सन्ततीनां क्षणमात्रमपि सुखं न ददाति, यस्य रक्षार्थं घासरोटिकाया कृते बालिका करुणं विलपति, कष्टदायकस्य तस्य रक्षणादरक्षणमेव श्रेय। भ्रातरो बान्धवाश्च सर्वे एयाकबराय कन्या भगिनीश्च प्रदाय सुखेनाश कुर्वन्ति दासभावापन्ना। किन्त्वहमेव आर्य-स्वाभिमानरक्षार्थं मृत्युना सह युध्यमानो मेवाडवासिजनानां जीवनाहुतिं कुर्वन् राजनीतिपरिपूर्णमनुचितं करोमि। अकबरश्च यदुचार स्वकीय दूतैसंवादं मम सन्निधौ प्रेषयन्त्येकवारमपि प्रतापन मस्त पराजयं स्वीकुर्ते तस्य सम्मानरक्षणं सर्वदा भविष्यतीति। किन्त्वहं सर्वदैव वार्तामिमां तुष्णीकृत्य अकबरप्रार्थनावहेलनामकरोम्।

सर्वमेव विषयं सम्यक्तया विचार्य प्रतापो दूतेन स्वहस्ताक्षरान्वितं सन्धिपत्रमेकं दिल्लीश्वरस्याकबरस्य समीपं प्रेषयामास। गत्वा च दूतो राज्यसिंहासनासीनस्याकबरस्य हस्ते सन्धिपत्रं ददौ प्रतापस्य।

पुनः पुनः सन्धिपत्रं पठतोऽप्यकबरस्य चेतसि प्रतापस्यैवेदं हस्ताक्षर मिति विश्वासो नाभूत्। ततः सर्वे सभासदोऽपि पत्रं विलोक्य विस्मिता प्रसन्ना अपि महाराणावंशी विवाहितस्य प्रतापहस्ताक्षरपरिचायकस्य अकबरदासभूतस्य प्रतापभक्तिशालिनः पृथ्वीराजस्य हस्ते पत्रं प्रदातुं कथितवन्तः। अनन्तरमकबरहस्तात्पत्रमादाय प्रतापहस्ताक्षर-मवलोकयत एव पृथ्वीराजस्याधः स्थिता भूमिः पातालं गता, नेत्रे ऽन्धकारपरिपूर्णे जाते। मेवाडराजमुकुटमकबरचरणं लिहन् अचिराद् द्रक्ष्यामिति विचारयत् स सपदि तिमिराच्छन्न इव बभूव।

क्षणं विचार्य पृथ्वीराजो बादशाहमुवाच—'देव! इदं प्रतापस्य हस्ताक्षरं नास्ति, पत्रेऽस्मिन् सन्देहो मम। पत्रमिदं सत्यं मत्वा-नन्दो नैव विधेयोऽस्माभिः, पूर्वमेवास्य सत्यताया अन्वेषणं कर्तव्यम्।'

कारागारे दूतं निक्षिप्य अकबरेण च मर्मभिदं विचार्य पत्रं लिलेखितुमाज्ञा प्रदत्ता पृथ्वीराजम् ।

अथ गृहागतमौदासीन्यपूर्णमुखं पृथ्वीराजमवलोक्य तत्पत्नी पप्रच्छ—'नाथ ! केन हेतुनाद्य भवतो मुखं शुष्कं कमलमिव सञ्जातम् ?' पृथ्वीराजः प्रतापपत्रं स्वपत्न्या हस्ते प्रदाय सर्वमेवोदन्तजातं स्वसन्तापकारणमकथयत् । पृथ्वीराजपत्न्यपि प्रतापपत्रमवलोक्यातीव सन्तप्तमानसा जाता । कृतकर्तव्यनिश्चयः पृथ्वीराजः प्रतापविषये निम्नलिखितं पत्रं लिलेख—

'देव शिशोदियाकुलभूषण ! निर्लज्जाः पत्नीदुहितृस्वसृभ्रातृपुत्रसहिता हिन्दवः क्षत्रियाश्चाकबरहस्ते विक्रीताः । एतादृशेषु कुलाङ्गारेषु प्रताप ! त्वमेवैकाकी दिव्यज्योतिस्स्वरूपो हिन्दुमानरक्षकोऽसि । अकबरहस्ते विक्रीतेष्वपि सर्वेषु क्षत्रियेषु त्वमेव भारतमातुर्मुखं निभालयसि । एकस्मिन्दिवसेऽकबरो संसारान्महाप्रस्थानं करिष्यति, सहैव तेन संसारात्तस्यापयशोऽपि गमिष्यति । किन्तु भवतो नामामरतामाप्स्यति ।

अथ च भारते भवत्येव क्षत्रियत्वम् । यथा वनवासी भवानिदानीं शोभते, तथा मुगलाधीनो शोभिष्यते किम् ? यथाऽद्य मुगलाधीनस्य मम भवति श्रद्धाऽस्ति, तथाग्रे भविष्यति किम् ? यथोन्नतश्मश्रु कृत्वा भवानिदानीं चलति, तथा पुनश्चलिष्यति किम् ? कश्च भाविनीनां सन्ततीनां कृते आदर्शो भविष्यति ? कस्य च क्षत्रियस्य कथा प्राते चत्वरे समायाश्च भाविनो जना गास्यन्ति ? यथा विचारणा भवतेदानीं कृता तथा पूर्वमेव कथं न कृता ? किमर्थं कष्टं सोढम् ? वनवासो व्यर्थं, गृहपरित्यागेन राज्यपरित्यागेन घासरोटिकाभक्षणेन गिरिगुहासु वासेन मुगलसैनिकानां मयादितस्ततोऽद्योपानपरिधावनेन किं फलं लब्धम् ?

मुगलारे ! भवतैव हृदि विचार्यताम् । सत्यव्रतं पालयन् स्वाभिमान-

रक्षार्थं प्राणत्यागोऽपि वरम्, निरभिमानिनामश्वरणादधूलिं लिहता देशजातिद्रोहिणा क्षत्रियाणां का गतिर्भविष्यति ?

क्षत्रियकुलालङ्कार ! मम वाक्यं मानयित्वा मुगलैः सह सन्धिवार्त्तापि परित्यज्यताम् ।' इति ।

ततः राणाप्रतापदूतं कारागारान्मोचयित्वा विपुलैर्द्रव्यैः परितोष्य पत्रसहितं प्रतापसविधे पुनः प्रेषितवान्पृथ्वीराजः । शीघ्रगामिनमश्वमारूढो दूतोऽसौ समागत्य सन्धिपत्रलेखनपश्चात्तापान्वितस्य प्रभूतग्लान्यवनतमस्तकस्य स्वनैर्बल्ये क्रोधान्वितस्योद्विग्नचित्तस्य प्रतापस्य हस्ते पृथ्वीराजलिखितं पत्रं प्रदत्तवान् ।

बहुवारं पत्रं पठित्वा परमप्रसन्नः प्रतापः पृथ्वीराजसकाशं पत्रोत्तरमिदं लिलेख—'भगवत एकलिङ्गस्य* शपथं कृत्वा लिखामि अहं तुर्कबादशाहसमक्षं कदापि नतमस्तको नैव भविष्यामि । सूर्यः पश्चिमदिशि नोदेष्यति । यावन्मम खड्गो मुगलानां शिरस्सु भ्रमति तावत्त्वमप्युन्नतश्मश्रुर्भव । राणावंशजः प्रतापोऽकबराधीनतां नस्वीकरिष्यति, न स्वीकरिष्यति, नैव स्वीकरिष्यति' इति ।

किन्तु कष्टमयजीवनाद् व्याकुलो भूत्वा प्रतापः स्वमातृभूमिं मेवाडं परित्यज्यान्यत्र गन्तुमना यावदेव बभूव, तावदेव 'जयतु प्रताप' इति ध्वनिं सहसैव श्रुतवान् । समागतो भामाशाहः पपात प्रतापचरणारविन्दयोः । 'नाथ ! भवन्तमेवान्विष्यन्नहमपि वने वने विचरामि । भवतो भुजच्छायायां मया बहूनि धनानि समुपार्जितानि । सर्वाण्येतानि भवत एवे'त्युक्त्वा यावता द्वादशवर्षाणि यावत्पञ्चविंशतिसहस्रसैनिकान् वेतनभोगिनो विधाय युद्धं कर्तुं शक्यते, तावन्तं धनराशिं समर्प्य प्रतापचरणयोर्भामाशाहः प्रार्थयामास—'प्रभो ! एतेन धनराशिना वेतनभोगिनः सैनिकानेकत्रीकृत्य पुनर्विजयोन्मुखो भवतु भवानि'ति । हर्षो-

* उदयपुरात्सार्धक्रोशवर्तिपार्वतप्रदेशस्थिते विशाले मन्दिरे विराजमानो राणाकुलाराध्यदेवः शिवः ।

स्फुल्लमना द्विगुणोत्साहसम्पन्नश्च महाराणाप्रतापो वेतनभोगिनीं सेना-मेकत्रीकृत्य जयत्वेकलिङ्ग इति ध्वनिं कुर्वन् ससैनिको गिरिदुर्गा-न्निःसृत्य मेवाडस्थितानेनेकान् दुर्गाधिकारिणो मुहम्मदीयान् पराजित्य कुम्भलगढोदयपुरप्रभृत्यनेकानि दुर्गाणि जिगाय। किन्तु चित्तौडा मुगलाधीन एवासीत्। पुनरुदयपुरमधिवसन् महाराणाप्रतापसिंहः स्व-विजयोपलक्ष्ये महान्तमुत्सवं चकार। दीनानाथेभ्यो ब्राह्मणेभ्यश्च प्रचुर धन ददौ। एवभूतो महाप्रतापशाली प्रताप. पञ्चविंशतिवर्षाणि राज्यं कृत्वा पुरन्दरपुरातिथिर्बभूव।

वस्तुतो महाराणप्रताप एवैकाकी क्षत्रियमानरक्षकः। अन्ये सर्व एव मुगलाधीना भूत्वा स्ववंशमर्यादां परित्यक्तवन्तः। प्रतापकीर्तिं गायन्तो-ऽद्यापि जनाः सन्तोषं नाप्नुवन्ति। यद्यपि चित्तौडदुर्गं प्रतापाधीनं नैव बभूव; किन्तु देशस्य समक्षं यो ह्यादर्शस्तेन समुपस्थापितः, स तु भारतीयजनानां विशेषतः क्षत्रियाणां कृते महान् गौरवस्य विषयोऽस्ति। जयतु मातृभूमिरक्षको मेवाडमुकुटभूतः क्षत्रियकुलमूर्धन्यः प्रतापः।

एतस्मिन्समयेऽन्यानपि देशान्विजित्वा अकबरः परस्पर कलहं कुर्वतो गुजरातभूपान्स्ववशीकृत्य दिल्लीं समागतः। पुनरपि समुत्पन्नायां गुजराता-शान्त्यां तत्र गत्वा सर्वानेवाशान्तिकारकान् समाप्यार्थिकव्यवस्थायां टोडरमलं नियुज्य सम्राडकबरो दिल्लीं परावृत्तः।

तदनन्तरं वङ्गमुलताने मृते स्वतन्त्रमुद्घोष्यमाणं दाउदखान निहत्य वङ्गोऽपि दिल्लीराज्ये विलीनीकृतोऽकबरेण। एवं सम्पूर्ण एव समयो राज्यविद्रोहिणां दमनकर्मण्येव गत.। सर्वप्रथमं वङ्गे विहारे च विद्रोहारम्भोऽभूत्। नूतनकर्मचारिभिर्नूतननियमप्रवर्तनेन प्रजासु महत्यशान्तिः समुत्पन्ना। सामन्तानामधिकारनिरीक्षणेन तेऽपि भय-भीताः सञ्जाताः। राजप्रधानकर्मचारिणामाशया तद्वशवर्तिनः कर्म-

चारिणो लोभाभिभूता प्रजाम्य प्रभूतभुक्तीच गृहीतवन्त । एतेनापि जना व्याकुलतामापन्ना ।

अथ मुहम्मदीया अपि मुहम्मदीयधर्मद्रोहिमुगलमकबरं विचार्य तद्विमातृज मिर्जाहकीम राज्यसिंहासनासीन विधातु विचारितवन्त । जौनपुरस्थमुहम्मदीयधर्माचार्येण बादशाहो मुहम्मदीयो नास्तीदानीमिति निर्णय प्रदत्त । अकबरश्च स्वधर्मे प्रस्तरवत्सुस्थितो विद्रोहिणा दमनमारब्धवान् ।

मिर्जाहकीम कूटचक्रकारिभि सूचना प्राप्य दशसहस्राश्वारोहिभि सह पञ्जाबमाक्रान्तवान् । वृत्तमिदमवाप्याकबरोऽपि महत्या सेनया सम्पन्नो मिर्जाहकीमेन सह योद्धं तत्र गतवान् । किन्तु समुपस्थितेऽकबरेऽसौ पलायितो भूत्वा काबुल जगाम । तत्रापि पृष्ठगस्याकबरस्याधीनता स्वीकृत्य मुक्तो मिर्जा कियत्कालानन्तरमेव पञ्चत्वमगात् । इत्थ काबुलोऽपि मुहम्मदीय साम्राज्याधीनोऽभूत् ।

समाप्ते काबुलकलहे पश्चिमोत्तरप्रदेशपरिस्थितौ ध्यान ददानो बादशाहोऽफगानप्रदेशादप्यग्रे तूराने सस्थापितं स्वसाम्राज्यकण्टकीभूत नूतन राज्य तदधीश्वरमुजबेकञ्च विजेतु वीरबलभूप सेनासमावृत विधाय प्रेषयामास । यद्यपि तस्मिन् युद्धे मृतो वीरबल, किन्तु तस्य सैनिका नूतनराज्यसस्थापकमुजबेक विजित्य तद्राज्य मुगलराज्याधीन कृतवन्त । काश्मीरे स्वाधिकार सस्थाप्य मुलताने सिन्धे च स्वशासन स्थापितवन्तो मुगला । विलोचिस्तान कन्धारञ्च नित्वा पश्चिमोत्तर सीमा तरक्षणपूर्णा व्यवस्था कृताकबरेण । उत्कलप्रदेशे विजिते स्वसाम्राज्याधीने कृते च पूर्वसीमान्तरक्षणस्यापि प्रश्न समाप्त एवाभूत् ।

इत्थमुत्तरभारते स्वशासन सस्थाप्याकबरो दक्षिणभारतस्थितानि मुहम्मदीयराज्यानि जेतुमियेष । अथ दक्षिणसमुद्रतटे पुर्तगाल निवासिनामपि तस्मिन् समये शक्तिवर्धनमकबराय कष्टकरमासीत् । दक्षिणभारतीयराज्याधीशाना परस्परं वैमत्यमपि तस्मिन् समये

साम्राज्येऽकबरस्येच्छयैव सर्व एव राजकर्मचारिण उन्नतस्थानमवनत-स्थानं वा प्राप्तवन्त आसन्। बादशाह एव सर्वप्रधानः साम्राज्यस्य। तस्य कार्यकरणार्थं प्रधानमन्त्री अर्थमन्त्री न्यायाधीशो भोजनाध्यक्षो दानाध्यक्षश्च प्रधाना बभूवुः। अन्येऽपि तेषां सविधे कतिपयकार्यवाहका जना आसन्। बादशाहः स्वयमेव सभायां समुन्नतस्थाने समुपविश्य राजकीयकार्यविचारं कुर्वन्नासीत्।

## जहांगीर-राज्यम्

अकबरानन्तरं सलीमः, नूरुद्दीनमुहम्मदजहांगीरबादशाहगाजी-इत्यपरनामा सिंहासनासीनो बभूव। तस्य स्पष्टवादितया शिष्टाचारेण वाक्यपाटवेन च सर्व एव जनाः प्रसन्ना भवन्त आसन्।

खुसरो जहांगीरस्य ज्येष्ठपुत्र आसीत्। अकबरस्य समये जहांगीरेण समुपस्थापिते विद्रोहे राजा मानसिंहोऽजीजकोका च द्वावपि मिलित्वा जहांगीरपुत्रायैव राज्याधिकारं प्रदातुमसफलं कूटकृत्यमपि कृतवन्तौ। एतेनैव कारणेन खुसरोजहांगीरयोः परस्परं वैमनस्यमभ्यभूत्। प्राप्ते राज्यशासनाधिकारे जहांगीरः खुसरोशाहजादं बन्दिनमपि कृतवान्। एतेनैव कारणेन दुःखितः खुसरोरेकस्यां सन्ध्यायां सार्धं निघ्नताश्वारोहिभिः राजभवनं विहाय पलायमानः पञ्जाबं गत्वा लाहौरोपरि स्वाधिकारं समस्थापितवान्। तत्र सिक्खगुरुमर्जुनं समागत्य तस्माद्‌आशीर्वचनञ्च सम्प्राप्तवान्। अनन्तरं जहांगीरोऽपि लाहौरं गत्वा युद्धे तं पराजित्य बन्दिनं विधाय तस्य सार्थान् महता कठोरदण्डेन योजितवान्। सिक्खगुरुमर्जुनञ्च शूलमारोपितवांश्च। जहांगीरेण स्वगुरौ निहते सर्व एव सिक्खा मुहम्मदीयविरोधिनो बभूवुः।

जहांगीरस्य जीवने सर्वाधिकमहत्त्वपूर्णघटना नूरजहानाम्न्या सुन्दर्या सह विवाहसम्बन्ध एवासीत्। नूरजहा चैका बुद्धिमती नारी आसीत्। सा खलु राज्यस्य कठिनतममपि कार्यं तीक्ष्णबुद्ध्या शीघ्रमेवावगम्य तदनुकूलं प्रतीकारञ्चापि जहांगीरं समये सूचयन्त्यासीत्। जहा-

गीरोऽपि सर्वमेव राज्यभारं तस्यै समर्प्य स्वयं निश्चिन्तो भूत्वा विलासिताया मग्नो जातः। नूरजहाँ च दीनानाथेषु दया निर्धनेभ्यो मुहम्मदीयेभ्यः कन्योद्वाहार्थं धनञ्चापि ददत्यासीत्।

अथ यद्के विद्रोहं कुर्वन्तमुसमानखान शाहजहानः निर्दयं पराजितवान्। एवं मेवाड़ाधिपतेर्वीरशिरोमणेः प्रतापसिंहस्य महाप्रस्थानान्तरं तत्पुत्रोऽमरसिंहो यदा राजसिंहासनमलञ्चकार, तदा जहाँगीरः स्वपितुर्नीत्यनुसारं राणामरसिंहविरुद्धां युद्धसन्नद्धां महतीं सेनां प्रेषितवान्। पुनरपि राजपूतवीरा एव पराजिता बभूवुः। नूतनो महाराणा च बादशाहस्याधीनतां स्वीचकार। किन्तु मेवाडाधिपेनामरसिंहेन सह शाहजहानो मित्रतापूर्णव्यवहारमकरोत्। इत आरभ्य औरंगजेबशासनपर्यन्तं मुगलानां सुहृदिवासीन्मेवाडाधिपतिः।

दक्षिणभारतेऽपि स्वपितुर्नीतिमेवानुससार जहाँगीरः। तदाऽहमदनगरे निजामराज्यस्य व्यवस्था अबिसीनियानिवासिनो मलिकाम्बरस्य हस्तगतासीत्। स खलु योग्यः प्रतिभाशाली शासकः। अम्बरोऽपि स्वं स्वतन्त्रं घोषितवान्। तद्विरुद्धं मुगलसेनाध्यक्षाः प्रेषिता अप्यसफला एव जाताः। पुनः शाहजादं खुर्रमं महत्या सेनया प्रेषितवान् शाहजहानः। स च मलिकाम्बरं सन्धिं कर्तुं निवशीचकार। जहाँगीरो खुर्रमस्य सफलताया शाहजहानस्योपाधिं प्रदत्तवान् तस्मै। किन्तु दक्षिणे सदैवोपद्रवेण मुगलसैनिकाना तैः सह युद्धमेवासीत्। तथोत्तरभारतेऽपि राजनीतिकोपद्रवोऽप्यधिकः सम्बभूव। मलिकाम्बरस्य युद्धप्रणाल्या मुगलानां महती हानिरभूत्। किन्तु मृते मलिकाम्बरे तदुत्तराधिकारिणं हम्मीदखानमुत्कोचेन सन्तोष्याहमदनगरपर्यन्तं स्वकीयं शासनं संस्थापितवान् मुगलबादशाहः। लाहौरे समुत्पन्नेन शाहजादशाहजहानेन सह नूरजहाया: पूर्वमतीव मेलनमासीत्। किन्तु कालान्तरे द्वयोर्मनोमालिन्यमभूत्। नूरजहा सर्वमेव राज्याधिकारं स्वहस्तगतं कर्तुमियेष।

अत एव सम्राट् शाहजहानपरित्यज्य तत्कनिष्ठभ्रातरं शहरयारं राज्याधिकारिणं विधातुमकामयत।

एतस्मिन्नेव समये ईरानवासिनः कन्दहारे स्वाधिपत्यं सस्थापितवन्तः। ।जहाँगीरो महत्या सेनया शाहजहानं कन्दहारं गन्तुमादिष्टवान्। किन्तु मदीयानुपस्थितौ नूरजहा मद्विरुद्ध कूटकृत्यं करिष्यतीति विचार्य स कन्दहारं नैव गतवान्। एतदवसर समवाप्य नूरजहा तद्विरुद्धा बादशाहस्य समक्ष महतीमिन्दामकरोत्, तस्मै जीविकार्थं प्रदत्ता भूमिमपहर्तुञ्च बादशाहमकथयत्। स्वीकृतवांश्च बादशाह एनामभ्यर्थनाम्।'

मदीयसङ्गः एव मा रक्षिष्यतीत्यवधार्य स शीघ्रमेव आगरामाक्रम्य दिल्लीं प्रस्थितवान्। बिलोचपुरनामकस्थाने बादशाहसेनाभिः समं तत्सगरः सम्बभूव। किन्त्वसौ पराजितो भूत्वा मालवे गुजराते च भ्रमन् दक्षिणभारत गत्वा ततोऽपि तैलाङ्गनामाजगाम शाहजहानः। पश्चाद्बङ्गे समागत त महावतखानः पराजित्य दक्षिणभारतमेव परावर्तयत्। पुनर्बादशाहस्य सविधे क्षमायाचना कृत्वा स तेन सह मेलनमकरोत्। दण्डरूपेण कतिपयदुर्गाणि स्वकीयपुत्रौ दारौरङ्गजेबौ च प्रदत्तवान्।

दैवज्ञः कथयति—नूरजहा सर्वमेव राज्याधिकारं स्वहस्तगतं कर्तुमिच्छन्त्यासीदिति पूर्वमेव वर्णितं मुक्तामणे! अधुना महावतखानेन सह नूरजहाया यथा विरोधोऽभूत्तमपि शृणु। महावतखान एकः परमशक्तिशाली धनिको मुहम्मदीय आसीत्। तमपराजित्य नूरजहा स्वकीययोजनायां साफल्यं लब्धुमसमर्था सती तस्यैव मूलोच्छेदं विधातुमियेष। बादशाहस्य सविधे बहुवारं तन्निन्दामपि कृतवती। शाहजहानकृतविद्रोहदमने महावतो महतीं योग्यता प्रदर्शितवानासीदित्यगणयन् बादशाहो 'महावतो राजकीयकोषस्य द्रव्यं हृतवानि'त्यभियोगं संस्थाप्य तं राज्यसभायामागन्तुमादिष्टवान्। एतमपमानमसहमानो महावतखानो विद्रोहं चकार।

स्ववशवर्तिना राजपुत्राणां साहाय्येन झेलमनद्यास्तटे धिनिरग्भित बादशाह वन्दिनश्चकार महावतखान.। एतस्यां सङ्कटमयपरिस्थितौ नूरजहा अतीवधैर्येण कार्यं कृतवती। पूर्वं सा शाहजहान मोचनुमुद्योग कृत्वाप्यसफला स्वयमेव कारागारं प्रविश्य सयोग्य समय बादशाहेन सममेव कारागाराद्भि सुरव पलायिता।

महावतखानो दक्षिणभारत गत्वा शाहजहानेन सह मिलितवान्। किन्तु नूरजहा विजयाऽधिकलाभदायको नाभूत्। दीर्घकालाद्रुग्णो बादशाहो द्वाविंशद्वर्षाणि यावद्राज्य कृत्वा पञ्चत्वमापेदे।

जहांगीर एको बुद्धिमान् विदुषा सत्कारकारको. धार्मिकपक्षपातशून्यो हिन्दुसाधूनामपि प्रशंसककर्तुर्भाषा यद्यपि फारसीभाषायाः पूर्णज्ञाता हिन्दीगानश्रवणप्रेमान्वित. प्राकृतिकसौन्दर्योपासकः कलाकोविदश्चासीत्। किन्त्वहारानमेव विलासिताया मग्नत्वाद् यौवन एव तस्य स्वास्थ्यपतनमभूत्। जहांगीरशासने किञ्चिदपि नूतन परिवर्तन साम्राज्ये नैव जातम्।

## शाहजहान राज्यम्

जहांगीरस्य मरणानन्तर नूरजहाँ शहरयार सवर्धयितुमचेष्टत। नूरजहामतश्चित शहरयारोऽपि स्व लाहोरनगरेबादशाह घोषितवान्। यस्मिन् समये शाहजहानो दक्षिणभारते यशआसीत्। तस्य श्वसुर आसफखानो महान् सहायक आसीत्। अतएव स दक्षिणभारताद्धूय राज्यसिंहासनासीनश्चकार। युद्धे शहरयार पराजित्यान्धीचकार शाहजहान., सर्वानेव प्रतिद्वन्द्विना घातितवाश्च। ततोराज्यकार्येभ्यः पृथग्भूत्वा नूरजहाँ श्वेतवस्त्र धृत्वा लाहौरे निवासश्चक्रे।

मुगलाना शासने शाहजहानस्य शासनकालोऽतीव रमणीयो बभूव। तस्य धनराशयोऽद्वितीयानि भव्यानि भवनानि च देशे देशान्तरे च कीर्ति विस्तारयामासु। किन्त्वक्रूरस्य जहांगीरस्य च धार्मिकनीति

विहायासौ राज्यहितं नैव चकार। शाहजहानः परिपक्वः सुन्नीसम्प्रदायावलम्बी मुहम्मदीय आसीत्। शाहजहानस्यान्यधर्मावलम्बिभिः सह क्रूरव्यवहार एवौरङ्गजेबस्य चेतसि क्रूरत्वस्य धर्मान्धतायाश्च सूत्रपातमकरोत्। सुन्नीमुहम्मदीया अपि शाहजहानस्य समये धर्मान्धा मदमत्ताश्च भूत्वा हिन्दुभिः सह महान्तमत्याचारं कृतवन्तः। राज्यसिंहासनासीने शाहजहाने दक्षिणभारतस्थितः प्रान्तपालः खानजहानो विद्रोहमकरोत्। किन्तु पराजितो भूत्वासौ बादशाहेन शूलमारोपितः। तदन्तरमबुलफजलहत्याकारकस्य बुन्देलीयवीरसिंहदेवपुत्रस्य जुझारसिंहस्य विद्रोहोऽभूत्। किन्तु पराजितौ जुझारसिंहो घातितो मुगलैः, तत्सम्बन्धिभिश्च सह तैर्निर्दयतापूर्णव्यवहारः कृतः। गुजराते खानदेशे दक्षिणभारते चैकदा महद्दुर्भिक्षमापतितम्। दुर्भिक्षपीडितानां साहाय्यार्थं सर्वत्र शाहजहानो भोजनालयान्स्थापितवान्, येषु बुभुक्षिताः निःशुल्कं भोजनं कुर्वन्त आसन्। स्वकीयकोषादपि महान्तं धनराशिं ददौ दयार्द्रमनाः शाहजहानः।

वङ्गीयमुहम्मदीयानामाज्ञया पुर्तगालवासिनो हुगलीनगरमागत्य स्वावासञ्चक्रिरे। क्रमशः स्वशक्तिसंवर्धनं कृत्वा स्वकीयां नगरीमपि निर्मितवन्तस्ते। नगरीरक्षार्थं सैनिकान् सामग्रीश्चैकत्रीकृत्य शक्तिशालिनो भूत्वा स्वकीयकर्मचारिभिः प्रजाभ्यः करमपि गृह्णन्तो बभूवुः। तेन साम्राज्यस्य महती हानिरभूत्। अथ च पुर्तगालनिवासिनः प्रलोभनं दत्वा बलात्कारेण वा साधारणजनान् खिस्तधर्मदीक्षितानपि कर्तुमारेभिरे। ते मुमताजमहलनाम्न्याः बादशाहपत्न्या द्वे दास्यौ बलाद् गृहीतवन्तः। तेन महाक्रोधसमावृतो बादशाहस्तान् दण्डयितुमियेष। वङ्गप्रान्तपालः कासिमखानो हुगलीमाक्रम्य स्वरक्षार्थं कृतोपायानपि दशसहस्रपुर्तगालिनो जघान। अन्यांश्च कठोरदण्डेन शातयामास।

नूरजहानभ्रातुरासफखानस्य पुत्री सर्वगुणसम्पन्ना परमसुन्दरी मुमताजमहलनाम्नी बादशाहशाहजहानस्य परमप्रिया भार्यासीत्।

बुहारनपुरस्था सा चतुर्दश शिशुञ्जनयित्वा सहसा रोगाक्रान्ता सती पञ्चत्वमगात्। तस्याः शवस्तत आगरा समानीय यमुनायास्तटे भूमिस्थः कृतः। तस्मिन्नेव स्थाने सुन्दरोद्यानसमलङ्कृत कलात्मकं रमणीयतमञ्चैकं विशालं भवनं निर्मापितवान् बादशाहः शाहजहानो दाम्पत्यप्रेमस्मारकरक्षार्थम्, यदधुनापि ताजमहलनाम्ना भारते विख्यात-मस्ति। अनन्तरं शाहजहानो दक्षिणभारतीयभूपाञ्जेतुमियेष। सर्वप्रथम-मसौ अहमदनगरमाक्रम्य निजामशाहं पराजितवान्। अहमदनगरं साम्राज्ये विलीनमभूत्। ततः परं बीजापुरसुलतानोऽपि बादशाहस्या-धिपत्यं स्वीचकार। किन्तु गोलकुण्डायाः सुलतानो युद्धसन्नद्धो जातः। मुगलसेनाभिः सम्पूर्णमेव गोलकुण्डाराज्यं निर्मथितम्। तेन विवशः सुलतानो मुगलाधीनतां स्वीचकार।

शाहजहानः स्वतृतीयपुत्रमौरङ्गजेबं बरारखानदेशतेलाङ्गनादौलता-बादानां चतुर्णां प्रान्तानां प्रान्तपालमकरोत्। एतस्मिन्नेव समये शाहजी-भोसला अपि मुगलाधिपत्यं स्वीचकार। औरङ्गजेबः स्वकीयं पदं परित्यज्य गुजरातप्रान्तशासको बभूव। तस्मिन् समये दक्षिणभारतस्य दशातीव दारिद्र्यपरिपूर्णा जाता। औरङ्गजेबः स्वपितुः सकाशे साहाय्यार्थं पत्रं लिलेख, किन्तु शाहजहानस्तदयोग्यतामेव काठिन्यपूर्णदुर्भिक्षकारणं सिद्धीचकार।

पुनः कथमपि दक्षिणभारतस्यार्थिकदशां समीचीनां कृत्वा दक्षिण-भारतस्य शेषाणि राज्यानि जेतुमियेषौरङ्गजेबः। बहुकालेभ्यः करं नैव प्रदत्तवान् गोलकुण्डासुलतान इति व्याजेन पूर्वं स गोलकुण्डामेवावरु-रोध। दुर्गं मुगलाधीनं भविष्यतीति सर्वैर्निश्चिते शाहजहानो युद्धं स्थगयितुमादिदेश। तदनन्तरमौरगजेबेन बीजापुरमाजेतुमादिष्टे दाराशिकोहपरामर्शेन शाहजहानो युद्धं स्थगयितुमादिदेश। वस्तुतो दारा औरङ्गजेबस्य साफल्ये ईर्ष्यति स्मासीत्। अत एव शाहजहा-

नादीदृशीमाशा प्राप्य स औरङ्गजेबस्य सम्पूर्णामेव योजनाविफली-कुर्वन्नासीत्।

अनन्तर शाहजहानः स्वकीयकूटनीत्या कन्दहारप्रधानमन्त्रिण स्वसमर्थकं विधाय कन्दहारराज्य स्वसाम्राज्ये विलीनीकृत्य कन्दहाराधिपतिमलिमर्दानसान बहु सम्मान्य महत्युच्चपदे प्रतिष्ठापितवान्।

तैमूरवंशीयबादशाह इव शाहजहानोऽपि स्वजन्मभूमिं तुर्किस्तान-मपि जेतुमैच्छत्। एतस्मिन्नेव समये बलखस्य बदख्शानस्य च राजवंश-योर्मध्ये समुत्पन्ने कलहे तुर्किस्तानविजयस्य सुन्दरमवसर विचार्य शाहजहानो मुरादालिमर्दानखानौ महत्या सेनया सवृत्तौ कृत्वा तुर्किस्तानविजयाय विससर्ज। किन्तु तुर्किस्ताननिवासिन उजबेका अपि परमोत्साहेन समर कृतवन्तः। पुनः मुगलाना विजयो नैव बभूव। शाहजहान औरंगजेब प्रेषितवान्, किन्तु तस्याप्युद्योगः सफलो नैव जातः। एवमेव पुनः पुनः कृतेऽप्युपाये कन्दहारविजयो नैवाभूत्।

शाहजहानो न्यायकारी सिद्धेऽपराधे राज्यप्रधानकर्मचारिणामुपर्य्यपि कठोरदण्डप्रदायको महत्यपराधे शूलारोपकश्चासीत्। अकबरस्येवा-स्यापि राज्यप्रबन्ध आसीत्। पूर्णमुहम्मदीयो मुहम्मदीयैः सह पक्षपात-पूर्णव्यवहारकारकश्चासीत्। शाहजहानस्य दाराशुजामुरादौरङ्गजेबा-श्चत्वारः पुत्रा आसन्। किन्तु बादशाहो दाराशिकोहमतीव स्निह्यति स्म त सर्वदैव राजसभाया स्वसमक्ष रक्षन्नासीत्। अवशिष्टपुत्रान् प्रान्तत्रया धिकारिणश्चकार। शुजा वङ्गस्यौरङ्गजेबो दक्षिणभारतस्य मुरादो गुजरातस्य चाधिपतय आसन्।

दाराशिकोह उदारस्वभाव विद्वद्भि हिन्दुभिर्मुहम्मदीयैः खिस्तानैश्च सह सस्थापितसम्बन्ध उपनिषदा फारसीभाषायामनुवाद कारयिता वेदा-न्तिना सुफिनाश्च सत्कारकारकः स्वाभिमानसम्पन्न. स्वतन्त्रविचारशाली चासीत्। शुजा भोगविलासेषु मग्नः, किन्तु वीरो बुद्धिमान् तथा मुरादो मद्यपानकारको मूर्खः स्वमनोऽनुकूलकार्यकर्ता चास्ताम्। किन्त्वौरङ्गजेब

एतेषु बुद्धिमान् रणनीतिकुशलः सेनानायको वीरोचितगुणसम्पन्नोऽप्रकाशितस्वभावशाली कुशलो राजनीतिज्ञः परिपक्वबुद्धी मुहम्मदीय आसीत् ।

रोगाक्रान्ते शाहजहाने राज्यसिंहासनार्थं परस्परं पुत्राणां कलहे समुत्पन्ने शाहजहानो दाराशिकोहं स्वकीयोत्तराधिकारिणं निर्वाचितवान् सर्वप्रजाजीवनं गौरवपरिपूर्णञ्च कर्तुमादिदेश । जीवत्येव शाहजहाने बादशाहः शाहजहानः पञ्चत्वमापेदे, किन्तु दाराशिकोहं एतां वार्तां गोपुमिच्छत्येवः प्रचारः सर्वत्रैव सम्बभूव । शाहजहानो दिल्लीं परित्यज्याग्रानगरामागतवान् । तत्रैव स्ववासस्थितिञ्च व्यधत्त । शुजामुरादौ स्वस्वप्रदेशे स्वतन्त्रं घोषितवन्तौ । कियत्कालानन्तरमौरङ्गजेबो मुरादेन सह सन्धिं कृत्वा दिल्लीसिंहासनासीनो भविष्यति, मुरादः पञ्जाब सिन्ध काश्मीरञ्च प्राप्स्यतीति सर्वत्रैव निश्चयो जातः । त्रय एव स्वस्वसेनाभिः सह दिल्लीं प्रस्थितवन्तः । दारोऽपि शाहजहाने एतस्मिन् समये शुजासमीपे सैन्यमेकं प्रेषितवान् । वाराणसीसमीपे शुजा पराजितो जातः । यशवन्तसिंहकासिमखानयोरध्यक्षतायामेकापरा सेना मुरादस्यौरङ्गजेबस्य चावरोद्धुं प्रेषिता शाहजहानेन, किन्तु द्वयोर्भ्रात्रोः सेनया बादशाहसेना पराजिता । पुनर्दाराशिकोहस्ताभ्यां योद्धुं दिल्लीतः प्रतस्थे । किन्तु सामूगढ संग्रामे दाराशिकोह-शाहजहानयोर्भाग्यस्य निर्णयो जातः । पराजितो दाराशिकोहो युद्धात्पलायाञ्चक्रे । औरङ्गजेबो शाहजहानं बन्दिनं कृतवान् । तथा औरङ्गजेब मुरादौ दाराशिकोहं ग्रहीतुं तत्पृष्ठगामिनौ भूतौ । मथुरासमीपवर्तिनि मार्गे स्वशिविरे भोजनार्थं निमन्त्र्य मद्यपानाभिमत्तं मुरादं बन्दिनं विधाय ग्वालियरदुर्गं प्रेषयत्पुनः शूलमारोपितवान् ।

दिल्ल्यामभिषेकानन्तरमौरङ्गजेबो दक्षिणभारतं गताद्दाराशिकोहाद् ध्यानमाकृष्य शुजाम्प्रति ध्यानं प्रदत्तवान् । औरङ्गजेबेन सह युद्धे पराजितः शुजा अराकानं गतः, तद्देशनिवासिभिर्घातितश्च । सिन्धप्रदेश-

स्थितो दाराशिकोह. सरदारमलिकेनौरङ्गजेबहस्ते समर्पितस्तेन घातितश्च । एव सर्वानेव भ्रातृन् निहत्यौरङ्गजेबो दिल्लीसाम्राज्याधिपतिर्बभूव । बन्दी शाहजहान आगरादुर्गे कुरान पठन् भगवतो ध्यान कुर्वंश्च शेष जीवन व्यतिगमयामास, चतु सप्ततिवर्षदेशीयश्च भूत्वा पञ्चत्वमगात् । तस्य शवश्च प्रियपत्न्याः प्रसिद्धस्मारकसमीपे भूगर्भस्थितोऽभूत् ।

## औरङ्गजेब-शासनम्

अन्यराज्याधिकारिण इवौरङ्गजेबस्यापि देशविजयस्य साम्राज्यविस्तारस्य चेच्छा बलवती बभूव । स्वकीयसेनापतिं मिरजुमलान स बङ्गस्य राज्यपालपदे नियुक्तवान् । मिरजुमलान पूर्वमासाममाक्रम्य कूचविहार विजित्य चासामराजधानीं गढगाँवनगरीं जिगाय । आसामभूपो मुगलानामाधिपत्य स्वीकृत्य वार्षिककरप्रदान स्वीकृतवान् । किन्तु मिरजुमलानः परावर्तनकाले ढाकासमीपे पञ्चत्वमगात् ।

औरङ्गजेबशासनस्य प्रथमे भागे चम्पतरायबुन्देल', य' पूर्व मुगलगेहे भृत्य आसीत्, विद्रोह कृत्वा युद्धे पराजितो घातितश्च । तन्मरणानन्तर तत्पुत्रश्छत्रसालो मुगलै' सह युद्धमारब्धवान् । छत्रसाल. पूर्वं जयसिंहभूपानुरोधेन मुगलगेहे कर्मचारिपद स्वीकृतवानासीत् । किन्तु मुगलाना धार्मिकनीत्याऽसन्तुष्टो बुन्देलखण्डे विद्रोहमकरोत् । औरङ्गजेबे दक्षिणदेशस्थिते सति छत्रसालो बहुवार मुगलसेना पराजिग्ये । विजयिन ॥ हिन्दवोऽपि साहाय्यमकार्षु. । अनन्तरमौरङ्गजेबस्तेन सह सन्धिञ्चकार । मथुरामध्यस्थित मन्दिर विध्वस्य मुगला मसजिद निर्मितवन्त. । ते केशवदेवमन्दिरमपि क्षतिग्रस्तमकार्षु, तेन मथुरायां जाटा भयङ्कर विद्रोहञ्चक्रु । सर्वेषामेव जाटाना प्रधानो गोकुलनामको जाट आसीत् । किन्तु समीपवर्तिग्रामस्थाना विंशतिसहस्रसख्यकजाटाना भयङ्करमुपद्रव मुगलाः शान्तमकार्षुः, गोकुल हतवन्तश्च । तदनन्तरं चूरामनोनामको जाट-

नेता महान्तं विद्रोहाग्निं प्रज्वालितवान्, मृते च औरङ्गजेबे भरतपुरे जाटराज्यं संस्थापितवान्। एवमेवेन पदातिना सैनिकेन सह कलहे जाते सतनामिनः सिक्खा अपि महान्तं विद्रोहमकुर्वन्। किन्तु क्रूर औरङ्गजेबः सहस्रशः सतनामिनो घातयित्वा विद्रोहशान्तिमकरोत्।

पश्चिमोत्तरसीमान्तस्यैकस्मिन् जमरुदनामकग्रामे योधपुरनरेशस्य यशवन्तसिंहस्य देहावसानमभूत्। तस्य कोऽपि पुत्रो नासीत्। अत औरङ्गजेबस्तद्राज्यं मुगलराज्ये विलीनीकर्तुमेकां मुगलसेनां प्रेषितवान्। एतस्मिन्नेव समये वृत्तं प्राप्तं यत् राज्ञो मृत्योरनन्तरं भूपस्य यशवन्तसिंहस्य द्वयोर्भार्ययोर्गर्भात्पुत्रद्वयमभूत्, तयोरेको मृतस्तथापरो जीवितो वर्तते इति। महिष्यौ सैनिकैः सह दिल्लीं समागत्य पुत्रं राज्याधिकारिणं विधातुं प्रार्थितवत्यौ बादशाहम्। औरङ्गजेबः समुक्तवान् यदेतस्य राजकुमारस्य राजभवने एव पालनं भविष्यति तथा प्राप्ते यौवनेऽयं राज्याधिकारं प्राप्स्यति। किन्तु राजपूतानामौरङ्गजेबवचने सन्देहः समजनि।

इदानीमजीतसिंहस्य रक्षणं केन प्रकारेण भवेदिति चिन्ताकुलाः सर्वं एव राजपूता बभूवुः। किन्तु राजकुमाराजितसिंहरक्षणे दासी महतीं राजभक्तिं प्रदर्शितवती। एकदा सा स्वकीयं पुत्रमजीतसिंहस्य स्थाने संस्थाप्याजीतसिंहं वशपेटिकायां निधाय मलपरिपूर्णमिदं वशपात्रमिति वदन्ती राजभवनान्निःसृत्य राजकुमारं वीरदुर्गादासस्य हस्ते समर्पितवती। तमादाय दुर्गादासो मरुस्थले गत्वा विद्रोहश्चकार। पश्चाद्विज्ञातरहस्य औरङ्गजेबो बालकेन सहितां दासीं सनिर्दयं शूलमारोपितवान्।

शिशोदियवंशजा महाराज्ञी मेवाडभूपं साहाय्यार्थं प्रार्थितवती। स्वीकृत्य तत्प्रार्थनां राणा अपि साहाय्यार्थं वचनं ददौ। औरङ्गजेबः स्वशाहजादमकबरं दुर्गादासविरुद्धं प्रेषितवान्। किन्त्वकबरं राजपूताः स्वपक्षे कृतवन्तः। एतेन विश्वासघातेनौरङ्गजेबस्य

चेतसि महद् दुःखमभूत्। 'धन्योऽसि! पुत्र त्वं खलु राजपूतान् मूर्खीकृतवानि'ति पत्रं लिखित्वा स दुर्गादासस्य शिबिरे प्रेषितवान्। पठित्वा पत्रं राजपूताना मध्ये कलहः समुत्पन्नः, सर्वा च योजना निष्फला जाता। किन्तु दुर्गादासस्य भावोऽकबरोपरि पूर्ववदेवासीत्। दुर्गादासोऽकबरं दक्षिणभारतं प्रैषयत्। तत्र गत्वासौ शिवाजीपुत्रस्य शम्भुजीराजो गृहे शरणं लब्धवान्। शम्भुजीराज्ञा सह अकबरस्य मेलनेनौरङ्गजेबस्य मनसि महद्भयमभूत्। अत एवासौ सर्वतो ध्यानमाकृष्य दक्षिणे ध्यानमदात्। मेवाडेन सह सन्धिरभूत्। दुर्गादासस्तु निशादपाणिं यावत् युद्धमकरोत्। पश्चान्मृते औरङ्गजेबे तत्पुत्रो बहादुरशाहोऽजितसिंह मरुस्थलमूप स्वीकृतवान्।

## शिवराज-राज्यम्

महाराष्ट्रियाः शिवाजीराजो नेतृत्वे सम्भूय मुगलसाम्राज्यमाक्रम्यौरङ्गजेबस्य जीवनपर्यन्तमेव युद्धं कुर्वन्त आसन्। महाराष्ट्रियाणां युद्धे मुगलसाम्राज्यस्य महती हानिरभूत्। वास्तविकरूपेण धार्मिकमतावलम्बिनः सिक्खा अपि गुरुगोविन्दसिंहस्य नेतृत्वे शक्तिशालिनः सैनिका एवाभूवन्। एतयो राज्ययोः समुत्पत्तिः पश्चाद्दृश्यते।

पश्चिमदेशवासिनाऽफगानाः सिन्धुनदीं समुत्तीर्य मुगलानां शिविरेष्वाक्रमणं कृतवन्तः। महति युद्धे तेषां पराजयो बभूव। किन्तु सर्वप्रथमं महाराष्ट्रियेषु जातीयतायाः प्रादुर्भावो धार्मिकविप्लवेनाभूत्। एतस्य धार्मिकविप्लवस्य प्रधानस्थलं पण्ढरपुरमासीत्। अत्र बहवो महात्मानो भक्तिसिद्धान्तं प्रचारितवन्तः। देशस्य सर्वभागेभ्योऽत्र जनाः श्रीकृष्णस्याराधनार्थं समागच्छन्त आसन्। श्रीकृष्णापरपर्यायपाण्डुरङ्गदर्शनपूजनानन्तरं सहस्रशो नरा नार्यश्च ज्ञानदेवस्योपदेशं शृण्वन्तो बभूवुः। एतस्यैव गीतैर्वचनैश्च समृद्धं महाराष्ट्रियसाहित्यमभूत्। अनन्तरं तुकाराम नामदेव-रामदास-वामनपण्डितैकनाथप्रभृतयो महा-

त्मानोऽपि सर्वेषामेकप्रेमसूत्रे बन्धनस्योपदेशं प्रदत्तवन्तः। महाराष्ट्रियाणामुत्कर्षस्य राजनीतिकचातुर्यमप्येकं कारणमभूत्। यदा औरङ्गजेबस्य दक्षिणदेशभूपैः सह युद्धारम्भो बभूव, तदा महाराष्ट्रिया महान्तः शक्तिशालिनोऽभूवन्। शाहजीभोसले-पुत्रः शिवाजीस्तेषां नेतृत्वञ्चकार।

शिवनेरनामके पर्वतीयदुर्गे शिवाजीराजो जन्माभूत्। तन्माता जीजाबाई प्रेमपूर्वकं तं पालितवती। जीजाबाई धार्मिकविचारसम्पन्नैका हिन्दुमहिला रामायणस्य महाभारतस्य च पूर्णा शास्त्री आसीत्। तस्या एव मुखान्महात्मनां हिन्दुवीराणाञ्च कथा श्रुत्वा शिवाजीराजः चेतसि तदनुकरणार्थं बलवतीच्छा समभूत्। सौभाग्येन दादाजीकोण्डदेवस्तस्य गुरुर्भूत्वा तं वीरोचितां विद्यां पाठितवान्। स्वकीयेच्छापूर्त्यर्थं स्वसहायकानामन्वेषणे मालवदेशं भ्रमन्तो वीरयुवकास्तस्य छत्रच्छायामागतवन्तः। समर्थगुरुरामदासस्योपदेशेन देशोद्धारार्थं स सैनिकान् संचिचकार।

अनन्तरं शिवाजीराजा तोरणा-कोन्दणाप्रभृतिदुर्गाणि जित्वा जावलीराज्यं स्ववशीचकार। जावलीविजयेन शिवाजीराजो दक्षिणे पश्चिमे च राज्यविस्तारस्य स्ववसरः समुत्पन्नः। शिवाजीराजा कोंकणं जित्वान्यानपि कतिपयदेशान् जिगाय। बीजापुरसुलतानः शिवाजीराजः विरुद्धं ससैनिकमफजलखानं प्रेषितवान्, किन्तु शिवाजीराजा स पराजितो हतश्च। एतैर्विजयैः प्रोत्साहितो भूत्वा शिवाजीराजा मुगलसाम्राज्येऽप्याक्रमणं कर्तुमियेष। औरङ्गजेबोऽपि शिवाजीराजो वर्धमानशक्त्या भयमापेदे। तं पराजेतुं स स्वमातुलं शायस्ताखानं प्रेषितवान्। मुगलसेना सम्पूर्णं महाराष्ट्रं मथित्वा पूना चाकनं कल्याणञ्च स्वाधिकारे कृतवती। सेनासमावृतः शायस्ताखानः प्रावृट्काले पूनायां निवासमकरोत्।

किन्तु शिवाजीराजा मुगलसैनोपरि समाक्रमणं कृत्वा बहुसंख्यकान्

तेनिहतवान्। केनापि प्रकारेण शायस्ताखानः स्वपादौ शिरस्याधाय दिल्लीं पलायितवान्, किन्तु तत्पुत्रस्तत्रैव मरणमापेदे। अवशिष्टाः सर्वे एव सैनिकाः स्वस्वप्राणानादाय यत्र तत्र पलायिता बभूवुः। शिवाजीराजा ततो बहुधनं लब्धवान्। शिवाजीविजयेन चिन्तितो बादशाहो जयपुरभूपं जयसिंहं स्वपुत्र मुअज्जमसहितञ्च विजेतुं प्रेषितवान्। शिवाजी युद्धं व्यर्थं विचार्य बादशाहेन सह सन्धिं कृत्वा बीजापुरसुलतानविरुद्धयुद्धे साहाय्यं प्रदातुं प्रतिज्ञातवान्। शपथपूर्वकं जयसिंहस्याग्रहेण शिवाजी आगरा समागतवान्। बादशाहस्तं साधारणसभायामयोग्यस्थाने समुपवेशितवान्। एतेन क्रोधितः शिवाजी बादशाहमविश्वासिनं कथयित्वा कटुवचनं श्रावितवान्।

बादशाहश्च सपुत्रं शिवाजीराजानं बन्दिनं कृत्वा कारागारे निक्षिप्तवान्। शिवाजी स्वबुद्धिकौशलेन ततोऽपि निःसृत्य स्वराजधानीमगात्। पश्चात् यशवन्तसिंहस्य शाहजादमुअज्जमस्य च प्रयत्नेन शिवाजीराज्ञा सह बादशाहस्य सन्धिः सम्बभूव। अथ सन्धिर्बहुकालपर्यन्तं नैव संस्थितोऽभूत्। पुनः शिवाजी सूरते खानदेशे चाक्रमणं कृत्वा बगलानाञ्च जित्वा स्वकीयराज्येऽमेलयत्। रायगढे परमोत्साहेन शिवाजीराज्ञः राज्याभिषेकोऽभूत्। पश्चादपि शिवाजीराज्ञो बादशाहेन अन्यैर्भूपैश्च सह युद्धमभूत्। छत्रपतिः शिवाजीराजा त्रिपञ्चाशद्वर्षदेशीय एव पुरन्दरपुरातिथिर्बभूव।

शिवाजीराज्ञः राज्यविस्तारो धरमपुरादारभ्य दक्षिणे कारवारपर्यन्तं पूर्वे बगलानादारभ्य दक्षिणे कोल्हापुरपर्यन्तमासीत्। वर्तमान-मैसूरमद्रासराज्ययोः कतिपये भूभागा अपि तस्य राज्याधीना आसन्। एतदतिरिक्तो मुगलसाम्राज्याद् गृहीतो विशालो मोगलाईप्रदेशश्च तस्य राज्ये सम्मिलितोऽभूत्।

शिवाजी राज्यशासनेऽतीव निपुणः समयानुकूलं कार्यञ्च कुर्वाणो महाराष्ट्रियेन विधिना महाराष्ट्रराज्यस्य शासनप्रबन्धकारकश्चासीत्।

तत्कालीनभूप इव शिवाजीराजापि स्वकीयराज्यस्य सर्वप्रधान आसीत्। महता कर्मचारिणा राजकीयपदेषु नियोजनं राज्यस्यार्थिकव्यवस्थाकरणं सन्धिविग्रहकरणं वा सर्वमेवैतत् शिवाजीराजाधीनमासीत्। राज्यकर्मणि साहाय्यप्रदानार्थमेकं तत्र अष्टप्रधाननामकं मन्त्रिमण्डलं बभूव। तद्यथा—

१. मुख्यमन्त्री अथवा प्रधानमन्त्री।
२. राज्यस्यायव्ययनिरीक्षकोऽमात्यः।
३. राज्ञो नित्यकार्याणां राज्यसभायाः कार्याणाञ्च विवरणकारको मन्त्री।
४. सर्वराजकीयपत्राणां व्यवस्थापकः सचिवः।
५. परराष्ट्रियकार्यसम्मतिदायकः सामन्तः।
६. सेनापतिः सेनाध्यक्षो वा।
७. पण्डितो दानाध्यक्षो वा।
८. न्यायाधीशः।

एतेषु मन्त्रिषु सेनाध्यक्षं विहाय सर्व एव मन्त्रिणो ब्राह्मणा आसन्। राज्ञः सविधे परामर्शदानमेवैषां कर्म, किन्तु तदुत्तरपरामर्शस्वीकरणं राज्ञ अधीनमेव। सम्पूर्णं राज्यं मण्डलेषु विभक्तमासीत्। मण्डलानां समूहः प्रान्तो बभूव, यस्य शासनार्थमेकः प्रान्तपालो नियुक्त आसीत्।

शेरशाह इवाकबर इव च शिवाजीराजापि सामन्तप्रथां विहाय राज्यकर्मचारिभ्यो वेतनरूपेणैव द्रव्यं ददानो बभूव। शिवाजीराज्ञ न्यायः प्राचीनन्याय इवासीत्। धर्मशास्त्रानुसारेण न्यायाधीशो न्यायं करोति स्म। शिवाजीराज्ञि नेतृयोग्याः सर्व एव गुणा आसन्। महाराष्ट्रियाणां कृते सर्वाण्येव दुर्गाणि मातृतुल्यानि आसन्। सम्प्राप्ते सङ्कटे तेष्वेव शरणं लब्धवन्त आसते। शिवाजीराज्ञ सेनायां सर्वप्रातिसमुद्भवा मानवाः सुव्यवस्थिताः शस्त्रास्त्रसुसज्जिताः रणकर्मणि कुशलाश्चासन्। स्वकीयशासनसमकालीनान्यशासकेभ्यो विपरीतैव धर्मपरिपूर्णोदार्यशालिनी

श्च राजनीतिरासीत्तस्य। मन्दिरस्य मस्जिदस्य सञ्चालनार्थं समानरूपेणैव धनं ददानः शिवाजी प्रतिवर्षं परीक्ष्य विदुषः पर्याप्तं धनमपि ददौ।

*समर्थगुरुरामदासस्य प्रभावः शिवाजीराज्ञि पूर्णरूपेण आसीत्।* तत्र शिवाजी स्वकीयं धर्मगुरुं मेने।

मध्यकालीनहिन्दुशासकेषु सर्वोत्तमो वीरः कुशलनीतिज्ञः सेनानायकः सैनिकैः सह प्रेमव्यवहारकारकोऽदम्यसाहससम्पन्नो निर्भीकः कूटनीतिज्ञः प्रशसनीयाचरणसम्पन्नो वैदिकसनातनधर्मानलम्बी भूपः शिवाजी एवासीत्। भूत्वापि हिन्दुभूपो मुहम्मदीयैः सह स्नेहपूर्णव्यवहारसम्पन्नो वैदिकसनातनधर्मावलम्बी शिवाजी मुहम्मदीयमहात्मभिः सह सर्वदा सद्व्यवहारं कुर्वन्नासीत्। मुहम्मदीयललनाभिः समं कदापि स दुर्व्यवहारन्नैव चकार। यदा कदापि कुरानपुस्तकं तस्य हस्तगतमभवत्तदासौ ससम्मानं कस्मैचिन्मुहम्मदीयायैव तत् प्रदत्तवान्।

औरंगजेबो दक्षिणे युद्धं कुर्वन् पञ्चविंशतिवर्षाणि व्यत्यगमयत्। किन्तु *शिवाजीसमये दक्षिणदेशं विजेतुमसफलो भूत्वा सन्धिमेव* चकार। किन्तु शिवाजीराज्ञि मृते विलासप्रियं तत्पुत्रं शम्भूजीराजानं युद्धे पराजित्य तं शूलमारोपितवानौरंगजेबः।

शम्भुजीपुत्रः शाहूजी जनैः समानीतं औरंगजेबशिविरम्। स तत्पालनं मुहम्मदीयकुमार इवाकारयत्। किन्तु महाराष्ट्रियाणामुत्साहः केनापि प्रकारेण न्यूनो नैवाभूत्। शिवाजीद्वितीयपुत्रो राजारामो मुगलानां विरुद्धं युद्धघोषणामकरोत्। पश्चादसौ जिञ्जीनगरं गतवान्। महाराष्ट्रियौ सीताजीघोरपडे तानाजीयादवश्च सैन्यसञ्चालनं कृत्वा सम्पूर्णमेव दक्षिणभारतं समन्यत्। परस्परं विश्वासघातेन मुगलसेनापतीनां व्यूहोऽसफलो जातः, दुर्गेषु च महाराष्ट्रियाणां विजयो बभूव।

एतस्मिन् समये औरंगजेबस्यावस्था एकाशीतिवर्षदेशीया जाता। सप्तवर्षपर्यन्तमौरंगजेबस्तं विजेतुं प्रयत्नमकरोत्, किन्तु साफल्यं नैवालभत। अनन्तरं राजारामस्य मृत्युरभूत्, किन्तु वीरोचितसाहससम्पन्ना तद्-

धर्मपत्नी ताराबाई युद्धक्रमं नैव त्यक्तवती। तस्या अध्यक्षत्वे महाराष्ट्रियाः षड्वर्षपर्यन्तं युद्धं कृतवन्तः, पट्सु दुर्गेषु च स्वाधिकारं संस्थापितवन्तः। औरंगजेबोऽहमदनगरमागत्य पञ्चत्वमगात्, दौलताबादे तदीयं शव भूमिस्थं चक्रुस्तन्मन्त्रिणः।

शिवाजीराज्ञो मरणानन्तरं महाराष्ट्रीयपद्धतिषु परिवर्तनं जातम्। क्रमशान्ते स्वकीयादर्शं विस्मृतवन्तः। शिवाजी राज्ञो उत्तराधिकारिणा समये मतपार्थक्येन राज्यैकता विनष्टा, शासनप्रबन्धश्च विकृतो बभूव। राजारामनीतिपरिणामस्वरूपं सुसंगठितमेकं राज्यमनेकराज्येषु विभक्तम्। एतस्मिन् समये पेशवावंशः स्वकीयां शक्तिं संवर्धितवान्।

## सिक्ख राज्यम्

औरंगजेबस्य धार्मिकनीत्या सिक्खजातिषु महानसन्तोषो व्याप्तः। सिक्खा गुरुनानकस्यानुयायिन आसन्। सिक्खधर्मस्य पञ्चमो गुरुरर्जुनदासो नानकोपदेशसंकलनं कृत्वानुयायिनां कृते स्वराज्योपदेशं कृतवान्। अमृतसरनगरं सिक्खधर्मस्य मुख्यं स्थानञ्च निर्धारितं तेन। किन्तु यदार्जुनदासो खुसरोशाहजादस्य साहाय्यं कृतवान्, तदैव जहाँगीरस्तं शूलमारोपितवान्।

तदनन्तरं हरगोविन्दः सिक्खगुरुरभूत्। सिक्खधर्मारम्भकारको नानक ईश्वरस्यैकताया जीवनस्य पवित्रतायाश्चाधिकं बलं प्रदत्तवान्। किन्तु गुरुहरगोविन्दः परिवर्तनं कृत्वा मांसभक्षणस्याप्याज्ञां प्रदत्तवान्। स अमृतसरे दुर्गमेकं विधाय राजरीत्या निवसन् बभूव। सिक्खास्तं सत्यबादशाहं मेनिरे। राजेव तस्य समासीत्, तत्र न्यायोऽपि बभूव। आत्मरक्षार्थमेकं सैन्यसंगठनमपि कृतं तेन। एतेन बादशाहोऽप्रसन्नो भूत्वा तं ग्वालियरदुर्गे बन्दिनञ्चकार द्वादशवर्षाणि यावत्। ततो मुक्तो भूत्वासौ मुगलैः सह युद्धं कृत्वा पर्वतीयप्रदेशं गत्वा तत्र मृत्युमवाप।

गुरुहरगोविन्दानन्तरं शान्तिप्रियो हरराय: सिक्खगुरुपदवीं लब्धवान्। यस्मिन् समये दाराशिकोहः पञ्जाबे निराश्रयो भूत्वा भ्रमन्नासीत्, तस्मिन्समयेऽसावेव तस्मै साहाय्यञ्चकार। हररायानन्तरं तत्पुत्रयोर्मध्ये ज्येष्ठो हरकिशन. षड्वर्षदेशीय एव सिक्खगुरुर्भूत्वा मसूरिकारोगेण पञ्चत्वमवाप। पश्चात् सिक्खाः हररायगुरोः कनिष्ठपुत्रं तेगबहादुरं गुरुं स्वीकृतवन्तः। श्रवसरे औरंगजेबस्तं दिल्लीमाहूय कञ्चित् स्वकीयं चमत्कारं प्रदर्शयितुमुक्तवान्। किन्तु गुरुः स्वकीयं रहस्यमदत्वा शिरः प्रादात्।

अनन्तरं तेगबहादुरपुत्रो गोविन्दसिंहो गुरोरासनमलङ्कृत्य मुगलेभ्यः स्वपितृप्रतीकारं कर्तुमियेष। किन्तु मुगलैः सह युद्धकरणमसम्भवं मत्वा पर्वतीयप्रदेशे स तपसि निरतो बभूव। तत्र विंशतिवर्षाणि यावद् विद्यामधीयानोऽसौ भगवत्याराधनं कृत्वा तदिष्टमवाप। स च शिष्याणामग्रे एकमुत्कृष्टमादर्शं संस्थाप्य शरीरेषु लौहधारणस्याज्ञां प्रदाय खालसा-सिक्खसम्प्रदायं सचीचकार। गुरुसाहब. सिक्खानमसीमां धारणां स्थिरीकृतवान् यत्ते खलु सर्वथाऽजेयाः। सिक्खेषु दीक्षासंस्कारारम्भं गुरुगोविन्द एव कृतवान्। दीक्षासमये कृपाणालोडितजलपानस्य प्रथामप्यचालयत्। खालसासदस्या जातीयभेदं विहाय सर्वं एवं समाना इति मानयन्त ईश्वरोपासना गुरोरादरं सेवाञ्चकुर्वन्। ते स्वकीयं धार्मिकं कर्तव्यं स्थिरीकृतवन्त.। हस्ते लौहवलयम् जंघयोः कच्छः कृपाण. केशधारणं केशमार्जनी चैते यस्य वर्तन्ते, स एव सिक्ख इति व्यवस्था कृत्वा गुरुगोविन्दसिंहः सिक्खान् सैनिकान् व्यधत्त। औरंगजेबस्य धार्मिकासहिष्णुता सिक्खेषु उत्साहं वर्धितवती। गुरुगोविन्दसिंहो राजेव निवसन्नासीत्। स खल्वेकं दुर्गंनिर्मितवान्। सिक्खानां पठानानाञ्चैकं सैन्यसंगठनं कृत्वा पर्वतीयसैनिकप्रधानैः सह युद्धघोषणां चकार। औरंगजेबश्च सरहिन्दप्रदेशीयप्रधानान् गुरुणा सह युद्धार्थमादिदेश।

*एतस्मिन् समये गुरुर्महति संकटे पतितः।* गुरुगोविन्दसरहिन्द-प्रधानयोर्बहुकालं यावद् युद्धे जातेऽपि जयपराजययोर्निर्णयो नैव जातः। पश्चादौरंगजेबो विवशो भूत्वा गुरुं दक्षिणे समाहूतवान्। किन्तु गुरोः साक्षात्कारात्पूर्वमेव बादशाहो मरणमापेदे। इदानीं गुरुगोविन्दः शान्तिपूर्वकं जीवनं निनाय। किन्तु यस्य पितुर्वधमकरोद् गुरुः, स एव पठानस्तं मरेरानामकस्थाने निहतवान्। किन्तु मृतेऽपि गुरुगोविन्दे सिक्खानामुत्साहे न्यूनता नायाता, किन्तु उत्तरोत्तरं वृद्धिरेवाभूत्। *पश्चात् सिक्खाः पञ्जाबेऽधिकं प्रभावशालिनो बभूवुः।*

## औरंगजेबशासनस्य समालोचनम्

यस्याः शासनप्रणाल्या अनुसरणं पूर्ववर्तिनो मुगलाः कृतवन्तस्तां परित्यज्य मुहम्मदीयपक्षपातपूर्णनीतिमवलम्ब्य धार्मिकविषये राजनीत्यांश्च मुहम्मदीयधर्मं प्रवेशितवानौरंगजेबः। दक्षिणे पञ्चविंशतिवर्षाणि यावत् स्थितो वृद्धावस्थया धार्मिकपक्षपातेन चाकबरसंस्थापितानां संस्थानामुपयुक्तता स विनाशितवान्। अयमेव धार्मिकपक्षपातोऽन्ते साम्राज्यविनाशहेतुरभूत्। सम्पूर्णमेव साम्राज्यमेकशतभागेषु विभक्तमभूत्। अतीव सुशिक्षितोऽनुभवसम्पन्नश्च शासक औरंगजेबो राज्यकार्याणि सावधानतया विलोकयन् राजकीयपत्राणि स्वयमेवालेखयत्, स्वयञ्च मन्त्रिकार्यमकरोत्। मन्त्रिणोऽन्ये वा पदाधिकारिणः केवलं परामर्शदायका बभूवुः। एतस्य परिणामस्वरूपं तेषां स्वालम्बनमेव विनष्टम्, कार्ये शैथिल्यञ्चाजायत। कुरानशरीफानुसारेणासौ सर्वमेव राजकीयकार्यमकरोत्। तेन पदाधिकारिणां कार्यक्षेत्रं विस्तृतं जातम्। जनानां धार्मिकविधानं कार्यकलापञ्च अवलोकयितुमेकः स्वतन्त्रो विभाग एव निर्धारितस्तेन। योग्यतानुसारं राजकीयकार्यमसम्प्रदायधार्मिकविचारेणैव पदाधिकारिणो विहितवान्। कृषकाणां हितकारकोऽपि स तेभ्यः करमधिकं गृहीतवानासीत्।

धार्मिकपक्षपातेन कठोरतया जजियाकरग्रहणेन अन्यायपूर्णव्यवहारेण च हिन्दुप्रजाऽतीव पीडिता तस्मान्न्यायस्याशा व्यर्था मानितवती। शासकीयकार्येभ्यो बहवो हिन्दवः पृथक्कृतास्तेन। बहूनि हिन्दुमन्दिराणि मस्जिदरूपे परिणमितानि। स्वकीयधार्मिकविचारे परिपक्वबुद्धी मुहम्मदीयो शियामुहम्मद काफिरमिति कथितवान्। प्रतिदिनं पञ्चवार नमाज पठन् रोजाव्रतमपि स सर्वदा चकार।

किन्त्वविश्वासग्रस्तोऽसौ स्वकीयपुत्रेष्वपि विश्वासमेव चकार, का कथाऽन्येषाम्। अन्यैः स्वपुत्रैः सह प्रेमपूर्णव्यवहारमकुर्वन्नसौ ज्येष्ठपुत्रमष्टादशवर्षाणि यावत्कारागारे स्थापितवान्। तन्मृत्यो पर शाहजादा मुअज्जिमो बहादुरशाहनाम्ना राज्यसिंहासनासीनो बभूव।

*किन्तु मुकामणे! मृत्युसमये संसारे कृतं स्वकार्यं सर्वं एव जनाः संस्मरन्ति। औरङ्गजेबोऽपि संस्मृत्य स्वकृत्यं स्वपुत्रकामबख्शस्य समीपे पत्रमेकं लिलेख। तद्यथा—*

'*तवासाहाय्यदशाया दुःखितेनैकाकिना मया गम्यते।* किन्तु नास्ति किमपि फलम्। प्रजासु विशेषतो हिन्दुषु यादृश अत्याचारो व्यधायि, तस्य महान्तं भारमादाय महाप्रस्थानं क्रियते। मया किमपि नैव सहानीतम्, किन्तु पापस्य दुराचारस्यान्यायस्य परोत्पीडनस्य परधर्मोच्छेदनप्रयासस्य महान् भारोऽधुना नीयते सहैव। इदानीं यत्रैव पश्यामि, तत्रैवेश्वरमेव विलोकये। मुहम्मदीयरक्तपातस्त्वया कदापि न कर्तव्यो येनापरोऽपि भारो मयि समापतेत्। अहं त्वां स्वपुत्रांश्चेश्वरदयाया परित्यज्य सन्तप्तहृदयो गच्छामि। रोगग्रस्ता ते *माता* शीघ्रमेव परलोकं गमिष्यति। ईश्वरः शान्तिप्रदानं करोतु।'

मुहम्मदाजमकामबख्शा इति त्रयः पुत्रा औरंगजेबस्यासन्। औरंगजेबे मृते त्रयोऽपि राज्यार्थं कलहमकार्षुः। औरंजेबादेशपत्रानुसारेण सम्पूर्णमेव साम्राज्यं पुत्रेषु विभक्तमासीत्, किन्तु मुगलवंशे साम्राज्यविभागस्य नियमो नासीत्। अतः खड्गद्वारा राज्याधिकारिनिर्णयार्थं त्रय

एव समुद्यता बभूवुः। बादशाहजीवनकाले बीजापुरं गतः कामवरशः पश्चाद् धर्मरक्षकोपाधिविभूषितोऽन्येभ्योऽप्युपाधिप्रदानं चकार। मुअज्जमो राज्यकोषोपरि स्वाधिकारं संस्थापयितुमागरां गतवान्। आजमश्च शीघ्रतया दक्षिणभारतादागत्य धौलपुरे स्वभ्रात्रा सह युद्धमकरोत्, तस्मिन्पराजितश्च मरणमाप्तवान्।

बहादुरशाहोपाधिना विभूषितो मुअज्जमो दिल्लीराज्यसिंहासनमलङ्कृत्य स्वभ्रातरं कामबख्शं युद्धे निहतवान्। पुनर्बहादुरशाहः शान्तिसंस्थापनार्थं राजस्थानप्रयाणमकरोत्। राजस्थाने इदानीं मेवाडमारवाडामेरराज्यानि शक्तिशालीन्यासन्। राजस्थानेऽधिकारं आसीदौरङ्गजेबस्य। किन्तु तस्मिन् मृते अजितसिंहः सर्वानेव मुहम्मदीयाधिकारिणो निष्कासयामास, नूतनबादशाहाधिपत्यञ्च नैव स्वीकृतवान्। आमेरराजसिंहासनार्थं तस्मिन् समये कलह एव प्रवर्त्तमान आसीत्। मारवाडक्षत्रिया अजितसिंहाधिपत्यं स्वीकृतवन्तः। कियत्कालानन्तरमेवैतानि त्रीणि राज्यानि मिलित्वा सपमेकमकार्षुः, तथापि कोऽपि लाभो नाभूत्। किन्तु बहादुरशाहो राजपूतैः सह सद्भावपूर्णं व्यवहारमकरोत्।

गुरुगोविन्दसिंहे मृते सिक्खा बन्दावैरागिणं स्वनेतारमवृण्वन्। चत्वारिंशत्सहस्रसैनिकाने कनीकृत्य सर्वप्रथमं सरहिन्दाधिकारिणं वजीरखानं समाक्रम्य विद्रोहपताकां समुत्थापितवन्तः सिक्खाः। वजीरखान एव गुरुगोविन्दमुत्पीडितवान्। स गुरुगोविन्दसमक्षमेव मुहम्मदीयधर्मास्वीकारकौ तत्पुत्रौ इष्टिकाभित्त्या चयितवान्। एतस्मिन् समयेऽशीतिवर्षदेशीयो वीरतापूर्वकं युद्धं कुर्वन्नेव परलोकमाप्तवान् वजीरखानः। एतेन विजयेन द्विगुणशक्तिसम्पन्नो बन्दावैरागी सिक्खसैनिकान् लाहोरं विजेतुं विसर्जितवान्। किन्तु मुगलसैनिकैः पराजितो बन्दावैरागी पलायमानो लोहारगढदुर्गे समवाप्ताश्रयम्। तत्रैव दुर्गे स्वरक्षाप्रबन्धे संलग्ने बन्दा मुगलसैनिकैः पराजितो जातः। युद्धसञ्चालनं कुर्वन्तः सिक्खा मृते बादशाहे पुनः स्वकीयं दुर्गं विजितवन्तः। दक्षिणान्मुगल-

सैनिकेषु परावृत्तेषु महाराष्ट्रियाः पुनः कतिपयदुर्गाणि जितवन्तः। एतस्मिन् समये बादशाहकारागारमुक्ताय शम्भुजीतनयाय शाहूजीराजे राजारामस्य विधवा पत्नी ताराबाई राज्यसिंहासनेव ददौ। एतेन महाराष्ट्रिये विभागद्वयमभूत्। यदा दिल्लीसाम्राज्यस्य कम्पमाना स्थितिरासीत्तस्मिन्नेव समये जहाँदारकनिष्ठभ्रातृपुत्रः फर्रुखशियरो राज्यसिंहासनमधिकर्तुमियेष। राज्योत्तराधिकारयुद्धे स्वपितुः पराजयं मरणञ्च निशम्यासौ आत्महत्यां कर्तुमियेष, किन्तु मित्रैः प्रबोधितो विरतिमापेदे। अथ पाटलिपुत्रेऽसौ स्वमेव बादशाहं घोषितवान्, स्वनामाङ्किता मुद्रामप्यचालयत्।

प्रयागप्रान्तपालः सैयदहसनो बिहारप्रान्तपालः सुवेदारहसनश्च ततश्च समर्थितवन्तौ। लजया युद्धे मुगलसेना पराजित्य फर्रुखशियरो दिल्लीं गन्तुमना बभूव। पुनरपि युद्धे फर्रुखशियरस्यैव विजयोजातः। जहाँदारशाहश्च व्याकुलो भूत्वा दिल्लीं पलायितवान्। किन्तु स्वराज्याधिकारिण एव तं पराजित्य फर्रुखशियराय समर्पितवन्तः। अथ स जहाँदारं बन्दिनं विधाय निहतवान्। पुनः फर्रुखशियर एव बादशाहो बभूव। फर्रुखशियरः सैयदबान्धवान् धृत् सम्मानितवान् चिनकिलिचखान च दक्षिणदेशे प्रान्तपालं व्यधात्। बहादुरशाहो राजपूतान् पूर्णं जेतुं क्षमा नाभवत्। अत्रान्तरे तस्य राजपूतैः सिक्खैः जाटैश्च युद्धमभूत्। हुसैनालिः जोधपुरं समाक्रम्य अजितसिंहं मन्त्र्यर्थं विवशीचकार। राजा स्वपुत्रीं बादशाहाय दत्वा दिल्लीमागन्तुं मननपदग्रस्तभवत्। सिक्खाश्च बन्दावीरस्य नेतृत्वे युद्धं सञ्चालयन्तो बटालानामनगरमुद्ध्वस्तं विधाय गुरुदासपुर दुर्गमाधितवन्तः। अथ भीषणं संगरं कृत्वा मुगला गुरुदासपुरदुर्गं जित्वा बन्दावीरं च बन्दिनं विधाय लोहपिञ्जरे बद्धवन्तः। पश्चात्तत्सार्धान् कठोरदण्डैः पीडयित्वा वैरागिणः शरीरं चर्म तप्तलोहखण्डेन उत्कृत्यीकृत्य पातितवन्तः।

फर्रुखशियर-राज्यसमये पठानमुगलाफगानादिविदेशीयानां भारतीयानाञ्च विभागद्वयमासीत्। सैयदभ्रातर एव तं राज्यासीनं कृतवन्तः, अतस्ते राज्ये सर्वाधिकारेष्वेव आसन्। एवं पूर्वदत्तवचनानुसारम् अब्दुल्लामुगलं बादशाहः प्रधानमन्त्रिपदे नैव नियुक्तवान्। एतेन सैयदभ्रातरः साशङ्किता अभूवन्। फर्रुखशियरः सैयदभ्रातृभिः सह सद्भावं रक्षितुं निष्फलं प्रयत्नं कृत्वा कूटचक्रेण तान् पदच्युतान् कर्तुमियेष। बादशाहकृतं कूटचक्रमवगत्य अलिहुसैनो दिल्लीमागतवान्। तदागमनवृत्तं श्रुत्वा व्याकुलीभूतो फर्रुखशियरः सैयदबान्धवान् प्रसन्नीकर्तुं प्रयत्नं चकार। कश्चित्कालमुभयोर्मनोमालिन्यं दूरमप्यभूत्। किन्तु चतुराः सैयदबान्धवाः शीघ्रमेव दुर्गेऽधिकारं विधाय सिंहासनाद्बादशाहमवतार्य तस्य घोरमपमानं कृतवन्तः। पुनस्ते शाहजादौ क्रमशो राज्यसिंहासनासीनौ कृत्वाऽपतारितवन्तः।

तदनन्तरं सैयदबान्धवाः बहादुरशाहपौत्रं मुहम्मदशाहं राज्यसिंहासनासीनं कृतवन्तः। सैयदबन्धूनां व्यवहारेण सर्वं एव राज्याधिकारिणः क्षुब्धा भयभीताश्चासन्। सर्वप्रथमं छबीलारामो नागरो विद्रोहं कृत्वा सङ्करोगाक्रान्तः शीघ्रमेव ममार। तदनन्तरं विद्रोहकारिणं गिरिधरं वशीकर्तुं कृतप्रयत्ना असफला भयभीताश्च सैयदास्तमवधप्रान्तपालं नियुक्तवन्तः। मुहम्मदशाहस्य मूर्खतापूर्णनीत्या तेऽप्रसन्ना अभूवन्। बादशाहः कनापि प्रकारेण सैयदबान्धवेभ्यः स्वतन्त्रो भूत्वा निजामुल्मुल्कं प्रधानमन्त्रिणं व्यधत्त। एतस्य समये राजो जयसिंहस्यान्येषाञ्च पदाधिकारिणां प्रयत्नेन जजियाकरस्य समाप्तिरभूत्। नूतनः प्रधानमन्त्री अन्ये च कतिपये राज्यप्रधानाः शासनपरिष्करणयत्नं कुर्वन्तोऽपि चाटुकारप्रियस्य बादशाहस्य हस्तक्षेपेण किमपि कर्तुं नाशक्नुवन्। युवा मूर्खश्च बादशाहः स्वमित्रमण्डलीषु प्रधानमन्त्रिणमुपहसन्नासीत्। राज्यसभासदां हस्तक्षेपेण पारस्परिकविद्वेषेण च व्याकुलो भूत्वा

प्रधानमन्त्री निजामुल्मुल्को दक्षिणभारतं गत्वा नवीनमेकं राज्यं संस्थापितवान् ।

साम्राज्ये छिन्ने भिन्ने च जाते पारस्परिकविद्वेषेण रुहेलखण्डेऽफगानाः स्वतन्त्रं राज्यं संस्थापितवन्तः । दाऊदखानदत्तकपुत्रोऽलिमुहम्मदखानः स्वपितृमरणानन्तरं स्वतन्त्रं राज्यं संस्थापितवान् । जाटप्रधानचूरामनपुत्रा अपि विद्रोहमारेभिरे । शक्तिशालिनः पेशवानरेशाः गुजरातं मालवं बुन्देलखण्डञ्चोपद्रवग्रस्तं चक्रुः ।

पेशवाबाजीरावस्य नेतृत्वे महाराष्ट्रीया मुगलराज्यस्य अनेकेषु स्थानेषु उपद्रवं कृतवन्तः । एवं सर्वत्र प्रवृत्ते कलहे सम्भूते चौरद्रवे पारसबादशाहो नादिरशाहो भारतमाक्रान्तवान् ।

मेषचर्मव्यापारिणः पुत्रो नादिरशाहः आदावतीव साधारणमानवस्थौर्यकर्मनिरतश्चासीत् । परं परिवर्तितभाग्यशाली परिवर्धितसाहसश्चासौ स्वल्पेनैव कालेन पारसबादशाहो बभूव । कूटनीतिज्ञो नादिरः कन्दहारं विजित्य भारतीयमुगलसाम्राज्यमाक्रान्तवान् । मुगलसैनिकानामसावधानतया लाहौरपेशावरौ जित्वा करनालं च वशीकृत्य स दिल्लीं विवेश । अत्रान्तरे नादिरो मृत इति सर्वत्रैव मिथ्याप्रचारो बभूव । तेन क्रोधाविष्टोऽसौ दुरात्मा दिल्ल्यां सामूहिकीं हत्यां कर्तुमादिष्टवान् । प्रातर्नववादनादारभ्य द्विवादनं यावत्तत्र सामूहिको वधोऽभवत् । सामूहिकहत्यादुःखितो बादशाहः स्वकीयविश्वासपात्रौ राज्यकर्मचारिणौ सामूहिकहत्यावरोधार्थं नादिरशाहसमीपे प्रेषितवान् । ताभ्यां प्रार्थितो नादिरो सामूहिकीं हत्यामवरुरोध । पश्चात्सप्तकोटिरूप्यमितां मुद्रामादाय सिन्धुनद्याः पश्चिमीयभूभागञ्च स्वराज्यान्तर्गतं कृत्वा स स्वदेशं परावृत्तः ।

नादिरस्तु परावृत्तः, परं मुगलसाम्राज्यस्थितिरव्यवस्थितैव आसीत् । जाटाः सिक्खाश्च सरहिन्दे समाक्रमणं कृत्वा स्वनेतारं शासकं कृतवन्तः । महाराष्ट्रीया दक्षिणे पश्चिमे च स्वाधिकारं संस्थाप्य बङ्गे विहारे

चाक्रमणं प्रारब्धवन्तः। अलिमुहम्मदखानः कुमायूँपर्वतीयभूमिपर्यन्तम्, सादतालिखानोऽवधे, अलिवर्दिखानो दक्षिणे निजामुलमुल्कश्च स्वतन्त्रं राज्यं संस्थापितवन्तः। तैः सह समरं कुर्वन्नेव मुहम्मदशाहो मरणमापेदे।

पूर्वमेव वर्णितं मुक्तामणे! यद् बहादुरशाहः शाहूराजानं मुक्त्वा दक्षिणदेशं गन्तुमाज्ञापितवानिति। अथ बहुकालं मुगल-भवने निवासाद्विलासप्रियोऽसौ सतारामधिकृत्यापि राज्यमरक्षन्ने प्रमादितो बभूव तेन तद्राज्ये पेशवानामभिकारो बभूव। चतुरः कुशल-राजनीतिज्ञश्च कोंकणस्थो विश्वनाथपुत्रो बालाजीरावभट्टः प्रथमः पेशवा राज्यसंस्थापक आसीत्। महाराष्ट्रियराज्यं मण्डलेषु विभक्तम्। असौ राज्यकर्मचारिणा वेतनरूपेण द्रव्यप्रदानमेवाकरोत्।

बालाजीविश्वनाथस्य मरणात्परं बाजीरावः पितुः सिंहासन-मलञ्चकार। मुगलसाम्राज्यपतनानन्तरं स्वराज्यविस्तारस्य सुन्दरोऽवसर-स्तस्य कृते आसीत्। अत एव बाजीरावो मालवं बुन्देलखण्डं बरारञ्च जित्वा महत्या सेनया समावृतो दिल्लीनिकटमागतवान्। भयभीतो बादशाहः साहाय्यार्थं निजामुलमुल्कमाहूतवान्, किन्तु महाराष्ट्रियास्तं भोपालसमीपं एवावरुद्धवन्तः। पश्चादसौ सम्पूर्णं मालवप्रदेशं नर्मदा-चम्बलनद्योरन्तर्गतं प्रदेशं पञ्चाशल्लक्षपरिमिता मुद्राश्च प्रदाय सन्धिं चकार। एवमेव बाजीरावः पुर्तगालान् विजित्य बेसीनदुर्गमपि स्वाधि-कृतवान्। स्वजीवन एव बाजीरावो मुगलप्रान्तं महाराष्ट्रियप्रधानेषु विभज्य विद्वेषान्तं चकार। तत्समकालीना महाराष्ट्रियप्रधानकर्मचारिणो गायकवाड़, शिन्दे, भोसला, होल्करश्चासन्। पश्चादेतेऽपि स्वतन्त्रं राज्यं संस्थापितवन्तः। वीरसैनिको महान्नेता च बाजीरावो यद्यपि विलासप्रिय आसीत्, तथापि कदापि स राज्यकर्मणि शैथिल्यं नाकरोत्।

## बालाजी बाजीरावः

बाजीरावमरणानन्तरं तत्पुत्रो बालाजी बाजीरावः पेशवा बभूव। एतस्य शासनकाले महाराष्ट्रियशक्तिश्चरमोत्कर्षं गता। तद्राज्यकाले पेशवाकुलं समग्रस्य महाराष्ट्रस्य शासकमभूत्। राघोजी भोंसले भास्करपण्डितश्चोत्कलं प्रमथ्य वङ्गशासनाधिकारिणमलिवर्दिखानं पराजितवन्तौ। तावेव मुर्शिदाबादं समाक्रम्य हुगलीं नदीं च स्वायत्तां विधाय सम्पूर्णे वङ्गे स्वशासनं संस्थापितवन्तौ। पश्चात् सन्ध्यनुसारं दशलक्षमुद्रामधिगत्य तौ वङ्गसीमान्तं निश्चित्य तामनाक्रमितुं वचनं ददतुः।

बालाजीरावस्य मरणात्परं वल्लिसिनादेशानुसारेण पेशवाकुलमेव महाराष्ट्रस्य वास्तविकशासकं बभूव। मुहम्मदशाहस्य च मृत्योः परं मुगलसाम्राज्यस्य दशाऽतीव शोचनीया जाता। महाराष्ट्रियाः पुनः अतीव शक्तिशालिनो बभूवुः। तेषां साम्राज्यं चम्बलनदीतो गोदावरीपर्यन्तम्, अरबसागरादावङ्गसमुद्रं विस्तृतमभूत्। राजपूताः जाटाः मुहम्मदीयाश्च सर्वं एव तादधीनाः सम्बभूवुः।

भारतविजयानन्तरं विकृतचरित्रो नादिरो भीषणकाठिन्यपूर्णं कार्यं प्रारभत। तेन प्रजा राज्याधिकारिणश्चासन्तुष्टाः। अथ काजिलबाशो नामकस्तत्सैनिकस्तं निहत्य सेनाध्यक्षं मुहम्मदाब्दालिं बादशाहं व्यधात्। नवीनो बादशाहो बहुवारं भारतमाक्रान्तवान्। दिल्लीसभाया नैर्बल्येन धनिकानां परस्परं वैमत्येन च मुहम्मदाब्दालिः पञ्जाबं विजित्य स्वदेशं परावृत्तः। किन्तु महाराष्ट्रियाः पुनः पञ्जाबं जितवन्तः। पञ्जाबे महाराष्ट्रियाणामधिकारो जात इति वार्तां निशम्य अब्दालिः पुनर्महत्या सेनया संवृतः पञ्जाबमागतवान्। महाराष्ट्रिया अपि महतीं सेनां सगठितवन्तः। सेनाध्यक्षः सदाशिवरावः, उपाध्यक्षो विश्वासरावश्चास्ताम्। महाराष्ट्रियसेनापतयोऽश्वारोहिणः पदातय इब्राहिमगार्दिखानद्वारा

सञ्चालितनालिकास्त्रसैनिकाश्च पूनातः प्रस्थिताः। गायकवाड सिन्धिया-होल्करनरेशाः, राजपूतभूपाः, त्रिंशत्सहस्रसैनिकसम्पन्नो जाटनेता सूरजमल्लश्चापि समागत्य पेशवासेनाया मिलिताः। पानीपतस्थाने उभयोर्महान् समरो बभूव। प्रथमाक्रमणे महाराष्ट्रियाणां विजयो जातः, किन्तु विश्वासरावो वीरगतिमापेदे। तदनन्तरं प्रवृत्ते भीषणे समरे सदाशिवरावोऽपि मृतः। इब्राहिमो भीषणप्रहारेण व्यथितः, सिन्धिया-नरेशश्च रणात्पलायितः। वृत्तमिदं श्रुत्वा स्वयमेव पेशवा स्वराजधानीत उत्तरभारतं प्रस्थितः। किन्तु 'मुक्ताद्वय विनष्टम्, सप्तविंशतिस्वर्णमुद्रा अपहृता', सुवर्णानां रजतानां पुनः का कथेति' भावसमन्वं पत्रं पठित्वा क्षयरोगाक्रान्तोऽसौ तत्रैव पञ्चत्वमगात्।

पेशवामरणानन्तरं सम्पूर्णमेव महाराष्ट्रं नैराश्यान्धकारे पतितम्। सर्वगुणान्वितस्य पेशवाभूपस्यैक एव दोषो आसीत् यदसौ सैनिकानां शिविरे स्त्रीनिवासमपि अभ्यनुज्ञातवान्। तेन सैनिकेषु शैथिल्यमागतम्। पानीपतयुद्धे पराजयस्यापि इदमेव मुख्य कारणमभूत्।

मुहम्मदशाहमरणात्परम् अहमदशाहो राजा बभूव। निन्दसौ अतीवायोग्योऽशिक्षितश्च आसीत्। भोगे विलासे च सम्पूर्णं समयं नयन्नसौ प्रजाहिते किमपि ध्यानं नैवादात्। अनया तदकर्मण्यतया प्रजानां जीवन-मव्यवस्थितमभूत्। सोऽपि क्वापि शान्तिं नालभत। तं कियत्कालानन्तर-मेव राज्यकर्मचारिणः राज्यासनादवतार्य आलमगीरद्वितीयं राज्याधिका-रिणं चक्रुः। पश्चात्तमपि घातयित्वाऽन्यं मुगलकुलसमुद्भूतं जहाँदारशाह-पुत्रं मुहम्मदाजीमुद्दौलानं द्वितीयालमगीरनाम्ना राज्यसिंहा-सनासीनं चक्रुः।

अथ अहमदशाहः शाहआलमं बादशाहं शुजा उद्दौलानं प्रधान-मन्त्रिणं नजीबुद्दौलानं च सेनापतिं व्यधत्त। पश्चाद् बक्सरयुद्धे श्वेताङ्गा अवधाधिकारिणं शाहआलमं विजितवन्तः। स च विहारं बङ्गमुत्कलञ्च

श्वेताङ्गेभ्यः प्रदत्तवान्। तत्प्रतिकररूपेण श्वेताङ्गाः कडामिलाहाबाद-मण्डलं षड्विंशतिलक्षमुद्राश्च प्रतिवर्षं बादशाहाय प्रददुः। स च बादशाहो बहुकालं श्वेताङ्गशरणापन्नो भूत्वा पुनर्महाराष्ट्रियैरावाहितो दिल्लीं समाययौ। महाराष्ट्रियाश्च तं दिल्लीश्वरं विहितवन्तः। कियत्कालानन्तरमकबरशाहद्वितीयो बहादुरशाहश्च क्रमशो दिल्लीश्वरतामभूताम्। अयमेव बहादुरशाहो प्रवृत्ते सैनिक-विद्रोहे विद्रोहिणां नेतृपदमलञ्चकार। गौराङ्गास्तं पराजित्य बन्दिनञ्च विधाय रङ्गून प्रेषितवन्तः। इत्थं मुगलसाम्राज्यस्य कारुणिकमवसानमभूत्।



: २० :

# मुगलकालीना संस्कृतिः

मुगलसाम्राज्यावसानस्य त्रीणि कारणानि—औरंगजेबस्य धार्मिकपक्षपातो विदेशीयानामाक्रमणं मुगलानां स्वेच्छाचारित्वञ्चेति। द्वित्रान् विहाय सर्वे एव मुगलशासका निरङ्कुशाः स्वेच्छाचारिणः आसन्। तेषां मुखान्निःसृतं वाक्यमेव नियमोऽपरिमितोऽधिकारश्चास्ताम्। राष्ट्रियशासकस्याकबरस्य टोडरमल मानसिंह बीरबलप्रभृतयो बहवो हिन्दवोऽपि राज्यकर्मचारिण आसन्। तदा पूर्णशान्तिस्थापनेन कलाया उन्नतिरभ्यभूत्। शाहजहानसमयेऽपि जयसिंह-यशवन्तसिंहप्रभृतयो राजपूताः सेनापतिपदे नियुक्ता आसन्। किन्तु औरंगजेबः पक्षपातपूर्णनीत्या शशास। असौ विलम्बेन करदेषु हिन्दुषु वेत्रप्रहारमपि कारितवान्। धर्मान्धत्वेन कर्णमकुर्वतां हिन्दूनां कृतेऽसौ दण्डविधानमप्यकरोत्।

स्वभावेन मुगला भवननिर्माणरुचयो नूनमेवासन्। मुगलानां समये साहित्यस्याप्युन्नतिः सविशेषा अभूत्। हिन्दूनां मुहम्मदीयानां परस्परं मेलनेनोभयग्रन्थानां लेखनं संगीतविद्यायाश्चाप्युन्नतिरभूताम्। कतिपयमुहम्मदीया अपि संस्कृतभाषाध्ययनमकुर्वन्। हिन्दीभाषायामब्दुर्रहीमखानखानस्य रसखानस्य जायसीमल्लिकमुहम्मदस्य च रचना अतीव हृदयाह्लादकारिण्यः समभूवन्। खानखानस्य रसखानस्य च रचना कृष्णभक्तिपरिपूरिता, मल्लिकमुहम्मदस्य च वीररसपरिपूर्णाऽऽसीत्। बङ्गीयो मिर्जाहुसेनः श्रीकालीदेव्या भक्तिभरितां रचनां चकार। यद्वा मुहम्मदीया हिन्दुसङ्गीताध्ययनं हिन्दवश्च पारसीभाषाध्ययनं कृतवन्तः, कृतवन्तौ च द्वौ देशहिताय परस्परं मिलित्वा समरमपि।

बादशाहानां राजसभासु संस्कृत हिन्दी-पारसीविद्वांसो वर्तन्ते स्म। अस्मिन्काले ब्रजभाषायाश्चापि पूर्णा समुन्नतिरभूत्। हिन्दीभाषायाः सर-

रधककोऽकवरो बीरवलस्य लोकोक्त्याऽतीव प्रसन्नो भवन्नासीत् । अकबर-युगे हिन्दीभाषाया महान् कविस्तुलसीदास श्रीरामचरितमानस-नामकमुत्कृष्टतर काव्य विरचितवान् । तत्स मकालीनो महान् गायकः श्रीसूरदास श्रीकृष्णभक्तिपरिपूर्णं 'सूरसागर' नामक ग्रन्थ विलिख्य कृष्णभक्ति सर्वतोभावन प्रचारितवान् । भूषण देव केश बिहारीलाल-प्रभृतयो अन्येऽपि कवयो हिन्दीभाषाया बहून् ग्रन्थान् लिलिखु । वङ्गे च चैतन्यभागवतचैतन्यमगल चैतन्यचरिताद्यनेकग्रन्था निर्मिता । एत स्मिन्नेवसमये काशीरामदास मुकुन्दरामचक्रवर्तिप्रभृतयोऽप्यनेककवयो वङ्गदेशे बभूवु । तदा ब्राह्मणा विद्यापठनपाठने समाजोन्नयने च प्रवीणा आसन् । क्षत्रिया पुनर्युद्धकर्मणि दक्षा युद्धादपलायमाना', वैश्या व्यापारनिरता प्राप्ते सकटे राजभ्योऽ प द्रव्यप्रदा , शूद्राश्च कृष्या-दिकर्मदत्तमनाश्च बभूवु । मुगला पारसीकधर्मभक्ता सन्तोऽपि हिन्दु मतोत्सवादिक कुर्वन्त आसन् । अस्मिन्नेव समये हिन्दुमुहम्मदीयसम्पर्केण उर्दूभाषा जनिमलभत ।

भारते पारसीसाहित्यस्याप्युन्नतिरेतस्मिन्नेव काले प्राचुर्येण जाता । शेखमुबारकाबुलफजलाब्दुलकादिरप्रभृतयो धार्मिकग्रन्थानामनुवाद पारसीभाषायामकुर्वन् । मुगलाना सरक्षणे गुलबदनबेगम जौहराबुल-फजलनिजामुद्दीनाहमदाब्बासखानीफिरिस्ताबुलहमीदलाहोरीप्रभृतय स्तात्कालिकमितिहास लिखितवन्त । सुजानरायखत्री-ईश्वरदासनागर-भीमसेनप्रभृतयो हिन्दवोऽपि तत्सामयिकेतिहासलेखका अभूवन् ।

हिन्दुसाधव सूफीफकीराश्च हिन्दुमुहम्मदीययोर्मेलनस्य प्रयत्न-मकुर्वन् । सूफीसन्तसम्प्रदायेषु चिश्तिया, सुहरवर्दिया कादिरी, नक्श-बदीति सर्वोऽधिक प्रसिद्धा । चिश्तियासम्प्रदायसस्थापकरूपेण अजमेरस्थ-ख्वाजामुईनुद्दीनचिश्ती सुप्रसिद्ध । तदनुयायिना सख्या-तिविपुला आसीत् । प्रसिद्धतमेषु सम्मानितेषु फकीरेषु शेखसलीमचिश्ती ,

मीयामीरः सरमदश्चासन्। अनेके राजवंशीयाः पुरुषाः त्रिनश्चैतेषा शिष्या अभूवन्।

हिन्दुषु त्रिविधाः साधवो बभूवुः—१. ज्ञानाश्रयी, २. कृष्णोपासक, ३. रामोपासकश्च। ज्ञानाश्रयिसाधुषु कबीरप्रभृतय आराधनया सह ज्ञानमपि मनस्याप्तौ मुख्यं साधनं मन्वाना आसन्। चैतन्य-सूरदासप्रभृतयः कृष्णभक्ताः साकारस्येश्वरस्य प्रेमोपासना प्रधानमुक्तिसाधनमामनन्त आसन्। रामोपासका वैष्णवास्तुलसीदासप्रभृतय परमात्मानमेव पितरं राजानं मानयन्तः प्रेम्णो न्यायस्य चादर्शं स्वीकृतवन्तः।



: २१ :

# भारते गौराङ्गाणां प्रवेशः

दैवज्ञः प्रावोचत्—मुक्तामणे ! अत्रावधि मया समासतो मध्यकालीनभारतीयराज्यवर्णनं कृतम्। अधुना भारते श्वेताङ्गानां विदेशीयानां राज्यं कथमभूदित्यपि वर्णयामि, सावधानतया शृणु।

## पुर्तगालानामागमनम्

पश्चिमदेशवासिभिः सह भारतस्य सम्बन्धः प्राचीनकालादेवासीत्, किन्तु सिकन्दराक्रमणानन्तरं विदेशीयानामागमनं प्रायेणावरुद्धम्। पुनर्यदा कोलम्बसोऽमेरिकान्वेषणं चकार, तदा पुर्तगालवासिनामपि मनसि नूतनदेशान्वेषणस्य बलवतीच्छा समुद्भूता। अथ वास्को द गामा नामकः पुर्तगाल यात्री 'गुडहोप' द्वीपस्य चतुर्दिक्षु द्विवारं भ्रमणमकार्षीत् महता पोतेन। कथमपि भारतस्य कालीकटनामकं स्थानमासाद्य स कालीकट-भूपेन सह व्यापारवार्तामकरोत्। तस्मिन् समये भारतीयव्यापारो अरबदेशवासिनां हस्तगत आसीत्। पुर्तगालिनस्तान्पराजित्य समुद्रतीरे निवासमकार्षुः। तेषां प्रथमो राज्यपाल 'अलमीडा'नामकः पुर्तगालीयो बभूव। स च पुर्तगालवसतिरक्षार्थं दुर्गमेकं निर्मापितवान्।

तदनन्तरञ्च अलबुकर्कनामा राज्यपालो बभूव। असौ गोआ विजित्य तामेव भारतीयपुर्तगालवसतिं राजधानीमकरोत्। समुत्साही अलबुकर्को मलक्का जित्वा काकोत्रोरभुजनामकद्वीपयोः पुर्तगालवसतिं स्थापयामास चकार। सर्वप्रथममस्यैव पुर्तगालवासिनः पूर्वदेशेष्वपि साम्राविस्तारेच्छा बभूव। तया प्रेरित अलबुकर्कः कतिपयस्थानेषु दुर्गाणि विशेषतो विनिर्माय भारतीयमुहम्मदीयैः सह विवाहसम्बन्धं विधातुं स्वधर्मावलम्बिनः प्रोत्साहितवान्। बहवः खिस्ताः भारतीयैः सह विवाहसम्बधं संस्थाप्य तान् खिस्तधर्मदीक्षितानपि कर्तुमारभन्त। अल-

-बुकर्कस्य शासनप्रबन्धः सुव्यवस्थित आसीत्। किन्तु धार्मिकपक्षपातेनासौ भारतीयान् सदैव घृणितदृष्ट्या विलोकितवान्।

अलबुकर्कस्यानन्तरं येऽपि राजपाला अभूवन्, सर्वे एवायोग्या आचरणभ्रष्टाश्च आसन्। अत एव ते अलबुकर्क-स्थापितं राज्यं रक्षितुमपि असमर्था अभूवन्। पुर्तगालीनामकर्मण्यतयैव स्पेन-भूपेनापि पुर्तगालराज्यं स्वसाम्राज्ये विलीनीकृतम्। केवलं गोआ-डामन-ड्यूनामक स्थानत्रये पुर्तगालिनामाधिपत्यं सुस्थितम्।

राजकर्मचारिणां कृतेऽपि व्यापाराज्ञाप्रदानम्, मुहम्मदीयैः सह शत्रुभावः, हिन्दू-मुहम्मदीययोः द्वेषभावजननमेतानि त्रीणि कारणान्यभूवन् पुर्तगालिनां पतनस्य। सत्स्वप्येतेषु कारणेषु इङ्ग्लैण्ड-हालैण्डदेशवासिनोराक्रमणस्य पूर्णतया प्रतीकाराभावेन मुख्यं कारणं पुर्तगालपतनस्य वक्तव्यं भवेत्।

## डचानामाक्रमणम्

लाभप्रदभारतीयवाणिज्येनाकृष्टा व्यापारकर्मणि कुशलाः पोतेन समुद्रयात्रायामभ्यस्ता हालैण्डनिवासिनो डचाः पूर्वदेशैः सह व्यापारं कर्तुमेकां व्यापारसंस्थां स्थापितवन्तः, भारतीयसमुद्रतीरे च स्वस्थितिं सुदृढां चक्रुः। तेषां व्यापारिकलाभार्थं स्पेनवाङ्गैः सह घोरा प्रतिद्वन्द्विता देशान्तरैश्च सह मैत्री-सम्बन्धश्चासीत्। स्पेनवाङ्ग डचयोः सन्धिप्रयासो निष्फलीबभूव। द्वयोः परस्परं कलहः सर्वदैवाभूत्। पश्चादिङ्ग्लैण्डभूपेन माध्यस्थं कृत्वा तयोः सन्धिः कारितः। किन्तु पूर्वीयदेशानां प्रतिकूलोऽयं सन्धिर्व्यर्थो बभूव। ऐम्बोयनापुरोपनिवासिडचैः स्पेनवाङ्गा निष्कासिताः। पश्चादम्बोयनानाम्नि स्थाने भीषणं हत्याकाण्डमप्यभूत्। तेन विक्षुब्धा अपि स्पेनवाङ्गाः किमपि कर्तुं नाशक्नुवन्। कालक्रमेण तादृशी युक्तिः साधिता, यया डचनिवासिनो दण्डरूपेण बहुधनं दत्तवन्तः, उभयोः सन्धिश्च सम्पन्नः। किन्तु सन्धिरयं चिरस्थायी नाभूत्।

डचाः श्वेताङ्गाना फ्रांसवासिनाञ्च विरुद्ध समर कृत्वा हानिमेवाप्तवन्तः। मलयद्वीपे तेषा स्थितिर्यद्यपि सुदृढा समभूत्; तथापि भारते ते बहूनुद्योगान् परित्यक्तवन्त., सर्वाधिकाररहिताश्च सजाताः।

डचव्यापारसस्थाना राज्येन सह घनिष्ठसम्बन्धत्वात् 'कम्पनी'-नामिका सस्थाया हिताहितयोः प्रश्नो यूरोपीयराजनीतिकदशाधीन एवासीत्। व्यापारेणैव पूर्णलाभे जाते राज्य-सस्थापने ते अलसाः सवृताः। एव यूरोपीयमहायुद्धे तेषा सर्वा साधनसामग्री समाप्ति गता। एतानि ग्रीयेव कारणानि डचाना पतनस्येति स्फुट वक्तु शक्यम्।

## भारते श्वेताङ्गाना समागमनम्

एतस्मिन्नेव समये इग्लैण्डराज्येन स्पेनस्यामरडानामक पोर्त विजितम्। एतेन विजयेन प्रोत्साहिताः कतिपये लन्दन-व्यापारिणः एलिजाबेथमहाराज्ञीसकाशादेकमाज्ञापत्र सम्प्राप्य पूर्वीयद्वीपसमूहेषु व्यापारार्थमेका सस्था ( कम्पनी ) सस्थापितवन्तः। एवमेव तेषा सेनापतिः हॉकिन्सः जहाँगीरबादशाहादपि सूरते व्यापार-भवननिर्माणार्थमनुज्ञापत्र प्राप्तवान्। किन्तु पुर्तगालोगानामाग्रहेण तदाज्ञापत्र भङ्गीचकार बादशाहः। पुनः इग्लैण्डभूप-जेम्सप्रथमस्य राजदूतो भूत्वा जहाँगीर-राजसभाया समागतो टामस-नामकः श्वेताङ्गः स्वबुद्धिकौशलेन राजनीतिकपाटवेन च बादशाहसकाशात् व्यापारकरणायैक नूतनमाज्ञापत्र प्राप्तवान्। अथ स सूरते व्यापारभवन व्यापारकेन्द्र च विधाय मछलीपट्टने महदेकमुद्योग प्रतिष्ठान निर्मापितवान्। पश्चान्मद्रासनगरनिर्माणारतत्र दुर्गनिर्माणञ्चाभूताम्।

एतस्मिन्नेव समये लन्दनभूपस्य स्वकीयराजसभासदस्यैः सह कलहे सम्प्रवृत्ते कम्पनी विपत्तिग्रस्ता अभवत्। किन्तु यदा चार्ल्स-द्वितीयो राज्यसिंहासनासीनो बभूव, तदा कम्पनीसस्थाया दशापरिवर्तन सञ्जातम्। मुद्रानिर्माण दुर्गनिर्माणाय खिस्तेतरधर्मावलम्बिभिः सह

युद्धाय सन्धे वा पूर्वदेशवासिश्वेताङ्गयोः कलहनिराकरणाय व्यापारकरणाय च कम्पनी चार्ल्सद्वितीयसकाशात् नूतनमधिकारं प्राप्त् । पुर्तगालराजदुहित्रा भार्यया सह विवाहावसरे यौतुकरूपेण प्राप्तं वम्बईनगरमपि व्यापारार्थं कम्पनीहस्तगतञ्चकार सन्दनभूपश्चार्ल्सद्वितीयः ।

तदनन्तरं श्वेताङ्गाः पूर्वीयद्वीपसमूहेऽनेकानि भवनानि व्यापारकेन्द्राणि च संस्थापयितुमचेष्टन्त । किन्तु बङ्गीयमुगलशासकः शायस्तखानस्तान्निष्कासितवान् । अद्यावधि श्वेताङ्गानां व्यापार एव मनः केन्द्रितमासीत्, किन्तु मुगलराज्यपतनावसरे राजनीतिकप्रभुतामपि संस्थापयितुं तेऽवहिताः सम्बभूवुः । पुनर्जोशियाचाइल्डः सूरतव्यापारस्य सञ्चालको बभूव । तदा मुगलसाम्राज्यस्य अवसानं प्रारब्धमासीत् । अतः कम्पनी राजनीतिकप्रभुतां संस्थापयितुं मुगलानां महाराष्ट्रियाणाञ्च अत्याचारमवरोद्धुं सचेष्टा सम्बभूव । एतेन क्रुद्ध औरंगजेबः श्वेताङ्गविरुद्धं युद्धमुद्घोष्य पटना-कासिमबाजार-मछलीपट्टनस्थितानि तेषां व्यापारकेन्द्राणि स्वहस्तगतानि चकार । पश्चिमीयसमुद्रतटेऽपि युद्धारम्भो जातः, सूरतस्थितं व्यापारकेन्द्रमपि मुगलाधीनमभूत् ।

अथ औरंगजेबः सर्वान् श्वेताङ्गान् भारतात् निष्कासयितुं घोषितवान् । किन्तु बादशाहसकाशे क्षमाप्रार्थनां कृत्वा पुनरपि श्वेताङ्गाः सुस्थिराः सम्बभूवुः । जाबचारनाक नामा श्वेताङ्गः 'पुनहुगली' पराहृत्यैकमुपनिवेशं संस्थापितवान्, यत्रेदानीं कलिकाता महानगरी वर्तते ।

औरङ्गजेबमरणानन्तरं भ्रष्टशासकेन सह श्वेताङ्गानां पुनरपि प्रवृत्ते कलहे कम्पनी-प्रतिनिधिद्वयेन दिल्लीं गत्वा विलियमहैमिल्टनाह्वयेन नूतनमनुमतिरत्नमधिगतम् । चिकित्सको हैमिल्टनः फर्रुखशियरबादशाहं भयङ्कररोगाद्रक्षितवान् ।

पूर्वीयद्वीपसमूहे भारतेऽपि कम्पनीः संस्थापितवान्, किन्तु सर्वा एव ता विनष्टा बभूवुः । एतासां वैफल्यकारणं कर्मचारिणां खिस्तधर्म-

गुरूणाञ्च हस्तक्षेप एवाभवत् । चतुर्दशलुई-नृपशासनसमये प्रधानमन्त्री कोलवर्टः द्वितीयामेका कम्पनीं संस्थापितवान् । राजनीतिकशक्तिसंस्थापनं राजशक्तिसबलीकरणं खिस्तमतप्रचारश्चैतत्त्रयमेव कम्पनीस्थापनस्य उद्दिष्टमासीत् । दशवर्षानन्तरं फ्रांसिसमार्टिनः पाडिचेरिनगरं निर्ममे, चन्दननगरे च व्यापारकेन्द्रं संस्थापितवान् । फ्रांसहालैण्डयोर्मध्ये प्रवृत्ते युद्धे कम्पनीयं क्षता, किन्तु शीघ्रमेव तस्याः पुनः सङ्गठनमभूत् । इदानीं कम्पनीचालका अतीव योग्या आसन् । कियत्कालानन्तरमेव ते माहीनगरमपि स्वायत्तीकृतवन्तः । डयूमास्च दक्षिणस्याव्यवस्थितां राजनीतिकदशां विलोक्य हस्तक्षेपमकरोत् । राज्यसिंहासनार्थं च प्रवृत्ते युद्धे तञ्जौरभूपस्य साहाय्यं कृत्वा कारीकलञ्च स्वायत्तीकृतवान् । इत्थं कम्पनीव्यापारशक्तौ वृद्धिरभूत् । फ्रान्सीयानामिदानीं प्रतिष्ठाऽपि विपुला सञ्जाता । यदा डूप्ले पाण्डिचेरिराज्यपालो भूत्वा समाजगाम तदा कम्पनीतिहासे नूतनोऽध्यायः प्रारभत ।

यूरोपदेशवासिनां भारतागमनेन भारतीयमध्ययुगसमाप्तिर्नवयुगारम्भश्च सहैवाभूताम् ।

कम्पनीद्वयमेव भारते व्यापारं कृत्वा धनोपार्जने संलग्नम्, किन्तु मुगलसाम्राज्यस्य यथा यथा पतनमारब्धं तथा तथा तद्द्वयमपि स्वशक्तिसंवर्धनमकरोत् । परस्परं शक्तिसंवर्धनस्पर्धया द्वयोर्युद्धमपि प्रादुरभूत् । अत्रान्तरे फ्रांसीयः सेनापतिर्लाबूर्दोनः श्वेताङ्गेषु समाक्रमणं चकार । सम्प्रवृत्ते समरे कस्यापि विजयो न बभूव । अस्मिन्नेव समरे भारतीयभूपानां शैथिल्यं नैर्बल्यञ्च तौ परिलक्षितवन्तौ ।

डूप्ले विचारितवान् यद् यूरोपीययुद्धप्रणाल्या सैनिकशयमेन च भारते स्वशक्तिसंवर्धनं कर्तुं शक्यते । अनेनैव विचारेणासौ राजनीतिकविषयेष्वपि योगदानकरणाय सूक्ष्मं विचारितवान् । एतस्मिन्नेव समये निजामुल्मुक आसफशाहो मरणमापेदे । डूप्लेभावेन भारतीयराजनीत्यां प्रवेष्टुमयं मनोऽनुकूलोऽवसरो लब्धः । प्रायः स्वतन्त्रशासकस्य

निजामस्य मृत्योः परं तत्पुत्रपौत्रयोर्मध्ये राज्यसिंहासनार्थं कलहः सम्प्रवृत्तः। कर्णाटकनवाबमनवरुद्दीनं पदच्युतं विधाय चन्दासाहबः स्वयमेव नवाबो भवितुमिच्छुरभूत्। निजामपौत्रो मुजफ्फरजगश्चन्दासाहबेन मिलितो वृतवान्। एवं द्वावपि मिलित्वा फ्रासीयेभ्यः साहाय्यं याचितवन्तौ। डुप्लेसाहबस्तयोः प्रार्थनां स्वीकृतवान्। अनेन हैदराबादे कर्णाटके च स्वशक्तिसंस्थापनं भविष्यतीति स निर्धारितवान्। श्वेताङ्गा अपि पूर्वमेव तञ्जौरराज्यसिंहासनार्थं हस्तक्षेपं कृतवन्त इति निदर्शनमपि तस्य पुरत आसीत्। एवं विचार्य स साहाय्यमददत्। अथ मुजफ्फरजगश्चन्दासाहबश्च मिलितमाक्रमणं कृतवन्तावनवरुद्दीनं प्रति। सम्प्रवृत्ते युद्धेऽनवरुद्दीनो मृतस्तत्पुत्रो मुहम्मदालिश्च त्रिचनापल्लीं पलायितवान्। एवं चन्दासाहबः कर्णाटकनवाबो बभूव। प्रत्युपकाररूपेण स फ्रासीयेभ्योऽशीतिग्रामान् प्रददौ। निजामद्वितीयपुत्रो नाजीरजगो मुजफ्फरजगमाक्रम्य पराजितवान्, किन्तु कियत्कालानन्तरमेव नाजिरजगोऽपि निहतः।

अनन्तरं मुजफ्फरजग एव निजामो बभूव। स च फ्रासीयेभ्यः डुप्लेसाहबाय च ग्रामानदात्। अधुना डुप्लेसाहबः सम्पूर्णदक्षिभारतस्य राज्यपालो बभूव। फ्रासीयसेनापतेर्बुसीसाहबस्य संरक्षणे मुजफ्फरजगः स्वराजधानीमाजगाम, किन्तु कस्मिंश्चिद् युद्धेऽसौ मरणमापेदे। बुसीसाहबो निजामुल्मुल्कतृतीयपुत्रं सलाबतजगं राज्ये संस्थाप्य स्वयमपि तद्रक्षणार्थं सप्तवर्षाणि यावद् हैदराबाद एव निवासं चक्रे।

## श्वेताङ्गफ्रान्सदेशीययोर्युद्धम्

पुनश्चन्दासाहबः फ्रासीयाश्च त्रिचनापल्लीमवरुद्धवन्तः। अद्यावधि श्वेताङ्गा मुहम्मदालिसाहाय्यं नैव कृतवन्तः। किन्तु साम्प्रतं तस्य पूर्णं साहाय्यमवश्यं कर्तव्यमिति,तैर्विचारितम्। तदनुसारं बुद्धिमान् श्वेताङ्गः क्लाइव एकमुपायं चकार। यदा चन्दासाहबो राजधान्यवरुद्धो

भवेत्तदा सर्वं एव स्वराजधानीरक्षार्थमवश्यमेव पलायिष्यन्ते, तेन मुहम्मदालेः शिरसि समुपस्थिता विपत्तिः परिसमाप्तिं यास्यति। इत्थमेव कृतवान् सर्वगौराङ्गसहितः मुहम्मदालिसहितश्च क्लाइवः। अवरुद्धेऽर्काटे स्वराजधानीरक्षार्थं त्वरितमेव ययौ चन्दासाहबः। क्लाइवस्त्रिपञ्चाशद्दिवसपर्यन्तं स्वकीयरक्षां कुर्वन् युद्धं चकार। पश्चात्त्रिंशद्भारतीयसैनिकेषु पञ्चचत्वारिंशद्गौराङ्गसैनिकेषु च निहतेषु क्लाइव एव। विजयमवाप एतस्याः क्लाइवयुक्तेः सर्वं एव प्रशंसां कृतवन्तः। अधुना मुहम्मदालिरक्षार्थं श्वेताङ्गसैनिका भारतीयसैनिकाश्च त्रिचनापल्लीं गतवन्तः। भयात्पलायितश्चन्दासाहबः तञ्जौरसेनापतेः समक्षमात्मसमर्पणं कृतवान्। तेन च स निहतः, मुहम्मदालिश्च कर्णाटकनवाबो बभूव।

एतेनाप्रसन्नो फ्रांसबादशाहो डूप्लेसाहबं फ्रांसे समाहूय तत्स्थाने गोडयूसाहबं राज्यपालं नियुक्तवान्। श्वेताङ्गफ्रान्सीययोर्मध्ये एकः सन्धिरपि सम्वभूव, येन कर्णाटके द्वयोः समानाधिकारो जातः। किन्तु सन्धौ कार्यरूपेऽपरिणत एव यूरोपे सप्तवर्षीययुद्धारम्भोऽभूत्। डुप्ले यस्मिन् कर्मणि नियुक्तस्तदर्थमत्यावतीव योग्यः साहससम्पन्नो राजनीतिज्ञश्चासीत्। एष डूप्ले यद्यप्यसफलो जातः, तथापि सर्वप्रथमं तस्यैव चेतसि भारते राज्यस्थापनस्य विचारः प्रादुरभूत्। यद्यसौ साफल्यमविष्यतोऽभविष्यत्तदा श्वेताङ्गराज्यस्थाने फ्रांसीयराज्यमेवाभविष्यत्। अस्तु नाम, किन्तु भारतीयेतिहासे डूप्लेसाहबस्यापि नाम गौरवमहितमेव वर्तते।

चतुर्वर्षाणि यावच्छान्तेः परं भारते फ्रांसीयगौराङ्गयोर्मध्ये सप्तवर्षव्यापी युद्धं प्रारब्धम्। फ्रांसीयानां कृते एष अवसरः शोभनं आसीत्। एतस्मिन् समये वङ्गे सङ्कटग्रस्तानां श्वेताङ्गानां रक्षार्थं क्लाइवस्तत्र गतवान्। किन्तु फ्रांसीयसेनापतिर्लैलीस्तत्र विलम्बेन गतः। तावत् प्लासीयुद्धमवश्यितम्।

किन्तु वीरो लैली पूर्वं सेण्टडेविडं स्वायत्तीकृत्य मद्रासमाक्रम्य साफल्यमनाससाद्। अनन्तरं सैनिकानां विद्रोहेण लैलीकार्ये विघ्नमभूत्। एवं तस्य धनाभावः पाण्डिचेरिराज्यपालेन सह असन्तोषजनकः सम्बन्धश्च आसीत्। यद्यपि श्वेताङ्गानां पोतापेक्षया फ्रासीयानां पोता बहुशक्तिशालिन आसन्, तथाप्यसौ शत्रूणां समक्षं स्थातुं नैवाशक्नोत्। वाण्डिवासयुद्धे स्यार आयरकूटो लैलीं पराजित्य बुसीं बन्दीकृतवान्। ततः परं द्वितीये वर्षे पाण्डिचेरी श्वेताङ्गानां हस्ते गता। लैलीमहोदयं बन्दिनं विधाय इङ्गलैण्डदेशं प्रेषितवन्तः श्वेताङ्गाः। तत्र मुक्तोऽपि स फ्रान्सं गत्वा मृत्युदण्डं लब्धवान्।

पुनः सप्तवर्षीययुद्धमपि अवसितम्। सन्ध्यनुसारं फ्रासीयानां शक्तिरतीव क्षयं गता। श्वेताङ्गैस्तेषां सेनाऽपि सीमितीकृता। केवलं व्यापारार्थमेव वङ्गं गन्तुं तेऽनुमताः। मुहम्मदालिश्च फ्रासीयप्रभावरहिते कर्णाटके नवाबो बभूव। सलावतजङ्गः तद्भ्रात्रैव निरधान। उत्तरीयभारतशासकस्य मण्डलानि श्वेताङ्गाधीनान्यभूवन्। मुगलाधीश्वरादादेशमवाप्य ते वैधानिकरूपेणापि स्वाधिकारं सुदृढं चक्रुः।

### श्वेताङ्गसाफल्यकारणम्

फ्रासीयव्यापारसंस्थापेक्षया श्वेताङ्गव्यापारसंस्था सुदृढा आसीत्। तेषां दशापि आर्थिक-व्यापारिकदृष्ट्या अतीव चमत्कृता आसीत्। फ्रासीयसंस्था तदधिकारिणश्च तस्याः कार्येषु मनोयोगं नैव दत्तवन्तः। श्वेताङ्गसंस्था सुप्रबन्धपरिपूर्णा शासकोत्तमर्णा चासीत्। तत्सञ्चालकाश्च नीतिगम्भीरा आसन्। फ्रान्सनरेशा यूरोपीययुद्धेऽधिकं सतर्कः स्वकीयोपनिवेशं चात्यन्तमुपेक्षित आसीत्। श्वेताङ्गा युद्धसमयेऽपि स्वव्यापारेऽधिकं ध्यानं ददाना वङ्गं जित्वा स्वसम्पत्तिं वर्धयन्त आसन्। फ्रासीया युद्धसमये स्वव्यापारात् सर्वथा उपेक्षिता युद्धे च लाभमविचार्य बहुधनं व्ययीकुर्वाणाश्च बभूवुः। समरदृष्ट्या क्लाइव इव लारेन्सोऽपि योग्यः

कर्मठश्च सम्बभूव । पुनः फ्रांसवासिनः परस्पर कलहायमाना ऐकमत्येन कदापि नैव कार्यमकुर्वन् । वङ्गविजयेन श्वेताङ्गानामवङ्गा विजयाधारोऽपि सुन्दरः सम्भूत् । श्वेताङ्गाना यावत्समुद्रेऽधिकार आसीत्तावदन्यः कोऽपि देशो भारते विजय प्राप्तुन्नाशक्नोत् ।

## हैदरालेरुत्कर्षः

विच्छिन्ने विजयनगरसाम्राज्ये मैसूरदेशोपरि वाडियारवशस्य राज्यमभूत्, किन्तु शक्तिहीने वाडियारसाम्राज्ये हैदरालिर्नामा एकः सैनिको बलप्रयोगेण तदधिकृतवान् । नीचमुहम्मदीयकुलप्रसूतोऽपि हैदरालिः स्वयोग्यतया क्रमशः शक्तिसम्पन्नो बभूव । तस्मिन् समये नाममात्रमेव मैसूरवशीयो राजासीत्, किन्तु सर्वाधिकारसम्पन्नो हैदालिरेव । श्वेताङ्गाना दक्षिणभारतीयभूपैः सह मित्रतासम्बन्धः काठिन्यपरिपूर्ण अभूत् । मैसूरो निजामो महाराष्ट्रियाश्च स्वप्रभुतानिमित्त युद्ध कुर्वाणाश्च बभूवुः ।

एतस्मिन्नेव समये मद्रासराज्यसभायामेको नियम. पारितो बभूव, यदनुसार हैदरालिविरुद्ध निजामसाहाय्य विधातु वचनबद्धा बभूवुः श्वेताङ्गाः । ततः पर महाराष्ट्रिया मैसूरमाक्रान्तवन्तः, किन्तु हैदरालिस्तानुत्कोच दत्वा परावर्तितवान् । श्वेताङ्गसेनापतिः कर्नलस्मिथो यदा निजामसाहाय्यार्थं हैदराबाद गतवान्, तदा निजामसैनिका इदमवलोक्य महाश्चर्यान्विता यत् निजामसैनिकाः श्वेताङ्गसैनिकैः सह युद्धार्थमुद्यता वर्तन्ते इति । तथा स्थितौ नैराश्य नैवाप्तवान् स., प्रत्युत निजामसैनिकान् हैदरालिसैनिकांश्च 'त्रिनोमाली' नामकस्थाने पराजितवान् । मद्रासराज्यसभा पुनरपि निजामेन सह सन्धि कृतवती । एतेन क्रुद्धो हैदराल्युद्धं कुर्वन् मद्रासगोपुरपर्यन्त जगाम ।

अथ हैदरालिः श्वेताङ्गैरेकस्मिन्नपमानजनकसन्धि कारयित्वा उभाभ्या विजितस्थानानि परस्पर परित्यज्य स्वदेशमाप्तवान् । श्वेताङ्गाश्च 'यदा कश्चित्त्वामाक्रमिष्यति, तदा साहाय्य ते करिष्यामः खलु' एवं

वचनबद्धा अभूवुः। पुनरपि यदा महाराष्ट्रीया मैसूरमाक्रान्तवन्तस्तदा हैदरालिः गौराङ्गेभ्यः साहाय्यं प्रार्थितवान्। किन्तु श्वेताङ्गाः साहाय्यं नैव दत्तवन्तः। एतेन हैदरालिः श्वेताङ्गानां प्रबलः शत्रुरभवत्।

वङ्ग-पतनम्

यदा श्वेताङ्गाः फ्रांसीयाश्च स्वप्रभुतां स्थापयितुं दक्षिणभारते परस्परं कलहं कुर्वाणा आसंस्तस्मिन्नेव समये वङ्गे राज्यविप्लवो जातः। श्वेताङ्गाश्च स्वशक्तिवर्धनपूर्वकं वङ्गनवाबानां पतने संलग्ना आसन्। वङ्गो मुगलराज्यस्यैकः प्रान्त आसीत्। तस्मिन् समये तच्छासको मुर्शिद-कुलीखान अभवत्। दिल्लीसुलतानफर्रुखशायरेण श्वेताङ्गा एकमाज्ञा-पत्रं प्राप्तवन्तः स्वशक्तिसंरक्षणार्थम्। मुर्शिदखानमरणानन्तरं तत्पुत्रः अलिवर्दिखानो वङ्गप्रान्तपालो बभूव। श्वेताङ्गाः फ्रांसीया हालैण्ड-निवासिनश्च कलिकातायां चन्दननगरे चिनसुरायाञ्च स्वां स्वां वसतिं निर्माय निवासं चक्रिरे। औरंगजेबादेकमाज्ञापत्रं प्राप्य श्वेताङ्गाः कलि-कातायां 'फोर्टविलियम' नामकमेकं दुर्गं निर्मितवन्तः। कलिकाता चैका महती नगरी अधुना वर्तते। अतीव योग्यश्चतुरश्च शासकोऽलिवर्दि-खानः श्वेताङ्गानां चातुर्यं निशाम्य कथितवान् यद् 'व्यापारिणां दुर्ग-निर्माणस्य वसतिस्थापनस्य च आवश्यकता, मम संरक्षणे युष्माकं किमपि भयं नास्ति।' स च जानन्नासीद् यद्दिने श्वेताङ्गा अतीव कुटिलाशयाः। असौ बहुवारं कथितवानपि यद्यपि श्वेताङ्गा मधु पातुं शक्नुवन्ति, किन्तु यदि कदापि मधुच्छत्रमुच्छेत्तुं प्रयत्नं करिष्यन्ति तदा द्रागेव मधु-मक्षिका युष्मान् दङ्क्ष्यन्ति।

पुनः पञ्चत्वं गतेऽलिवर्दिखाने तद्दौत्रो मिर्जामुहम्मदः सिराजुद्दौलानाम्ना वङ्गनवाबो बभूव । नूतननवाबस्य आकृत एव विश्वास आसीत् श्वेताङ्गेषु । अत्रान्तरे भविष्यद्यूरोपीययुद्धाशङ्कया श्वेताङ्गाः फ्रांसवासिनश्च दुर्गाणि सुदृढानि कर्तुमारभन्त । नवाबेन निषिद्धे फ्रांसवासिनो विरता बभूवुः स्वदुर्गसुदृढकरणात् । किन्तु श्वेताङ्गाः साहसमुत्तरं प्रवृत्तवन्तः । श्वेताङ्गैर्नवाबस्य अपकारः, नवाबगृहात्पलायितानां स्वशरणीकरणम्, एवमादीनि बहूनि कारणान्यासन् नवाबश्वेताङ्गयोर्युद्धस्य । नवाबस्य भयमभूत् यत् श्वेताङ्गाः यथा कर्णाटके कृतवन्तस्तथैवात्रापि करिष्यन्तीति नाम । व्यापारे कृतनिगमेन श्वेताङ्गाः श्रेष्ठिनश्चासन्तुष्टा आसन् नवाबात् । प्रान्तस्य राजनीतिकार्थिकपरिस्थित्या श्वेताङ्गानां विचारपरिवर्तनञ्च जातमासीत् ।

श्वेताङ्गानामुद्दण्डतापूर्णव्यवहारेण असन्तुष्टो नवाबस्तेषां कासिमबाजारस्थितं भवनं गृहीत्वा कलिकातास्थितं भवनं हस्तगतं कर्तुं विचारितवान् । कृतेऽपि प्रयासे श्वेताङ्गानां कलिकातास्थितं भवनं गृहीतवानेव । नवाबसैनिकाः षट्चत्वारिंशदधिकशतसंख्यकान् श्वेताङ्गानेकस्मिन् लघुगृहे बलात्प्रवेश्य तद्गेहकपाटौ पिहितवन्तः । ग्रीष्मेन व्याकुलानां श्वेताङ्गानां मध्ये त्रयोविंशतिश्वेताङ्गान् विहाय सर्वे एव मरणमापेदिरे । यदैतस्य भवनस्य ( Black home ) वार्ता मद्रास गता तदा त्वरितमेव क्लाइव-वाटसनयोरध्यक्षतायामेकं सैन्यं कलिकातायां मद्रासराज्यपालः प्रैषयत् । समागत्यैव सैनिकाः कलिकातां पुनर्गृहीतवन्तः । नवाबसैनिकैः सह भूतेऽपि युद्धे जयविजययोः निर्णयो नैव जातः, एकः सन्धिश्च समभूत् ।

क्लाइयो जानन्नासीद्यत् फ्रासवासिनोऽपि नवाबेन सह सन्धिं चिकीर्षन्ति अत एव मृत्युभवन ( Black home )-विषये शब्दमेकमपि अकथयित्वा स सावधानतया नवाबविरुद्धं कूटचक्रमारब्धवान्। अनन्तरं वाटसनश्चन्दननगरं जिगाय। एतस्मिन्नेव समयेऽहमदशाही-ऽब्दालिः दिल्लीमाक्रान्तवान्। सिराजुद्दौलानवाबोऽपि दिल्लीवृत्तं श्रुत्वा श्वेताङ्गैः सह मित्रतामिच्छन्नेव बभूव भयाक्रान्तः। अत एव स फ्रासवासिनामपि साहाय्यं कर्त्तुंनैव तत्परो जातः। नवाबं निपातयितुं कृतनिश्चयोऽवसरं प्रतीक्षमाणश्च क्लाइवः सिराजुद्दौलानवाबस्यौच्चाधिकारिभिर्मिलित्वा कूटचक्रमेकं कृतवान्। तस्मिन् मीरजाफरोऽपि सम्मिलित आसीत्।

यदा कूटचक्रस्य सर्वा योजना परिपूर्णा, तदा क्लाइवः सिराजुद्दौलानवाबसमीपे फ्रासीसैः सह पत्राचारस्य सन्धिभङ्गस्य च दोषप्रदं पत्रमेकं व्यलिखत्। किन्तु सिराजुद्दौलानवाबः किमप्युत्तरं नैवाददात्। तदा क्लाइवो मुर्शिदाबादस्य दक्षिणभागे पलासीनामकस्थाने ससैनिकः प्रस्थितवान्। सिराजुद्दौलानवाबोऽपि पञ्चाशत्सहस्रमपरिकान् मानवान् तत्रैव एकत्रीकृतवान्। प्रवृत्ते महति समरे नवाबस्य सैनिकाः पलायिताः, सिराजुद्दौला च बन्दी बभूव। पुनः मीरजाफरपुत्रो मीरस्तं घातितवान्। युद्धेऽस्मिन् नवाबयुद्धाधिकारिणा विश्वासघातेन श्वेताङ्गाना सन्धिविच्छेदेन कूटचक्रकर्मणा मीरजाफरस्य पदलोलुपतया च नवाबस्य पतनमभूत्। अथ मीरजाफरो नाममात्र बङ्गाध्यक्षो बभूव, किन्तु वास्तविकाध्यक्षाः श्वेताङ्गा एवासन्। नवाबस्तेषां हस्तपुत्तलिकामात्रमेवासीत्।

ततः शाहआलमद्वितीयनाम्ना प्रसिद्धो मुगलसम्राट्पुनः अलिगौहरो वङ्ग विहारञ्चाक्रान्तवान् । साधारणसैनिकदलसम्पन्नः क्लाइव पाटलीपुत्र प्रस्थितवान् । शाहआलमद्वितीयश्च परावृत्यावध गतवान् । एतेन प्रसन्नो मीरजाफरः क्लाइवाय त्रिंशच्छ्रहस्रान् ग्रामान् ददौ । किन्तु सम्पत्तिमादाय क्लाइवो महदनुचितं कर्म कृतवान् । अनुचितकर्मकर्तृभ्यः स्वभृत्येभ्यो दोषमददाना कम्पनी च महदनुचितं कर्म कृतवती । किन्तु सर्वदैव द्रव्यदानेन व्याकुलीभूतो मीरजाफरो डचै सह पत्राचार वार्तालापञ्चारब्धवान् । डचाश्च मीरजाफरसाहाय्यार्थं तत्परा बभूवु । किन्तु क्लाइवस्तान् पराजित्य दण्डरूपेण धनमपि गृहीतवान् । पुनःअवस्थो भूत्वा क्लाइवो स्वदेशं जगाम । मीरजाफरस्य समीपे सर्वतः काठिन्यमेवासीत् । यथायाचनं द्रव्यप्रदानेऽसमर्थं त वङ्गीयराज्यसभा राज्यसिंहासनादवतार्य तत्स्थाने तस्यैव जामातर मीरकासिम नवाब कृतवती ।

मीरकासिमोऽतीव योग्य शासकः, किन्तु कम्पनीभृत्याः सर्वदैव तस्माद् द्रव्यादानस्यैव चेष्टा कृतवन्तः । वर्दमान चट्टग्राम मिदनापुरमण्डलान्यपि ते गृहीतवन्तः । मीरकासिमोऽनुभवशाली वङ्गदशापरिचितश्च शासक आसीत् । किन्तु श्वेताङ्गाना द्रव्ययाचनेन व्याकुलीभूतोऽसौ मुर्शिदाबाद परित्यज्य मुंगेरं राजधानीं वासस्थल च चक्रे ।

अथ देशमध्ये भवद्व्यापारस्य प्रश्नमुद्दिश्यापि गौराङ्गैः सह कलहो जातः । अदत्तैव कर व्यापारार्थमाज्ञापत्र प्राप्तवन्त आसन् श्वेताङ्गा मुगलादशाहात । किन्तु मीरकासिम एतादृशस्य व्यापारस्य समर्थन नैव

चकार। कम्पनीव्यापारस्यैव कृते ते वाणिज्याधिकारान् प्राप्नुवन्, न तु स्वकीयव्यापारार्थम्। किन्तु स्वकीयव्यापारेऽपि ते नैव करं प्रदत्तवन्तः। एतेन राजकोषो रिक्तो बभूव। एतत्सर्वं निषेद्धुं बहुशो राजसभायां प्रेषितवान् मीरकासिमः, किन्तु किमपि फलं नाभूत्। ततः स्वक्रोधान्वितो मीरकासिमः सर्वमेव करं समुत्थाप्य श्वेताङ्गानामधिकारमपहाय युद्धमकरोत्। किन्तु युद्धे स पराजितः श्वेताङ्गाः पुनरपि मीरजाफरमेव बङ्गनवाबं कृतवन्तः। विवशो नूतनो नवाबः श्वेताङ्गेभ्यः पुनः सर्वाधिकारं दत्तवान्। मीरकासिमश्च पाटलिपुत्रे शतद्वयसंख्यकान् श्वेताङ्गान् निहतवान्। इयं घटना 'पटना हत्याकाण्ड' नाम्ना प्रसिद्धा।

दिल्लीसम्राडवधनवाबसाहाय्यसम्पन्नो मीरकासिमः श्वेताङ्गैः सह बक्सरे महान्तं समरं कृत्वापि पराजितो रणात्पलायाञ्चक्रे। वस्तुतो बक्सरयुद्धेन प्लासीयुद्धपूर्तिं चकार। एष एव विजयः श्वेताङ्गानां भारते राज्यसंस्थापको जातः। पुनरपि बङ्गनवाबपदं प्राप्य मीरजाफरः शीघ्रमेव मरणमापेदे।

अनन्तरं नजमुद्दौलानामकः तत्पुत्रो बङ्गनवाबपदमलङ्कृतवान्। किन्त्वसौ श्वेताङ्गानामिङ्गिते काष्ठपुत्तलिकेव नृत्यन्नासीत्। कम्पनीकर्मचारिण आचरणभ्रष्टा भूत्वा धनान्धाः स्वेच्छयोत्कोचं गृह्णन्त आसन्। ते स्वेच्छयैव नवाबं सिंहासनादवतारयन्ति स्म, अथ समारोपयन्ति स्म च। सर्वदैव युद्धलग्नत्वात् कम्पनीव्यापारे लाभापेक्षया हानिरेवाभूत्। तदैव पुनरपि क्लाइवो बङ्गराज्यपालः प्रधानसेनापतिश्च भूत्वा भारतमाजगाम।

एतस्यां यात्रायां सर्वमेव दुराचारं दूरीकर्तुं प्रतिज्ञातवान् सः।

पूर्वमसौ पथप्रधानामुक्तोनगृहीतॄणा कम्पनीकर्मचारिणा सर्वानेव दोषान् दूरीकर्तुं कृतप्रयत्नो भूत्वा व्यापारसमितिमेकां संस्थापितवान्। किन्तु पश्चात् सा समिति कम्पनीसञ्चालकैरवरुद्धा। अथ तेन अवधनवाबेन मुगलसम्राजा च सह सुस्थिरं कम्पनीसम्बन्ध सैनिकाना सुधारश्च। कारित। कर्मचारिण एतत्कार्यविरोध चक्रु, किन्तु क्लाइव किमपि विचार नैव कृतवान्। वान्सिटार्ट सम्राजेऽर्धं दातु प्रतिज्ञातवान्, किन्तु क्लाइव एतत्कर्म मूर्खतापूर्णमेव मानितवान्।

पुनरपि नवाबेन सह नूतन सन्धि सम्पन्नम्। तदनुसार सम्राजे कडामवधश्च दत्तवान् क्लाइव। किन्तु शाहआलमेन सह सन्धिप्रश्न काठिन्यपरिपूर्ण एवासीत्। स च निजेच्छाविरुद्धमेव वङ्गविहारोत्कलाना करग्रहणार्थं श्वेताङ्गानियुक्तवान्। करग्रहण श्वेताङ्गाधीन न्यायविभागश्च बादशाहाधीन एव रीत्या क्लाइवो वङ्गे द्विविध राज्य संस्थापितवान्। शासनाधिकार विहाय श्वेताङ्गाधिकारो नि सीमो जात। अथ चिन्तया परिश्रमेण चास्वस्थ क्लाइवो लन्दननगर गतवान्। तत्र तस्य शत्रवस्त लाञ्छितु चेष्टितवन्त। किन्तु राज्यसभैक प्रस्तावं पारयित्वा तत्कृता राज्यसेवा प्रशंसितवती। निन्दासूचकै शब्दैर्दु खितो भूत्वा पञ्चाशद्वर्षदेशीय एव क्लाइव आत्महत्या चकार।

लार्ड क्लाइव एको योग्यो दृढप्रतिज्ञश्च शासक आसीत्। कठिनास्वपि परिस्थितिष्वव्याकुल स भारते ब्रिटिशराज्य संस्थापितवान्।



# भारते श्वेताङ्गराज्य-संस्थापनम्

क्लाइवे इंग्लैण्ड गते वर्लस्ट-कार्टियरनामको राज्यपालो नियुक्तो बभूव। किन्तु साधारणयोरेतादृशयोरनयोः कार्यकलापे बहवो दोषाः समभूवन्। वर्लस्टराज्यपालस्य काले वङ्गे महद् दुर्भिक्षमापतितम्। तेन प्रपीडिताः कतिपये मानवा मानवीयं शवमपि भक्षयितुं प्रवृत्ताः। कम्पनीकर्मचारिणः पुनस्तण्डुलमेकत्रीकृत्य अधिकमूल्येन तं विक्रेतुं संलग्नाः, प्रजाभ्यश्च कठोरतया करमपि गृहीतवन्तः। अत्रान्तरे महाराष्ट्रीया अपि पानीपतयुद्धे ह्रापिता स्वीयां प्रतिष्ठां पुनः प्राप्तवन्तः। मुगलशाहशाहोऽपि तेषां संरक्षकत्वे पुनर्दिल्लीमाजगाम। अवध-नवाबेन सह संभूता मैत्री नूनं शैथिल्यं गता, किन्तु कोऽपि कलहो नाभूत्।

कम्पनीव्यापारकार्ये लेखकरूपेण वङ्गे समागतोऽष्टादशवर्षदेशीयो वारेनहेस्टिंगः शीघ्रमेव भारतीयकार्यकलापे सविशेषमनुभवमापन्नः मद्रासराज्यसभायाः सदस्यतामाप्तवान्। पश्चात्स एव वङ्गराज्यपाल-पदमलञ्चकार। ततोऽयं कोषं मुर्शिदाबादात् कलिकातामानीय सर्व-ष्वेव मण्डलेषु श्वेताङ्गानेव मण्डलाधीश्वरान्नियुक्तवान्। तेन करग्रहणाधिकारोऽपि तेभ्य एव प्रदत्तः। भूम्या वार्षिकाधिकारं समाहृत्य पञ्चवार्षिकाधिकारमसौ प्रददौ। यः खलु सर्वाधिकद्रव्यं दद्यात्, तस्मै एव भूमिप्रदानं तेनानुमतम्। एतया व्यवस्थया प्रज-

भूम्यधीश्वराणां महती हानिरभूत् । तेभ्यो भूमिरपि निर्गता । न्याय-विभागस्य संगठनमपि तेन कृतम् ।

पैतृकराज्यप्राप्त्याशया शाहआलमः सिन्धियासंरक्षत्वे दिल्लीमागतवान् । तेन पूर्वमेव कड़ा प्रयागमण्डलञ्च महाराष्ट्रियेभ्यो दत्तम् । हेस्टिंगो विचारितवान् यद् वङ्गसीमान्तस्थितयोरेतयोः मण्डलयोर्महाराष्ट्रियाणामधिकारो नोचितः । अतः स शाहआलमाय दीयमान द्रव्यमवरोद्ध्य कड़ा प्रयागमण्डलञ्च अवधनवाबाय प्रायच्छत् । एतेन मुगलसम्राट् श्वेताङ्गाना मत्याचारिताया विरक्तो बभूव । अन्यच्च, नवाबमन्त्रिणा सह वाराणसीसन्ध्यर्थमेव रुहेला युद्धारम्भो जातः । पश्चात् रुहेलायुद्धार्थमेव हेस्टिंगस्य महती निन्दाऽभूत् ।

रुहेलखण्डे हाफिज रहमतखाननामैको मुहम्मदीय पठानः शासनं कुर्वन्नासीत् । यथा मुगलसाम्राज्यस्यान्य भागमादाय अन्ये शासनं कुर्वन्त आसंस्तथैव पठानस्यापि रुहेलखण्डे राज्यमासीत् । महाराष्ट्रियाणां रुहेलखण्डाक्रमेणन रहमतखानस्य स्थितिर्विषमतरा बभूव । पुना रुहेलानवाबमन्त्रिणा सह सन्धिरभूत् । वाराणस्यामिव निश्चितं यत् रुहेलेषु यदि महाराष्ट्रियाः समाक्रमणं करिष्यन्ति तदा नवाबस्तेभ्यः साहाय्यं प्रदास्यति, रुहेलाश्च नवाबाय चत्वारिंशल्लक्षमुद्राः प्रदास्यन्तीति । एकदा रुहेलखण्डे महाराष्ट्रियैराक्रमणं कृतम् । श्वेताङ्गानां साहाय्येनावधनवाबमन्त्री तान् पराजितवान् । परावृत्तेषु महाराष्ट्रियेषु अवधनवाबो रहमतखानः रुहेलाच्चत्वारिंशल्लक्षमुद्राः याचितवान् । किन्तु रहमतखानोऽत्र रुद्रो वा प्रदास्यामीति कथयन्नेव दिवसान्निनाय ।

तदा रुहेलरहमतखान रुण्डोनिमुमवधनवाचः श्वेताङ्गात्वाहाय्य याचितवान्। मुद्रायां हेस्टिंगः श्वेताङ्गसैन्यं दत्तवान्। पराजितवाश्च रुहेलानवधनवाचः। रहमतखानो युद्ध कुर्वन्नेव पञ्चत्वमापेदे। रुहेला वङ्गान्निष्काशिताः, तद्राज्य च शुजाउद्दौलाराज्ये विलीनमभूत्।

एतद्युद्धमुद्दिश्य वारेनहेस्टिंगस्य महती निन्दा समभूव। रहमतखानो दयालुरासीत्, पर शुजाउद्दौलाशासनप्रबन्धो नासीत्समीचीनः। तन्मृत्योः पर रुहेलखण्डमखील अव्यवस्थितमभूत्।

अनान्तरे ईस्ट-इण्डिया कम्पनीव्यापारे इग्लैण्डशासनस्य ध्यानमाकृष्टम्। अन्वेषणानन्तर तेन ज्ञात यद् कम्पनीव्यापारस्य व्ययोऽधिकोऽस्ति, येन शीघ्रमेव सा विलयमुपयास्यति। अथ कम्पनीसन्चालका ऋणदानाय इग्लैण्डशासन प्रार्थितवन्तः कथितवन्तश्च—यदि न मिलिष्यति ऋण तदा कम्पनी भारते व्यापार विधातुमसमर्था भविष्यतीति। बहुविवादोत्तर द्वौ नियमौ पारितौ इग्लैण्डराज्यसभायाम्—एकेन कम्पनीकृते ऋणप्रदानस्य व्यवस्थाऽभूत्, अपरस्य नाम 'रेग्यूलेटिंग एक्ट' इति। तदनुसार वङ्गराज्यपालो राष्ट्रपतिः (लार्ड) जातः। तस्य कार्यकालः पञ्चवर्षाणि यावन्निर्धारितः। भारतस्य सर्वेष्वेव प्रान्तेषु तदधिकारोऽभवत्।

लार्डस्यास्य साहाय्यार्थं चतुर्णां सदस्यानामेका समितिरपि निर्धारिता। किन्तु सदस्याना मतभेदे समितेर्विघटनाधिकारो तस्मै नैव प्रदत्तः। लार्डाभिधप्रधाने मद्रास बम्बईप्रान्तयोर्वैदेशिकनीत्या नियन्त्रणस्याधिकारोऽपि निहितः। कम्पनीसञ्चालका इग्लैण्डशासनसमक्ष भारतीय-

करग्रहण विषय समुपस्थापयितुं बाधिताः। एवमेव ते सैनिकव्यापारिक-विषये यदपि करिष्यन्ति, तदर्थम् इग्लैण्डशासनाय सूचयन्तु इत्यपि निर्धारितम्।

कलिकाताया सुप्रीम कोर्टनाम्ना प्रसिद्ध एकः सर्वोच्चन्यायालयः सस्थापितो बभूव। न्यायालये लार्ड-प्रधानस्य तत्समितेर्वा कोऽप्यधिकारो नासीत्। सर-एलिजा एम्पो नन्न्यायालयस्य प्रधानन्यायाधीशो बभूव। एतेषा सर्वेषामेव कर्मचारिणा कृते वेतनस्य पर्याप्ता व्यवस्थाऽभवत्। व्यापारकरणार्थमुत्कोचग्रहणार्थं वा ते पूर्णतया निषिद्धाः।

एभिर्नियमै इग्लैण्डशासनं नून भारतीयशासन नवीनीकृतवान्। किन्तु तेन कोऽपि विशेषलाभो नाभूत् केवलं कम्पनीव्यापारे शासनाधिकार एव जातः। मन्त्रिमण्डलस्य स्वकीयकार्येभ्योऽवकाशाग्रहणाधिकारो लार्डप्रधानस्य राज्यसभासदनुमने हस्तक्षेपाधिकारश्च नास्ताम्। तेन समासदा परम्परं वैमत्येन राज्यकर्मणि महती बाधा समुत्पन्ना। मद्रासबम्बईप्रान्तयोर्विदेशीयकार्येष्वेव हस्तक्षेपं विधातुं श्राप्तीत्लार्डप्रधानो न त्वाभ्यन्तरकर्मसु। प्रधानन्यायालयस्यापि व्यवस्था परिपूर्णा नाभूत्। तेन राज्यसभासदा प्रधानन्यायाधीशेन सह विरोध एव समुद्भूतः। एभिः कारणैः शासनकार्यं प्रायेणावरुद्धमेव जातम्।

एवं भारतागमनानन्तरमेव राज्यसभासदस्या लार्डप्रधानस्य विरोध विधाय तत्कार्यं विविध विघ्नमपि समुपस्थापितवन्त.। फ्रासिस-नामा सदस्यस्तु लार्डप्रधानस्य महान् शत्रुरभूत्। महाराष्ट्रिययुद्धा-

सभे राज्यसभासद्भिः सह लार्डप्रधानस्य मतभेदः पराकाष्ठा-मानवान्

अथ नन्दकुमारनामा उच्चकुलप्रसूतो वङ्गीयब्राह्मणः राज्यसभा-सदां समक्षं कथितवान् यद् हेस्टिंग्सो मीरजाफरस्य विधवापत्न्याः लक्ष-परिमिता मुद्रा गृहीतवान्। किन्तु हेस्टिंग्सस्तदाकर्ण्यैव राज्यसभां विससर्ज। हेस्टिंग्स उत्कोचं गृहीतवानित्येव प्रस्तावः सभासद्भिरपि पारितः। इमं निर्णयं सर्वथा तत्समयका अपि स्वीकृतवन्तः समर्थित-वन्तश्च। हेस्टिंग्सोऽस्य प्रतिशोधार्थं नन्दकुमारे कनिष्ठावाञ्छितमोहन-प्रसादव्यापारिमुखेन सर्वथाऽसत्यमेवाभियोगं अकारितवान्। प्रधान-न्यायाधीशइम्पेमित्रं स्वपक्षे कृत्वा स कुमारं शूलमारोपयित्वा परम प्रसन्न मना अभवत्। किन्त्वेतस्य महती निन्दाभूत्।

देवस्यैतद्वचनं श्रुत्वा मुक्तामणिरपृच्छत्—देवप्रवर! किं ब्राह्मणं नन्दकुमारं शूलमारोपितवानसौ दुरात्मा हेस्टिंग्सः कूटचक्रं विधाय! हरे हरे! एष महानन्यायस्तस्य श्वेताङ्गस्य!

देवोऽवदत्—किं कथयामि मुक्तामणे! भारतमागत्य सर्वधर्म-शास्त्रमनादृत्य निर्दोषे ब्राह्मणेऽपि प्राणदण्ड दत्तवानेतदेव महदाश्चर्यम्। हेस्टिंग्सस्य प्रमत्तत्वादेव सर्वे भांत यद् ब्राह्मणस्य शूलारोपणकर्मैतत्तस्यैव कूटचक्रमासीत्।

श्वेताङ्ग-महाराष्ट्रिय-युद्धम्

महाराष्ट्रियाः श्वेताङ्गानां सर्वतोभावेन शत्रव आसन्। माधवरावे मृते तद्भ्राता नारायणरावः पेशवा बभूव। किन्तु कतिपयमासानन्तरं एव

श्वेताङ्गफ्रासवासिनोः परस्परमैरिकायां युद्धे समारब्धे श्वेताङ्गाः पाण्डिचेरिं माहीञ्च स्वायत्तीकृतवन्तः। एतेन क्रुद्धो हैदरालिः कर्णाटक-माक्रम्य यत्र तत्राग्निप्रक्षेपं सामूहिकहत्याञ्च कुर्वन् महान्तमुपद्रवमारब्धवान्। एष समयः श्वेताङ्गानां कृतेऽतीव सङ्कटापन्नो जातः। महाराष्ट्रियैः सह तेषां युद्धं स्वयमेव महान् प्रश्न आसीत्। एवं डचैः सह नूतनयुद्धमपि प्रादुरभूत्। एतस्मिन् समये श्वेताङ्गानां मन्दीभूतेऽपि भाग्ये हेस्टिंग्सो बुद्धिमत्तया साहसेन च कार्यमारभत। मद्रासराज्यपालं च स कियत्कालपर्यन्तं कार्यभारान्मुक्तं चकार। स आयरकूटमेकेन सैन्येन सह तत्र प्रेषितवान्। आयरकूटः पोर्टोनोवोनामकस्थाने हैदरालिं पराजितवान्। पोलीलोरनामकस्थाने युद्धे जयविजययोर्निर्णयो नैव जातः, किन्तु शोलींगढयुद्धे हैदरालिः पराजितो बभूव।

डचैः सह युद्धे श्वेताङ्गास्त्रिकोमालीनामकस्थानस्य जलनावालयं स्वायत्तीकृतवन्तः। टीपूसुलतानश्च तञ्जौरे कर्नलब्रेथवेटं निहतवान्। तस्मिन्नेव समये फ्रासनश्वेताङ्गो हैदरालिना सह सन्धिं विधाय कडलोरे स्वाधिकारं कृतवान्। फ्रासनिवासिना सागरीययुद्धेऽधिकं साफल्यमभूत्।

हैदरालिमरणानन्तरं तत्पुत्रः टीपूसुल्तानो युद्धं कुर्वन्नेव बेदनूर-दुर्गं विजितवान्। किन्तु यदाऽसौ मंगलूरमरौत्सीत्तदा फुलर्टनश्वेताङ्ग-स्तद्राजधानीश्रीरङ्गपत्तनपर्यन्तं गतवान्। अनन्तरं टीपूसुलतानश्वेताङ्ग-योरेकः सन्धिः समभूत्, येन पुनरपि पूर्ववदेव स्थितिः समुत्पन्ना।

युद्धेषु प्रचुरधनव्ययेन कम्पनीव्यापारस्य महती हानिरयांमावभा-मूनाम्। प्रधानलाटस्य सुधाराय आवश्यकता विशेषरूपेणेदानीमभूत्।

तस्य हत्या समभूत् । अनन्तरं तत्पितृव्यो राघवरावः पेशवापदमलभत । तद्विरोधिनो नारायणरावमरणानन्तरं समुत्पन्नं बालकं पेशवासिंहासनासीनं कर्तुमैच्छन् । राघवरावस्तदसत्य प्रमाणीकृत्य श्वेताङ्गेभ्यः साहाय्यं याचितवान् । स बम्बईशासनेन सहैकं सन्धिं विधाय साहाय्य-प्रतिक्रिये मालसट वेसीनञ्च दातुमकथयत् । श्वेताङ्गाश्च शीघ्रमेव सालसटमधिकृतवन्तः । किन्तु कलिकाताशासनमेनं सन्धिं न स्वीकृतवान् । स्वयं वारेनहेस्टिंगोऽपि कार्यमिदं नीतिविरुद्धमवैधञ्च कथितवान् । स एकं श्वेताङ्गसेनापतिं पूना प्रैषयत् । स च नानाफडनवीसनामकेन महाराष्ट्रियनेत्रा सह पुरन्दरनामकस्थाने नूतनमेकं सन्धिं व्यधत्त । एतदनुसारं पूर्वसन्धौ प्रदत्तः सालसटः पेशवानामधिकारेऽभवत् । एतैर्नैवाग्रहेण गुरुण्डाः साहाय्यं नैव दत्तवन्तः । अत्रान्तरे एकः फ्रांसीयो राजदूतः समागत्य पेशवासमीपं स्वदेशार्थं किञ्चित्सौविध्यं प्रार्थितवान् । एतदेव प्रधानं कारणं महाराष्ट्रिय-श्वेताङ्गयोः परस्परं संगरस्य । महाराष्ट्रिया बम्बईशासनस्य सेना पराजित्य श्वेताङ्गैः सहैकं सन्धिं कृतवन्तो यदनुसारं बम्बईशासन स्यायत्तीकृतान् सर्वानेव प्रदेशान् पेशवाधिकारे प्रदत्तवान् ।

गोडार्डो नर्मदानदीमुत्तीर्य बेसीनदुर्गं स्वायत्तीचकार, कोपमश्च ग्वालियर-दुर्गम् । महाराष्ट्रियेषु बुद्धिमतो महादजीराजः साहाय्येन सालबाईस्थाने अन्योऽन्येकः सन्धिः सम्बभूव । तदनुसारं सालसटे वेसीने च श्वेताङ्गानामधिकारो जातः । इदानीं महादजीराजः स्थितिः पूर्वापेक्षया शक्तिशालिनी जाता । तदनन्तरं द्वादशवर्षपर्यन्तं स स्वराज्यविस्तारे संलग्नः ।

श्वेताङ्गफ्रासवासिनोः परस्परममेरिकाया युद्धे समारब्धे श्वेताङ्गाः पाण्डिचेरिं माहीञ्च स्वायत्तीकृतवन्तः। एतेन क्रुद्धो हैदरालिः कर्णाटकमाक्रम्य यत्र तत्राग्निप्रक्षेपं सामूहिकहत्याञ्च कुर्वन् महान्तमुपद्रवमारब्धवान्। एष समयः श्वेताङ्गानां कृतेऽतीव सङ्कटापन्नो जातः। महाराष्ट्रियैः सह तेषां युद्धं कथं भवेदेव महान् प्रश्न आसीत्। एवं डचैः सह नूतनयुद्धमपि प्रादुरभूत्। एतस्मिन् समये श्वेताङ्गानां मन्दीभूतेऽपि भाग्ये हेस्टिंगो बुद्धिमत्तया साहसेन च कार्यमारभत। मद्रासराज्यपालं च स किंयत्कालपर्यन्तं कार्यभारान्मुक्तं चकार। स आयरकूटमेकेन सैन्येन सह वङ्ग प्रेषितवान्। आयरकूटः पोर्टोनोवोनामकस्थाने हैदरालिं पराजितवान्। पोलीलोरनामकस्थाने युद्धे जयविजययोर्निर्णयो नैव जातः, किन्तु शोलीगढयुद्धे हैदरालिः पराजितो बभूव।

डचैः सह युद्धे श्वेताङ्गास्त्रिकोमाचीनामकस्थानस्य जलयानालयं स्वायत्तीकृतवन्तः। टीपूसुलतानश्च तञ्जोरे कर्नलब्रैथवेटं निहतवान्। तस्मिन्नेव समये सफरनश्वेताङ्गो हैदरालिना सह सन्धिं विधाय कड्लोरे स्वाधिकारं कृतवान्। फ्रांसनिवासिना सागरीययुद्धेऽधिकं साफल्यमभूत्।

हैदरालिमरणानन्तरं तत्पुत्रः टीपूसुल्तानो युद्धं कुर्वन्नेव वेदनूरदुर्गं विजितवान्। किन्तु यदाऽसौ मङ्गलूरमरोत्सीत्तदा फुलर्टनश्वेताङ्गस्तद्राजधानीश्रीरंगपत्तनपर्यन्तं गतवान्। अनन्तरं टीपूसुलतानश्वेताङ्गयोरेकः सन्धिः सम्बभूव, येन पुनरपि पूर्ववदेव स्थितिः समुत्पन्ना।

युद्धे प्रचुरधनव्ययेन कम्पनीव्यापारस्य महती हानिरर्थाभावश्चाभूताम्। प्रधानलार्डस्य मुद्राया आवश्यकता विशेषरूपेणेदानीमभूत्।

आर्थिकस्कटेऽसौ वाराणसीभूपादधनवान्छ या सकाशाच्च साहाय्य-मैच्छत्। वाराणसीभूपः पूर्वमवधाधीन आसीत्, किन्तु पश्चात्कम्पनी-वशवर्ती बभूव। हेस्टिंगेन याचित द्रव्य दत्तवान्वाराणसीभूपः सकृद् द्विर्वा। किन्तु पुनः पुन. याचितेऽसौ विरोध प्रकटितवान्। तेन हेस्टिंगस्त दण्डयितु विचार्य स्वयमेव वाराणसीं प्रस्थितवान्। गत्वा च वाराणसीं स चेतसिंह वन्दिन विधातु यदैच्छत्तदैव चेतसिंहसैनिका विद्रोहम्रकु। एतेन भयङ्करस्थितिगत स्व ज्ञात्वा हेस्टिंगः चुनारनगर पलायितवान्। चुनारे सैनिकानेकत्राकृत्यासौ चेतसिंहेन सह युद्धमकरोत्। तस्मिन् युद्धे चेतसिंहसैनिका. पराजिता., चेतसिंहश्च ग्वालियर पलायितवान्।

यदाऽयमवधनवाबपत्नीना सविधे द्रव्ययाचनमकरोत्, तदा ता. द्रव्य दातुमनिच्छन्त्योऽपि शुजाउद्दौलाकठोरव्यवहारेण बलात् ददुः। चेतसिंहेन अवधनवाबपत्नाभिश्च सह सर्वथैवानुचितव्यवहारः कृतो हेस्टिंगेन। प्रधानन्यायालयस्यापि दशाऽतीव दोषपरिपूर्णा जाता। पश्चात् हेस्टिंगो लन्दननगर परावृत्तः। एको लेखको भूत्वा भारत समागतो हेस्टिंगो प्रधानलार्डपदमवाप। स्वकीयोद्देश्यपूर्त्यानुचितानुचितयो-र्विचारमकुर्वन्नेव भारते स ब्रिटिशराज्य सस्थापितवान्. पश्चाद् इग्लैंड-देशे स्वग्राम शेषजीवन निनाय।

## लार्ड कार्नवालिसः

हेस्टिंगगमनान्तर इग्लैण्डराजकीयसभायाः प्रधानसदस्यो मैकफर्सननामक. स्वतात्रो लार्डप्रधानो भूत्वा भारतमाजगाम। सार्धैक-वर्षं यावत्स्थितेऽपि कार्येऽसौ किमपि साफल्यन्नैवाप्तवान्। तदा तत्स्थाने कार्नवालिसो लार्डप्रधानो भूत्वा भारतमागवतवान्। अनेन कम्पनी-

कर्मचारिणां चरित्रसुधारो वङ्गस्य करग्रहणव्यवस्थाकरणं, न्यायालयानां पुनःसंघटनञ्चैतत्त्रय कार्यं मुख्यतया कृतम्।

जिलाधीशहस्तगतन्यायशासनविभागौ अनेन पृथक्पृथक्कृतौ। लार्डकार्नवालिसेनहेस्टिंग्सः पञ्चवर्षार्थमेव भूमिप्रबन्धं कृतवान्, किन्तु कार्नवालिसः सर्वकालीनव्यवस्थां चकार। एतया व्यवस्थया राज्ञा सह प्रजानां साक्षात्सम्बन्धो नाभूत्, प्रजाभ्यः करग्रहणं कृत्वा राज्ञः सविधे प्रापका अन्ये बभूवुर्जमीन्दारापरपर्यायाः एतेन न्यायालयप्रबन्धोऽपि यूरोपानुसारमेव कृतः। सर्वत्रैव श्वेताङ्गन्यायाधीशा नियुक्ताः, नियुक्ताश्च यथान्यायशास्त्रव्याख्याकरणार्थं मुहम्मदीया हिन्दवश्च। न्यायालयेषु उच्चतमन्यायालय, सर्वोच्चन्यायालयश्चेति न्यायालयस्थापनमपि तेनकृतम्। श्वेताङ्गसाहाय्याभिलाषिणः शाहआलमपुत्रस्य कार्नवालिसः साहाय्य नैवादात्। किन्तु मलाबारतटात् पलायितानां शरणं प्रदातुः श्वेताङ्गमित्रस्य त्रिवाङ्कुरनरेशस्य कृताक्रमणेन टीपूसुल्तानेन सह कार्नवालिसस्य सङ्ग्रामोऽनिवर्योऽभूत्। कार्नवालिसः पेशवा निजामाभ्यां मिलित्वा सन्धिं चकार, युद्धसञ्चालनार्थं च प्रैरयत् कर्नलमेडोजम्। किन्तु युद्धे सफलतामलब्धवन्तं मेडोजं विज्ञाय कार्नवालिसः स्वयमेव सेनापतिर्भूत्वा युद्धभूमौ समुपस्थितः, बङ्गलोरं जितवांश्च। श्रीरङ्गपत्तनावरोधार्थं विचारयतस्तस्य समक्षं सन्धिवार्ता समुपस्थिता। टीपूसुल्तानो राज्यस्यैकभागं कोटिमुद्रात्रयमितं युद्धव्ययञ्च दातुं स्वीकृत्य स्वकीयपुत्रौ च बन्धकौ विधाय कार्नवालिसेन सह सन्धिं चकार। कार्नवालिस-पेशवा-निजामाश्च प्राप्तस्थानानि परस्परं विभज्य गृहीतवन्तः।

महादजीसिन्धिया रुहेलप्रधानं गुलामकादिरं हत्वा मुगल-सम्राजं ररक्ष। स राजपूतानानरेशान् लन्वेरीनामकस्थाने होल्करमेनाञ्च पराजितवान्। यूरोपीययुद्धकलापरिचितोऽसौ एकां महतीं सेनां फ्रांसीय-डीबोइन प्रधानं विधाय यूरोपीयरीत्या सघटितवान्। तेनराजनीत्या महादजीराजः महाप्रभावो बभूव। तन्मरणानन्तरं दौलतरावसिन्धियास्तत्स्थानमलभत।

पुनरपि कम्पनी विंशतिवर्षाणि यावद् व्यापारार्थमेकमाज्ञापत्रं प्राप्तवान्। किन्तु प्रधानकर्मचारिणा कृते नूतनो नियमो निर्धारितो बभूव। अनन्तरं लार्डकार्नवालिस इंग्लैण्डदेशे परावृत्तः तत्स्थाने समागतवांश्च जानशोर श्वेताङ्गो भारतस्य प्रधानलार्डो भूत्वा। सर-जानशोरोऽतीव शून्यहृदयः साहसरहितश्च आसीत्। तस्यैव कार्यकाले महाराष्ट्रिया निजाममाक्रान्तवन्तः। भिन्नभूतो निजामः साहाय्यार्थं श्वेताङ्गं प्रार्थितवान्। किन्तु महाराष्ट्रियेभ्यो भयभीतो जानशोरः साहाय्यनैव दत्तवान्। महाराष्ट्रियैः पराजितो निजामः स्वराज्यार्धं बहु द्रव्यञ्च तेभ्यः प्रदत्तवान्। एतेन श्वेताङ्गप्रतिष्ठाहानिर्निजामेन शत्रुता च सहैवाभूताम्। किन्तु भारतीयानां परस्परं वैमत्येन श्वेताङ्गशक्तिः क्षीणाऽप्यक्षीणेवाभूत्।

एतैः सर्वैरुत्साहितो टीपूसुलतानः फ्रांसे अफगानिस्ताने च स्वसाहाय्यार्थं श्वेताङ्गानां भारतान्निष्कासनार्थं च दूतान् प्रैषयत्। एतस्मिन्नेव समये श्वेताङ्गानां भाग्यपरिवर्तितम्। अफगानिस्तानबादशाहो जमानशाहः पञ्जाबमाक्रान्तवान्, किन्तु स्वराज्यस्य पश्चिमभागे सम्भूते महत्युपद्रवे परावृत्तो बभूव। लाहोरं समुपस्थितं जमानशाहमवलोक्य जानशोरोऽवधसम्बन्धिनीं नीति मुद्दामकरोत्।

आसफउद्दौलानमृत्योः परमतीव मूर्खस्तत्पुत्रः सिंहासनासीनो जातः। किन्तु जानशोरस्तं सिंहासनादवतार्य मृतपूर्वनवाबभ्रातरं सादतालिखानं नवाबं व्यधात्। स च श्वेताङ्गैः सह कृतसन्ध्यनुसारं षट्सप्ततिलक्षमुद्रापरिमितं वार्षिकं करं प्रयागदुर्गञ्च दातुं स्वीकृतवान्। श्वेताङ्गाश्च प्राप्ते संकटे साहाय्यं प्रदातुं वचनं दत्तवन्तः।

साहससम्पन्नो राजनीतिज्ञो योग्यः शासकश्चासीत् सप्तत्रिंशद्वर्षदेशीयो वेलेजलिः। यदासौ भारतमाजगाम, तस्मिन्समयेऽत्र राजनीतिकपरिवर्तनमावश्यकमासीत्। फ्रान्से जीवनमरणनिर्णायकं युद्धं सञ्चालयन्नूतनो राजनीतिज्ञो नेपोलियनो विश्वविजयस्य महतीं योजनां कृतवानासीत्। भारतीयानां शक्तिं विनाश्य सम्पूर्णे भारते श्वेताङ्गराज्यसंस्थापनं कर्तव्यमिति विचार्य वेलेजलिः क्रमशः सर्वान् भूपान् पराजितवान्। किन्तु श्वेताङ्गानां महान् शत्रुः टीपूसुल्तानो विदेशीयशक्तिभिर्मिलित्वा श्वेताङ्गान् भारतान्निष्कासयितुं कृतप्रयत्नो बभूव। खर्दायुद्धानन्तरं निजामे श्वेताङ्गानां कोऽपि प्रभावो विश्वासश्च नासीत्। एवं स श्वेतशासनेन सह वार्तां कृत्वा एकां फ्रांसीयसेनां स्वसमीपे रक्षितवान्। किन्तु सिन्धियानां प्रभावः कथमपि श्वेताङ्गेभ्यो न्यूनो नासीत्। तथैव टीपूसुल्तानः श्वेताङ्गानां विरुद्धे युद्धे साहाय्यकरणार्थमेकं राजदूतं फ्रान्से प्रेषितवान्। ततश्चैका सेना समागता मैसूरम्। एतस्मिन्नेव समये नेपोलियनाक्रमणेन यूरोपस्थितिरतीव भयप्रदा समभूत्। कम्पनीकर्मचारिणोऽपि परस्परं कलहं कुर्वाणाः स्वकीयाधिकारिणामाज्ञामपालयन्तो बभूवुः। कोषोऽपि रिक्तो जातः। एतादृशे समये वेलेजलिः साहसेन धैर्येण च कार्यमिदं प्रारब्धवान्।

अथ वेलेजलिः टीपूसुल्तानसविधे पूर्णरूपेण श्वेताङ्गाधीनतां स्वीकर्तुमेकं पत्रं प्रैषयत्। किन्तु सुल्तानः 'नास्ति मे कोऽपि विरोधः श्वेताङ्गैः समम्' इत्युत्तरं प्रदत्तवान्। अनन्तरं वेलेजलिः सुल्तानविरुद्धं युद्धघोषणामकरोत्। साहसपूर्वकं कृतेऽपि समरे सुल्तानः पराजितः। टीपूसुल्तानराज्यं समिताः श्वेताङ्गाः परस्परं विभज्य गृहीतवन्तः।

अथ एतेन सन्धिना निजामं शक्तिहीनं विधाय अन्यैरपि भूपैः सह सन्ध्यर्थं प्रयासमकरोद्वेलेजलिः। किन्तु चतुरा महाराष्ट्रिया वेलेजलि-लार्डस्य कूटनीतिं विज्ञाय पृथगेवासन्। हैदराबादविजितराज्ये हिन्दू-

पुनरपि कम्पनी विंशतिवर्षाणि यावद् व्यापारार्थमेकमाज्ञापत्र प्राप्तवान्। किन्तु प्रधानकर्मचारिणा कृते नूतनो नियमो निर्धारितो बभूव। अनन्तर लार्डकार्नवालिस इङ्ग्लैण्डदेशे परावृत्त तत्स्थाने समागतवाश्च जानशोर श्वेताङ्गो भारतस्य प्रधानलार्डो भूत्वा। स जानशोरोऽतीव शून्यहृदय साहसरहितश्च आसीत्। तस्यैव कार्यकाले महाराष्ट्रिया निजामममाक्रान्तवन्त। मित्रभूतो निजाम साहाय्यार्थं श्वेताङ्ग प्रार्थितवान्। किन्तु महाराष्ट्रियेभ्यो भयभीतो जानशोर साहाय्यनैव दत्तवान्। महाराष्ट्रै पराजितो निजाम स्वराज्यार्धं बहु द्रव्यञ्च तेभ्य प्रदत्तवान्। एतेन श्वेताङ्गप्रतिष्ठाहानिर्निजामेन शत्रुता च सहैवाभूताम्। किन्तु भारतीयाना परस्पर वैमत्येन श्वेताङ्गशक्ति क्षीणाऽप्यक्षीणेवाभूत्।

एवं सर्वैस्त्यक्तो टीपूसुलतान फ्रासे अफगानिस्ताने च स्व साहाय्यार्थं श्वेताङ्गाना भारतान्निष्कासनार्थं च दूतान् प्रैषयत्। एत स्मिन्नेव समये श्वेताङ्गाना भाग्यपरिवर्तितम्। अफगानिस्तान बादशाहो जमानशाह पञ्जाबमाक्रान्तवान्, किन्तु स्वराज्यस्य पश्चिम भागे सम्भूते महत्युपद्रवे परावृत्तो बभूव। लाहोर समुपस्थित जमानशाह मवलोक्य जानशोरोऽपसव्यन्यिनी नीतिं सुदृढामकरोत्।

आसफउद्दौलानमृत्यो परमतीव मूर्खस्तत्पुत्र सिंहासनासीनो जात। किन्तु जानशोरस्त सिंहासनादवतार्य भूतपूर्वनवाबभ्रातर सादतालिखान नवाब व्यधात्। स च श्वेताङ्गै सह कृतसन्ध्यनुसार पट्सप्तति लक्षमुद्रापरिमित वार्षिक कर प्रयागदुर्गञ्च दातु स्वीकृतवान्। श्वेताङ्गाश्च प्राप्ते सकटे साहाय्य प्रदातु वचन प्रदत्तवन्त।

कोऽपि कम्पनीप्रधानकर्मचारी लार्डपदयोग्यो नासीत्। अत पुनरपि कार्नवालिस एव जानशोरस्थाने प्रधानलार्डपदे नियुक्त इङ्ग्लैण्डशासनेन तथापि स पदमिद न स्वीकृतवान्। अतो लार्डवेलेजलि प्रधानचारी बभूव भारतस्य।

साहससम्पन्नो राजनीतिज्ञो योग्यः शासकश्चासीत् खत्रिंशद्वर्षदेशीयो वेलेजलिः । यदासौ भारतमाजगाम, तस्मिन्समयेऽत्र राजनीतिकपरिवर्तनमावश्यकमासीत् । फ्रांसे जीवनमरणनिर्णायकं युद्धं सञ्चालयन्नूतनो राजनीतिज्ञो नेपोलियनो विश्वविजयस्य महतीं योजनां कृतवानासीत् । भारतीयानां शक्तिं विनाश्य सम्पूर्णे भारते श्वेताङ्गराज्यसंस्थापनं कर्तव्यमिति विचार्य वेलेजलिः क्रमशः सर्वान् भूपान् पराजितवान् । किन्तु श्वेताङ्गानां महान् शत्रुः टीपूसुल्तानो विदेशीयशक्तिभिर्मिलित्वा श्वेताङ्गान् भारतान्निष्कासयितुं कृतप्रयत्नो बभूव । खर्दायुद्धानन्तरं निजामे श्वेताङ्गानां कोऽपि प्रभावो विश्वासश्च नासीत् । एव फ्रांसशासनेन सह वार्तां कृत्वा एकां फ्रांसीयसेनां स्वसमीपे रक्षितवान् । किन्तु सिन्धियानां प्रभावः कथमपि श्वेताङ्गेभ्यो न्यूनो नासीत् । तथैव टीपूसुल्तानः श्वेताङ्गानां विरुद्धे युद्धे साहाय्यकरणार्थमेकं राजदूतं फ्रांसे प्रेषितवान् । ततश्चैका सेना समागता मैसूरम् । एतस्मिन्नेव समये नेपोलियनाक्रमणेन यूरोपस्थितिरतीव भयप्रदा समभूत् । कम्पनीकर्मचारिणोऽपि परस्परं कलहं कुर्वाणाः स्वकीयाधिकारिणामाज्ञामपालयन्तो बभूवुः । कोषोऽपि रिक्तो जातः । एतादृशे समये वेलेजलिः साहसेन धैर्येण च कार्यमिदं प्रारब्धवान् ।

अथ वेलेजलिः टीपूसुल्तानसविधे पूर्णरीत्या श्वेताङ्गाधीनतां स्वीकर्तुमेकं पत्रं प्रेषयत् । किन्तु सुल्तानो 'नास्ति मे कोऽपि विशेषः श्वेताङ्गैः समम्' इत्युत्तरं प्रदत्तवान् । अनन्तरं वेलेजलिः सुल्तानविरुद्धां युद्धघोषणामकरोत् । साहसपूर्वकं कृतेऽपि समरे सुल्तानः पराजितः । टीपूसुल्तानराज्यं समित्राः श्वेताङ्गाः परस्परं विभज्य गृहीतवन्तः ।

अथ एतेन सन्धिना निजामं शक्तिहीनं विधाय अन्यैरपि [illegible] सन्ध्यर्थं पत्राचारमकरोद्वेलेजलिः । किन्तु चतुरा महाराष्ट्रा वेलेजलि- साहेबस्य कूटनीतिं विज्ञाय पृथगेवासन् । हैदराबादनिजामं [illegible]

यंदारयेथं बालं प्रतिष्ठाप्य शासनप्रबन्धं सञ्चालयितुं पूर्णयानामकं चतुरं मन्त्रिणञ्च नियुक्तवान् वेलेस्लिः ।

टीपूसुल्तानपतनानन्तरं लार्डोऽयं निजामेन महाराष्ट्रीयैश्च सह भूतपूर्वसन्धेः पुनर्योचनं कर्तुं निश्चितवान् । तथैव सहायकसन्धिप्रस्तावमपि कृत्वा क्लाइव वारेनहेस्टिंगनीतिञ्च अनुससार । सा हि नीतिरियं यत् पूर्वं स्वसाहाय्येन भारतीयनरेशान् रक्षित्वा तत्प्रतिकाररूपेण तेभ्यो विपुलं धनम् । द्रव्यदानासमर्थेभ्यो नरेशेभ्यः पुनः राज्यस्य कश्चिद्भागो प्राप्तः । एवं सहायकसन्ध्यर्थं ते विवशीकरणीयाः । कृतसहायकसन्धयो भूपाः अनिवार्यतया श्वेताङ्गाधीना भवन्ति स्म इति । एतेन सन्धिना भारतीयभूपाः शक्तिहीनाः श्वेताङ्गाश्च शक्तिसम्पन्ना बभूवुः । राज्यव्यापिनमत्याचार-मवरोद्धुं भारतीयभूपानां कृते स्वराज्यस्य कम्पनीराज्ये विलयनादन्या काऽपि गतिर्नासीत् । टामसरोनामकः श्वेताङ्गः एतस्या नीतेः कटुशब्दैरालोचनां कृतवान् यदेतया नीत्या भारतीयभूपाः पूर्णरीत्या शक्तिहीनाश्चरित्रहीनाश्च सम्बभूवुरिति । एतादृशः सन्धिः सर्वप्रथमं निजामेन कृतः । तत परमयोग्याः स्वार्थपरायणा देशभक्तिविहीना विदेशनीतिविहीनाः अन्येऽपि भारतीय-नरेन्द्राः सन्धिमयं कृत्वा एवं श्वेताङ्गं प्रधानत्वेन स्वस्वराज्येषु स्थापितवन्तः ।

कम्पनीराज्यविस्ताराभिलाषी वेलेस्लिरेतस्मिन्नेव समये दक्षिणभारतीय-तञ्जोरराज्यविघटनार्थं समुत्पन्ने विवादे तत्रस्थभूपेन सह सन्धिं विधाय सर्वमेव तञ्जोरशासनं स्वहस्तगतं कृत्वा प्रतिवर्षं चत्वारिंशत्सहस्रपौण्ड भूपाय दातुं वाग्बद्धो बभूव । एवमेव सूरते समुत्पन्ने विवादनार्थं सर्वं लार्डोऽयं नवाबं निष्कासनानन्तरं तद्राज्यं श्वेताङ्गराज्ये विलीनीचकार । एवमेव मृते नवाबे कर्णाटकेऽपि श्वेताङ्गाधीनो जातः ।

अवधनवाबः पाश्चात्यैर्वो मुद्रां दातुमसमर्थं उपद्रुतशैन्य-व्ययश्च अभूत् । अत वेलेस्लिस्तं सैन्यसंघटनं न्यूनीकर्तुमादिदेश । स च १८०१ ई० वर्षे पुनः राज्यविघटनार्थेन भयेनादौ सम्पूर्णं स्वाधिकारं परित्यक्तुं

दत्तवतोऽस्मीत्युत्तरं वेलेस्लीसमीपं प्रेषितवान् । एतेनाप्रसन्नो वेलेस्लि-र्नागपुरराज्यार्धभागं गृहीतवान् ।

सिन्धिया-महादजीराजः मरणात्परं नानाफडनवीसो महाराष्ट्रिय राजनीतिक्षेत्रस्य प्रधानो जातः । किन्तु तत्पदस्थो पेशवामाधवराव नारायणः क्रोधवशीभूत आत्महत्यां कृतवान् । अथ रघुनाथपुत्रो बाजीराव राज्याधिकारं स्वहस्तगतं कर्तुमैच्छत् । नानाफडनवीसस्य बाजीरावेन सह सम्प्रवृत्ते महति समरे नानाफडनवीसो मृतिमविन्दत । तस्मिन् मृते महाराष्ट्रियाणां साहसस्य शक्तेश्च परिसमाप्तिरभूत् । सिन्धिया - होल्करा-वपि पूनाराज्ये स्वाधिकारसंस्थापने कृतप्रयत्नावभूताम् । किन्तु जसवन्तो होल्करः सिन्धिया पेशवाञ्च पराजितवान् । भयात्पलायमानः पेशवा बसीन गत्वा श्वेताङ्गसमीपे शरणं लब्धवान् । वेलेस्लिस्तेन सह बेसीनसन्धिं चकार । पेशवा सहायकसन्धिमपि स्वीकृतवान् । तदनन्तरमसौ श्वेताङ्ग-सैन्यसंरक्षो पूनामागमत् । बेसीन-सन्धिना महाराष्ट्रियाः अपमानिता बभूवुः । क्रोधान्वितः सिन्धिया उक्तवान् यत् 'मम शिरसि उष्णीषमनरोपित-वानयं सन्धिरि'ति । भोसला अपि राष्ट्रियस्वतन्त्रतानाशकोऽयं सन्धिरित्युक्तवान् ।

पश्चाद्वेलेस्लिमहोदयो साहसेन स्वभ्रातरम् आर्थरवेलेस्लिं सेनापतिं विधाय युद्धघोषणां चकार । अथ संग्रामो दक्षिणोत्तरभारतयोर्मध्येऽभूत् । तेन अहमदनगरं श्वेताङ्गहस्तगतमभूत् । आर्थरवेलेस्लिः असाई-स्थाने संयुक्तसैन्यं पराजित्य असीरगढ बुरहानपुरदुर्गद्वयमधिकर्तुं प्रावर्तत । दीनः च सिन्धिया सन्धिप्रस्तावं चकार । भोसला अपि अरगाव-नामकस्थाने पराजितः, ग्वालियरदुर्गं च श्वेताङ्गाधिकारे जातम् ।

जनरललेकः अलीगढदुर्गं विजित्य दिल्लीनगरं च सिन्धियासैन्यं पराजित्य मुगलबादशाहरक्षार्थं तस्य वसनाशननिर्वाहाय वार्षिकीं नवतिसहस्र-मुद्रा प्रदातुं स्वयं स्वीकृतवान् । पश्चाल्लेकः आगरा गत्वा भरतपुरभूपेन सह सन्धिं विधाय आगरामप्यधिकृतवान् । बहुषु स्थानेषु महाराष्ट्रिया

अपि पराजितास्तेन । पुनः सिन्धियानरेशो भोसलानरेशश्च पृथक् पृथक् सन्धिं कृतवन्तौ श्वेताङ्गैः सह, स्वकीयराज्ययोः श्वेताङ्गमध्यस्थमेव रक्षितुं स्वीकृतवन्तौ च ।

होल्कर यशवन्तरावस्य स्थितिरद्यावधि पृथगेवासीत् । अधुनाऽसौ जयपुरराज्ये समुपद्रवं चकार । लार्डवेल्लेजलिना निषिद्धे युद्धारम्भो जात । सेनापतिमासनो राजस्थानमाक्रान्तवान्, किन्तु तत्सैनिकाः पश्चात्पदी भूता., बहवो मृताश्च । जाटा. सिन्धिया पिण्डारिणा नेता अमीरखानश्च होल्करसाहाय्यं कृतवन्त. । स च दिल्लीमाक्रम्य विफलो बभूव । भरतपुरसमीपे तत्सेनापि पराजिता । तथा लेकस्य सेना स पूर्वमेव पराजितवान् । अथ स भरतपुरस्य जाटभूपं शीघ्रमेवाक्रम्य तेन सन्धिमकरोत् ।

एतादृशमातङ्ककारिणं लार्डवेलेजलिं तच्छत्रवो इग्लैण्डदेशे भृशं निन्दितवन्तः । अत एव भारतात्तं स्वदेशे आहूय तत्स्थाने सप्तषष्टिवर्षदेशीयं कार्नवालिसं पुनरपि भारतप्रधानलार्डं विधाय इग्लैण्ड शासनं प्रेषितवान् । आगत्यैव कार्नवालिस. सिन्धियाहोल्कराभ्यां सन्धिं कृतवान् । लार्डवेलेजलिनीतिं परिवर्तयितुमिच्छन्नेवासौ रोगाक्रान्तो भूत्वा गाजीपुरे मृतिमापेदे । पुनस्तत्स्थाने समाजगाम प्रधानलार्डो भूत्वा सरजार्जवार्लो नामक. श्वेताङ्ग. । स च भारतीयराज्येषु हस्तक्षेपाकरणमेव निश्चितवान् ।

एतस्य समये मुख्या घटनैकैव बभूव वेलोर विद्रोहनामिका । विद्रोहस्यास्य कारणं सेनापतिद्वारा भारतीयसैनिकेभ्यो मस्तकेषु तिलककरणनिषेधो नूतनरीत्या उष्णीषपरिधारणस्य आज्ञापनञ्चाभूताम् । धर्मभ्रष्टभयात् सैनिकानां मनो व्याकुलं बभूव । प्रस्फुरितविद्रोहाग्निहृदयाः सैनिका· श्वेताङ्गसैनिकान् हन्तुमारब्धवन्तः । अर्काटात् सैन्यमेकं गत्वा वेलोरविद्रोहाग्निज्वालां शान्तीकृत्य स टीपूसुल्तानपुत्रावेव विद्रोहप्रेरकाविति मत्वा तौ कलिकातां प्रैषयत् । अनन्तरमसौ जार्जबार्लो मद्रास-

राज्यपालपदे नियोजितोऽभूत् । मिण्टोसाहबश्च प्रधानलाडों भूत्वा भारत-माजगाम ।

भारतीयराज्येषु हस्तक्षेपाकरणनीत्या देशे महती अशान्तिर्व्याप्ता । तस्याः शमनं प्रजासु सुखसमृद्धिस्थापनं चन्द्रिदानमन्तरा दुर्लभमेवासीत् । परस्परं कलहायमान-जनपरिपूर्णं बुन्देलखण्डराजस्थानाः साम्राज्यमध्ये च बहुलुण्ठकानां चोराणां स्वातन्त्र्यमनुभूताम् । बहुभिरुपायैः कथमपि शान्तिः समजनि ।

अहमदशाहाब्दालेः आक्रमणानन्तरं पञ्जाबेऽपीव उपद्रवः सम्भूत । सिक्खसेना लाहौरं निर्जित्य झेलमनदीतो यमुनानदीपर्यन्तं मार्गमधिकृतवान् ।

चरणसिंहपौत्रो महासिंहपुत्रो महाप्रतापशाली रणजितसिंहः सिक्ख-नेता सम्भूत । बाल एवासौ पार्श्वस्थान् प्रदेशान् निर्जित्य निज-दर्पाभ्यन्तर एवैकं साम्राज्यं निर्ममे । जमानशाहात् लाहौरं सम्प्राप्य अमृतसरं जित्वा सर्वानेव सिक्खान् संघीकृत्य सुदृढसिक्खसाम्राज्य-स्थापनायत्नोऽसौ रणजितसिंहः कम्पनीसंरक्षणमध्ये सरहिन्द-प्रदेशं नेतु-मनाः श्वेताङ्गानां सम्पर्केऽपि समाजगाम ।

एतस्मिन्नेव समये यूरोपदेशे चरमोन्नतिप्राप्तं श्वेताङ्गव्यापारावरोध-मानसन्नं नेपोलियनं परिलक्ष्य प्रधानलाडों मिण्टोसाहबः अफगानिस्ताने ईराने पञ्जाबे च राजदूतान्प्रेष्य तैः सह सन्धिमकरोत् । किन्तु एतेऽपि सन्धौ किमपि फलं नाभूत् ।

पुनः श्वेताङ्गदूतः स्वचार्ल्स मेटकाफो रणजितसिंहेन अमृतसर-सन्धौ हस्ताक्षरं कारितवान् । रणजितसिंहश्च यावज्जीवनमेव सन्धेः संरक्षकोऽभूत् । मृते च तस्मिन् शासकाः सिक्खाः विहाय मैत्री-सम्बन्धं युद्धार्थमुद्यताः ।

अथ मिण्टोसाहबो भारतात् जगाम, तत्स्थाने समागतो हेस्टिंग्सः प्रधानलाडों भूत्वा भारतम् । कम्पनी चाद्य पुनर्विस्तारपरिणति यावद्

व्यापारकरणार्थं नूतनादेशपत्रं प्राप्तवती। अद्यावधि व्यापारेषु कम्पनी सर्वाधिकारसम्पन्नाऽऽसीत्। किन्तु नूतने महदान्दोलने चीनदेशीयव्यापारं विहाय कम्पनीहस्तात् सर्वोऽधिकारोऽपहृतः। तथापि राजनीतिकाधिकारा-स्यापहरणप्रस्तावो न स्वीकृतिं गतः। कम्पनीप्रमाणपत्रमन्तरा कस्यापि इंग्लैण्डनिवासिनो भारतागमनमपि निरुद्धमेव जातम्। कम्पनी भारते शिक्षाप्रचारार्थं सर्वप्रथमं दशसहस्रपौण्डद्रव्यं स्वीकृतवती।

हेस्टिंगसस्य भारतागमनानन्तरमेव नेपालभूपेन सह युद्धारम्भो बभूव। नेपालस्य पर्वतीयभागोऽयं गण्डकीमालसंलग्न एवास्ति। तत्र निवासिनो गोरखाजातीया मानवाः शारीरिकपराक्रमे सहनशक्तौ च श्वेताङ्गेभ्यो नैव न्यूनाः। अथ च ते सर्वामेव पर्वतीयभूमिं स्वकीयामेव मन्यन्ते स्म।

गोरखाः स्योराजमण्डलं बुटवलमण्डलञ्च स्वायत्तीकृतवन्तः। श्वेताङ्गशासनं शीघ्रमेव युद्धघोषणां चकार। किन्तु पर्वतीयभूमौ युद्धसञ्चालनमतीव काठिन्यपरिपूर्णमिति प्रथम आक्रमणे सेनापतिरॉक्टर लोनीसाहबो विफलीबभूव। द्वितीयसेनापतिर्जिलेस्पीसाहबोऽपि मरण-मापेदे। अन्येऽपि बहवो मृताः, किन्तु लोनीसाहबः पुनरपि सावधानतया युद्धे स्थिरतामापन्नो गोरखाराजधानीमाक्रमितुं विचारितवान्। अत्रान्तरे सन्धिवार्ता प्रचलिता, सिगौलीनामकस्थाने सन्धिलेखनञ्चाभूत्। सन्ध्य-नुसारं गोरखाः पर्वतीयप्रदेशौ गढवालं कुमायूँञ्च परित्यक्तवन्तः। इत्थं यत्र शिमलानाम्नी नगरीदानीं विद्यते, सुरम्योऽसौ देशः श्वेताङ्गाधीनो जातः। परस्परं साहाय्यार्थमुभावपि वचनबद्धौ अभूताम्।

जातिधर्माश्रमविहीनानां सर्वत्रैव चौर्यकर्मकुर्वाणानां पिण्डारिनाम-धारकाणां मानवानां सर्वप्रथमं नाम औरङ्गजेबशिवाजीसैन्ये श्रुतं जनैः। अमीरखानो वासिल्मुहम्मदः चितूः करीमखानश्च तेषां प्रधाना आसन्। हेस्टिंगसमयेऽपि ते सर्वत्रैवोपद्रवमेव कुर्वन्त आसन्। अतस्तेषां दमनाय महतीं योजनां कृतवान् लार्डप्रधानः। एकलक्षत्रिंशत्सहस्रसैनिकैः चतुर्

राज्यमंमात्र निर्धारितवान्। इत्थं काश्मीर सिन्धु पञ्जावञ्च विहाय सम्पूर्णे भारते श्वेताङ्गाधिपत्यमभूत्।

मुक्तामणे ! किं कथयामि, भारतीयानामेव परस्पर विरोधेनैव धार्मिकोऽयं भारतो देशः श्वेताङ्गानामधीनो जातः। एतद्विपरीतं हेस्टिंगस्य सर्वे एव प्रधानकर्मचारिणः पाश्चमशाला शासनकर्मणि योग्या कुशलाश्चासन्।

अथ गते हेस्टिंगे लार्डएमहर्स्टे भारतीयलार्डप्रधानो भूत्वा समाजगाम। यदा श्वेताङ्गा भारते स्वराज्यसंस्थापने संलग्ना आसंस्तदैव अलोम्या नामक एको राज्याधिकारी ब्रह्मदेशे स्वराज्य राज्यं संस्थापितवान्। ब्रह्मदेशनरेशश्च मणिपुरमधिकृत्य चट्टग्रामे मुर्शिदाबादे ढाकानगरे च स्वाधिकार प्रवर्तनं समुत्थापितवान्। पिण्डारियुद्धसंलग्ना श्वेताङ्गा अत्र किमपि ध्यानं नैव ददुः। ब्रह्मदेशवासिनः आक्रम्य आसामप्रदेशं जितवन्तः। आसामविजयेन प्रवृद्धसाहसा ब्रह्मदेशवासिनश्चट्टग्रामसमीपवर्तिनि शाहपुरीनामके द्वीपेऽपि समाक्रमणं कृतवन्तः। भारतीयलार्डप्रधानविरोधोत्तरं ब्रह्मदेशवासिनः किमपि नैव दत्तवन्तः। एतेन युद्धघोषणा बभूव। आर्चीबाल्डस्याध्यक्षताया समुद्रमार्गेण गत्वा रङ्गूनमधिकृतवन्तः श्वेताङ्गाः। ब्रह्मदेशनरेशश्च सेनासहितं महाबुन्देल्नामकं सेनापतिमासाम विजेतुं प्रेषितवान्। किन्त्वसौ शीघ्रमेव पराङ्मुखो बभूव। श्वेताङ्गाश्च आसाममधिकृतवन्तः। कैम्पबेल-श्वेताङ्गः टेनासरिमं विजित्य स्थलमार्गेण सागरमार्गेण च इरावतीनदीमत्यग्रसरो बभूव। वीरतापूर्वकं युद्धं कुर्वाणोऽपि महाबुन्देलो युद्धे पराजितो भूत्वा मरणमापेदे। निमासाहाभ्यन्तर एव न्युब्रह्म (लोअर बरमा) प्रदेशे श्वेताङ्गानामधिकारो बभूव। यदा श्वेताङ्गसैनिका माण्डवं समाक्रमितुकामा अभवस्तदा ब्रह्मदेशनरेशः अराकान टेनासरिमासाम कचारञ्च दत्त्वा तैः सह सन्धिञ्चकार। इत्थं पूर्वस्मादप्याक्रमणस्य भयं निर्मूलमभूत् श्वेताङ्गानाम्।

लार्डबेलेजलिसमये भरतदुर्गं जेतुं कृतप्रयत्ना अपि श्वेताङ्गा

एतस्मिन् धर्मे सर्वे एव मानवा ब्राह्मणाः समुत्पन्नाः। तस्मिन्नेवान्ते विलीनतामाप्स्यन्ति ते। अतः स्पर्शास्पर्शयोर्वर्णधर्माश्रमधर्मयोश्च भेदं विहाय सहैव भुञ्जानाः सर्वे कार्यं कुर्वाणाश्च भवन्तु नाम सर्वे। विवाहस्यापि कोऽपि विचारो नैव कर्तव्यः। हिन्दुकुमार्यश्चापि मुहम्मदीयैरन्यैर्वा सह विधाय विवाहं सन्तानोत्पादनञ्च हिन्दूमहिला एव भवन्तु ताः, न तु मुहम्मदीयमहिला अन्यमहिला वा। ब्रह्मण उपासना तत्सम्प्रदाये प्रधानत्वेन निर्धारिता तेन।

एतस्मिन्नेव समये श्वेताङ्गपुरोधसः श्रीरामपुरे महाविद्यालयं संस्थापितवन्तः, समाचारदर्पणो नामकमेकं पत्रञ्चापि प्रकाशितवन्तः। किन्त्वद्यावधि खलु आङ्गलभाषा शिक्षाया माध्यमस्थानं नैव प्राप्तवती। भारतीयपण्डिता भारतीयभाषायामेव भारतीयमानवानां शिक्षाकार्यं भवेदेतत्पक्षसमर्थकाः, श्वेताङ्गाश्च आग्लभाषामाध्यमेन भारतीयानां शिक्षाकार्यं भवेदेतत्पक्षसमर्थका आसन्। किन्तु प्रधानलार्डसभायाः सम्मानितः सदस्यः श्वेताङ्गकुलसम्भूतो दूरदर्शी विद्वान् मेकाल्साहबः पूर्वीयां भारतीयभाषां विनिन्द्य पश्चिमदेशीयाग्लभाषायाः पक्षसमर्थनं प्रबलेन भाषणेन कृत्वा आग्लभाषामाध्यमेनैव भारतीयानां शिक्षाव्यवस्था भवेदेवंविध एकः प्रस्तावः स्वीकारितवान् राज्यसभायाम्। शिक्षाविषयकविवादे भूतेऽपि बहुविरोधे मेकालेसाहबस्य पूर्णसमर्थनेन प्रभावपूर्णभाषणेन च ससदस्या राज्यसभा आग्लभाषाशिक्षाविषयकं प्रस्तावं पारितवती। संस्कृतभाषामहाविद्यालया फारसीभाषा-महाविद्यालया अपि संस्थापिता बभूवुः। किन्तु सर्वोपरि भाग्यशालिनी खल्वाग्लभाषैव बभूव।

किं कथयामि मुक्तामणे! आग्लभाषायाः शिक्षैव भारतीयवैदिकसनातनधर्मस्याचारस्य शास्त्रीयसद्व्यवहारस्य स्पर्शास्पर्शविचारस्य विनाशिका, पातिव्रत्यधर्मपतनस्य पत्नीव्रतधर्मविलोपस्य भ्रातृप्रेमसमापनस्य पितृपुत्रयोर्विरोधस्य मन्दिरमर्यादाविनाशस्य किं बहुना, भारतीयजनानां मानसिकभावपरिवर्तनस्य सर्वप्रधानं कारणं बभूव।

## मेकाले भाषणम्

प्रस्तावे पारिते परमप्रसन्नतामापन्नो मेकालेसाहब इत्थं स्वकीयं मानसिककुठारं प्रकटितवान् यदाङ्ग्लभाषाप्रधानतामा शिक्षामापन्ना भारतीया जनता भारतीया भवन्तु नाम, किन्तु कर्मणा विचारेण भोजनेन विवाहेन वचनेन वेषभूषाधारणेन यज्ञोपवीतनिष्कासनेन शिखोच्छेदनेनाधोवस्त्रं विहाय टोपधारणेन सुवर्णेन [illegible] निबद्धस्य गले 'नेकटाई'-बन्धनेन गोपालनं गोदुग्धञ्च विहाय कुक्कुरपालनेन कुक्कुटाण्ड-भक्षणेन अपौनमुखं चहापानेन भोजनान्ते महाभोजनान्ते सर्वजाति-पाचितसर्वविधखाद्यभक्षणेन सर्वदेशोद्भवाभिः सुन्दरीभिः सह नग्न-नृत्यकरणेन पशुवद्दुष्प्रवृत्तिनानाविधकरणेन मानसिकविचारेण गुरुपितृ-वृद्धपूज्यजनैरसद्व्यवहारकरणेन च चिरादेव आङ्ग्लदेशोद्भवा भविष्यन्ति। मदीयमेतन्मतानुकूलं प्रायेण सर्व एव भारतीया आङ्ग्लभाषापठिताः परिवर्तित-विचारवन्तः साहबपदाधिकारस्य प्राप्तये मनोगताः प्रातः समुत्थाय प्रज्वलित-सिगरेटं मुखे कृत्वा पुरीषोत्सर्गस्थानं गत्वा मुखात्सिगरेटधूमं मुञ्चन्तः पुरीषञ्च यथावद्यन्त्रेणोत्सृज्य कागदेन गुदं परिष्कृत्य मृत्तिकां विहाय मलापकर्षक-साबुनेनाङ्गप्रक्षालनेन हस्तौ प्रक्षाल्य इंग्लैण्डनिर्मितेन [illegible] ब्लेडेन प्रायः [illegible]कूर्चं भद्रया दन्तपरिष्कारकेण दन्तान् चीनमृत्तिकानिर्मिते पात्रे चहापानं [illegible] पिबन्तो-ऽनेन धूम्रपानञ्च कुर्वन्तः सदैव सन्ध्यावन्दनं गायत्रीजपञ्च दूरे परित्यज्य वेदाध्ययनं तिरस्कृत्य प्रतिदिनमाङ्ग्लभाषामुद्रितं वृत्तपत्रम्। पुनर्निकटवर्तिना शरीरपरिधानं विधाय [illegible] सहितं [illegible] सुदृश्यवस्त्रादिपरिधानं [illegible] चलन्-चनामनानचमत्क्रा च सानन्दं पत्न्या सहैव भुक्त्वा गमिष्यन्ति कार्यालयं स्वकीयं कार्यं वा कर्तुम्। ततः सायंकाले कार्यालयादवकाशमासाद्य समा-गत्य स्नानादिकं चहापानादिकं विधाय पत्न्या सहैवैकाकिना वा गमिष्यन्ति स्वकीयमग्र्यं विहारस्थानम्। तत्र प्रायः श्वेताङ्गैः सहान्यैश्च विविधं विहारं

कृत्वा स्वगृहे कदापि भोजनालये महाभोजनालये वा सायङ्कालीनाशनं समाप्य स्थूलविस्तीर्णस्थूलोपधानसम्पन्ने लौहनिर्मिते पर्यङ्के सुप्त्वा सुखशायिनः स्मरणस्थाने श्रूयमाणं गीतयन्त्रनिःसृतं ग्राम्यगीतं स्वापमाप्स्यन्ति त्यक्तवैदिकधर्मकर्माणः ।

मुक्तामणे ! पश्येदानीं पल्लवशाखान्वितां मैकालेयोजनाम् । यदेयं योजना पुष्पफलान्विता भविष्यति तदा मैकालेमानसपुत्राः सर्व एव भारतीयाः स्वधर्मकर्मादिकमपहास्यन्ति । इदानीं तु बहवो जना भारतीयधर्मकर्मसम्पन्ना ब्राह्मणगुरुवृद्धमातृपितृश्रद्धान्विता वेदस्मृतिसदाचाररता अपि वर्तन्ते । साम्प्रतं पश्यत्येव भवान् यत् संस्कृतवाङ्मयशास्त्रपठनेन नास्ति कोऽपि लाभः, गतो दूरे सत्कारो वेदज्ञानां पण्डितानाम् । ये खल्वाङ्गलभाषामधीत्य भाषायां 'तुम' इत्यस्य स्थाने 'टुम', 'महाशये'त्यस्य स्थाने 'सर' इति वदितुं जानन्ति, भारतीयतीर्थयात्रां विहाय विलायतयात्रां कुर्वन्ति तेषां सर्वत्रैव समादरः सम्मानः आङ्ग्लजनाभिः समं भोजकानां विवाहसम्बन्धसंस्थापकानां भवति । अथ च भारतीयसंस्कृतिसम्पन्नानां धर्मकर्माचाररतानां प्रायेण क्वापि स्थानं न दृश्यतेऽधुना ।

अस्तु, श्रूयतां तावदग्रिमं वृत्तं मुक्तामणे ! लार्डबेण्टिङ्को भारतीयराज्यशासनेषु हस्तक्षेपं कर्तुं निश्चितवान् । किन्तु कम्पनीव्यापारेण सह इतः सन्धयो यदा कस्मिंश्चिद्राज्ये विच्छेदोऽभूत्तदा हस्तक्षेपं कृत्वा राज्यप्रबन्धं स सुदृढं चकार ।

वेलेजलिसंस्थापितं मैसूरराज्याधीशमयोग्यत्वाद् राज्यसिंहासनादवतार्य शासनप्रबन्धं श्वेताङ्गहस्तगतं चकार बेण्टिङ्कः । तथा कचारनिवासिनां प्रार्थनया कचारराज्यमपि श्वेताङ्गाधीनमभूत् । अथ च अतिक्रोधिनं दुष्टहृदयञ्च कुर्गाधीशं निष्कास्य कुर्गं श्वेताङ्गराज्यान्तर्गतं कृत्वाऽवधस्य नवाबराज्यमपि गृहीतवान् सः । नागपुराधीशो भोसला अपि योग्यो भूत्वा लार्डप्रधानसमर्थितं स्वकीयराज्यमकरोत् । प्रजाजनोऽपि तेन सन्तुष्ट आसीत् । किन्तु गायकवाडराज्येऽशान्तिरेवासीत् ।

होल्करराज्येऽपि राज्यसिंहासनं कलहास्पदमेव बभूव तस्मिन् समये। तथैव दौलतरावसिन्धियामरणात्परं बैजाबाईनाम्नी तद्विधवा पत्नी जनकोजीनामकमेकं बालकं दत्तकरूपेण गृहीत्वा स्वयमेव राज्यशासनं चकार। तारुण्यमाप्तायापि जनकोजीराज्ञे राज्यशासनं दातुमनिच्छन्त्या राज्ञ्यास्तेन सह प्रवृत्ते कलहे मध्यस्थाः श्वेताङ्गाः कलहं समाप्य जनकोजीसिन्धियानामकाय राज्यशासनं राज्ञे च जीवनपर्यन्तं भरणपोषाय व्यवस्था कृतवन्तः।

सिक्खनेता रणजितसिंहोऽटकं विजित्य तमेव स्वराज्यसीमानं विधाय च कियत्कालानन्तरमेव काश्मीरमपि जित्वाऽमृतसरे दिनत्रयं यावन्महोत्सवं चकार। पुनर्विशालया सेनया सहितोऽसौ पठानमफगानञ्च पराजित्य पेशावरमपि जिगाय। पूर्णरीत्या विज्ञातश्वेताङ्गचातुर्यो रणजीतसिंहो 'मम पुत्रा मत्सदृशा नैव भविष्यन्ती'त्यपि विचार्य नैराश्यतां गत एवासीत्।

एकस्मिन्समये प्रधानलार्डो रूपरनामकस्थाने रणजितसिंहं स्वागतेनाभिनन्द्य सन्धिं चकार तेन सह। अनन्तरं सिन्धः श्वेताङ्गाधीनो जातः।

पश्चाद्गतवति बेण्टिके समाजगाम भारतं चार्ल्समेटकाफः प्रधानशासको भूत्वा। वृत्तपत्रप्रतिबन्धः श्वेताङ्गमर्यादाविरुद्ध इति कथयन् मेटकाफः वृत्तपत्रं स्वतन्त्रमकरोत्।

निर्भीको योद्धा साहसी शासको रणजितसिंहः स्वयं सिक्खधर्मावलम्बी-भूत्वाऽपि कमप्यन्यं मानवं सिक्खधर्मग्रहणार्थं नैव बबाधे। स्वसमकालीनभूपानामिव सानन्दं जीवनं यापयन् मद्यपानञ्च कुर्वन्नप्यसौ कदापि स्वकार्यं विघ्नाभिभूतं नैवाकरोत्। उच्चशिक्षाविहीनोऽपि विदुषां सम्मानकर्ता कुशाग्रबुद्धिः स्वयमेव स्वभाग्यनिर्माता महान् सिक्खसंगठनकर्ता चासीत् रणजितसिंहः। तस्य राज्यं लाहौरमुलतानपेशावरकाश्मीरप्रान्तेषु चतुर्धा विभक्तमासीत्। किन्तु रणजितसिंहमरणात्परं स्वस्वप्रभावसंस्थापनार्थं प्रयत्नकारकाणां नेतॄणां परस्परं कलहेन पञ्जावेऽशान्तिः समुत्पन्ना।

विशालराज्यशासनप्रबन्धेऽशक्तानां रणजितपुत्राणां मध्ये खड्गसिंहनौनिहालसिंहयोर्वर्षाभ्यन्तर एव मरणमासवतोः पर शेरसिंहो (रणजितपुत्रः) राज्योत्तराधिकारिपदमलञ्चकार। किन्तु कलहायमानदलमध्यगते तस्मिन् जम्मूनिवासिना ध्यानगुलाब-सुचेतसिंहानां सिक्खराज्ये महान् प्रभावो बभूव। पश्चात्स्वप्रतिद्वन्द्विना काष्ठपुत्तलिकाभूते शेरसिंहे शत्रुभिर्घातिते दिलीपसिंहो राज्यसिंहासनं लब्धवान्।

रणजितसिंहपत्नीझिण्डनगर्भसमुत्पन्नत्वाद्राज्यानर्हत्वाच्च दिलीपपक्षसमर्थनमकुर्वन्तः सिक्खाः साहाय्यार्थं श्वेताङ्गान् प्रार्थितवन्तः।

पञ्जाबविद्रोहे वृद्धिंगते श्वेताङ्गानां सैनिकोद्योगकरणाद्भयभीतानां सिक्खानां मनसि सन्देहः समुत्पन्नो लाहौरनिवासिनां श्वेताङ्गानामाचरणमवलोक्य। यदि श्वेताङ्गैः सह युद्धकरणेन सिक्खसैन्यं विनष्टं भवेत्तदा पञ्जाबे श्वेताङ्गानां राज्यं संस्थापितं भविष्यतीति विचार्य सिक्खाः सतलजनदीं पारितवन्तः। प्रधानलार्डसेनापतिह्यू गफश्च सैन्येन सह समरं कृत्वा मुद्कीनामकस्थाने सिक्खान् पराजितवन्तौ। फिरोजशाहसमीपे पुनरपि प्रवृत्ते संगरे उभयपक्षयोर्बहवः सैनिका निहताः। अत एव प्रधानलार्डः सेनापतिं परावर्त्य स्वयमेव सेनापतिर्भूत्वा सिक्खान् पराजितवान्। किन्तु

स पञ्जाबराज्यं श्वेताङ्गराज्येऽविलीय कृतैकसन्ध्यनुसारं दिलीपसिंहं पञ्जाबनरेशं हरहेनरीलारेन्सञ्च राज्यनिरीक्षकं व्यधात् ।

श्वेताङ्गादेशमन्तरा कमपि विदेशिनं राज्ये मा नियोजयनामिति दिलीपसिंहमादिष्टवन्तः श्वेताङ्गाः । कोषे पञ्जाबलक्षमुद्रा एवासन्निति हेतोर्गुलाबसिंहहस्ते विक्रीय काश्मीरं सार्धैककोटिपरिमिता मुद्रा प्रदत्तवान् श्वेताङ्गयुद्धव्ययरूपेण दिलीपसिंहः । तत आरभ्य डोगरा-गुलाबसिंह वंशजाना काश्मीर आधिपत्यमभूत् । राज्ञी झिण्डनतः सर्वाधिकारमपहृत्य ता वाराणसीं प्रेषितवन्तः श्वेताङ्गाः । यद्यपि हार्डिंगस्य सर्व एव समयः पञ्जाबयुद्ध एव व्ययं गतस्तथापि गङ्गातोऽदेवमातृका निष्कासनव्यवस्था कृता तेन । पुनः लार्डहार्डिंगो गतवान्, समागतश्च तत्स्थाने षट्त्रिंशद्वर्षदेशीयो डलहौजीनामा श्वेताङ्गो लार्डप्रधानो भूत्वा भारतवर्षम् ।

लाहौरसन्धिनाऽवस्थापिताया शान्तौ सिक्खप्रधानो मूलराजो विद्रोहं कृत्वा द्वौ श्वेताङ्गौ घातितवान् ।

डलहौजीरेतस्मिन् विषये त्वरामकृत्वा हर्बर्टेडवर्डनामकेन सैन्यमेकत्रीकारयित्वा मुल्तानमाक्रान्तवान् । एतेन सम्पूर्ण एव पञ्जाबे विद्रोहज्वाला प्रस्फुटिता । सादुल्लापुरे सिक्खानां महती हानिरप्यभूत् । किन्तु महता साहसेन युद्धं कुर्वन्तः सिक्खा घटिकात्रयेणैव शताधिकान् श्वेताङ्गान् व्यापादितवन्तः । किन्तु द्वितीययुद्धे विजयमवाप्य श्वेताङ्गा दिलीपसिंहं राज्यच्युतं विधाय मूलराजं शूलमारोपितवन्तः । इत्थं पञ्जाबोऽपि श्वेताङ्गाधीनोऽभूत् ।

ब्रह्मदेशस्य द्वितीयः संग्रामस्तेषां व्यापारिणां हितायाऽभूत् ये खलु भूतपूर्वनाण्डवरन्वेः पर ब्रह्मदेशस्य दक्षिणसमुद्रतटे निवासमकुर्वन् । बहुवारं ब्रह्मराज्याधिकारिणो हस्तक्षेपेण विरक्ता व्यापारिणो भारतीयशासनसमीपे हस्तक्षेपार्थं प्रार्थना चक्रुः । त्वरितमेव प्रधानलार्ड एकलक्षपौण्डस्य क्षतिपूर्त्यर्थं दातुं ब्रह्मराज्याधिकारिणमादिदेश । किन्तु ब्रह्म-

देशस्य राज्यसभा किमप्युत्तरं नैव दत्तवती । ततः परं युद्धारम्भे जाते स्वयमेव लार्डडल्हौजी सैनिकानामारोग्यार्थं स्वास्थ्यरक्षार्थञ्च सर्वां व्यवस्थां चकार । श्वेताङ्गसैनिका मर्तवानं रङ्गूनमन्दिरञ्चाधिकृत्य प्रामं विजित्य च लघुब्रह्मदेशं श्वेताङ्गसाम्राज्ये विलीनीकृतवन्तः । प्रधानलार्डो नूतनस्य ब्रह्मदेशस्य व्यवस्थायां योग्यानधिकारिणो नियुज्य तद्देशवासिजनान् योग्यान् शिक्षितांश्च विधातुं प्रयतितवान् । अधुना वङ्गसमुद्रादारभ्य मलयप्रायद्वीपं यावच्छ्वेताङ्गानां राज्यमभूत् । डल्हौजीनीतिः सीमान्तप्रदेशे ऽतीव फलवती जाता । पञ्जाबस्य श्वेताङ्गराज्ये विलीनीकरणेन यद्यपि सिक्खानां मनसि महानाघातोऽभूत्, तथापि बाह्याक्रमणाद्देशस्य रक्षणमभूदेव ।

सिक्किमविजयेन चाययानारस्योपरिब्रह्मदेशजयेन पूर्वत आक्रमणभयसमाप्तिश्चाभूताम् । महान् कूटनीतिज्ञः साम्राज्यवादी शासकः डल्हौजी शान्तिमयाक्रमणेनैव श्वेताङ्गसाम्राज्यं वर्धयितुमियेष । शक्तिहीनानां राज्यानामस्तित्वं तन्मते कथमपि लाभप्रदं नासीत् । तस्य पूर्णो विश्वास आसीद्यत् श्वेताङ्गसाम्राज्यमेव भारतीयानां कृते लाभदायकं भविष्यति, जना मानयन्तु न वेति । एवं विचार्यासौ भारतीयराज्यानि तिसृषु श्रेणीषु विभक्तवान् — १. स्वतन्त्रराज्यानि, येषु भारतीयशासनं राज्ञां मरणात्परमुपयुक्तशासनाधिकारिणो नियुक्तानमासीत् । २. तानि राज्यानि यानि पेशवानां मुगलानां वा स्थाने श्वेताङ्गाधिपत्यं स्वीचक्रुः । ३. उभयश्रेण्यनन्तर्गतानि राज्यानि । पूर्वाभ्यां द्विविधराज्याभ्यां दत्तकपुत्रस्याभ्यधिकारं दत्तवान् । किन्तु एतत् तृतीयराज्यस्य कृते दत्तकपुत्रग्रहणाधिकारं दातुमनिच्छामेव प्रकटीचकार सः । यस्य राज्ञः कापि सन्ततिर्नासीत्तस्मिन् राजनि पञ्चत्वमापन्ने तद्राज्यं श्वेताङ्गसाम्राज्ये विलीनं भवेदितीच्छासीत्तस्य । किन्तु शास्त्रानुसारं सर्वेषामेव सन्ततिविहीनानां भूपानां दत्तकपुत्रग्रहणस्याधिकार आसीदेव ।

डल्हौजी राज्ञां व्यक्तिगतसम्पत्तौ राज्ये च भेदं कृतवान् । स सत्येवं

नियमं कृतवान् यत् निःसन्तानस्य कस्यापि राज्ञो राज्याधिकारी श्वेताङ्गराज्यासामन्तरा कोऽपि दत्तकपुत्रो नैव भवितुमर्हति । बहवो राज्यसभाधिकारिणः सदस्या एतस्य नियमस्य विरोधमकार्षुः, किन्तु डलहौजी तूष्णीमेव अतिष्ठत् । एतेन नियमेन सताराराज्यं अप्पासाहिबस्य मरणात्पर श्वेताङ्गराज्यान्तर्गतमभूत् । झांसीराज्येणापि गृहीत दत्तकपुत्र श्वेताङ्गा अस्वीकृतमकार्षुः । नागपुरराज्यो न च गृहीत दत्तकपुत्रमस्वीकृत्य राज्यं श्वेताङ्गराज्ये विलीनमकुर्वन् श्वेताङ्गाः । जैतपुर सम्भलपुरबाघाटउदयपुर-राज्यान्यपि श्वेताङ्गसाम्राज्ये विलीनानिभूतानि । किन्तु डलहौजीलार्डस्योत्तराधिकारिणोऽन्तिमयोर्द्वयोः स्वातन्त्र्यं दत्तकपुत्रग्रहणाधिकारञ्च स्वीचक्रुः ।

अथ डलहौजी कर्णाटकनवाबस्य तञ्जौरभूपस्य चोपाधिमपहृत्य मुगलसम्राजोऽप्युपाधिमपहर्तुं प्रस्तावमकरोत् । किन्तु कम्पनीसञ्चालकास्तमस्वीकृतवन्तः । पेशवाबाजीरावद्वितीयमरणात्पर तदपि राज्यं श्वेताङ्गाधीनमभूत् । नानाफडनवीसश्च बिठूर गतवानिति तु पूर्वमेव वर्णितमस्ति । अवधनवाबराज्येऽथ डलहौजीनियमा नैव लग्नाः, तथापि शासनान्यवस्थया तद्राज्यमपि श्वेताङ्गराज्ये विलीनम् । इत्थं व्यापारार्थमागताः श्वेताङ्गा भारते शासका अभूवन् ।

ब्रिटिशशासनेन एका नूतना आज्ञा प्रदत्ता कम्पनीव्यापारकरणार्थम् । तस्य विधाने शासने च परिवर्तनमप्यभूत् । स्थिराऽपि कम्पनी स्वाधिकारविहीना जाता । लार्डडलहौजीसमुत्पादितशक्तिभिर्भारतीयदशाया परिवर्तनमभूत् । भाष्पयानैस्तैलयानैर्ध्वनिविस्तारकयन्त्रैश्च देशस्य विभिन्नताया दूरताश्च प्रश्न दूरीकृतवान् डलहौजीसाहेबः । स इतरेषां विचारमनतीत्य स्वविचारेणैव श्वेताङ्गराज्यं विस्तारितवान् । तदनन्तरमस्वस्थो भूत्वा स्वदेशञ्च गत्वाऽसौ चतुर्वर्षानन्तरमेव पञ्चत्वं गतः ।

---

: २३ :

# प्रथमं भारतीय-स्वातन्त्र्य-युद्धम्

अथ लार्डकैनिंग प्रधानलार्डो भूत्वा भारतं समाजगाम । डलहौजी-नीत्याऽसन्तोषपरिपूर्णे भारते समागतवति कैनिंगे श्वेताङ्गसाम्राज्यविनाश-कामो विद्रोहो बभूव । विद्रोहस्य राजनीतिक सामाजिक सैनिकानि त्रीणि कारणान्यासन् ।

## भारतव्यापिनी अशान्तिः

भारतीयराज्यानां श्वेताङ्गसाम्राज्ये विलीनीकरणार्थं या नीतिः लम्बिता डलहौजीलार्डेन, तया महती अशान्तिः समुत्पन्ना । अवधनवाबो विरोधमन्तरैव राज्यसिंहासनं परित्यक्तवान् । तेन प्रजासु महानसन्तोषो व्याप्तः । सैन्यविघटनेन तत्सैनिका जीविकाविहीनाः सञ्जाताः । दिल्ली-नगर्यां राज्यशासनं कुर्वन्नपि मुगलसम्राट् कम्पनीवेतनभोगी एवासीत् । यदि बादशाहो दिल्लीनिवासं परित्यजेत्तदैव तस्योत्तराधिकारिणं मानितुं श्वेताङ्गशासनस्था आसन् । सतारा नागपुर झांसीराज्यानां श्वेताङ्गराज्ये विलीनीकरणात् तत्सम्बद्धाः अप्यतीवासन्तुष्टा लघुहृता सर्पा इवोच्छ्व-सन्तः किंकर्तव्यविमूढाः समभवन् । वित्तविहीनाः सन्तो महाराष्ट्रिया अपि प्रभूताभावेन ज्वलन्तो बभूवुः । अस्मिन्समये श्वेताङ्गप्रधानशत्रोः पेशवा-राज्यचरमाधिकारिणा नानासाहबस्य धर्मचारिणा उत्तरभारते विद्रोहज्वालां प्रास्फोटयन् ।

भूम्या नूतनप्रबन्धेन विपद्ग्रस्तानां प्राचीनधनिकानामुच्चपदेषु यूरोपीयाधिकारिणो नियुक्ता बभूवुः । लार्डडलहौजीकृतपरिवर्तनैन हिन्दूनां धार्मिकसामाजिककृत्येषु महानाघातो बभूव । भारतवासिनः

सार्वजनिकशिक्षा क्रिस्तमतावलम्बिकरणस्य साधनममन्यन्त । श्वेताङ्ग-पुरोधसैर्वेदशास्त्रप्रतिपादितहिन्दूधर्मविनिन्दनेन बाइबिलप्रतिपादित-धर्मस्यैव सत्यधर्मत्वकथनेन सतीशिशुहत्यादिप्रथावरोधेन विधवाविवाह प्रोत्साहनेन ते स्वकीय संगठनं विच्छिन्नं भविष्यतीति मानितवन्तः । स्वकीय-राजनीतिनिशस्त्रप्रहारेण अवध दिल्लीनवाबवधापतनेन क्रुद्धा, परं तु सिताश्च मुसल्मदीया: मतिरोषाकुलितमतयो बभूवुः ।

भारतीययूरोपीयसैनिकयोर्मध्ये महद्वैषम्येन नूतनश्वेताङ्गराज्या-धिकारिभिः प्राचीनकार्यकारिणां वृद्धानामप्यपमानेन च सैनिका अपि संकटापन्नाः समभूवन् । बङ्गीयसेनायामधिकतया ब्राह्मणा, क्षत्रियाश्चासन् । वीरतागर्वनता तेषां मनसि विशेषाधिकारेच्छाप्यासीत् । किन्तु एको नियमः पारितो बभूव यस्मिन् समापन्ने समये सर्वेषामेव सैनिकानां जातीयभावं विहाय सर्वत्र गमनस्य व्यवस्थाऽऽसीत् । एतेषां परिणाम सरटामसमन्रो-हेनरीलारेंसमाहवी पूर्वमेव प्रतिबोधितवन्तौ, किन्तु तयोः परामर्शे नाभूत्कोऽपि विचारो विमर्शो सभायाम् ।

मेरठेऽपि स्वाधिकारिणं आज्ञां सम्मन्तुमसमर्था भूत्वा सैनिका विद्रोहं कृतवन्तः । भारतीयसैनिकाः कारागारद्वारमुद्घाट्य स्वसार्थान् मोचितवन्तः । तदनन्तरं ते दिल्लीं गत्वा कतिपयघटिकाभिरेव नगरे स्वाधिकारं संस्थापितवन्तः । रुहेलखण्डे मध्यभारते च शीघ्रमेव विद्रोहो व्याप्तः ।

बरेली लखनऊ वाराणसी कानपुरस्था सर्वे एव सैनिका विद्रोहं कृतवन्तः ।

## झासी सम्राज्ञी लक्ष्मीबाई

बुन्देलखण्डे लक्ष्मीबाईनाम्नी झासीराज्ञी विद्रोहिणां नेतृत्वं कृतवती । महाराष्ट्रियस्य बिठूरनिवासिनो बाजीरावस्य भ्राता चिमणाजी मोरोपन्तेन सह वाराणस्यां वसति स्म । तत्रैव लक्ष्मीदेवी जन्मालभत । तस्याः पितुर्नाम मोरोपन्तः माता च भागीरथी । चिमणाजीमरणानन्तरं मोरोपन्तस्यापि पत्नीवियोगोऽभूत् । असहायो मोरोपन्तः स्वपुत्र्या लक्ष्म्या सह पुनः बिठूरे पेशवाबाजीरावस्य छत्रच्छायायामाजगाम । तत्रैव लक्ष्मी स्वशैशवं नीतवती । शिक्षया सहैव घोटकारोहणस्य सैनिककार्यसञ्चालनस्य च शिक्षा अल्प एव वयसि सा प्राप । प्राप्ते काले झासीनरेशेन गङ्गाधररावेण सहाभूत्तस्याः पाणिग्रहणसंस्कारः । इदानीं झांसीं निवसन्ती तरुणी लक्ष्मी स्वपतिना सह राजकीयकार्यं कुर्वन्ती लोकप्रियतामवाप ।

लक्ष्मीप्रसूतं पुत्रं मासत्रयाभ्यन्तरं एवोपरतं विलोक्य श्वेताङ्गैश्चास्वीकृते दत्तकपुत्रे महति शोकसागरे निमग्नो गङ्गाधररावो द्विवर्षाभ्यन्तरं एव पञ्चत्वमगात् । महाशोकान्धकारे निमग्ना एकाकिनी लक्ष्मी राज्यशासनव्यवस्थां स्वयमेव सञ्चालयन्ती निवासं चक्रे झासीनगर्याम् ।

झांसीराज्यस्य एतादृशीं स्थितिमवलोक्य लार्डडलहौजी दत्तकपुत्रप्रथां विलोप्य निर्णयेन झांसीराज्यं श्वेताङ्गसाम्राज्ये विलीनं चकार । एतेन पतिपुत्रवियोगिनी लक्ष्मीः मर्मस्थलाहता पदच्युता सम्पन्ना 'स्वीयां झांसीं' कदापि नैव दास्यामीत्युक्त्वा श्वेताङ्गैर्दीयमानं पञ्चसहस्रवार्षिकभय

मन्वीकृतवती । अथ श्वेताङ्गसैनिकानामासारः समागतो ह्यासीत्, किन्तु राज्ञ्या आहूताः संनद्धा भारतीयसैनिका एकस्थानेन रात्रौ सर्वान् श्वेताङ्गान् हतवन्तः ।

एतस्मिन्नेव समयेऽहमेव झांसीराज्याधिकारीति वदन् सदाशिवराव-नारायण ओरछानरेशो झांसीमाक्रम्यापि तया पराजितोऽभूत् । नत्थेखाननामा सेनानी. ससैन्यो झांसीमाजगाम । तस्मिन्समये राज्ञी स्वयमेव नेतृपदं स्वीकृतवती । खड्गादिविविधास्त्रसम्पन्न महाराज्ञीव स्वकीयं वेषं विधाय तीव्रगामि-नमश्वमारुह्य संग्रामार्थं व्रजन्ती बहिर्निर्गता तामवलोक्य समुद्रतरङ्ग इव सैनिकेषु समुत्साहः समुद्वेलितो बभूव । महानालिकास्त्रनिर्गतासु अजस्त्रय-गुलिकासु निर्भीकं चमत्कुर्वती स्वसैनिकान् रक्षन्ती च शत्रून् संग्राम-भूम्या निरेजे ।

अपरे दिवसे महानालिकास्त्रगुलिकानाघातप्रहारेण नगरस्य प्राकारः कतिपयस्थलेषु भग्नो बभूव । किन्तु रात्रावेव सा तं प्राकारं निर्मापितवती । बहुदिवसपर्यन्तं कृतेऽपि युद्धे विजयपराजययोः कोऽपि निर्णयो नाभूत् । निरन्तरयुद्धेनात्मसैनिकानां समरे किं मुष्टिमेया मदीया सैनिकाः कदापि स्थातुं शक्ष्यन्तीति विचार्य सा तात्याटोपेमहोदयं पत्रेणैव लिखितवती साहाय्यार्थम् । ससैन्यः समागतोऽपि तात्याटोपेः पलायाञ्चक्रे ।

विजयाशामनवलोक्य तात्यासाहवेन सह काल्पीं विहाय स्वचातुर्येण ग्वालियरमधिकृतवती सा। किन्तु श्वेताङ्गा अपि ग्वालियरमागत्य सर्वत आक्रमणं कृतवन्तः। प्रवृत्ते च भीषणे संग्रामे ग्वालियरपूर्वद्वारस्य रक्षाभारं राज्ञी स्वयमेव स्वीकृतवती। आदिवसं संभूते महति संग्रामे विजयो राज्या एवाभूत्।

पुनः स्मिथाक्रमणे सति स्वसर्वसैनिकपरिवृता राज्ञी युद्धस्थलमाजगाम। किन्तु कृतेऽपि महति युद्धे प्रदर्शितेऽपि धीरतायाः परिचये विनिर्मितेऽपि विविधसंग्रामव्यूहे मृतेऽपि श्वेताङ्गसैनिकसमूहे राज्ञी सर्वत श्वेताङ्गैरावृता बभूव। अनन्तर कतिपयाश्वारोहिभिः सह युद्धस्थलं परित्यज्य पलायमाना सा कतिपयश्वेताङ्गसैनिकैः पृष्ठतो ययुः। एकस्य नालिकागर्तस्य समीपे भ्रमिमापन्नेऽश्वे तत्र स्थिता श्वेताङ्गा राज्या उपरि प्रहारमकुर्वन्। प्रहारैराहता सा घोटकाद् भूमौ पपात, व रगतिञ्च प्राप्तवती स्वकीयामक्षय्यां कीर्तिं भारतीयेतिहासस्वर्णपत्रेऽङ्कयित्वा।

## श्रीनानासाहवः

कानपुरे नानासाहवो विद्रोहिणां नेतृत्वमकरोत्। पूनास्मीपे वेणुनामकग्रामे माधवरावभट्टगृहे गंगादेव्या नानासाहवो जन्मालभत। बाजीरावे गते विठूरे सपरिवारो माधवरावोऽपि पश्चाद् विठूरं जगाम। स्वकीयसद्भावनया सत्यव्यवहारेण च माधवरावः पेशवाप्रियपात्रमभूत्। सन्ततिविहीनत्वाद्बाजीरावो नानासाहवं दत्तकपुत्रमकरोत्। नानासाहवश्चाल्पेनैव कालेन सर्वविद्यायां युद्धविद्यायाञ्च नैपुण्यं लेभे।

बाजीरावपेशवामरणात्पर तस्याष्टलक्षात्मकं दायमाप वार्षिकव्ययमवरुद्धवान् डल्होजीः। अजीमुल्लाखाननामकं मुहम्मदीय वार्षिकव्ययप्राप्त्यर्थं इग्लैण्डदेशं सम्प्रेष्यापि किमपि साफल्यमलब्ध्वा नानासाहवः श्वेताङ्गानां परिसमाप्त्यर्थं बद्धपरिकरो बभूव। स देशीयनरेशानां सविधे गुप्तरूपेण दूतान् सम्प्रेष्य श्वेताङ्गविरुद्धं युद्धार्थं तान् समुत्साहितवान्।

पूर्वस्मिन् कुँवरसिंह लखनऊनगरे विराजितवर्द्धं झांस्या लक्ष्मीदेवीं दक्षिणे तात्याटोपेसाहबं नियुज्य मेरठनगरा कानपुरं गोरखपुरञ्च स्वकीयसंरक्षणे युद्धसंचालनार्थं संस्थाप्य विद्रोहार्थं नानासाहबः एकां तिथिं निर्धारितवान्।

किन्तु निश्चिततिथेः पूर्वमेव विद्रोहारम्भोऽभूत्। विद्रोहिणः श्वेताङ्गान् पराजित्य नानासाहबं कानपुरभूपं कृतवन्तः। इदानीं नानासाहबस्य सविधे चतुःसहस्रसंख्यकाः सैनिकाः सम्बभूवुः। कियत्कालानन्तरमेव श्वेताङ्गैः सह भूते सन्धौ दुर्गस्थान् श्वेताङ्गसैनिकान् सुरक्षापूर्वकं बहिः प्रेषितवान् नानासाहबः।

कानपुरपतनवृत्तं श्रुत्वा सेनापतिर्हैवलाको नीलश्च सहैवाक्रमणं कृतवन्तौ कानपुरनगर्याम्। अस्मिन् युद्धे पराजितो नानासाहबः फतेहगढं जगाम। किन्तु यदैव हैवलाकः लखनऊनगरं गतवास्तदैव पुनरपि कानपुरमागतवान् बहुसैनिकसम्पन्नो नानासाहबसेनापतिः, तमधिकृतवांश्च। पुनर्नानासाहबः काल्पीं जगाम। संभूतेऽपि भीषणे संग्रामे नानासाहबः पराजितो भूत्वा सबान्धवान् सम्प्रेष्य नेपालं स्वयं पत्न्या सह वनवासी बभूव।

नानासाहबस्य त्रयः पुत्रा आसन्। गुप्तचरैः कारागारे बद्धोऽपि नानासाहबः कयाऽपि युक्त्या ततो निःसृत्य संन्यासग्रहणञ्च कृत्वा गोमत्यास्तटे सर्पदंशनेन मृतिमापेदे।

## नरकेसरी कुँवरसिंहः

विद्रोहसमये ये प्रधाना अधिकारिण आसंस्तेषु नरकेसरिणः शाहाबादमण्डलान्तर्गत जगदीशपुरनिवासिनः श्रीकुँवरसिंहस्य नामापि जनैः सश्रद्ध गृह्यते। कुँवरसिंहो मालवाभिवासिभोजराजस्य वंशे समुत्पन्नः। एतस्य पितुर्नाम साहबजादासिंह आसीत्, पितृव्यो भूपनारायणसिंह। भूपनारायणसिंहमरणानन्तरं तत्पुत्र ईश्वरीप्रसादसिंहो भूपो बभूव, किन्तु राज्यन्यायालये

न पराजित्य साहबजादासिंह एव राज्यसिंहासनमलञ्चकार। अश्वारोहण-शस्त्रसञ्चालनप्रिय कुँवरसिंहः शीघ्रमेव रणकोविदतामवाप्य पितुर्मरणात्परं राज्यकार्यसञ्चालनभारान्वितः सम्बभूव। स्वातन्त्र्यसंग्रामान्दोलने समुद्भूते तस्य प्रधाननेता कुँवरसिंहोऽप्यासीत्। अशीतिवर्षदेशीयो राजा कुँवरसिंहः स्वसैन्येन सह आरां गत्वा तत्रस्थराजकीय कोष स्वाधीनं कृत्वा लघु-दुर्गमपि स्ववशं चकार। आरानिवासिनो जना एतस्य कार्यस्य पूर्णं समर्थनं कृतवन्तः। पुन आरारक्षार्थमागत महत्या सेनया समावृतं सेनापतिं डरबन ससैनिकं हत्वा द्वितीयश्वेताङ्गपराजितो राजा कुंवरसिंह अतरौलिया-नामक स्थानं जगाम। तत्र मैकमिलनस्याध्यक्षत्वे समागतान् श्वेताङ्गान् भोजनसमय एवाक्रम्य सर्वानेव पलायितवान्। पलायित श्वेताङ्गानां वस्तूनि समादाय कुवरसिंह आजमगढे ससैनिकं डेम्ससेनापतिं पराजित्य वाराणसीमाजगाम। तत्रापि लार्डमार्केन सह युद्धं कृत्वा तमपि पराजितवान्। भयानकं संग्रामं डगलसेन सह कृत्वा तमपि पराजित्य बलिया समागतोऽसौ शिवपुरनामकस्थाने गङ्गापारं कर्तुं योजनामकार्षीत्। सर्वैरेव सैनिकैर्नौकाभिर्गङ्गा समुत्तीर्णा। किन्तु कुँवरसिंहाधिष्ठिता नौका गङ्गायामेवासीत्तदैव तस्य बाहौ श्वेताङ्गानामेका गुलिका संलग्ना। तत्क्षणे कुँवरसिंहः खड्गेन बाहुमेव छित्वा गङ्गायै समर्प्य जगदीशपुर-म गतः। वृत्तमिदमवगत्य श्वेताङ्गाः जगदीशपुरमाक्रान्तवन्तः। किन्तु आपमानं पराजितास्त्यक्तशस्त्रास्त्रास्ते पिपासिता एव ते पलायाञ्चक्रिरे म्रियमाणाः शीघ्रमेव। जगदीशपुरे कतिपयमासपर्यन्तं राज्यं कृत्वा कुँवरसिंहः पुरन्दरपुरातिथिर्बभूव।

## प्रथम-स्वातन्त्र्यसंग्रामस्य वैफल्यम्

दिल्ल्यामधिकार एक महत्त्वपूर्णं कार्यमासीत्। विद्रोहिणो दुर्गस्य पश्चा-द्भागे स्वाधिकारं संस्थापितवन्तः। किन्तु यदा निकोल्सनः पञ्जाबात्सैन्य-मादाय समागतस्तदा पट् सप्ताहपर्यन्तं कृतेऽपि महति संग्रामे विद्रोहिणा

पराजयो दिल्ल्यां श्वेताङ्गानामधिकारश्च बभूवतुः । पुत्राभ्यां सहितं सप्ततिवर्षदेशीयं बहादुरशाहं बन्दिनं विधाय तत्पुत्रौ हत्वा बादशाहं रङ्गूनं प्रापयन्त श्वेताङ्गाः । तत्रैव स मृतिमापेदे ।

विद्रोहोऽयं न सफलतां गतः । यद्यपि विद्रोहज्वाला सर्वत्रैव प्रस्फुरिता, तथापि सा भारतव्यापिनी नाभवत् । उत्तरे पश्चिमे चाल्पेनैव कालेन शान्ता बभूव । नेपालनृपसैनिकाः सिक्खाश्च श्वेताङ्गसाहाय्यमकार्षुः । विद्रोहासाफल्ये राष्ट्रियभावनाया अभावो विद्रोहिणामैक्याभावश्च प्रधानं कारणमभूत् । झाँसीराज्ञीं विहाय कोऽपि योग्यो नेताऽपि नासीत् । मुगलमुहम्मदीयराज्यस्य पुनरुत्थापने हिन्दवो नानासाहस्याध्यक्षतायां स्वाधिपत्यस्थापने सिन्धिया होल्कर निजामप्रभृतयोऽन्ये च क्षत्रियभूपाः श्वेताङ्गपक्षसमर्थने संलग्ना आसन् । एवं लार्डकैनिंगस्य क्षमानीतिरपि विद्रोहदमने सहायिकाऽभूत् ।

---

# भारते ब्रिटिश-राज्य-खग्रासः

एष एव विद्रोह 'ईस्ट-इण्डिया कम्पनी' संस्थाया व्यापारान्तं चकार। ब्रिटिशशासन तस्यै पुनर्नूतनमाज्ञापत्रं नैवादात् व्यापारार्थम्। तथैवैक नियमं पारितं कृत्वा भारतशासनं ब्रिटिशराज्यच्छत्राधीनमभूत्। ब्रिटिशशासन-राज्यसभायामेकस्य भारतीयसचिवस्यापि नियुक्तिरभूत्। लार्डप्रधानश्च ब्रिटिशशासनस्य भारतस्थित प्रतिनिधिर्बभूव।

पुनर्लार्डकैनिंग प्रयागे सभामेकां कृत्वा ब्रिटिशसाम्राज्ञ्याः विक्टोरियायाः सुप्रसिद्धां घोषणां श्रावितवान् भारतीयप्रजानामाश्वासनार्थम्। घोषणापत्र-द्वारा ब्रिटिशसम्राज्ञी सर्वेभ्य एव भारतीयेभ्य आश्वासनं विश्वासञ्च प्रदत्तवती यद् भारतीयनरेशै सह कम्पनीकृतसन्धिपालनं भविष्यति, सन्ततिविहीनानां भूपानां कृते दत्तकपुत्रग्रहणाधिकारः सुरक्षितः स्यात्, राजकीयकार्यकरणार्थं जातिधर्मभेदं विहाय सर्वेषामेव भारतीयानां कृते स्वतन्त्रता स्यात्, भारतीयधर्मे हस्तक्षेपो न भवेत्, स्वतन्त्रतायां संलग्नेभ्यः सर्वेभ्य क्षमाप्रदानञ्च भवेत्। सर्वञ्चैतद् विक्टोरियाघोषणापत्रमुखेन लार्डकैनिंगो समकथयत्।

स्वास्थ्यदौर्बल्यात् लार्डकैनिंगो इंग्लैण्डदेशं ययौ। तत्स्थाने प्रधान-लार्डो भूत्वा भारतमागत एल्गिनोऽपि वर्षाभ्यन्तर एव मरणमाप। ततः परं राबर्टनेपियर विलियमडेनिसनौ स्थानापन्नौ प्रधानलार्डावभूताम्।

पुनर्जानलारेन्सो लार्डलारेन्सो भारतप्रधानलार्डो बभूव। प्रवृत्तेऽफगान-युद्धे हस्तक्षेपनइरता, अफगानराजकुमारैः साहाय्यार्थं प्रार्थितोऽपि स 'यः काबुलमपि विजेष्यति तमेव ब्रिटिशशासनं काबुलशासकं मानयिष्यती'त्युत्तर-

मदात्। युद्धे विजयिनममीराब्दुल्लैव असौ काबुलधनिकं समन्यत। अत्रान्तरे एवाफगानिस्तानोत्तरीयसीमान वर्धमाना रूसनिवासिनो बुखारां विजित्य तुर्किस्तानप्रान्तमकुर्वन्। एवं ते समरकन्दं विजित्य स्वायत्तवर्तिनं चक्रुः। तुर्किस्ताने सैनिकशक्तिं दृढीकृत्य भारतीयकार्येषु ब्रिटिशशासनमपि भयभीतं कुर्याम इति तेषामिङ्गितं जानन्नप्यसौ मौनमेवालम्बितवान्।

पुनर्गतवति लारेंसे समागतः प्रधानलार्डमेयोसाहब। स अम्बालानगरे शेरालिना सह मिलितवान् शिष्टाचारपूर्वकम्। तुमसन शेरालिस्तस्य साहाय्यं याचितवान्। किन्तु साहाय्यस्य कापि व्यवस्था नाभूत्। विविधैः कारणै- र्लार्डमेयो त्यागपत्रं प्रदाय स्वदेशं जगाम। समागतश्च प्रधानलार्डो भूत्वा लार्डनार्थब्रुकसाहबः। किन्तु ब्रिटिशशासनेन सह मतभेदे जाते लार्ड नार्थब्रुकसाहबस्त्यागपत्रं प्रदत्तवान्, समागतश्च प्रधानलार्डो भूत्वा लिटिनसाहबः।

लिटनसाहब स्वप्रतिनिधिं स्वीकर्तुं शेरालिमप्रार्थयत्, किन्त्वसौ नैव स्वीचकार। पुनः प्रवृत्ते टर्कीरूसयुद्धे रूसताद्दास्तुर्ककार्येषु हस्तक्षेपकारिणं स्वमनुराद्धुं चेष्टितवन्तः। किन्तु रूसिनो दूतमेव सम्प्रेष्य बलादेव तुर्कान् सन्ध्यर्थं निवशीकृतवन्तः। पुनः लॉर्डलिटन स्वकीयमेव प्रतिनिधिं रक्षितुं पत्रद्वारा काबुलधनिकस्य समीपे सन्देशं प्रेषितवान्। किन्तु सन्देशप्राप्तिदिने एव अब्दुल्लाजानस्य मरणमभूत्।

पुनर्नेविल्चेम्बर राजदूतं विधाय स पेशावरात् काबुलं प्रेषितवान्। किन्त्वसौ खैबरदर्रामेवावरोधित काबुलवासिभिः। एतेनापमानेन क्रुद्धो लिटनो युद्धघोषणामकरोत्। तिसृभिर्गुल्माभिश्च रूसताद्दा अफगानिस्तानं प्रविष्टा। अफगाननिवासिनस्तद्विरोधं नैव चक्रुः। साहाय्यार्थं रूस गत शेरालिनजरशरीफे मरणमापेदे। अनन्तरं तत्पुत्रेण याकूबेन सह रूसताद्दानां सन्धिर्बभूव। सन्ध्यनुसारं तनयेन देशिकनीत्या ब्रिटिशशासनस्य नियन्त्र-

: २५ :

# कांग्रेस-स्थापनस्य पूर्वपीठिका

ब्रिटिशराज्यसमया भारतीयशासनसूत्रे गृहीतेऽपि भारतं यथाशासनगतिः पूर्वंनदेवासीत् । पूर्वपारितनियमानुसारं भारतीयेभ्यः शासकीयोच्चपदप्रदानस्य स्वीकृतावपि कश्चिदप्युच्चपदेषु केषामपि नियुक्तिर्नाभूत् । सिविल-सर्विसनाम्नी प्रतिस्पर्धापरीक्षा यदा प्रचलिता तदा बहुभिर्जनैरित्थं विचारितं यदेतेन भारतीयानां मार्गे बाधा समुत्पन्ना । नूनं लन्दननगरं गत्वा श्वेताङ्गपुत्रैः सहाङ्ग्लभाषामधीत्य साफल्यलाभोऽतिदुर्लभो विशेषतो भारतीयोच्चकर्मचारिपदप्राप्त्यर्थम् । किन्तु सत्यपि काठिन्ये कतिपयभारतीयाः समुद्रपारं गत्वा तत्र साफल्यमण्डिता बभूवुः ।

अत्रान्तरे एव लार्डसैल्सबरिमहाशयेन परीक्षावयसि न्यूनीकृते भारतीयाना मादानस्थाने प्रदानस्यैवावसरः सञ्जातः । अथ चैकत्र ये श्वेताङ्गसाहाय्येन भारते लन्दने च सहैव परीक्षा भवेदित्युद्घोषयन्त आसन् । अन्यत्र लार्ड लिटनेन देशीयभाषापत्राणामपि मुखावरोधोऽकारि । एवं नियममेकं विधाय न केवलं भारतीयानां शस्त्रास्त्ररक्षणे व्याघातो व्यधायि श्वेताङ्गैः, प्रत्युत भारतीयश्वेताङ्गयोर्मध्ये भेदभावोऽपि समुत्पादितः । सहैवानेन दुर्भिक्षस्यापि महदाक्रमणमभूत् । तस्मिन्लक्षशो जना कालकवलिता बभूवुः । अफगानयुद्धे व्ययाधिक्यपीडितकृषकाणां निन्दा च दूरे तिष्ठताम्, साधारण

मभूत्। किन्तु इंग्लैण्डे लिटनसमर्थका निर्वाचने पराजिताः। अत एवासौ त्यागपत्रं प्रदत्तवान्। समागतश्च तत्स्थाने लार्डरिपनसाहबः।

लार्डरिपनेन मण्डलसभा ग्रामीणसभयोर्निर्माणार्थमेको नियमः पारितः। तदनुसारमेव मण्डलग्रामसभे (डिस्ट्रिक्टबोर्ड लोकलबोर्ड) स्वस्वक्षेत्रे कार्यं कुरुतः। पुनस्त्यागपत्रं प्रदाय गतवति रिपने तत्स्थाने समागतवान् महाकूटनीतिज्ञ सार्वजनिककार्यानुभवी प्रभावशालिभाषणकर्ता डफरिन-साहबो लार्डप्रधानो भूत्वा भारतवर्षम्।

जनाकर्षकशिष्टाचारान्वितोऽसौ प्रदत्तविदेशीयकार्यविधानः शासन-सम्बन्धेऽपि पूर्णं ध्यानमदात्। भूमिसम्बन्धिनमेकं नियमं पारयित्वा यन्नावध-पञ्जाबनिवासिना कृषकाणां भूमिष्वधिकारं प्रदाय ग्वालियरदुर्गं सिन्धिया-नरेशाय झांसीस्थाने मरारदुर्गञ्च तदधिकारिणे प्रदत्तवानसौ डफरिनः।

---

# कांग्रेस-स्थापनस्य पूर्वपीठिका

ब्रिटिशराज्यसभया भारतीयशासनसूत्रे गृहीतेऽपि भारतीयशासनगतिः पूर्ववदेवासीत् । पूर्वपारितनियमानुसारं भारतीयेभ्यः शासकीयोच्चपद-प्रदानस्य स्वीकृतावपि केष्वप्युच्चपदेषु तेषामपि नियुक्तिर्नाभूत् । सिविल-सर्विसनाम्नी प्रतिस्पर्धापरीक्षा यदा प्रचलिता तदा बहुभिर्जनैरित्थं विचारितं यदेतेन भारतीयानां मार्गे बाधा समुत्पन्ना ! नूनं लन्दननगरं गत्वा-श्वेताङ्गपुत्रैः सहाङ्ग्लभाषामधीत्य साफल्यलाभोऽतिदुर्लभो विशेषतो भारतीयोच्चकर्मचारिपदप्राप्त्यर्थम् । किन्तु सत्यपि काठिन्ये कतिपयभारतीयाः समुद्रपारं गत्वा तत्र साफल्यमण्डिता बभूवुः ।

अत्रान्तरे एव लार्डसैल्सरिमाहनेन परीक्षावयसि न्यूनीकृते भारतीयाना-मादानस्थाने प्रदानस्यैवानवसरः सञ्जातः । अथ केचन ते श्वेताङ्गसाहाय्येन भारते लन्दने च सहैव परीक्षा भवेदित्युद्घोषयन्त आरन् । अन्यच्च लार्ड-लिटनेन देशीयभाषापत्राणामपि मुखावरोधोऽकारि । एवं नियमनैकं विधाय न केवलं भारतीयानां शस्त्रास्त्ररक्षणे व्याघातो व्यधायि श्वेताङ्गैः, प्रत्युत भारतीयश्वेताङ्गयोर्मध्ये भेदभावोऽपि समुत्पादितः । सहैवानेन दुर्भिक्ष-स्यापि महदाक्रमणमभूत् । तस्मिल्लक्षशो जनाः कालकवलिता बभूवुः । अफगानयुद्धे व्ययाधिक्यपीडितकृषकाणां निन्दा च दूरे तिष्ठताम्, साधारण-कृषकाणां निन्दामपि श्रोतुं नाङ्गीकृतोऽप्युद्यतः । डाफरिनादिना न केवलं शासनेन नूतनशैथिल्यमपहृतम्, किन्तु समयं समीक्ष्य विरोधाधिकारोऽप्य-पहृतः । लार्डविलियमवेडरबर्नमतानुसारं मुद्रणयन्त्र-सञ्चालनाधिकारो विश्व-विद्यालयस्वतन्त्रता चापहृताऽभूत् ।

इत्थमेकतस्तु प्रतिगामी नियमोऽपरतश्च राजनैतिककर्मचारिणां दमनम् —एताभ्यां कारणाभ्यां लार्डलिटनकाल एव भाविनि विस्फोटमाशङ्क्य ह्यूममहाशयः हस्तक्षेपमकरोत् । तत्सविधे राजनीतिरहस्यान्येतस्य प्रमाणमप्यासीत् । एतादृशीं भीषणां परिस्थितिं विचार्य ह्यूमसाहवा ऽशान्तिं प्रकटयितुं नूतनोपायान्वेषणे तत्परो भूत्वा 'भारतीयानामेका राष्ट्रिय सभा भवेदि'ति निर्धारितवान् ।

एतेनैव विचारेणासौ पञ्चाशत्सङ्ख्यकानां सत्यत्यागसयमसाहस देशसेवापरोपकारादिभावसम्पन्नानां छात्राणां कृते कलिकाताविश्वविद्यालये पत्रमेकं लिलेख । तस्य विचार आसीत्पूर्वं यदि पञ्चाशज्जना राष्ट्रियसभा सस्थापकरूपेण भवेयुस्तदा सभा सस्थापनं भवितुमर्हति । सभाया विधानं जनसत्तात्मकं भवेत् , व्यक्तिगतमहत्त्वाकाङ्क्षाविहीना एव च तत्सदस्या भवेयुः । ते हि सदस्या आत्मानं सर्वश्रेष्ठसेवकमङ्गीकुर्वन्तु । स्वकीय पत्रेऽसौ स्पष्टमेव लिखितवान् यत् यदि भवन्तः स्वकीयं सुखं सौविध्यञ्च परित्यक्तुं नैव शक्ष्यन्ति तदा साम्प्रतं मन्मते प्रगतेराशा व्यर्थैव । तथेदमपि कथनीयं भविष्यति यत्सत्यमेव भारतं वर्तमानशासनायोग्य शासनं नेच्छति न तद्योग्य चेति ।

तदीयपत्रस्यान्तिमो भागश्चेत्थम्—मनुष्याः किमपि कार्यं कथं कर्तव्यमिति जानन्ति । अत एव भवद्भिरग्रे कदापि निन्दा न कर्तव्या यच्छ्वेताङ्गाः कथं शासकीयोच्चपदेषु नियुक्ता भवन्ति विहाय भवतः । कथञ्च भवत्सु तादृशः सार्वजनिकसेवाभावो नास्ति ? नास्ति च परोपकारभावना वा । यः खलु सार्वजनिकहितसमक्षं व्यक्तिगतं हिताहितं लघु मनुते स एव मानवः । या देशभक्तिः श्वेताङ्गानामीदृशमकरोत् , सा भवत्सु नास्ति । अहं कथयिष्यामि, सत्यमेव श्वेताङ्गाः भवत्स्थानेषु प्राप्नुवन्ति समादरम् । भवत्सु तेषां शासनत्वमप्युचितमेव । अधुनैव केवलं न भवता शासकास्ते, किन्त्वग्रेऽपि स्थास्यन्ति । भवत्स्कन्धेषु स्थिताऽयं भारस्तावद् दुःखदायी भविष्यति यावद्भवन्त एतच्चिरसत्यं नैवा

नुभविष्यन्ति, तदनुसारं चलितुं नैव तत्परा भविष्यन्ति च। आत्मबलिदान-मेव सुराज्यस्य स्वातन्त्र्यस्य च सफलं पथप्रदर्शकं भवति। अपरञ्च, कांग्रेस-संस्थापनात्पूर्वं सर्वप्रथमं वङ्गे 'ब्रिटिश-इण्डियन-असोशियेशन'नाम्न्या संस्थाया रामगोपालघोष-राजेन्द्रलालमित्रसदृशा देशभक्ताः प्रायेण विंश-तिवर्षाणि यावत्कार्यमकार्षुः। बम्बईनगरे च दादाभाई-नौरोजी-जगन्नाथश्रेष्ठिभ्यां संस्थापिता मंगलदासनाथूभाईनौरोजी फर्दूनजीप्रधान-कार्यकर्तृसम्पन्ना 'बम्बई असोशियेशन'नाम्नी सार्वजनिकसंस्थाप्यासीत्। वीरराघवाचार्य-रंगैयानायडु सुब्रह्मण्यैय्यर मुथ्यारावपन्तुलुप्रभृति-गण्यमान्यव्यक्तिसंस्थापित 'हिन्दु संस्था' द्वारैव मद्रासे वास्तविकसेवाभावस्यो-दयो बभूव।

यदा मद्रासे हिन्दुसंस्थायाः प्रादुर्भावोऽभूत्तदैव तूकलर-चिपलूणकर-प्रभृतिमहामानवानां मनसि सार्वजनिकसेवाभावः प्रादुरभूत्—महाराष्ट्रे पूना-क्षेत्रे च। पुनश्च वङ्गे 'इण्डियन-असोशियेशन'नाम्नी संस्था सुरेन्द्रनाथ-बनर्जी महाशयेन संस्थापिता। एतस्याः सर्वप्रथमः सचिव आनन्द-मोहनवसुरासीत्।

इदमपि ध्येयं यत् यद्यपि कांग्रेसस्थापनात्पूर्वं सार्वजनिक-जीवनं नासीत् सुसंगठितम्, तथापि भाविनः सुसंगठनस्य प्रभावं शासना-धिकारिणोऽप्यनुभवन्तो बभूवुः। वृत्तपत्रमेव तज्जीवनस्य प्रधान-मङ्गमासीत्।

सिविलसर्विसपरीक्षायामुत्तीर्णः सुरेन्द्रनाथबनर्जीमहोदयः पञ्जाबे संयुक्तप्रान्ते च राजनीतिकयात्रां कृत्वा सुप्रसिद्धदिल्लीराज्यसभायां सम्मिलितो देशीयनरेशैरन्यैश्चाग्रगण्यपुरुषैः सह वार्तां चकार। तत्रैकत्रितान् भारतीयभूपान् देशाग्रगण्यपुरुषांश्चालोक्य बनर्जीमहोदयस्य चेतसि देशव्यापकराजनीतिकसंघटनस्य प्रेरणा प्रादुर्बभूव। पुनः [illegible]-वरीकृतस्य ऊनविंशतिवर्षदेशीय एव सिविलपरीक्षां प्रदातुमधिकृतो भविष्यतीति नियमस्य विरोधे लोकमतं संग्रहीतुं [illegible]

यस्या वार्षिकाधिवेशन तत्रैव सम्पन्नम् । तथा मेहता - तैलंग - तैयबजी-प्रभृतीनां मण्डली अपि 'बाम्बे-प्रेसिडेन्सी' नाम्नीमेका संस्था संस्थापितवती ।

पूर्वोक्तवर्णनेन सुस्पष्टमिदं यद् भारत स्वमनसि कस्या अपि अखिलभारतीयसंस्थाया संस्थापनस्यावश्यकतामनुभवदासीदिति । किन्तु सर्वप्रथम ह्यूमसाहब एव कार्यारम्भ कृत्वा पूनानगरे 'इण्डियन-नेशनल-यूनियन'स्य प्रथमाधिवेशन भविष्यतीति विज्ञापितवान् । अथ च पूर्ववर्णित-भारतीयेतिहासानुसारं काङ्ग्रेसस्थापनवर्षात् पूर्ववर्तिपञ्चाशद्वर्षेभ्यो भारते स्वातन्त्र्यभावना जागृतिमाप किल ।

## श्रीराममोहनरायो ब्रह्मसमाजश्च

आधुनिकभारतजन्मदाता राजाराममोहनरायस्य हृदि स्वाधीनता-प्रेम प्रबलमासीत्, येनासौ मुगलसम्राजो राजदूतो भूत्वा तस्यैव कार्य-करणार्थं इंग्लैण्डदेशं गतोऽपि भारतवासिनां कष्टस्य स्मृतिपत्रमेकं साधारणसभाया मतिसमक्षमुपस्थापितवान् । स्मृतिपत्रोपस्थापनसमये स इदमपि प्रतिज्ञातवान् यत् यदि मे स्मृतिपत्रं पारितं न भवेत्तदाऽहं ब्रिटिशोपनिवेशं परित्यज्य अमेरिकाया निवसिष्यामि । तथैवायं वृत्तपत्र-मुद्रणयन्त्रालयविषयक दमनचक्रं विलोक्य उच्चन्यायालये तस्य महान्तं विरोधमकारयत् स्वकीयाभ्यां प्राड्विवाकाभ्याम् । तस्मिन् साफल्यमलब्ध्वाऽसौ ब्रिटिशसम्राट्समक्षमपि सार्वजनिकमेकमावेदनपत्रं समुपस्थापितवान् । यद्यपि तदा तस्य किमपि फलं नाभूत्तथापि तदुत्तरीकानुसार-मेव लार्डमैकालो भारतीयपत्रेभ्यः स्वातन्त्र्यं प्रददौ । राजाराममोहन-रायो यदा गुडहोपं स्वतन्त्र्यध्वजाऽऽरोहणकृतेन फ्रांसीयपोतेन गन्तुमारेभे चकार, यदा चासौ तद्ध्वजं दृष्टवान् तदैव तन्मुखात् जयध्वनिर्निःसृतः ।

राममोहनरायस्य जन्म बङ्गे मृत्युश्च ब्रिस्टलनगरे बभूव । तत्सं-स्थापितस्य ब्रह्मसमाजस्य प्रभावः सम्पूर्णभारते प्रसृत आसीत् । पूनानगरे महादेवगोविन्दरानडेमहोदयानां नेतृत्वे प्रार्थना-समाजस्य संस्थापनं

तदान्दोलनारम्भश्चाभूताम्। पश्चिमोत्तरभारते दयानन्दसंस्थापितस्य आर्यसमाजस्यान्दोलनमपि प्रारब्धम्। इत्थं मद्रासे संस्थापिताया थियासोफिकल-सोसाइटी-संस्थाया आर्यसमाजस्य ब्रह्मसमाजस्य चान्दोलनेन विदेशीय-शिक्षाद्वारा समुत्पन्नस्य स्वधर्मादर्शसंस्कृतिविलोपनस्य प्रभावस्य विलोपोऽभूत्।

## स्वामी दयानन्द आर्यसमाजश्च

आर्यसमाजसंस्थापको महर्षिदयानन्दो वेदानामपौरुषेयत्वस्य वैदिक-संस्कृतेश्च प्रबलः समर्थक आसीत्। भारतीयराष्ट्रे समुत्पन्नो महान् तेजस्वी दयानन्दस्वामी आधुनिकवातावरणस्य प्राचीनपरम्परायाश्च सामञ्जस्यमकरोत्। यथा राजाराममोहनरायो ब्रह्मसमाजं संस्थाप्य बहुदेववादस्य बहुविवाहस्य मूर्तिपूजायाश्च विरुद्धं प्रचारितवान्, तथैव दयानन्दोऽपि प्रचलितकुरीतिः धार्मिकान्धविश्वासांश्च खण्डितवान्।

पश्चादार्यसमाजेऽपि दलद्वयमभूत्। एकस्य दलस्य संस्थापको ब्रह्मचर्यस्य धार्मिकसेवायाश्चाभिमानी गुरुकुलसमर्थकः स्वामी श्रद्धानन्दोऽभवत्, अन्यस्य चाधुनिकशिक्षासम्पादनपूर्वकं किञ्चित्पश्चिमीयसभ्यताया अपि सञ्चारं कृत्वा नवजीवनसम्पन्नसमाजसंस्थापकस्य दलस्य प्रवर्तको लाला लाजपतराय अभूत्।

## थियासोफिकल-समाज एनीवेसेण्टश्च

थियासोफिस्टान्दोलने यद्यपि विश्वव्यापिन्याः सहानुभूत्या अध्ययनस्य च वैशिष्ट्यमासीत्, तथापि पूर्वीयसंस्कृतिगतवैशिष्ट्यस्य पुनरुज्जीवनेऽपि महान् भरो दीयते स्म। एतदेव प्रबलभावनया प्रभाविता श्रीमती बेसेण्ट-महोदया भारतीयपुण्यक्षेत्रभूताया काश्यामेकं संस्कृतमहाविद्यालयं संस्थापितवती। एवं थियासोफिस्टप्रवृत्तिभिर्यत्र विश्वबन्धुत्वभावना वृद्धिं गता तत्रैव पश्चिमीयबुद्धिवादवैशिष्ट्यस्यापि प्रभावो न्यूनतां गतः। तत्स्थाने संस्कृतैकं प्रधानकेन्द्रं संस्थापितं यत्र प्राचीनभूम्या पश्चिम-देशीया विद्वज्जनाः समाकृष्टा बभूवुः।

## श्रीरामकृष्णपरमहंसः

एवमेव वंगीयो रामकृष्णपरमहंसदेवोऽपि काँग्रेससंस्थापनात् पूर्वं राष्ट्रियपुनरुत्थानाय अन्तिमं प्राणमदात्। तस्य पट्टशिष्यो विवेकानन्दस्वामी सर्वत्रैव रामकृष्णोपदेशप्रचारं चकार।

'रामकृष्णमिशन'नामकस्तस्य संघो न केवलं योगसाधकानां भौतिकतावादिनां वा संस्था, अपि तु नूतनाध्यात्मिकादर्शवादिनी संस्था, वर्तते, या खलु लोकसंग्रहस्य समाजसेवायाश्चादर्शमनुपेक्ष्य समस्तराष्ट्राणामत्र सामाजिकराजनीतिकप्रश्नानां सामञ्जस्यार्थमेव कुण्ठिप्रकाम्पा वर्तते।

वङ्गप्रान्तीयहुगलीमण्डलान्तर्गतस्य कामारपुकुरग्रामस्थस्य ब्राह्मणस्य गृहे श्रीरामकृष्णो जन्माऽलभत। एतस्य धर्मपत्न्या नाम शारदादेवी। कलिकाता-समीपवर्तिनि पुण्यसलिलाया भागीरथ्यास्तटे दक्षिणेश्वरनामकतपोवनेऽसौ सनातन-बौद्ध-जैन सिक्खपारसीक क्रिस्त-मुहम्मदीयादिविविधधर्माणां साधनं विधाय स्वकीयगम्भीराध्यात्मिकानुभूत्याऽऽत्मविस्मृतानां भारतीय-जनानां समक्षं स्थिरीचकार यद् "भारतीयधर्मो नैव कपोलकल्पितोऽन्ध-विश्वासपरिपूर्णो वा। किन्तु तस्मिन्नेवाद्यापि शक्तिर्निहितास्ति या भारतस्य पुनरुत्थानाय विश्वशान्तिमार्गप्रदर्शनायालं भविष्यती"ति। अतीतकालेषु सर्वे साधका याः सिद्धयः प्राप्तवन्तस्ताः सर्वा एव रामकृष्णोऽपि प्राप्तवान्। सर्वधर्मेषु समन्वयं विधायासौ कथितवान् यत् येनापि मार्गेण तत्त्वान्वे-षणेऽन्वेषकः स कोऽपि साधकश्चरमं मोक्षाख्यं लक्ष्यमवश्यमेवाप्नोति। देशकालपात्रानुसारमेवेश्वरो विभिन्नधर्मान् निर्मितवान्। सर्वाण्येव मतानि भगवतः प्राप्त्यै मार्गभूतानि। आन्तरिकभक्त्या कमपि मार्गमव-लम्ब्य कोऽपि जन ईश्वरं साक्षात्कर्तुं शक्नोति। निराकारं साकारं वा भग-वन्तं चिन्तयन्तु नाम। मम धर्मः सत्यधर्मोऽन्ये सर्वे एवासत्यधर्मा इति धर्मान्धत्वं नैव समीचीनमि"ति। अयं च हिन्दुमुहम्मदीयपाश्चात्यवैदेशिक-महर्षीणां समकालीनो ब्रह्मज्ञानिन इव यूयमपि ज्ञानमाप्तुमिच्छथ।

किन्तु यस्य यादृशी सहनशक्तिर्भवति, माता तादृशीमेव व्यवस्था करोति । कठोरसाधनेन सर्वधर्मसत्यतामुपलब्धस्यादर्शवादिनो यथार्थवादिनस्तस्य वाणी सनातनवादिनः प्रगतिवादिनश्च हृदयं संस्पृशन्ती बौद्धिकवृत्तिं सचेतनां विधातुं समर्थाभूत् । विभिन्नसमस्यापरिपूर्णे भारतीयदुर्दिनेऽस्मिन् द्वैतविशिष्टाद्वैताद्वैतादिनिखिलदार्शनिकमतेष्वभूतपूर्वं सामञ्जस्यं विधाय विभ्रान्तभारतीयानां कृतेऽपूर्वमिव मार्गं प्रकटीचकार । तन्मतानुसारं वैष्णवाः शाक्तास्तान्त्रिका वेदान्तिनो ब्राह्मा बौद्धाः सिक्खाः पारसीका जैना मुहम्मदीयाश्च नवीनालोकमवाप्य स्वधर्मेषु निष्ठावन्तो भूत्वाऽन्यधर्मेषु श्रद्धान्विता अभूवन् ।

## स्वामी विवेकानन्दः

कलिकातानिवासिविश्वनाथदत्तपाणिगृहीत्याः भुवनेश्वरीदेव्या गर्भोत्पन्नः परममेधावी प्राच्यपाश्चात्यविद्यापारङ्गतो यूरोपीयसाहित्यविज्ञानादिभिः सुपरिचितः, किन्तु संशयालुः, नरेन्द्रनाथदत्त एकस्मिन्दिवसे श्रीरामकृष्णसमीपमागत्य 'किं भवान् भगवन्तं दृष्टवान् ?' इति पप्रच्छ । 'यथा त्वां पश्यामि तथैवेश्वरमपि दृष्टवानस्मी'ति घोरगम्भीरस्वरेणोवाच सः श्रीरामकृष्णः । स द्रष्टुं प्राप्तुं च शक्यते जनैरित्यपि स होवाच । प्रत्यक्षमाध्यात्मशरीरस्य श्रीरामकृष्णस्य पूतस्पर्शविद्याभ्यां क्रमशो नरेन्द्रदत्त आस्तिको भूत्वा संन्यासं गृहीत्वा विवेकानन्द इति नाम्ना प्रसिद्धोऽभूत् ।

श्रीरामकृष्णलीलासंवरणात्परं विवेकानन्दो वाराहनगरे संन्यासिसङ्घस्थापनमकरोत् । तत्रस्थाः संन्यासिनः श्रीशङ्कराचार्यपरम्परानुसारमाध्यात्मिकपथे संलग्नाः । अनन्तरं स्वामिविवेकानन्दो भारतीयतीर्थयात्रां विधाय विदेशीयजनपददलितनिरन्नभारतीयजनानामवस्थया परिखिन्नोऽमेरिकादेशस्थशिकागोनगरे विश्वधर्मसम्मेलने भारतीयार्यधर्मोदारतत्त्वविश्लेषणसम्बन्धेन भाषणं श्रोतॄन् मुग्धीकृत्य भारतीयधर्मध्वजामुन्नामयत् । विवेकानन्दभाषणेन प्रभाविता अमेरिकादेशीयपाश्चात्यबुध-

नाम्नी महिला म्वकीयम् ऊनचत्वारिंशत्सहस्रमितं द्रव्यं व्ययीकृत्य कलि-कातासमीपे वेलूरनामकस्थाने श्रीरामकृष्ण स्मारकरूप मठमेकं निर्मापितवती। एतानि सर्वाण्येवान्दोलनानि भारतीयराष्ट्रियतारूपिण्या मणिमालाया ग्रन्थितमणय इव बभूवुः ।

भारतस्यैव कर्तव्यमासीद्यदेतेषु विभिन्नविचारेषु सामञ्जस्यं कुर्यात्तेन पूर्वदूषितविचारमन्धविश्वासञ्च दूरीकृत्य प्राचीनवेदान्तमतस्य समुद्भवं भवेत् । तच्च नवीनतेजसा समुद्भासितं सत् नवयुगराष्ट्रधर्मेण सह सम्मिलितञ्च भवेत् । काङ्ग्रेसस्यानिर्माणं एतस्य महत्कार्यस्य परिपूर्त्यै बभूव ।

प्रारम्भे ह्यूमसाहबस्यायमेव विचार आसीद्यत् कलिकातास्था 'इण्डियन-असोसियेशन'संस्था बम्बईस्था 'प्रेसीडेन्सी-असोसियेशन'संस्था मद्रासस्था 'महाजनसभा' अन्याश्चापि संस्था राजनीतिकप्रश्नेषु कार्यं कुर्युः, तदितराश्च संस्थाः सामाजिककार्याणि कुर्युरिति । लार्डडफरिनेन सह विचारविमर्शं मकरोत् , शिमलानगरे स सभापतिपदमलङ्कर्तुं प्रार्थितश्च । लार्डडफरिनो ह्यूमसाहबस्य वार्तां श्रुत्वाऽकथयत् यदेतादृशो विचार उपयोगी नैव भविष्यति । अस्मिन्देशे सार्वजनिकमण्डलं नास्ति यदिंग्लैण्ड-मिवास्मिन्देशेऽपि शासकीयकार्यस्य विरोधं कुर्यात् । अत एवैतद्देशीय-राजनीतिज्ञाः प्रतिवर्षमेकं सम्मेलनं कुर्युः, शासकीयत्रुटिं तस्मै सूचयेयुश्च । एतादृशसम्मेलनस्य सभापतिः लाटो नैव भवेत् , यतो हि लाटसमक्षं जनाः स्वाभिप्रायप्रकटने प्रायः संकुचिता भविष्यन्ति । लार्डडफरिनविचारं सम्मान्य ह्यूमसाहबः कलिकाता मद्रास-बम्बईमहानगरेष्वन्यत्रापि च पत्र-मलिखत् । सर्वत्रैव सर्वे जना डफरिनविचारं सम्मानितवन्तः, तदनुसारं कार्यारम्भमपि कृतवन्तश्च ।

इत्थं सम्राट्प्रतिनिधिप्रदत्ताशीर्वचनेन स्वात्मानं सुरक्षितं विधाय

ह्यूमसाहवो लन्दनं जगाम। तत्र च लार्डरिपन-लार्डडल्हौजी-सरजेम्सकअर्ड-जानब्राइट-रोड स्वेगप्रभृतिप्रसिद्धपुरुषैर्विचारं विधाय तत्राऽप्येकं संघटन-मकरोत्। तदेवाग्रे इंग्लैण्डे 'इण्डियनपार्लमेण्टरी-कमेटी'नाम्ना प्रसिद्ध-मभूत्। एतस्योद्देश्य राज्यसभाप्रतिनिधिभिः प्रतिज्ञाविधानं तत्सम्पादनं च यत्रो भारतीयकार्येषु दत्तावधाना भविष्यन्ति।

---

# कांग्रेस-महासभा-स्थापनम्

एतत्सर्वमेव पूर्वभूमिकाकार्यं सम्पाद्य बम्बईस्थ-गोकुलदासतेजपाल-संस्कृतविद्यालयभवने कांग्रेसस्य प्रथमाधिवेशनमभूत् श्रीमदुमेशचन्द्रबनर्जी-महाशयस्याध्यक्षतायाम्। तत्राध्यक्षमहोदयेन सर्वसम्मत्या निम्नलिखितं कांग्रेसोद्देश्यं निर्धारितम्—

१. भारतस्य विभिन्नभागेषु देशहिताय कार्यकर्तॄणां मध्ये परस्परं मैत्रीसम्बन्धसंस्थापनम्।

२. समस्तदेशभक्तैर्मैत्रीव्यवहारद्वारा वंशस्य समाजस्य धर्मस्य च व्यक्तिगतं दूषितं विचारं विहाय राष्ट्रियैक्यं संस्थापनीयम्।

३. महत्त्वपूर्णसामाजिकप्रश्नेषु भारतीयशिक्षितानां या सम्मतिर्भवेत्तस्याः प्रमाणपत्रसंग्रहणं कर्तव्यम्।

४. अवलम्बनीया च सा रीतिर्यया भारतीयराजनीतिज्ञा देशहिताय कार्यं कुर्युरिति।

प्रथमाधिवेशने नव प्रस्तावाः पारिता बभूवुः। व्यवस्थापिकासभाया सदस्यसंख्यावृद्धेरपि याचनमासीत् कांग्रेसस्य। लार्डडफरिन एतद्याचनं स्वीकृत्य कतिपयविधानेषु परिवर्तनस्य समर्थनमप्यकरोत्। एतस्मिन्नेव समये लार्डक्रासस्य भारतीयनियमोऽपि पारितो बभूव। तदनुसारं व्यवस्थापिकासभायाः सदस्यसंख्यावृद्धिर्जाता। व्यवस्थापिकासभासदस्या वार्षिकायव्ययविषये वादविवादार्थं प्रश्नान्यपि कर्तुं शक्ता अभूवन्। एतेन परिवर्तनेनापि भारतीया न सन्तुष्टाः। किन्तु व्यवस्थापिकासभानां कार्यक्षेत्रं विस्तृततमभूदित्यत्र नास्ति सन्देहः।

पुनश्च गतवति डफरिने लार्डलैन्सडौनः समाजगाम प्रधानलाटो भूत्वा भारतम्।

---

: २७ :

# दैवज्ञस्य स्ववक्तव्योपसंहरणम्

दैवज्ञ उवाच—मुक्तामणे ! प्राय सत्ययुगादारभ्य वर्तमानसमयं यावद्भवतः समक्ष भारतीयेतिहासवर्णनं मया कृतम् । श्रुतञ्च भवता यथा विदेशीया बहुवार भारतमाक्रान्तवन्त । कतिपये विदेशीयवलुण्ठका भारतात् प्रचुरधनमपहृत्य स्वदेश परावृत्ता । कतिपये चात्र राज्यमपि कृतवन्तः । इदानीं श्वेताङ्गा एव भारतीयराज्याधीशा । परतन्त्रस्य भारतस्य मुक्तिहेतोर्यथा काग्रेससस्थापनमभूत्तदपि वर्णितमेव । इदानीं बहवो भारतीया देशमुक्त्यर्थे भारतीयराज्यसस्थापनार्थे च यतन्ते । अन्येऽपि बहवो जना यतिष्यन्ते च । मोहनदासनाम्नो महानेतुर्बुद्धयनुसारं कार्यमग्रे करिष्यन्ति सर्वे एव काग्रेससदस्या । भवत्पुत्रोऽय रत्नोऽपि देशोद्धारकर्मणि संलग्नो भविष्यति ।

मोहनदासगान्धिनो बुद्धिकौशलेन भवत्पुत्रस्य रत्नस्यान्येषा सर्वप्रदेशनिवासिना भारतीयनेतृणा साहसेन त्यागेन राजनीतिपाटवेन क्लेशसहिष्णुतया भाषणेन सघटनेन प्रभाविता सर्वे एव भारतीयाः प्रायेण मिलित्वा श्वेताङ्गेभ्यो यदा भारत समुद्धरिष्यन्ति तदा भवत्पुत्रो भारतप्रधानमन्त्रिपदमवाप्स्यति । सर्वे एव भारतीयभूपा भवत्पुत्रवशवर्तिनो भविष्यन्ति । अन्येऽपि बहवो नेतारो भवत्पुत्रस्य साहाय्य करिष्यन्ति राज्य सञ्चालनकर्मणि । बहवश्च तत्तत्प्रदेशेषु राजकीयकार्यं सञ्चालयिष्यन्ति । किन्तु सर्वत्र भवत्पुत्रस्यैव प्रभावो भविष्यति भारते । सत्यपूर्वकं कार्यकरणेन एतस्य नाम विश्वस्मिन् प्रसिद्ध भविष्यति ।

एवमुक्त्वा सर्वं भारतीयेतिहासिक कथानकं गृहीतदक्षिणो दैवज्ञः स्वगृहं जगाम ।

---

: २८ :

# रत्नस्य विद्याध्ययनम्

पुनः पञ्चवर्षदेशीय एव रत्नो गृहशिक्षकाद् विद्याध्ययनमारेभे। कुशाग्रबुद्धिरयमतः शीघ्रमेव प्रारम्भिकशिक्षां समाप्य आङ्लविद्यालयेऽध्ययनार्थं प्रविष्टः। तत्संरक्षणार्थं मुक्तामणिनियुक्ता बह्व्यो दास्यो दासाश्च संलग्नाः। माता प्रभावती च स्वपुत्रस्य लालने सर्वविधवस्तुप्रदाने शृङ्गारकरणे च सदैव तत्परा आसीत्। बहुवैभवसम्पन्न एकपुत्रो मुक्तामणिरपि स्वपुत्रोन्नत्यै तथा कार्यं कुर्वन्नासीद्यथा रत्नः सर्वशास्त्रनिष्णातो भूत्वा स्वदेशं स्वजातिं स्वकुलं च प्रख्यापयेत्।

लार्ड-कर्जनः

लार्ड कर्जनेन प्रधानलार्ड कार्यकारिणीसदस्याध्यक्षतायामेक व्यापारकेन्द्र संस्थापितम् । वाष्पयानमार्गविस्तारं कृत्वा शीघ्रसन्देशप्रेषणव्यवस्था- मपि परिष्कृतवान् लार्डकर्जन । जमशेदजी तातानामैको व्यापारकर्म- निपुणो पारसीको महतीमुद्योगयोजना निर्मितवान् ।

अनन्तरमतीव न्यायप्रिया ब्रिटिशमहाराज्ञी विक्टोरिया महाप्रस्थान- मकरोत् । तस्या एव स्मारकस्वरूप कलिकाताया श्वेतप्रस्तरनिर्मित भवनमेकं जनैरवलोक्यतेऽधुनापि 'विक्टोरिया मेमोरियल'नाम्ना । तत सप्तमैडवर्डस्य राज्याभिषेकोत्सव दिल्लीनगरे चकार लार्डकर्जन । यद्यपि शिक्षाविषयक प्रबन्ध भारतीयप्राचीनस्मारकसंरक्षणम्, एव मा द सर्वविध कर्जनकार्य जनप्रियमासीत्, तथापि तत्कृत पूर्वपश्चिम भेदेन वङ्गविभाजनकार्य सर्वे भृश निन्दितवन्त । कतिपयवर्षानन्तर वग पुनरेको बभूव ।

स्वशासनकाले कर्जनश्चत्वारिंशद्देशीयराज्येषु गत्वा तेषा दशा ज्ञातु प्रयत्नतवान् । पुन प्रधानसेनापतिना सह मतभेदे समुत्पन्ने लार्डकर्जन- स्वपद त्यक्त्वा इग्लैण्ड जगाम । तत्पदे प्रधानलार्डो भूत्वा समाजगाम लार्ड मिण्टोसाहब । एव तात्कालिकी शासकीया राजनैतिकी स्थितिरासीत् ।

रत्नस्य जननी प्रभावती पुत्रमादाय कदाचित् देवदर्शनाय कदाचिच्च गङ्गा स्नातु गच्छति स्म । कदाचिद् गेहे प्रवर्तमाना श्रीसत्यनारायणकथामन्याश्चापि कथा शृणोति स्म सपरिजनो रत्न । मातु सकाशात् पितृव्यामुखाच्च पौराणिकीं कथा श्राव श्राव रत्न सर्वामेव पौराणिकीं कथा ज्ञातवान् । पर्वसु स्वजन्मदिवसे प्रतिदिनञ्च पूजनमपि करोति स्म रत्न । स प्रतिदिन काले अश्वमपि आरोहति स्म । एकदाऽसौ अश्वाद्भूमौ पपात, अश्वश्च रत्नमन्तरा मन्दुराया समाजगाम । समागते रिक्तेऽश्वे सर्वे एव जना व्याकुलीभूतास्तमन्वेष्टु बहिर्गता । घण्टात्रय यावदन्विष्टे लब्धो रत्नो गेहमाजगाम ।

दशवर्षदेशीय एव रत्नो जलसन्तरणकर्मणि निपुणो भूत्वा यदा कदा

गेहप्राकारान्तरालवर्तिनि तटाके जलसन्तरणं कुर्वन्नासीत्। तदनन्तरमसौ वृत्तपत्रं पठितुमारेभे। ततो ब्रुक्सनाम्ना कश्चिच्छ्वेताङ्गो रत्नस्य शिक्षकत्वेन नियुक्तो बभूव। स च वैज्ञानिकरहस्यं रत्नमध्यापितवान्। तदनन्तरं गीतायामुपनिषदि च तस्य प्रेम प्रवृद्धम्। यद्यपि तद्भाषामसौ नैव ज्ञातवान्, तथापि प्रतिदिनमेव ग्रन्थद्वयं पठन् धार्मिकविषये विचारयामास। यथासमये तस्य यज्ञोपवीतसंस्कारं विधिना कारितवान् मुक्तामणिः।

## रत्नस्य विदेश-प्रस्थानम्

पञ्चदशवर्षदेशीये जाते रत्ने मुक्तामणिस्तं उच्चशिक्षाध्ययनार्थं इंग्लैण्डदेशे प्रेषयितुं विचारितवान्। किन्तु पुत्रवात्सल्यपरिपूरितमानसा प्रभावती एकाकिनं बालं दूरदेशे प्रेषितुमनिच्छा प्रकटितवती। पुनः पुनः पतिना प्रबोधिता सा अन्ते रत्नं विदेशे प्रेषितुं सम्मता बभूव।

एतादृशा एव कृषका हलेन भूमिं विशोध्य तत्र बीजानि वापयन्ति, समुत्पादयन्ति च नानाविधानि अन्नानि । समुत्पादितानामन्नाना क्वापि सामन्ता, क्वापि देशीयनरेशा, क्वापि श्वेताङ्गाश्च गृह्णन्त्यर्धभाग करूपेण । अवशिष्टार्धभागेन स्वकीयगार्हस्थ्य यथा कथञ्चित् एते कृषका सचालयन्ति । इदमन्नमेव विक्रीय कृषका यत्र तैल लवण काष्ठादिकञ्च क्रीणन्ति, कुर्वन्ति स्वावासयवस्थाम्, सुताया सुतस्य च विवाहादिकार्याणि । अत एवैते लाभाभावात् व्ययाधिक्याच्च दरिद्रा जीर्णशीर्णवस्त्रधारका पुलालोर्णीवाच्छादितमस्तका शीतकाले पुलालेनैव शरीरमाच्छाद्य स्वपन्ति । किं कथयामि, तात, एत एव जना भारतस्य प्राणभूता वस्तुतो नगरनिवासिना भोजनव्यवस्था कुर्वन्ति ।'

अन्यानपि धनिकान् दरिद्राश्च विलोकयन् रत्न एक दरिद्र कृषक प्रहरन्त कञ्चिद्धनिकमवलोक्य 'कथ ताडयत्येनम् ?' इति पितर पप्रच्छ । पिता प्राबोचत्—'किं कथयामि तात ! अय खलु सामन्त कृषक प्रताडयति, स्यात्खाम कश्चिल्लघुतम एतस्यापराध ' इति ।

एव क्वचिच्छ्वेताङ्गदेशीयनरेशादिनिर्मितानि बहुवैभवसम्पन्नानि दुर्गाणि उद्यानानि वाटिकास्तडागान् निर्भरिण्य पर्वतान् ग्रामान् वृद्धान् बालान् यून कुमारिका किंबहुना बहुविध दृश्य विलोकयन् रत्नो बहुजन-समाकीर्णं बम्बईनगर सम्प्राप्तवान् । किन्तु मार्गे दु खिताना दरिद्राणा कृषकाणा दयनीया दशा सामन्ताना श्वेताङ्गानाञ्च प्रभूतमत्याचार वैभवञ्च विलोक्य रत्नस्य चेतो नितरा व्यथितमभूत् । स पितर प्रोक्तवान्—'पित , नूनमहं कृषकाणा दारिद्र्य सामन्तानामत्याचारञ्च समापयिष्यामि, करिष्यामि च भारतवर्षं स्वतन्त्रमि'ति ।

तदनन्तर कतिपयदिनानि यावद् बम्बईनगरे स्थित्वा विलोक्य सर्वतो बम्बईनगरीं जलयानेन इङ्ग्लैण्डदेश गन्तु रत्न समुद्यतो बभूव । बम्बईनगरीस्थ स्वावास - भवनात् तैलयानेन गच्छन् रत्न ससानुजीव सबान्धवश्च जलयानविश्रामस्थानमाजगाम । तत्र गृहीतप्रमाणपत्रो

सम्यक्तया जलयानपोते सर्वामेव सामग्रीं संस्थाप्य आस्तीर्य निस्तीर्य स्वयमपि मात्रा पित्रा भगिन्या च सह नियतस्थाने समुपविष्टः ।

महान्तं घण्टानिनादं कृत्वा जलयानचालकाः बहुजनपरिपूर्णं जलयानं परिचालितवन्तः । अगाधे जले प्रस्थितं जलयानं विलोक्य उपरिभागे शयनश्रेण्यां संस्थितो रत्नः महान्तं मोदमापेदे ।

रत्नश्च रत्नाकरस्योन्नतान् तरङ्गान् जलचरान् प्राणिनः समुद्रास्तनानि शंख शुक्तिका तीरस्थितान् नानादेशांश्च विलोकयन् कतिपयाहोभिरेव इंग्लैण्डदेशस्य प्राणभूतं प्रधाननगरं लन्डननगरं ददर्श ।

तत्र जलयानादवतीर्य रत्नो गौराङ्गजनसमावृतं प्रशस्तमार्गविराजितं नियुतदीपविभासितं इतस्ततो यान्तीभिर्गौराङ्गललनाभिः सुशोभितं समुन्नत-भवनविभूषितं बहूद्यानवापीतडागं निर्झरिण्यादिभिः परिपूर्णं बहुविधवाहन-समावृतं तैलयानवाष्पयानविद्युद्यानादिभिः परिपूरितं भोजनालयैर्महा-भोजनालयैश्च सहितं परमरमणीयं लन्दननगरं ददर्श ।

तत्र कतिपयदिनानि कस्मिंश्चिन्महाविश्रामालये स्थित्वा पुनः स्वपित्रा कृतसर्वव्यवस्थः कस्मिंश्चिच्छात्रावासे निवासं विधाय रत्नो विद्यालये पठितुमारेभे । मुक्तामणिः प्रभावती च स्वपुत्रस्नेहात् कतिपय-दिवसान् तत्र स्थित्वा पुनस्तारापुरीमाजग्मतुः ।

पित्रोः प्रस्थानेन स्वबान्धवस्मरणेन नूतनावासनिवासेन गौराङ्ग-च्छात्रैः सह पठनेन रत्नः शून्यहृदय औदासीन्यपरश्चासीत् । किन्तु पुनर्नितरां सुप्रसन्नो बभूव ।

शीघ्रमेव विद्यालयपरीक्षां समाप्य कस्मिंश्चिन्महाविद्यालये प्रवेशं प्राप्य स पठनमारब्धवान् । तत्रापि रत्नो महता परिश्रमेणाध्ययनं परिसमाप्य विज्ञान-शास्त्रं पठन् तत्र रसायने पारदर्शी भूत्वा प्रसवविधानशास्त्रवेत्ता बभूव ।

अथ स्वकीयाध्ययनसमय एवावकाशदिवसेषु तत्र नित्यमहद्भिर्विद्वद्भिः सह साक्षात्कारं विधाय स्वपाठ्यग्रन्थादतिरिक्तान्यपि शास्त्राणि पठित्वा रत्नः सर्वशास्त्रनिष्णातो जातः । विविधानि शास्त्राणि पठित्वा सर्वदेशेषु भ्रमणं

विधाय राजनीतिं समाजनीतिमर्थनीतिञ्च विज्ञाय तत्तद्देशभाषाचारविचार धर्म-व्यवहारादिषु पाटवं लब्ध्वा सामोदं ईषदभिमानसहितस्तारुण्यमाप्तश्च तारापुरीमाजगाम रत्नः ।

प्रासूत यं जगति पूज्यतमा जयन्ती
श्रीमन्मगद्विजसुकीर्तिकरं तनूजम् ।
तस्यैव रत्नचरिते जनरञ्जनेऽस्मिन्
पूर्णत्वमेति प्रथमः खलु भाग एष ॥

इति श्रीजयन्तीपुत्र रुद्रदत्तपाठकविरचिते भारतीय-
रत्नचरिते कथाकाव्ये प्रथमो भागः ।

---

: १ :

# भारतस्थितेः कांग्रेससेवायाश्च मननम्

यः सर्वभूतनिचयं प्रकटीकरोति
तस्मात्य एव परिसर्पयते च नित्यम्।
तं विश्वरूपमनिशं हृदि सन्निधाय
व्याख्येह स्वचरितस्य परोऽयं भागः॥

विद्याध्ययनार्थं गतवति रत्ने भारतेऽनेकविधं परिवर्तनमभूत्। प्रधानलाटो भारते समागत्यानेकविधं परिवर्तनं कृतवन्तः। यथा—लार्डलैन्सडोनेन भारते पूर्वप्रचलितानां मुद्राणां स्थाने नूतना मुद्राः प्रचालितास्ताश्च एव रौप्यविनिर्मिताः। सुवर्णमुद्राया मूल्यनिर्धारणमपि कृतं तेन। राज्यकर्मचारिणां नियुक्तौ च विविधं परिवर्तनं विधाय गतवति लैन्सडोने समागत एल्गीननामा द्वितीयः प्रधानलाटो भारतम्।

एल्गीनशासनकाले बम्बईनगर्यामन्यत्र च महामारिणा बहवो जना मृताः। बिहारे युक्तप्रान्ते मध्यप्रदेशे पञ्जाबे च महद् दुर्भिक्षमापतितम्। तस्मिन्नपि बहवो भारतीयाः पञ्चत्वमगुः। महामारीनिवारणस्य दुर्भिक्षप्रतिरोधस्य च सर्वे प्रयोपाया व्यर्था अभूवन्।

एल्गीनद्वितीये परावृत्ते पुनः प्रधानो लाटो भूत्वा समाजगाम द्वितीयवारं लार्डकर्जनः। सोऽपि खलु बहुपरिवर्तनप्रयोगानां प्रोत्साहनमन्यान्यपि बहूनि कार्याणि च कृत्वा विक्टोरियास्मारकं सप्तमैडवर्डस्य राज्याभिषेकोत्सवं राजसभाञ्चापि चकार। बङ्गीयानां विरोधेऽपि बङ्गभङ्गं विधाय राष्ट्रेषु भ्रमणञ्च कृत्वा राज्यप्रबन्धश्च तेन समचारि।

: १ :

# भारतस्थितेः कांग्रेससेवायाश्च मननम्

यः सर्वभूतनिचयं प्रकटीकरोति
तत्रस्थ एव परिसर्पयते च विश्वम् ।
तं चिद्रूपमनिशं हृदि सन्निधाय
व्याख्येह राजचरितस्य परोऽस्य भागः ॥

विद्याध्ययनार्थे गतवति रत्ने भारतेऽनेकविधं परिवर्तनमभूत् । प्रधानलाटा भारते समागत्यानेकविधं परिवर्तनं कृतवन्तः । यथा—लार्डलैन्सडौनेन भारते पूर्वप्रचलितानां मुद्राणां स्थाने नूतना मुद्राः प्रचालितास्तादृश्य एव रौप्यविनिर्मिताः । सुवर्णमुद्राया मूल्यनिर्धारणमपि कृतं तेन । राज्यकर्मचारिणां नियुक्तौ च विविधं परिवर्तनं विधाय गतवति लैन्सडौने समागत एल्गीननामा द्वितीयः प्रधानलाटो भारतम् ।

एल्गीनशासनकाले बम्बईनगर्यामन्यत्र च महामारिणा बहवो जना मृताः । बिहारे युक्तप्रान्ते मध्यप्रदेशे पञ्जाबे च महद् दुर्भिक्षमापतितम् । तस्मिन्नपि बहवो भारतीयाः पञ्चत्वमगुः । महामारीनिवारणस्य दुर्भिक्षापरोधस्य च सर्वे एवोपाया व्यर्था अभूवन् ।

एल्गीनद्वितीये परावृत्ते पुनः प्रधानो लाटो भूत्वा समाजगाम द्वितीयवारं लार्डकर्जनः । सोऽपि खलु बहुपरिवर्तनसमुद्योगमना प्रोत्साहनेऽन्यान्यपि बहूनि कार्याणि च कृत्वा विक्टोरियामरणात्परं सप्तमैडवर्डस्य राज्याभिषेकोत्सवं राज्यसमाजञ्चापि चकार । वङ्गीयानां विरोधेऽपि वङ्गभङ्गं विधाय राज्येषु भ्रमणञ्च कृत्वा राज्यप्रबन्धश्च तेन समकारि ।

पुनः पदत्यागं कृत्वा गतवति कर्जने समागतो लार्डमिण्टोसाहबः सम्राट्प्रतिनिधिर्भूत्वा भारतवर्षम्। स च परमश्चतुरो बुद्धिमान् योग्यश्च शासक आसीत्।

अन्यान्यपि कार्याणि कृत्वा गतवति लार्डमिण्टोसाहबे समागतो लार्ड-हार्डिंगसाहबः सम्राट्प्रतिनिधिर्भूत्वा भारतवर्षम्। अस्य शासनकाले पञ्चमजार्जयुवराजः स्वधर्मपत्न्या सह भारतभ्रमणार्थमाजगाम। एव-मस्मिन् समये पण्डितमदनमोहनमालवीयो दरभङ्गानरेशो रामेश्वरसिंहश्च वाराणस्यां हिन्दूविश्वविद्यालयं संस्थापितवन्तौ। लार्डहार्डिंग एव तदुद्घा-टनं चकार।

एतस्मिन्नेव समये यूरोपीयप्रथममहायुद्धे मोहनदासस्यादेशेन भारतीयजना भारतीयनरेशाश्च साहाय्यं प्रदत्तवन्तः। किन्तु बीकानेरनरेश-गङ्गासिंहप्रभृतीनामुद्योगेन सन्धिर्बभूव।

पुनर्गते हार्डिंगे लार्डचेम्सफोर्डः प्रधानलार्डः सम्राट्प्रतिनिधिर्भूत्वा भारतवर्षमाजगाम। एतस्य समये कलिकाताया विश्वविद्यालयसंस्थापनं पञ्जाबहत्याकाण्डञ्चाभूताम्।

एतत्समयेऽेव भारतीयराजनीतिकपरिवर्तनं स्वः सावधानेन मनसा विचारितवान्। स च काङ्ग्रेसकृतभारतीयस्वातन्त्र्यप्राप्तिनिमित्तानि कार्या-ण्यपि विचारितवान्। काङ्ग्रेसे बहवो भारतीयाः समागत्यानेकविधं महत्त्व-परिपूर्णं कार्यं कृतवन्तः। काङ्ग्रेसस्य कतिपयानां प्राथमिकशुभचिन्त-कानां कार्यकर्तॄणां परिचयः कार्यविवरणञ्चेत्थम्।

## जान-ब्राइट:

तत्र प्रथमः शुभचिन्तको यथा—जानब्राइटः। ह्यूमसाहबादपि पूर्वं राजकीयसभाया कतिपय सदस्या भारतीयप्रश्नेषु मनोयोगं ददाना आसन्। भारतस्य भाग्ये बहुविधं परिवर्तनमभूत्। किन्तु जॉनब्राइटो भारतीयपक्षस्य पूर्णं समर्थनं चकार।

## फासेट्ट-साहबः

तदनन्तरं फासेट्टसाहबः समाजगाम। असावेव ब्रिटिशराज्यसभायां सर्वप्रथममुच्चराजकीयकार्यपरीक्षा इङ्ग्लैण्डे भारते च सहैव भवेदिति प्रस्तावितवान्। लार्डसेल्सबरीसाहबो भारतीयद्रव्यव्ययेन तुर्कसुल्तानस्य कृते यद्भृत्यमकारयत्तस्य महती निन्दा फासेट्टसाहबेन कृता। एवम् अबीसीनियायुद्धाय यद्भारस्य अर्धभारो भारतोपरि अर्धभारश्च इङ्ग्लैण्ड-शासनस्योपरि समागत इति सत्प्रयासोऽप्य फासेट्टसाहबस्यैवासीत्। ड्यूक आफ एडिनबरा महाशयाय भारतीयनरेशा यानुपहारान् प्रदत्तवन्तः, तेषां मूल्यमपि भारतीयकोषात्प्रदातुमसौ निषेधितवान्। एवमेव स ब्रिटिशयुवराजस्य भारतयात्राव्ययभाराद्भारतं ररक्ष। अथ च लार्डलिटनो वक्तृयानमवरुद्धवान् दिल्लीराजसमाजञ्च चकार। अफगानयुद्धञ्च सहसैव कृतवान्। सर्वेषामेवैतेषां विरोधं चकार फासेट्टसाहबः। एतैः कार्यैस्तुष्टाः सन्तो भारतीयाः कलिकातानगरे तस्मै मानपत्रं समर्पितवन्तः, निर्वाचने विजयप्राप्त्यर्थं दशसहस्रमुद्रा अपि प्रदत्तवन्तः।

## ह्यूमसाहबः

अयं खलु भारतीयसिविलसर्विसस्य अनेकपदेषु स्थित्वा भारतस्य महान्तमुपकारं कृतवान्। यदासौ मण्डलाधीश आसीत्तदैव साधारणजनतासु शिक्षाप्रचारार्थं सैनिकसुधारार्थं मद्यनिषेधार्थं देशीयभाषासु वृत्तपत्र-प्रकाशनार्थं बालापराधेषु सौकर्यार्थमन्यासां गृहकार्यावश्यकतानां परिपूर्त्यर्थञ्च महान्तं परिश्रमं चकार। तस्य भारतीयजनैः सह महान् स्नेह आसीत्। तस्य यदि चिन्तासीत्कस्या अपि, तदा सा जनतायाः। शासनं खड्गबलेन स्वकीयसत्तां स्थापयतु नाम, किन्तु सभ्यशासनस्य महत्त्वं स्थायित्वञ्च प्रजानां शान्तिवृद्धावेव वर्तते, यया शान्तिपूर्ण्या जनता तद्देशिभ्यस्य समादरं कुर्यात्—एवमपि ह्यूमसाहब स्वकीयघोषणां चकार। इदं सर्वं विचार्य शासन-मुत्तरमदात् यन्मण्डलाधीशाः स्वकीयबालकान् पाठशालायां प्रेषयितुं

पाठशालासाहाय्यं प्रदातुं वा नैव प्रेरयन्तु, भारतीयेषु शिक्षाप्रसारकार्यञ्च मा कारयन्तु। एतस्य शासकीयविचारस्य ह्यूमसाहबो महान्त विरोधमकरोत्। अन्येष्वपि बहुषु विषयेषु परिष्कारार्थमसौ प्रयासं कृत्वा भारतशासनस्य मन्त्रिपदमलभत। किन्तु स्वतन्त्रविचारवन्तं सत्यकार्यकारकञ्च मत्वा शासनं ह्यूमसाहबं पृथक् चकार। ह्यूमनिष्कासनस्य भारतीयवृत्तपत्राणि तीव्रं प्रतिवादमकुर्वन्, किन्तु कोऽपि लाभो नाभूत्। लार्डलिटनस्तस्मै प्रान्तपालं गृहसचिवं वा विधातुं प्रस्तावितवान्, किन्तु ह्यूमसाहब एव तमस्वीकृतवान्। पुनरवकाशमवाप्य कार्यादसौ निलम्बमुद्रां पक्षिपालनगृहाय षष्ठिसहस्रमुद्रां मृगयापक्षिग्रन्थनिर्माणकर्मणि च प्रदत्तवान्।

## सरविलियम वेडरबर्न.

ब्रिटिशकांग्रेसप्रचालने बहुवर्षाणि यावदयमेव मुख्य आसीत्। कांग्रेससंस्था दशसहस्रादापञ्चाशत्सहस्रं द्रव्यव्ययं कुर्वाणा आसीत्। वेडरबर्नसाहबो बम्बईनगर्यां प्रयागे च राष्ट्रियमहासमाधिवेशनद्वये सभापतिपदमलञ्चकार। जार्जयूलसाहब कांग्रेसस्य चतुर्थाधिवेशने सभापतिरभूत्। एतदनन्तरं प्रतिवर्षमेव राज्यसभायाः श्वेताङ्गसदस्याः भारतयात्रां कुर्वन्तः कांग्रेसाधिवेशने समुपस्थिता अभूवन्।

## रैमजेमैकडानल्ड, चार्ल्सब्रैडलासाहबश्च

रैमजेमैकडानल्डस्य सेवया प्रभाविता कांग्रेससदस्यास्तमेकस्मिन् कांग्रेसाधिवेशने सभापतिपदमलङ्कर्तुं निमन्त्रितवन्तः। किन्तु परन्यः देहान्तसनेनासौ इङ्ग्लैण्डदेशं परावृत्त। मेयरहार्डी - होल्फोर्ज-नाइट - मैक्स्टन - फर्नरब्रेजब्रुको - बेनस्पूरथार्ल्स - रावर्टस्न - पैथिक्लारेन्सप्रभृतयो ब्रिटिशराज्यसाधारणसभासदस्या अपि भारतमागत्य कांग्रेसाधिवेशने समुपस्थिता भूत्वा भारतीयसमस्यानामध्ययनम-कुर्वन्। किन्तु चार्ल्सब्रैडलासाहबस्य यादृशं स्वागतमभूत्ता-दृशं न कस्यापि समभवत्। स कांग्रेसद्वारा तत्कालीनविचारपरिपूर्णमेकं

## दादाभाईनौरोजी

काग्रेसस्य प्रवृद्धसेवकानां सूच्यां सर्वप्रथमं दादाभाईनौरोजीमहोदयस्यैव नाम वर्तते। असौ काग्रेसप्रारम्भकालादाजीवनं काग्रेससेवामकरोत्। वारत्रयं काग्रेससभापतिपदमलञ्चकार। असौ भारते इग्लैण्डदेशे च काग्रेसवैजयन्तीमुद्धूयाञ्चक्रे। ब्रिटिशराज्यस्य न्यायपरायणतायां नौरोजीमहाशयस्य महान् विश्वास आसीत्। असौ वङ्गभङ्गानन्तरं बहिष्कारनीतिमनुसरत कलिकाताकाग्रेसाधिवेशनस्य सभापतिपदमलङ्कृतवान्। 'बहिष्कार'शब्दस्य 'सर्वतोभावेन सम्बन्धविच्छेद' इत्यर्थो विपिनचन्द्रपालेन कृत। महामनामालवीयेन 'देशीयोद्योगानां संरक्षणम्' इत्यर्थो व्यधायि। लोकमान्यतिलकमहाशयो 'मध्यमवर्गीयजनैर्व्यवह्रियमाणानां वैदेशिकवस्त्राणामभावाय राष्ट्रकृतदृढनिश्चय' इत्यर्थं चकार। लालालाजपतरायश्च 'स्वदेशीयद्रव्यसंरक्षणम्' इत्यर्थं कथितवान्। स्वयं नौरोजीमहाशय 'शिक्षाप्रचार आर्थिकसुधारणा चे'ति कृतवानर्थम्। अशीतिवर्षदेशीयो वृद्धोऽयं सुदूरदेशात् इग्लैण्डादागत्य काग्रेससभापतिपदमलङ्कृत्य कलिकाताधिवेशनं सफलं चकार।

## आनन्दचार्लू

अथ खलु नागपुरकाग्रेसाधिवेशने सभापतिपदमलङ्कृत्य स्ववक्तृत्ववैशिष्ट्येन काग्रेसे प्रविष्ट। दक्षिणभारतस्य राजनैतिकाकाशे चमत्कुर्वन् चन्द्र इव विंशतिवर्षाणि यावत्स विद्योतते स्म। यद्यपि तदनुयायिनां कोऽपि दलविशेषो नासीत्, न च स नूतनमतप्रवर्तक, तथापि विशिष्टतीव्रवक्तृत्वेन तस्य विशिष्टं व्यक्तित्वं प्रथितमभूत्।

## दीनशा एदलजी वाचा

काग्रेसस्य प्रथमाधिवेशन एव एतेषामुज्ज्वला गुणाश्च नश्यति गता। वाचामहोदयस्य सर्वेष्वपि विषयेषु निर्बाधा प्रगतिरासीत्। काग्रेसस्य द्वितीयाधिवेशने भारतीयजनदारिद्र्यवर्णनं कृत्वा प्रतिदिनं कथमिव भारतं दरिद्रं ब्रिटिशाश्च सर्वत समृद्धिशालिनो जायन्ते, इत्यस्य स्फुटं

विश्लेषणमेतैः कृतम्। एतेषु सर्वतोमुखी प्रतिभा, अतीतघटनानां पूर्णं ज्ञानम्, दैनिकसमस्यानामशेषः परिचयः, सर्वसाधारणानां भारतीयानां दारिद्र्यावस्थायाः सुदृढं परिज्ञानञ्चासीत्।

## गोखले गोपालकृष्णः

अयं खलु सर्वप्रथमं लोकमान्यतिलकेन सह कांग्रेसे प्रविष्टः। लवणकरे प्रहारं कुर्वन्नसौ कथमेकपणस्य लवणस्य मूल्यं पञ्चपणका गृह्णन्तीति सर्वमेव विवृतवान्। कटुविषयाणामपि मधुरभाषाया कथनस्य महत्चातुर्यं तस्मिन्नेवासीत्। वाराणसीकांग्रेसाधिवेशनस्य सभापतिपदमलङ्कृत्यायं राजनीतिकशस्त्ररूपेण बहिष्कारस्य समर्थनमपि चकार। असौ सदैव कथितवान् यदेतस्य व्यवहारोऽसहायावस्थायामेव कुर्यात्, प्रबला लोकभावना चैतदर्थमनुकूला भवेत्। असौ वर्षद्वयं भारतप्रतिनिधिर्भूत्वा इंग्लैण्डेऽपि स्थित आसीत्। प्रजासु शासने च तस्य विपुला स्थितिरभूत्। जनास्तस्य नम्रतां शासनं च तदायोग्यतां निश्चितवन्तः। स जनापेक्षां शासनाय शासकीयं काठिन्यञ्च जनेभ्यो निवेदयन्नासीत्। तस्य महत्तमं राजनीतिककार्यं 'भारतसेवक-समिति'-सङ्घटनमभूत्। नाममात्रमेव वेतनं गृहीत्वा मातृभूमिसेवकानां हि सा संस्था। तदनन्तरं श्रीमती एनीबेसेण्टमहोदया भारतपुत्र-नामिकायाः संस्थायाः संस्थापनं कृतवती। पश्चात् मोहनदासगान्धिना अहमदाबादे सत्याग्रहाश्रम उद्घाटितः। तदनन्तरमन्येऽप्यनेके आश्रमाः समुद्घाटिताः। गान्धिनः सत्याग्रहसमये श्रीगोखलेमहोदयो दक्षिणाफ्रिकां गत्वा तत्साहाय्यमप्यकरोत्। इत्थं स्वदेशोद्धारमयं जीवनं यापयन्नसौ महाप्रयाणं कृतवान्।

## जी० सुब्रह्मण्यऐयरः

कांग्रेसस्य प्रथमाधिवेशने सर्वप्रथमं प्रस्तावकर्ता 'हिन्दु'-सम्पादकः श्री जी० सुब्रह्मण्यऐयर एवासीत्। भारतीयशासनेन प्रस्तावितेऽभियोगपरीक्षणायोगे भारतीयानामपि प्रतिनिधित्वं स्यादित्यसौ

कथितवान् । शासनद्वारा कृत देशीयराज्यप्रजापत्राणां स्वतन्त्रताप हरणेऽप्यसौ महान्त विरोधमकरोत् । काग्रेसस्य द्वादशाधिवेशनेऽसौ प्रतिस्पर्धापरीक्षा भारते इग्लैण्डे च सहैव भवेदत्र विषये प्रबल भाषणमकरोत् । अमरावत्यधिवेशने च शासनस्य सं मान्तनीति-विरोधमकरोत् । भारतीयार्थिकस्थितिरेव तस्य प्रियतमो विषय आसीत् । काग्रेसस्य लाहौराधिवेशने पुन पुनर्जायमानस्य अकालस्याधराधार्थ विचार्यासौ तदनुकूल कार्य कर्तु भारतीयार्थिकस्थिते पूर्णस्वतन्त्रतायाश्च विचारमावश्यक कथितवान् । काग्रेसस्य सप्तदशाधिवेशनेऽसौ प्रजाना दुर्दशाया दारिद्र्ये च ध्यानमाकृष्टवान् । स्वकीयलेखेनासौ कारागारवासु सेवन कृत्वा रोगाक्रान्त एव ततो मुक्तिमाप्तवान् ।

## बदरुद्दीनतैयबजी

महान् काग्रेसनेता तैयबजी काग्रससेवा कुर्वन् काग्रेसस्य तृतीयाधिवेशने सभापतिपद लेभे । सभापतिभाषणेऽसौ काग्रेसप्रतिनिधिरूपे बलमदात् । पश्चादसौ बम्बईस्थोच्चन्यायालयस्य प्रधानन्यायाधीशो बभूव, शासकीयपदेषु भारतीयाना नियुक्तिप्रस्तावे च तार्किक बुद्धियोग प्रदत्तवान् । तदनन्तरमसौ पञ्चत्वमगात् ।

## उमेशचन्द्रो बनर्जी

अयमेव सर्वप्रथमकाग्रेसाधिवेशने सभापतिर्भूत्वा काग्रेसस्य प्राथमिकोद्देश्यमाश्रित्य प्रभावोत्तम भाषण प्रादात् । प्रयागे काग्रेसस्याष्टमाधिवेशने पुनरपि सभापतिपदमवाप्य काग्रेसस्तस्या कथ सामाजिकप्रश्नेभ्य पृथग्भूता वर्तत इति स्पष्टमुक्तवान् ।

## लोकमान्यस्तिलक

अयं मुकुटविहीनो भारताधीश एवासीत् । छत्रपतिशिवराजस्य स्मृति जनेषु नूतना विधातुमय सफलो बभूव । केषाञ्चित्पद्याना स्वकीयभाषणस्य

च मुद्रणाभियोगेऽष्टादशमासान् यावत् कारागारदण्डमसौ सम्प्राप्तवान् । किन्तु दण्डसमाप्तिपूर्वमेवासौ मुक्तिमापेदे । तस्य नीतिस्तीव्राऽऽसीत् । सूरतनगरे काङ्ग्रेसस्य दलद्वये विभक्तिर्महत्त्वपूर्णो विषय आसीत् । तस्मिन् लोकमान्यतिलक एव महानपराधी परिगणितो बभूव । तत्तद्दलीया जनाः स्वस्वपक्षसमर्थनं कुर्वन्त आसन् । किन्तु दादाभाईनौरोजीमहाशयस्य सत्प्रयासेन दलभेदोऽयं समाप्तिमगात् ।

लोकमान्यतिलको राष्ट्रधर्मस्य महानुपासकः स्वसमयस्य मर्यादाज्ञाता चासीत् । तस्मिन् प्राचीनसमये असावेव बहुकालपर्यन्तं कारागारयातना भुक्तवान् । यदा न्यायाधीशो दण्डयित्वा निन्दाजनकवाक्यानि च कथयित्वा किञ्चिदस्ति वक्तव्यमिति तिलकं पृष्टवान्, तदाऽसौ प्रोक्तवान् यदहं निरपराधोऽस्मि । संसार एतादृश्योऽपि शक्तयो वर्तन्ते या जगतो व्यवहारं परिचालयन्ति । संभाव्यते यदीश्वरस्येच्छा एतादृशी एवास्ति । यत्कार्यं मे प्रियं तन्मम स्वतन्त्रताया अपेक्षया कष्टसहनेनैव प्रफुल्लितं भवेत् । एतादृशीमेव स्वात्मनस्तेजस्विता पुनरपि स तदा प्रख्यापितवान् यदा राजद्रोहात्मको लेखस्तेन लिखितः । न्यायालये 'द्वेषोऽयं नास्ति मम' इत्येतन्मात्रकथनेनैव तन्मुक्तिः सम्भाव्यमानाऽऽसीत् । किन्त्वसौ नैवं कथितवान्, तदपेक्षया कारागारकष्टभोगमेव वरं मेने । यद्यनेन कारागारकष्टमिदं नानुभूतं स्यात्, तदा कथमिव 'गीतारहस्य'-ग्रन्थरत्नं भारतीयवाङ्मय-भाण्डारस्य भूषणायितं भवेत् । यदा मोहनदासगान्धी पूना गतवान्, तदा लोकमान्यतिलकस्य साक्षात्कारमकरोत्, तत्परामर्शेन गोपालकृष्णगोखले-महोदयस्यापि । द्वयोरपि नेत्रोः प्रभावो गान्धिमहोदये बभूव । मोहनदासदृष्ट्या तिलको हिमालय इव महानुच्चः गोपालकृष्णश्च

## सुरेन्द्रनाथो वनर्जी

भारतस्य स्वर्गीयेषु राजनीतिज्ञेषु सुरेन्द्रनाथस्य प्रमुखं स्थानं वर्तते । चत्वारिंशद्वर्षेभ्योऽप्यधिकं तत्सम्बन्धः कांग्रेसेन सहाऽऽसीत् । भारतीयकांग्रेस-मञ्चात् समुत्थितं तद्वचः सुदूरदेशं प्रसृतम् । भाषाप्रभुत्वे रचनानैपुण्ये कल्पनाप्राचुर्ये वाग्विचित्रकारे उच्चतमभावुकतायां वक्तृत्वकलायाञ्च स अजेय आसीत् । वारद्वयं स कांग्रेससंस्थायाः सभापतिपदमलञ्चकार । कतिपये कांग्रेसे समुपस्थापिताः प्रस्तावा नैव तदपरिचिताः । ब्रिटिशशासने सम्बद्धीभूय कार्यकरणमेव तस्यादर्श आसीत् । एकदासौ इदमपि कथितवान् यत् जगति श्वेताङ्गसभ्यतैव सर्वोच्चसभ्यतास्ति । लार्डमिण्टोशासनकालेऽसौ बरीसाले लगुडप्रहारैरपि रक्षितो भूत्वा वङ्गशासने मन्त्रिपदमवाप ।

### पं० मदनमोहनमालवीयः

सर्वप्रथममस्य व्याख्यानं कांग्रेसाधिवेशने कलिकातायां बभूव । तदा प्रभृत्येवासौ सोत्साहं कदाचिद् विनम्रसेवकरूपेण पृष्ठे स्थित्वा, कदाचित् प्रधाननेतृरूपेण अग्रगामी भूत्वा, कदाचित् सर्वप्रधानो भूत्वा, कदाचित् विरोधं प्रदर्शयन् कदाचिच्च सत्याग्रहासहयोगान्दोलनं कुर्वन् कारावासमवाप्य कांग्रेससेवां चकार । प्रथममहायुद्धे साहाय्यार्थं लार्डप्रधानेन भारतीयनेतृणां सभाहूतायां परिषदि मालवीयोऽप्यामन्त्रित आसीत् । श्रीमतीबेसेण्टमहोदया एकदा कांग्रेसमधिकृत्य पुनः स्वस्मात् प्रबलेभ्यः सर्वाधिकारं दत्तवती । मालवीयस्तु सर्वदैव कांग्रेसेन सहासीत् । सत्स्वपि विरोधे समुचितं कार्यं विचारपूर्वकं सम्पादयितुमसौ हिमाचल इवाचलो बभूव । स च स्वयमेव संस्थारूप आसीत् । अथासौ लाहोरकांग्रेसस्य सभापतिर्बभूव । पुनः एकस्मिन् कांग्रेसाधिवेशने निर्वाचितेन सभापतिना तत्पदेऽस्वीकृते सति महामनामालवीय एव सभापतिर्बभूव । काशीस्थो हिन्दुविश्वविद्यालयस्तु तत्कीर्तेरमरस्तम्भ एव ।

## लाला लाजपतरायः

काँग्रेसस्य प्राचीनपूज्यपुरुषेषु लालालाजपतरायस्य व्यक्तित्वं चमत्कृतिपूर्णमासीत् । असौ यथा काँग्रेसभक्तस्तथैव परोपकारी समाजसुधारकश्चासीत् । प्रयागस्य चतुर्थाधिवेशने असौ काँग्रेसपक्षे सम्मिलितो बभूव । वाराणसीकाँग्रेसेनासौ प्रमुखवक्तृरूपेण राष्ट्रवादिरूपेण च प्रतिष्ठापितः । सरदाराजीतसिंहेन सह लाजपतरायोऽपि निर्वासनदण्डं बुभुजे । काँग्रेसाधिवेशने सभापतिरूपेण निर्वाचितोऽपि तत्पदमस्वीचकार । गोखलेमहाशयेन सह लन्दनं गते शिष्टमण्डले असावप्यासीत् । किन्तु गुप्तचरैः प्रपीडितो विदेश एव स्थातुं निश्चितवान् । इत्थमयं प्रथममहायुद्धसमये अमेरिकायामेवासीत् । असहयोगान्दोलनेन सह तस्य सर्वदैव मतभेद एवासीत् । असौ स्वकीयभाषणे भविष्यवाणीमपि चकार यदिदमान्दोलनं कदापि नैव सफलीभविष्यति । अयं वीरो योद्धासीत्, न पुनः सत्याग्रही । तस्य जीवनं संघर्षेण काठिन्येन चैव व्यतीतम् । रौलट एक्टान्दोलनसमये सैनिकाधिकारिणो लगुडप्रहारेणासौ मृतिमवाप ।

## फिरोजशाहमेहता

काँग्रेसेन सहैतस्य सम्बन्धः प्रारम्भत एवासीत् । तत्कार्यक्रमनिर्धारणे नीतिनिर्धारणेऽस्य प्रामुख्यमासीत् । कलिकातासत्पथे काँग्रेसषष्ठाधिवेशनेऽसौ सभापतित्वं कृत्वा पश्चात्तस्य शक्तिरूपेण स्थितः । यस्याः समितेरयं शिष्टमण्डलस्य वाग्मी सदस्योऽभवत् तत्प्रतिनिधिभिः सुव्यवस्थितं कार्यं कारितवान् । पश्चात् लाहौरकाँग्रेसस्य चतुर्विंशत्यधिवेशनेऽयं सभापतिर्निर्वाचितो बभूव । किन्त्वधिवेशनस्य पञ्चदिवसेभ्यः पूर्वमेव सहसा त्यागपत्रमदात् । तदा तत्स्थाने मदनमोहनमालवीयः सभापतिपदमवाप ।

## आनन्दमोहनो वसुः

अयं पटुः सुप्रसिद्धः सामाजिकधार्मिकपरिष्कारकर्ता ब्रह्मसमाज-

प्रगतौ प्रधानतया दत्तहस्तश्चासीत्। कलिकातास्थस्य 'इण्डियन-असोशियेशन'संघटनस्य सर्वप्रथमो मन्त्री सुरेन्द्रनाथबनर्जीमहाशयस्य प्रधानसहायकश्च बभूव। असौ मद्रासकांग्रेसाधिवेशनस्य सभापतिपदमलङ्कुर्वन् युक्तिपरिपूर्णं भाषणमदात्। किन्तु देशस्य दौर्भाग्येन शीघ्रमेव महाप्रस्थानमकरोत्।

## चक्रवर्ती विजयराघवाचार्यः

सर्वप्राचीनकांग्रेसकार्यकर्तुरस्य तृतीयाधिवेशने विधाननिर्मातृसमित्या नामासीत्। तदनन्तरमसौ लखनऊकांग्रेसाधिवेशने लाहौरकांग्रेसाधिवेशने च भारतीयकांग्रेसस्य सदस्यतापदमवाप। सूरतकाण्डानन्तरमसौ प्रायेण कांग्रेसाद् पृथगेव बभूव। पश्चात् नागपुराधिवेशने सभापतिपदमवाप्य महत्या योग्यतया कौशलेन च कार्यं सम्पादितवान्।

## कालीचरणबनर्जी

अयं खलु भारतीयक्रिस्तमतावलम्बी महाप्रतिभाशाली चासीत्। कांग्रेसस्य पञ्चमाधिवेशने प्रस्तावचयनार्थमयमेव नियुक्तो बभूव। कतिपयवर्षाणि यावदसौ महतोत्साहेन कांग्रेसकार्यं चकार। ब्रिटिशजनतासमक्षं कांग्रेसविचारं प्रकटयितुं पश्चिमप्रमण्डलं प्रस्थितम्, तस्यायमप्येक सदस्य आसीत्। नवमकांग्रेसाधिवेशने न्यायविभागः शासनविभागश्च पृथग्भूतौ भवेतामिति प्रस्तावमयमेव प्रस्तावितवान्। समयप्रगत्या यथा यथा सर्वसाधारणजनेषु राजनीतिकजागृतिर्बभूव तथा तथाऽस्य स्वतन्त्रतायाः प्रतिरोधो जातः। शासनीयसाहाय्यप्राप्तसंस्थाया व्यवस्थापकेषु अध्यापकेषु चैव. प्रतिबन्धः कल्पितो यत् यावत् शिक्षाविभागाधिकारिणः स्वीकृतिर्न भवेत्तावत्ते राजनैतिकान्दोलने भागं नैव ग्रहीतुः सभासु वा नैवोपस्थिता भवेयुरिति। नागरिकाणां मौलिकाधिकारे कृतस्य प्रहारस्य कांग्रेसपञ्चदशाधिवेशनेऽसौ महान्तं विरोधमकरोत्।

## नवाबः सैय्यद्मुहम्मदबहादुरः

मद्रासकांग्रेसे पारित - प्रस्तावानुसारं हिन्दुना सहैव एको मुहम्मदीयोऽपि कांग्रेसमन्त्री भवेदिति पद्धतिः प्रचलिता। तदनुसारं नवाब-सैयद् - मुहम्मदबहादुरः एन० सुब्बारावश्च कांग्रेस - मन्त्रिणौ बभूवतुः। नवाबसाहबः कराचीकांग्रेसाधिवेशने सभापतिपदमपि अलङ्कृतवान्। स च प्रथमं कांग्रेसभक्तः पश्चान्मुहम्मदीय आसीत्। मद्रासकांग्रेसाधिवेशनेऽसौ स्वागताध्यक्षो बम्बईकांग्रेसे च विधाननिर्मातृसमितिसदस्यश्च बभूव। स खलु एतादृशो देशभक्त आसीत् यस्मिन् साम्प्रदायिकसंकीर्णताया लेशोऽपि नाभवत्। कराचीकांग्रेसे सभापतिपदमवाप्यासौ कथितवान् यत् सर्वे एव भारतीया संयुक्त वृद्धिं यान्तु, न तु पार्थक्येनेति।

## दाजी-आबाजी-खरे

कांग्रेसस्य प्रारम्भिकवर्षेषु स्थापितव्यवस्थाभूमिविरुद्धं भूमि-स्थापित्ववर्षनिर्धारणनियमस्याधिकृत्य महान् कोलाहलः समुत्थितः। लाहौरस्य नवमकांग्रेसाधिवेशनेऽसौ प्रस्तावमप्यकरोत् एतद्विरुद्धम्। दीनशावाचामहोदयेन सह सहायककांग्रेसमन्त्री चापि बभूव। भारतीयकार्पासवस्त्रेषु सम्प्राप्त करं प्रतिरोद्धुमपि प्रस्तावमकरोत् येन कार्पासवस्त्रव्यवसाये महानवरोधः सम्भूतः। यदा मुस्लिमलीग-सदस्या भारतस्य कृते स्वशासनस्यादर्शः स्वीकृतस्तदा स्वौपनिवेशिकस्वराज्यस्वागत-परस्य प्रस्तावस्य समर्थनमकरोत्। कथितवांश्च स्वस्वशासने हिन्दु-मुहम्मदीययोर्धर्मानुमानेनैव सन्धिगत भवेत्।

## सी० शंकरनायरः

अयं खलु स्वस्थानिकः सर्वप्रथम पुरुष आसीत्। कांग्रेससंस्था देरापुरस्कारस्य श्रीप्रमेयाग्नौ सभापतिपदं प्रादादमरावत्याम्। बम्बईस्थः श्रीचन्द्रावरकर इव वैयक्तिकत् वा नायकोऽपि मद्रासोच्चन्यायालयस्य सदस्यो

बभूव। ततः भारतशासकीयकार्यकारिण्या सदस्यो जातः। पुनः पदत्यागं कृत्वा लोकप्रियतामवाप। किन्तु 'गान्धी आनाका च'-नामके पुस्तके गान्धिमहाशयेऽसौ निराधारमेवाक्षेपं चकार। अत एव पञ्जाबस्थो माइकेल ओडवायरस्तत मानहानिदण्डरूपेण त्रिलक्षमुद्राः गृहीतवान्।

## विपिनचन्द्र पालः

सुप्रसिद्धवक्तुः पालमहोदयस्य काङ्ग्रेसेन सह प्राचीनतमः सम्बन्ध आसीत्। बहिष्कारस्य राष्ट्रियशिक्षाविषयकस्य नूतनसिद्धान्तस्य च प्रचारं कुर्वन्नसौ सम्पूर्ण एव देशे स्ववक्तृत्वशक्तेः प्रभाव संस्थापितवान्। प्रभावशालिना भाषणेनैवैनासौ मद्रासप्रान्तात् निष्कासितो बभूव। 'अरविन्दघोषस्य विरुद्ध मत्साक्ष्य भविष्यतीति मत्वाऽसौ 'वन्दे मातरम् पत्रसम्पादकस्य अरविन्दघोषस्याभियोगे साक्ष्य नैवादात्। तेन चासौ पण्मासान्यावत् कारागारमवाप। अथमिङ्ग्लैण्डे 'हिन्दु रिव्यू'नामक पुस्तकमेकं प्रकाशितवान्, यस्मिन् बहु कारणानि विचारितवान्। स च स्वकीयभाषणेन 'न्यू इण्डिया'नामके 'वन्दे-मातरम्'नामके च पत्रे स्वकीयलेखैन तत्कालीनभारतीययुवकेषु स्वीय प्रभाव संस्थापितवान्।

## मौलाना मजहरुलहकः

सार्वजनिकबौद्धिकदृष्ट्याऽयं काङ्ग्रेसस्य महारथी आसीत्। बिहारे काङ्ग्रेसस्य महान् समर्थको राष्ट्रवादी सम्प्रदायवादानितरामसंस्पृष्टश्चायं प्रयागे पञ्चविंशकाङ्ग्रेसाधिवेशने जिलास्तरसाम्प्रदायिकनिर्वाचनविरुद्धे प्रस्ताव पूर्णतया समर्थितवान्। एतस्मिन् समयेऽसौ हिन्दुमुहम्मदीयसौहार्दपरिपूर्णमेव योग्यतापरिपूर्णं भाषणमपि प्रादात्। यदा काङ्ग्रेसशिष्टमण्डलं इंग्लैण्डे जगाम, तदाऽयमप्येतस्यास्य सदस्यो बभूव। अनन्तरं काङ्ग्रेसस्य पश्चिमे पार्श्वे धुर्योऽसौ आध्यात्मिकविचारे संलग्नो बभूव। वस्तुतस्तस्य शेषं जीवनं साधुतायामेवागमत्।

## महादेव-गोविन्द-रानडे

कांग्रेसस्य महानेताऽयं बम्बईशासनस्यापि उच्चाधिकारी भूत्वा कांग्रेस-सूत्रं सञ्चालयन्नासीद् बहुकालम्। असौ कांग्रेसान्दोलनाय स्फूर्तिमप्यदात्। महाराष्ट्रसत्तासमुत्थाने भारतीयार्थशास्त्रविषये च निबन्धं विलिख्य स्वपाण्डित्यस्यासाधारणीं योग्यतां भारते प्रस्थापितवान्। समाज-परिष्करणेऽपि प्रबलं कार्यं कृतवानसौ। कांग्रेसस्य समाजपरिष्करणकार्ये दुर्निवाराय स्वकीयाममरां स्मृतिं स्थापयित्वा परलोकं गतवान्।

## रमेशचन्द्रदत्तः

गतशताब्दान्ते कांग्रेसराजनीत्यां श्रीरमेशचन्द्रदत्तस्य विशिष्टं स्थानं वर्तते। शासकीयोच्चपदमवाप्यापि रमेशचन्द्रः कांग्रेससेवां चकार। स्वयामिनानुभवज्ञानयोर्लाभमसौ कांग्रेसाय प्रदत्तवान्। अयं निर्विचिकित्सं मनुते स्म यत् भूमौ महान् करभारो ब्रिटिशशासनस्य प्रतिस्पर्धी चोभयमेव ग्रामीणकृषकाणां विनाशकारणम्। तेन च समुत्पद्यते दुर्भिक्षम्। यस्मिन्देशे पूर्वं ग्रामशासनमासीत्तत्रैव सैनिकानां मण्डलाधीशानाञ्च घृणितशृङ्खलाबद्धं शासनं नूनं देशस्य महतेऽकल्याणाय भवेदिति। पञ्चकांग्रेसाधिवेशनेऽसौ सभापतिपदमलञ्चकार।

## एन० सुब्बारावपन्तुलु

कांग्रेसजन्मादारभ्यैव तेन सहास्य सम्बन्ध आसीत्। कांग्रेसचतुर्था-धिवेशने सम्मिलितो भूत्वाऽसौ प्रभावशाली भाषणमदात्। तत आरभ्य विभिन्नप्रस्तावानां समर्थकोऽनुमोदकश्च भूत्वा ख्यातिं लब्धवान्। यदा अस्य समकालीना बहवो जनाः शासकीयोपाधिं गृह्णन्त आसंस्तदाऽसौ कमप्युपाधिं प्राप्तुं विचारमपि नैव चकार। स्वकीयकार्यकालेऽप्य स्वव्ययेनैव यत्र तत्र यात्रां कृत्वा कांग्रेसप्रचारमकरोत्।

## सच्चिदानन्दसिंहः

सर्वप्रथममिमं जना लखनऊकांग्रेसे दृष्टवन्तः । तत्राऽयं न्यायशासनयोः पृथक्करणप्रस्तावे भाषणमपि प्रदत्तवान् । लाहौराधिवेशनेऽसौ सैनिकपरिष्करणविधावपि भाषण दत्तवान् । कलिकाताकांग्रेसाधिवेशनेऽसौ उत्तरप्रदेशे प्रान्तपालस्य कार्यकारिण्याश्च प्रस्तावमकरोत् । लन्दने योग्यतापूर्णकार्यकरणात् सर्वे जनास्तस्मै मद्रासकांग्रेसे धन्यवादमपि ददुः । लन्दने गते शिष्टमण्डले सिंहं विहाय भूपेन्द्रवसुः जिन्ना समर्थः मज्हरूलहकः लालालाजपतरायश्चासन् ।

---

: २ :

# रत्नस्य कांग्रेस-प्रवेशः

अधीतविद्यो रत्न. सर्वेषामेतेषामन्येषाञ्च काँग्रेससेवकानां राष्ट्रसेवाकार्यं नितरां ध्यात्वा सर्वेता गभीरं विचार्य स्वयमपि काँग्रेसे सम्मिलितुं निश्चितवान् ।

एवं महाशयो रत्न. काँग्रेससंस्थायाः कार्यकलापं तत्कालीनराजकीय-शासनप्रणालीं भारतीयजनानां दुर्दशाञ्च विज्ञाय स्वदेशसेवायां दत्तावधानो बभूव । स च तारापुरीप्रतिनिधिरूपेण कानीपुरकाँग्रेसमहाधिवेशने गत्वा काँग्रेसमहाधिवेशनस्य सर्वमेव कार्यजातं प्रत्यक्षं विलोकितवान् ।

पश्चादसौ तारापुरीस्थोच्चन्यायालये प्राड्विवाककार्यं प्रारभत । पुनर्विश्वव्यापिनो प्रथममहायुद्धस्यारम्भो बभूव । भारतीया अपि तत्र साहाय्यं कृतवन्तः । अन्ते बीकानेरमहाराजगंगासिंहादीनां प्रयासेन सन्धिः सम्पन्नः ।

## विवाहः काश्मीरभ्रमणञ्च

माघशुक्लवसन्तपञ्चम्यां रमानाम्न्या ब्राह्मणकुलोत्पन्नया परमसुन्दर्या कुमार्या सह रत्नस्य विवाहोऽभूत् । तदनन्तरमसौ तया सह भ्रमणार्थं काश्मीरं ययौ । तत्रैकदा स्वभार्यां श्रीनगरे संस्थाप्य कैश्चिद् बान्धवैः सह पर्वतीय-प्रदेशे भ्रमन् गतो ह्यमरनाथं यात्राजगाम ।

एकदा केनापि प्रोक्तं यदितोऽमरनाथगुहा क्रोशचतुष्टयमेव वर्तते । अतएव परमसाहसी रत्नो मार्गप्रदर्शकेन केनापि मेषपालकेन कैश्चिद्बान्धवैश्च सह रज्जुशृङ्खलया हिमनदीमेकामुत्तीर्य अमरनाथगुहां प्रस्थितः । हिमवर्षवायुना सह हिमपातोऽपि प्रारभत । द्वादशघटिकापर्यन्तं सततं यात्रया निरा

क्लान्तः ससार्थो रत्नो महता काठिन्येन पदात्पदमपि गन्तुमसमर्थो बभूव। तस्मिन्नेव समये हिमाधिक्येन रत्नाऽऽकरभारवाहकस्य मुखाद्रुधिरनिस्सरणं प्रारब्धम्। तदनन्तरं रत्नो ददर्श चैकं परम रमणीयं तटाकम्, किन्तु सहसैवासौ हिमपातेन परिपूरितस्तटाकः सौन्दर्यविहीनो बभूव। तटाकाश्रितः पंक्तिबद्धा देवमुकुटमिवोद्भासिनी हिममालाऽपि विलुप्ता। इदानीं रत्नोऽमरनाथगुहाया अत्युन्नते पार्वतप्रदेशे आसीत्। श्रान्तः क्लान्तश्च रत्नः पुनरप्यग्रे गन्तुमना. महसन्नेव सहसा प्रचलितः। किन्तु सङ्कटाकीर्णे बहुगर्तान्विते नीहारप्रपतनसमाच्छादिते पर्वतीयभूमौ गच्छन्नसौ सहसा कस्याञ्चिद्गिरिदर्यां पपात। किन्तु रज्जुबद्धत्वात् सार्थास्तमुपरि सहसैवाकृष्टवन्तः। यदि नैव स्यात्तदान्तर्गतो रत्नो भूगर्भशास्त्रपारगाना कृते सहस्रवर्षपर्यन्तमन्वेषणविषय एवाभविष्यत्।

अतः परं भयभीत ससार्थो रत्नः श्रीनगरं परावृत्त.। काश्मीरे जलाशये जलविहारं पर्वते कानने काश्मीरप्रदेशीयोद्याने च भ्रमणं कृत्वा पुनस्तारापुरीमाजगाम।

तारापुरीमागत्य रत्नः स्वदेशोद्धारकर्मणि संलग्नो बभूव। यूरोपीयमहायुद्धोत्तरं भारतो देशः पुन. प्रबुद्धता गतः। सर्वत्र बहुविधानि यन्त्राणि प्रचलितानि। धनिकाना पार्श्वे बहुधनं सगृहीतम्, तथापि ते धनप्राप्त्यर्थमेव सदैवावसरं प्रतीक्षमाणा अतृप्तमना अभवन्। मध्यमवर्गीयाः साधारणमानवाः पुनर्दारिद्र्यसार्था· आसन्। तदा शान्तिमयमान्दोलनं कार्यकारि भविष्यति इत्यस्य चिह्नान्यपि दृष्टिगोचराण्यभवन्। जना विश्वासपूर्वकमात्मनिर्णयस्य स्वशासनस्य स्वराज्यस्य च वार्तामकुर्वन्। मुहम्मदीया अपि तुर्किस्तानविषये विचारं कुर्वन्तः क्रोधसम्पन्ना आन्दोलनमिच्छन्त आसन्। कृषकेषु विशेषतोऽशान्तेश्चिह्नानि परिलक्षितानि बभूवुः। अत्रान्तरे लार्डहार्डिगो इंग्लैण्डं जगाम, समागतवांश्च सम्राट्प्रतिनिधिर्भूत्वा लार्डचेम्सफोर्ड। लार्डमार्लेकृत-

सुधारणया कांग्रेसस्थितनम्रदलीयाजनाः सन्तुष्टाः, किन्तूग्रविचारवन्तोऽसन्तुष्टा विरोधमेव कुर्वन्त आसन्। नूतनविधानसमाचारेण हिन्दवो मुहम्मदीयाश्च प्रायेण सन्तुष्टा बभूवुः। गोखलेमहाशयस्य देहावसानेन भारतस्य महती हानिरभूत्। बम्बईकांग्रेसाधिवेशने युद्धकालीन-सेनाचर्चां कृत्वा भारते जनहिताय जनसञ्चालितशासनस्य याचनमभूत्। श्रीतिलकेन सह एनीबेसेण्टमहाशया होमरूललीगसंस्थां संस्थाप्य 'न्यू-इण्डिया' पत्रेण तत्प्रचारमारब्धवती।



प्रस्तावस्य च समर्थनं दलद्वयमप्यकार्षीत्। पुनः लखनऊनगरे जिन्ना-सभापतित्वे सम्भूते मुस्लिमलीगाधिवेशने स्वायत्तशासनप्राप्तिमेव स्वकीय-ध्येयमघोषयन् मुहम्मदीयाः। कांग्रेसमुस्लिमलीगयोः सम्मिलिताधिवे-शनेऽपि स्वायत्तशासनस्यैव समर्थनमभूत्। अस्मिन् होमरूलान्दोलने श्रीमती एनीबेसेण्टमहाशया मद्रासशासनेन सर्वरक्षिकायां रक्षिता बभूव। सर्वरक्षिकायां जातायामेनीबेसेण्टमहिलाया क्रोधिता जनाः कलिकातानगरे भाविन्या कांग्रेसमहासभाया तामेव सभानेत्रीं निर्वाचितवन्तः। एतस्मि-न्नेव समये कांग्रेसोदारदलीयानां प्रभावः समाप्तोऽभूत्। ते चोदारसंघ-नामिकामेकामन्यामेव संस्थां संस्थापितवन्तः।

भारतस्य युद्धकालीनसेवया प्रसन्नो भारतसचिवो माण्टेगूमहाशयः स्वकीयघोषणायां ब्रिटिशशासननीतिर्भारते स्वायत्तशासनस्थापनमित्यकथयत्। तदनन्तरमेव भारतसचिवो भारतमागत्य महता परिश्रमेणैकं प्रस्तावं विहितवान्। स एव भारतीयशासनबिल नाम्ना पारितो बभूव।

एतेन नियमेन निर्वाचनप्रणाल्याः सूत्रपातो बभूव। प्रान्तेषु जन-निर्वाचितसदस्यैर्विधानसभायाः शासननिर्वाचितैः सदस्यैश्च राज्यसभायाः संघटनमभूत्।

किन्त्वेतया सुधारणयापि कांग्रेससदस्या अतुष्टा एव भूत्वा योजनाया निन्दाञ्च विधाय महात्मनो गान्धिनो मतानुसारमसहयोगान्दोलनं कर्तुं निश्चितवन्तः, आत्मनश्शासनस्थितं सत्याग्रहं च चक्रुः। दिल्ल्याममृतसरे-ऽहमदाबादे चान्दोलनमभूत्। आन्दोलनकारिणामुपरि गुलिकापातश्च कृतोऽधि-कारिभिः, किन्तु पञ्चाबहत्याकाण्डं सर्वोपरि भयानकमभूत्।

पञ्चाबस्यामृतसरनगरे प्रायेण विंशतिसहस्रसंख्यका जना रौलट एक्ट-विरोधं कर्तुमेकत्रिता जलियानवालाबाग-नाम्नि स्थाने। जनैः परिपूरितोद्याने तत्रस्थोऽधिकारी डायरनामा महाक्रूरः सेनाढ्यः पञ्चाशत् सेनाङ्गसैनिकै-स्तथांग्लसेनाङ्गसैनिकैश्च सह गत्वा तत्र त्वरितमेव गुलिकाप्रहारं कर्तुं सैनिकानादिष्टवान्। आदिष्टा एव सैनिका षोडशशतसंख्यकगुलिका-

प्रस्तावस्य च समर्थनं दलद्वयमप्यकार्षीत् । पुनः लखनऊनगरे जिन्ना-सभापतित्वे सम्भूते मुस्लिमलीगाधिवेशने स्वायत्तशासनप्रणालिमेव स्वीय-ध्येयमघोषयन् मुहम्मदीयाः । काँग्रेसमुस्लिमलीगयोः सम्मिलिताधिवे-शनेऽपि स्वायत्तशासनस्यैव समर्थनमभूत् । अत्युग्रे होमरूलान्दोलने श्रीमती एनीबेसेण्टमहाशया मद्रासशासनेन सर्वैरी कार्या रक्षिता बभूव । सर्वरक्षिताया जातायामेनीबेसेण्टमहिलाया मोचिता जन । कलिकातानगरे भाषित्वा काँग्रेसमहासभाया तामेव समानेत्रीं निर्वाचितवन्तः । एतस्मि-न्नेव समये काँग्रेसउदारदलीयानां प्रभावः न्यूनतोऽभूत् । ते चोदारदल-नामिकां स्वामन्यामेव संस्थां संस्थापितवन्तः ।

भारतस्य युद्धकालीनसेवया प्रसन्नो भारतसचिवो माण्टेगूमहाशयः स्वकीयघोषणाया ब्रिटिशशासननीतिर्भारते स्वायत्तशासन-स्थापनमित्यकथयत् । तदनन्तरमेव भारतसचिवो भारतमागत्य महता परिश्रमेण प्रस्तावं विहितवान् । स एव भारतीयशासनबिल-नाम्ना पारितो बभूव ।

एतेन नियमेन निर्वाचनप्रणाल्याः सूत्रपातो बभूव । प्रान्तेषु जन-निर्वाचितसदस्यैर्विधानसभायाः शासननिर्वाचितैः सदस्यैश्च राज्यसभायाः संघटनमभूत् ।

किन्त्वेतया सुधारयोजनयापि काँग्रेसदलस्य असन्तुष्टा एव भूत्वा योजनाया निन्दाञ्च विधाय महात्मनो गान्धिनो मतानुसारमसहयोगान्दोलनं कर्तुं निश्चितवन्तः, आन्दोलनमखिलदेशे व्यापारं च चक्रुः । दिल्ल्यामनृतसरे-ऽहमदाबादे चान्दोलनमभूत् । आन्दोलनकारिणामुपरि गुलिकापातश्च कृतोऽधि-कारिभिः, किन्तु पञ्जाबहत्याकाण्डं सर्वोपरि भयानकमभूत् ।

पञ्जाबस्यामृतसरनगरे प्रायेण विंशतिसहस्रसंख्यका जना रौलट एक्ट-विरोधं कर्तुं सम्मिलिता जलियानवालाबाग-नाम्नि स्थाने । जनैः परिपूरितेऽस्मिन् उच्चसैनिकोऽधिकारी डायरनामा महाक्रूरः सेनाद्रः पञ्चाशत् शस्त्रागृहीतसै-न्यसंख्यकाङ्गेतान्सैनिकैश्च सह गत्वा तत्र सहसैव गुलिकाप्रहारं कर्तुं सैनिकानादिष्टवान् । आदिष्टा एव सैनिका षोडशशतसंख्याकगुलिका-

पातं चक्रुः । तेन चतुःशतसंख्यका मानवा मृता इति शासकीया घोषणा । गुलिकाप्रहारकर्त्तारः सर्वे एव जना उद्यानस्योन्नतभागे स्थिता आसन् । औषधि सेवा संस्कार-पानीयरहिता मृता अर्धमृता भग्नपाद-शिरोग्रीवाः सर्वे एव मानवा रात्रौ तत्रैव पतिता आसन् ।

मानवस्य मनसि यस्य दण्डस्य कल्पनाऽपि न भवेत्स एव दौर्भाग्येन प्राप्तो डायरस्य शासने । पानीयनालिका विद्युद्वर्तिका चावरुद्धे । तेन सर्वं एव जना पिपासिता अन्धकारनिमग्नाश्च प्रेता इव बभूवुः । मानवेषु सर्वेषां समक्षं वेत्रप्रताडनं च कारितं डायरेण । जनानामुदरेण परिचालनं कुमारिकाणां स्तनपरिमर्दनपूर्वकं दुग्धनिष्कासनप्रयत्नं शिशून् उपरि विक्षिप्य तत. पततां तेषां गुलिकास्त्रेण हननञ्चेते दण्डा मानवसीमानमति-क्रम्य अमानुषकार्यसृष्टिं चक्रुः । अथ च वाष्पयानतृतीयश्रेणी प्रमाणपत्रप्रदानावरोधः, द्वाभ्यामधिकजनानां सह गमननिषेधः, पादयानानां स्वायत्तीकरणम् , दुर्गस्याधः सर्वेषामेव समक्षे नग्नं कृत्वा वेत्रप्रताडनार्थं स्थाननिर्माणम् , नगरस्य बहुभागेषु वेत्रताडनार्थं स्थाननिर्माणञ्च अमानवीयकृत्यमासीत् डायरस्य । एतादृशास्यात्या-चारस्य वृत्तं बहिःस्थिता मानवाः श्रोतुमपि नैवाशक्नुवन् । यदा कदा केनापि प्रकारेण कोऽपि मानवो निःसृत्य कथञ्चिदन्यप्रदेशे समागतश्चे-त्तदासौ नरकात् निःसृत इव मेने । किन्तु भयार्तत्वात् सोऽपि पूर्णं विवरणं कथयितुमसमर्थ एव बभूव ।

एतस्मिन्नेव समये पञ्जाबहत्याकाण्डस्य विवरणप्राप्त्यर्थं तत्प्रान्त वासिना साहाय्यार्थञ्चैका समितिः संघटिता काग्रेससंस्थया । तस्यां श्रीरत्नोऽपि सम्मिलित आसीत् । अन्यै. काग्रेसकार्यकर्तृभिः सह रत्नः पञ्जाबं गत्वा जलियानवालाबागस्थानं तां तां प्रतोलीं च—यस्यामुदरेण जनाः परिचालिताः, स्त्रीभिर्बालैः कुमारिकाभिश्च सहासीममत्याचारं कृतवन्तः श्वेताङ्गा —विलोक्यासौ महान् क्रोधितो बभूव । किन्तु

शासकीयाधिकारस्याभावात् प्रतीकारं कर्तुमसमर्थो भूत्वा केवलं साहाय्यमेव चकार। ■ मोहनदासगान्धिनो बुद्धिकौशलेन नितरामाश्चर्यचकितो बभूव।

अथ रवोऽमृतसरतो दिल्लीमागत्य रात्रौ शयनारूढो बभूव। यस्मिन् कक्षे स प्रविवेश, तस्मिन्नासन् ■■ श्वेताङ्गाः। तेनैक साभिमानमित्थं वदन्नासीद्यत् 'अलिरमैव अमृतसरनगर मद्याधान मासीत्। मया विचारितम्—सम्पूर्णमेव नगर भस्मसात् करोमि। किन्तु तदैवाकस्मात् मनसि दया समुद्भूता। अत एव मया कतिपयानामेव नागरिकाणां हत्या कारिता।' सर्वमिदं शृण्वन् रवो विचारितवान् यदिमं कः? साभिमानं च वक्ताऽयं कः? इति। किन्तु निद्राधत्वादेव पूर्णं परिज्ञातवान्। प्रातः रवेरसौ परिहृतवान् यदसौ एव मनाः श्वेताङ्गसैनिका, साभिमानं वक्ता च निरपराधिनाममृतसरनिवासिनां घातको डायर एव वर्तते। अथ खलु जलियावालाबागहत्याकाण्डाभियोगे निर्धारितायां हण्टरसमितेः समक्षं स्पष्टीकरणार्थं लाहौरनगरे समुपस्थाय दिल्लीं परावर्तमान आसीत्। तत्र न्यायाधीशेन रैंकिनेन उक्तम्—'डायर! मनास्य प्रश्नस्य कृते क्षमा विधाय वक्तव्यं भवता यत् जलियानवालावागे भवता यत् कृतं किं तद् भयप्रदर्शनमासीत्?' उत्तररूपेण डायरेण कथितम्—'न्यायाधीश! भयप्रदर्शनं नासीत्तत्। नूनं तद् मयानर्त कर्तव्यमासीत् यस्य मया परिपालनं कृतम्। तथापि मन्ये तत्कार्यं दयापूर्णमेव। मया विचारितं यत् पूर्णरीत्या गुलिकाप्रहारं कर्तव्यो यत् ममाप्यस्य वा पुनर्गुलिकाप्रहारस्यावश्यकतैव न भवेत्। मयैतदपि विचारितं यद् गुलिकाप्रहारं नाटकं जनसम्मर्दो विकर्पयितुं शक्यते। किन्तु विकीर्णा जना पुनरप्येकत्रिता भवन्ति मदा ममापहासो भविष्यति, भविष्यामि चाहं मूर्खः। अत एवैतन् मया कृतम्' इति।

नरहत्यापापपङ्किलशरीरं मयाननं डायरं दृष्ट्वा श्रुत्वा च तस्य तादृशीं मूरां वार्तां श्रीरवेः आधाविष्टो बभूव। किन्तु गान्धिनः शान्त्युपदेशं विचार्य ■ शान्तिमापेदे। डायरश्च वक्तव्यानात् समुत्तीय

दिल्ल्या विलीनः । रत्नश्च ततः समागत्य तारापुरीं पञ्जाबहत्याकाण्डं विचारयन् कथं देशः स्वतन्त्रो भविष्यतीति भृशं चिन्तयामास ।

अथ रौलट-एक्टविरोधकर्तृषु पञ्जाबवासिषु यो ह्यभियोगः श्वेताङ्ग-शासनेन प्रचालितः, तस्मिन् न्यायाधीशेन इत्थं दण्डविधानं कृतम्—एकपञ्चाशज्जनेभ्यः शूलारोपणम्, षट्चत्वारिंशज्जनेभ्यः कृष्णपानीय-(कालापानी)-दण्डः, द्वाभ्यां दशवार्षिकः कारावासः, ऊनाशीतिजनेभ्यः सप्तवर्षीयः, दश जनेभ्यः पञ्चवर्षीयः, त्रयोदशजनेभ्यः त्रैवार्षिकः, एकादशजनेभ्यश्च स्वल्पतमः कारागारः । सैनिकन्यायालये संभूतेऽभियोगे दण्डितानां संख्या पुनरितोऽन्या एव आसीत् ।

एतां भीषणदण्डव्यवस्थां श्रुत्वा मुक्तामणिमोहनदासयोर्मनसि महती व्यथा समभूत् । ततो मोहनदासगान्धिना समुद्घोषितं यज्जनाः सत्याग्रहान्दोलनं स्थगितं कृत्वा शान्तिसंस्थापने दत्तचित्ता भवन्तु । सम्राजो भारतस्थितः प्रतिनिधिर्लार्डचेम्सफोर्डोऽपि सर्वशक्त्याऽऽन्दोलनं निरुध्य शान्तिसंस्थापनं करिष्यामीति घोषितवान् ।

वर्षेऽस्मिन् काङ्ग्रेसस्य वार्षिकाधिवेशनं मुक्तामणेरध्यक्षतायाममृतसरनगरे एव बभूव । तत्र लोकमान्यतिलकोऽपि समागत्य प्रामुख्येन सम्मेलनं सफलीचकार । किन्तु नासीदत्र सन्देहो यत्समागतेषु प्रतिनिधिषु अधिका जना मोहनदासगान्धिनमेव सस्पृहं पश्यन्त आसन् । भारतस्य राजनीतिकगगने 'जयतु गान्धी' ति शब्दो गुञ्जायमान आसीत् । त्वरितमेव कारागारान्मुक्तोऽलिबन्धुरपि तत्र समागतः ।

मोहनदासगान्धिनो भाषणेन भारतीय जनाः सविशेषं प्रभाविताः । भारतीयशासनैः कार्यैः पञ्जाबवासिनां मनसि महती क्रान्तिरभूत् । सर्वेषामाग्रहेण गान्धिमहाशयः काङ्ग्रेसस्याग्रणीर्बभूव ।

तस्मिन्नेव वर्षे तारापुर्यामेकं मुहम्मदीय सम्मेलनमपि समभूत् । तत्रापि बहूनां जनानां गान्धिनश्च भाषणमभूत् । कतिपयानां भाषणानि प्रभावोत्पादकानि उत्साहवर्धकानि चासन् । किन्तु गान्धिनो

भाषणं नम्रताकठोरतास्पष्टतापरिपूर्णमासीत्। तस्य नेत्रयोर्मार्दवं हृदये कार्यकरणस्य सुदृढो निश्चयश्चास्ताम्। गान्धी स्पष्टमवदत्—'यदि भवन्तो योद्धुमिच्छन्ति, तदा भवद्भिः सर्वस्वत्यागं कृत्वा अहिंसाया अनुशासनस्य च पूर्णतया पालनं कर्तव्यम्। अस्मिन्नहिंसात्मकयुद्धेऽहं सेनापतिर्भविष्यामि। यदि भवन्तो विजयमिच्छन्ति तदा सैनिकनियमस्य पालनमपि भवता कर्तव्यं भविष्यति। यदैव मे निष्कासनं भवद्भिः समीहितं तदैव मां निष्कासयन्तु नाम। किन्तु यावदहमग्रणीर्भूत्वा स्थास्यामि तावद्भवद्भिर्ममाज्ञा अनिवार्यतया पालनीया। मम नेतृत्वे भवदीयस्त्वावसहयोगा नम्रित भवेत्। यदा भवतां मनसि मत्ताऽरुचिर्भवेत्तदैव मामुत्थाप्य दूरे प्रक्षिपन्तु' इति। भाषणमिदं श्रुत्वा बहूनां श्रोतृणां रक्तमुष्णीभूतम्। मतसग्रहावसरे सर्व एव जनाः स्वस्वहस्तं समुत्थापितवन्तः युद्धारम्भपक्ष एव।

सभान्तपरावर्तनसमये श्रीरत्नो गान्धिनं पप्रच्छ—'किमेवमेव भवान् महतो युद्धस्यारम्भं करिष्यति?' तत्र सभाया बहवः भयमंता अप्यासन्। परमसहय गहमित्वा श्रीरत्नः समुत्साहितानपि मानवान् ददर्श। अथ गान्धी असहयोगान्दोलनदिवसं निश्चितवान्। सिन्धभ्रमणं कृत्वा निश्चिते दिने गान्धी बम्बईनगरं समागतः। तस्मिन्नेव दिने लोकमान्यस्तिलकः महाप्रस्थानमकरोत्। तेषां महायात्रायां प्रायः बम्बईवासिनः सर्वे जनाः सम्मिलिता बभूवुः। गान्धिरत्नावपि तत्र समुपस्थितावास्ताम्।

राजनीतिकदृष्ट्या यदा भारत स्वतन्त्र भवेत्तदैव कृषकाणा यन्त्रकार्यकार काणामपि दुरवस्था दूरीभवेदिति ।

## चम्पारने सत्याग्रह

श्वेताङ्गकृषका विहारप्रदेशीयचम्पारनमण्डले नीलोत्पादनमारभयन्त । किञ्चित्कालानन्तरं ते सामन्तेभ्य स्थायिरूपेण भूमि सम्प्राप्य बहुभूमिषु नीलोत्पादनमारब्धवन्त । पश्चादनिवार्यमेतदभूयत् कृषका स्वकीया-भूम्याश्चतुर्थांशे अवश्यमेव नीलोत्पादन कुर्वन्त्विति । पुनर्श्चैकीयशासनत एक नियम पारयित्वा श्वेताङ्गा कृषकाणा कृते नीलोत्पादनमनिवार्य कृतवन्त । एतेन नीलोत्पादनेन कृषकाणा काठिन्य भूत प्रवृद्धम्, किन्तु कोऽपि लाभो नासीत् । तेषा स्वकीयकृषिकर्मण्यपि महती हानिरभूत् । बहुवारमेतस्य निन्दापि कृषकै कृता, किन्तु सर्वोपायो निष्फलो जात ।

अनन्तर कृषका मोहनदासगान्धिन सविधे स्वकीया दु खगाथा प्रेषितवन्त । स्वयमेव मोहनदास पटनामागत्य राजेन्द्रप्रसादस्य निवास स्थाने दिवस व्ययनीय सायकाले मुजफ्फरपुर जगाम । ततोऽपि मण्डला द्बहिर्गच्छेति शासकीयसूचना लतरस्कृत्य मोतिहारीचम्पारनञ्च स सम्प्राप्त-वान् । तत्र कार्यारम्भसमये कतिपयप्राड्विवाकानामावश्यकता सम्प्राप्ता । तस्मिन् समये राजेन्द्रप्रसादो गयामण्डलान्तर्गतपोईयाग्रामवासी अनुग्रह नारायणसिंहश्चैतौ प्राड्विवाकौ पाटलिपुत्रतो गान्धिन समीप चम्पारन गतवन्तौ ।

चम्पारनकृषकान्दोलन पञ्चमास यावत् प्रचलितम् । अस्य सूत्रधारौ मोहनदासो गान्धी तत्सहायकौ च राजेन्द्रप्रसादानुग्रहनारायणसिंहौ बभूवतु । तत्रैव लोकोपयोगिसेवापुरस्काररूप शासनप्रदत्त 'कैसरे हिन्द' नामोपाधि स्वर्णपदकालङ्कृत परित्यक्तवान् श्रीगान्धी । शासकीयाज्ञाव हेलनकृत समुपस्थापितोऽप्यभियोगो मोहनदासस्य विलक्षणभाषणेन परि-समापितो न्यायाधीशेन । स च न्यायाधीशसमक्ष विंशतिसहस्रकृषकाणा वक्तव्यं समुपस्थापितवान् ।

अथ शासनेन एका समितिर्निर्धारिता । तस्यां नीलकृषकाणां शासनस्य सामन्तानाञ्च प्रतिनिधयः सदस्या आसन् । कृषकप्रतिनिधिः मोहनदास एवासीत् । विषये विमर्शिते कृषकाणां कथनं न्याय्यमिति समितिः स्वीकृतवती । फलतः कृषकाणां करो न्यूनो जातः । इतरेतास्तेभ्यः किञ्चिद् द्रव्यमपि दत्तवन्तः । कृषकेभ्यो नीलोत्पादनमपि नियमेन सन्नरुद्धम् । नीलान्दोलने मोहनदासोऽद्भुतं साफल्यमाप्तवान् । तेन सह कार्यकरणेन राजेन्द्रप्रसादानुग्रहनारायणावपि शक्तिशालिनौ आत्मबलसम्पन्नौ च जातौ ।

## खेडा-सत्याग्रह

एवमेव गुजरातस्य खेडाग्रामे कृषकाणां दुर्भिक्षेण धान्ये विनष्टे तस्मिन् वर्षे करभारात् स्वात्मनं मोचयितुं शासनं प्रार्थयमाना अभवन् । किन्तु यदा तेषां सर्वे एव प्रयासा निष्फला गतास्तदा कृषका गान्धिनं सकाशं गत्वा स्वकष्टं दुःखजातं कथितवन्तः । श्रुत्वा च गान्धी कृषकान् सत्याग्रहं विधातुं स्वयंसेवकत्वग्रहणाय आदिदेश । तत्र सर्वप्रथमं परमोत्साहसम्पन्नो वल्लभभाईपटेलः स्वयंसेवको बभूव । तदनन्तरं बहवः कृषका अपि स्वयंसेवका भूत्वा परमोत्साहेन सत्याग्रहं कर्तुं समुद्यताः । बहवः प्राड्विवाकाश्च स्वकीयं कार्यं परित्यज्य भूत्वा च स्वयंसेवकाः सर्वत्र गुर्जरप्रदेशे भ्रमणं कुर्वन्तः कृषकेषु समुत्साहं सञ्चारयितुमारेभिरे । वल्लभभाईपटेलस्य सार्वजनिकजीवने राजनीत्याञ्च प्रवेशस्यायमेव प्रथमोऽवसर आसीत् ।

मोहनदासगान्धिनोऽध्यक्षत्वे कृषका महान्तं सत्याग्रहं कृतवन्तः । बहवो वन्दिनो भूत्वा कारागारं समवापुः । कतिपयेषु राजद्रोहस्याभियोगः परिचालितः शासनेन । अन्ते कृषकाणां सत्याग्रहः सफलो बभूव । तस्मिन् वर्षे कृषकस्य करग्रहणं नैव कृतं शासनेन ।

अथ अहमदाबादे 'मिल' स्वामिभिः सह तत्कर्मचारिणां वैमनस्यमभूत् । कृतेऽपि बहुप्रयासे तयोः किमपि सामञ्जस्यं नाभवत् । प्रत्युत मनोमालिन्यमेव वर्धमानमासीत् । एकदा सर्वे एव कर्मकराः कार्यविरामं चक्रुः । ततो मिल-

स्वामि निर्वाचिता बहवो जना मध्यस्था बभूवुः । गान्धि पटेलौ च कर्मचारिभिर्मध्यस्थत्वेन निर्वाचितौ । प्रचलितायां वार्तायां यावत् कोऽपि निर्णयो न जातस्तदन्तरे एव कार्यकरा मिलोद्योगालये कार्यं कर्तुं गतवन्तः । एतेन गान्धिनो मनसि महान् खेदः समभूत् । यावत् मिल-स्वामिनः पूर्णं वेतनं दातुन्नैव स्वीकुर्वन्ति, तावत्कोऽपि कर्मकरः कार्यं कर्तुं नैव गच्छेदिति कृपकमहासभायां गान्धिमहाशयो घोषितवान् । तत्रैवासौ प्रावोचयद् कर्मकेषु तादृशी शक्तिर्नास्ति यया ते स्वप्रतिज्ञाया दृढास्तिष्ठयुरिति ।

एतेन सर्वत्रैव क्षोभो व्याप्तः । पुनश्चाकथयद् गान्धी कृषकान् यद् भवाद्भिर्व्यर्थं समयो नैव यापयितव्यः । यत्किञ्चिदपि कार्य मिलेत्तदेव कर्तव्यम् । अथ साबरमत्याश्रम निर्माणे शतशः कर्मकरा नियुक्ता बभूवुः । अत्रान्तरे गान्धिना मिल-स्वामिभिः सहापि मिलित्वा कर्मकराणां वेतनवृद्धिः कारिता । एतदर्थञ्च प्रारब्धमनशनं परिसमाप्तवान् मोहनदासः ।

## रत्नस्य मसूरी निवासः

अत्रान्तरे रुग्णाया मातुः पत्न्याश्च स्वास्थ्यपरिवर्तनार्थं रत्नस्ताभ्यां सह मसूरीं जगाम । तत्र स एकस्मिन् महाविश्रामालये निवासमकरोत् ।

तस्मिन्नेव समये ब्रिटिशसाम्राज्येन सह अफगानप्रतिनिधीनां सन्धिवार्ता चल त्यासीत् । कतिपयाफगानप्रतिनिधयश्च तस्मिन्नेव महाविश्रामालये निवसन्त आसन् । किन्तु रत्नस्य केनापि प्रतिनिधिना सह परिचयो नासीत् । पुनर्वार्तालापस्य कथैव का ?

सहसैकस्मिन् दिने समाजगाम कश्चित्सैनिकप्रधानः स्थानीयशासनप्रदत्तपत्रेण सह । पत्रे लिखितमासीद्यत्त्वया केनाप्यफगानप्रतिनिधिना सह वार्ता न कर्तव्या, नापि कीदृशोऽपि सम्पर्कः स्थापनीयः । पत्रमिदं वाचयित्वा रत्न आश्चर्यचकितो बभूव । कदापि वार्तां न करिष्याम्यफगानप्रतिनिधिना सह, ईदृशी प्रतिज्ञा श्रीरत्नस्य स्वभावविरुद्धाऽऽसीत् । नाहमेतादृशीं प्रतिज्ञां करिष्यामीति स्पष्टं कथयन्तं श्रीरत्नमसौ सैनिकाधिकारी मण्डल-सैनिकाधिकारिणा सह साक्षात्कर्तुमादिदेश । मण्डल-

सैनिकाधिकारिणा सह साक्षात्कार वार्ताभ्यां किमपि फलं नालभत रत्नः। प्रत्युत तेनाऽऽज्ञापितोऽसौ यत्त्वया चतुर्विंशतिघटिकाभ्यन्तर एव मसूरीमण्डलं त्याज्यम्। मण्डलसैनिकाधिकारिण आज्ञां मानयित्वा रत्नो मसूरीं परित्यज्य समाजगाम तारापुरीम्।

## रत्नस्य कृषकेषु भ्रमणम्

आगत्य च तारापुरीं रत्नेन तत्र कृषकेषु भ्रमणमारब्धम्। तस्मिन्नेव समये द्विशतसंख्यकाः कृषकाः पलाय्य एव प्रतापगढमण्डलात् तारापुरीमागत्य यमुनायास्तटे संस्थिता आसन्। तेषां प्रधान आसीद्रामचन्द्रः। कतिपय मित्रैः सह रत्नस्तेषां समीपे गतवान्। ते च सामन्तानामत्याचारकथां श्रावयित्वा रत्नमपि सहैव प्रतापगढं चलितुं प्रार्थितवन्तः। दिनद्वयाभ्यन्तरे एवागमिष्यामि मनःस्थकार्यमिति रत्नस्तान् समाश्वास्य प्रतापगढं प्रेषितवान्।

शीघ्रमेवासौ कतिपयवयस्यैः सह प्रतापगढं गत्वा कृषकाणां ग्रामेषु भ्रमणं कृत्वा तेषामवस्थया सुपरिचितो बभूव। यः खलु इंग्लैण्डे सप्तवर्षाणि यावत् स्थित्वा राजकुमारवत् सुखमयं विद्याध्ययनं चकार, तारापुर्याञ्च यः सर्वविधसौख्यसम्पन्ने पितृगृहे निवासं कुर्वन्नासीत्, स तत्रैव ग्रीष्मसूर्यप्रतप्तवसुधायामातपत्रविहीनः क्षुधातृषान्वितः कृषकैः सहाधुना तेषां ग्रामेषु भ्रमन्नासीत्। कृषकाणां दुःखविमोचनचिन्तान्वितो रत्नस्तैरेव सार्धं भुनक्ति गच्छति स्वपिति तेषामेवाङ्गने वार्तां करोति स्म च। विलोक्य कृषकाणां दीनां दशां दृष्ट्वा च सामन्तानामत्याचारान् रत्नस्य मनसि तद्विरुद्धं युद्धं घोषयितुं विचारो बभूव। किन्तु मोहनदासगान्धिनः शान्तिमयं वचनं विचार्य शान्तः सन् रत्नो यदा कदा यत्र तत्र कृषकाणां सभासु भावपूर्णानि भाषणानि कुर्वन्नासीत्। तस्य भाषणेन प्रसन्नाः कृषकाः स्वतन्त्रमिव स्वदेशं स्वात्मानञ्च मेनिरे, मेनिरे च स्वकीयशरीरेषु नूतनोत्साहसमन्वितं रक्तसञ्चारम्। पुनः प्रतापगढात् समागत्य मातुः पत्न्याश्च दशां द्रष्टुं मसूरीं गतो रत्नः। ततः समागत्य स कृषकाणां ग्रामेष्वेव बभ्राम।

: ४ :

# असहयोगान्दोलनम्

केनोपायेन पञ्जाबहत्याकाण्डसमस्याया अत्याचारस्य निर्मूलनं दूरीकरणञ्च भवेदेतस्य विचारः सर्वत्रैव भारते भवन्नासीत्। एवं सर्वत्र जना सहयोगान्दोलनस्यापि चर्चां कुर्वन्त आसन्। मोहनदासगान्धी केवलया आडम्बरपूर्णया वार्तया प्रसन्नो नाभवत्। स कस्यचित्सुदीर्घप्रभावकारिणि कर्मणि करणस्य पक्षपाती आसीत्।

एतस्मिन्नेव समये असहयोगान्दोलने स्वमतप्रदानार्थं लालालाजपतरायस्य सभापतित्वे कलिकातायां काङ्ग्रेसाधिवेशनमभूत्। अस्मिन् महाधिवेशने काङ्ग्रेससदस्यानां दलद्वयमभूत्। देशबन्धुचित्तरञ्जनदासप्रभृतयो विरोधका मुक्तामणिप्रभृतयश्च नेतारः समर्थका आसन्। स्वयं सभापतिर्लालालाजपतरायोऽपि समर्थको नासीदसहयोगस्य। अस्य प्रधानसमर्थको मोहनदासगान्धी आसीदेव। असहयोगपदेन "सर्वशासकीयकर्मचारिपदानाम् आङ्ग्लविद्याध्ययनस्य प्राड्विवाकीयकार्यस्य विदेशीयवस्त्रादीनाञ्च किं बहुना, बहुव्ययसाध्यस्त्रीयदिनचर्यायाश्च परित्यागः" इत्यभिमतम् आसीत्। प्रस्तावोऽयमतीव सङ्कटपूर्ण आसीन्मुक्तामणिसमक्षम्। किन्तु गान्धिनः प्रभावं सर्वमेव स्वीकृतं तेन। बहुविवादोत्तरं प्रस्तावोऽयं पारितो बभूव। पारिते प्रस्तावे काङ्ग्रेसनीतेः सर्वथा परिवर्तनमभूत्। इतः परमेव काङ्ग्रेसे गान्धियुगारम्भो बभूव।

कलिकाताविशेषाधिवेशनात्परं कतिपये असहयोगान्दोलनविरोधिनः काङ्ग्रेससदस्या जिन्नाप्रभृतयः काङ्ग्रेससदस्यतामेव परित्यक्तवन्तः। इममेव जिन्नासाहबं सरोजिनीनायडूमहाशया पूर्वं हिन्दुमुहम्मदीयैक्यताया अग्रदूत

मन्यन्त । जिन्नामुप्रयासेनैव मुस्लिमलीगस्य काँग्रेसानुकूल्यं बहु सम्भवमभूत् । यद्यपि जिन्नासाहबस्य काँग्रेसपरित्यागे राजनीतिकं कारणं कथितवन्तो जना, किन्तु मुख्यं कारण राजनीतिक नासीत् । तदा बहवो जना राजनीतिविषये जिन्नासाहबात्पश्चादेवासन् । तथ्यमिदमासीद् यत् काँग्रेसस्य नूतनविचारेण सह जिन्नासाहबस्य मेलनमेव नाभूत् । स्वदेशीय-वस्त्रधारण भारतीयभाषाया भाषणञ्च तन्मनोऽनुकूले नास्ताम् । अतएव जिन्नासाहबोऽग्रे मुस्लिमलीगस्य प्रधानो भूत्वा काँग्रेसविरोधी बभूव ।

पुनर्नागपुरे चक्रवर्तिविजयराघवाचार्यस्य सभापतित्वे काँग्रेसमहाधिवेशनेऽपि कलिकाताधिवेशने पारितोऽसहयोगान्दोलनप्रस्तावः पुनः पारितो बभूव । इदानीं भारतीयलार्डप्रधानपदे रीडिंगसाहब आसीत् । नागपुराधिवेशनात् परमेव असहयोगान्दोलनमारब्धं भारतीयैः । आन्दोलनेऽस्मिन् विदेशीयवस्त्रादिपरित्यागः, प्राड्विवाककर्मपरित्यागः, आङ्गलभाषाध्ययनपरित्यागश्च सर्वेऽप्यभूवन् ।

प्रवृत्तेऽसहयोगान्दोलने स्वतन्त्रभारतस्य नेतारः उज्ज्वलचरित्रपरिपूर्णपयोधम इवोत्साहसम्पन्ना बभूवुः । स्वतन्त्रस्य चेतसि सौख्यपरिपूर्णानन्दस्य उत्साहस्य आह्लादस्य चाङ्कुरः सहैव समुद्भूतः । यथा कस्यचिद् धर्मयुद्धकारिणः शुभकामनार्थं प्रसन्नता भाति, तथैव स्वतस्यापि मनसि प्रसन्नता समभूत् । नासीदुत्कण्ठाया आलस्यस्य च स्थानं तच्चेतसि । सर्वे स अनुभूतवान् यदहं स्वतन्त्रतासमीपमागतोऽस्मीति । पराधीना वयं कथमपि स्वतन्त्रता मविष्यामः, एतादृशो हीनो भावो जनाना हृदयेभ्य कुतोऽपि पलायित ।

अथ राज्याधिकारिभ्यो निर्भयः कर्णेजपितां विहाय स्वेच्छया स्वसार्येषु सभासु चत्वरे च स्वकीयं विचारं प्रकटयन् स्वतो राजकीयपुरुषैः ससन्देहं वीक्ष्यमाणः कर्मपरायणो भूत्वा भारतीयस्वातन्त्र्यकर्मणिरतो बभूव । स्वतन्त्रनागरिकोऽहमिति मन्यमानस्य तस्य चेतसि भारतप्रतिबिम्बं परितोऽङ्कितमिवाभासत । वृद्धनेतृवृन्दप्रदर्शितमार्गानुसारं प्रचलतोऽस्य

लिखित्वैव पूर्णे करिष्यामि वार्तामिति प्रोवाच । तारापुर्यामन्यत्र च बहवो जना बन्दिनो बभूवुरित्यपि वार्तामश्रौषीदसौ त्वरितमेव । ततः समुत्थाय शीघ्रमेव रत्नोऽपि स्वगृहपरिस्थित्यवलोकनार्थं जगाम । तत्र गतोऽसौ तत्पिता मुक्तामणिश्च बन्दिनौ जातौ । नाटकीयरीत्या षण्मासदण्डविधानं पृथक् पृथक् कृत्वा द्वावेव कारागारं प्रेषितवान् न्यायाधीशः ।

एतस्मिन् महत्यसहयोगान्दोलने भारतस्य त्रिंशत्सहस्रसंख्यका जना बन्दिनो भूत्वा कारागारं जग्मुः । देशबन्धुश्चित्तरञ्जनदासो मैमनसिंहं गन्तु समुद्यतोऽवरुद्धः । राजेन्द्रप्रसादमजहरुलहकयो आरागमनमवरुद्धं शासनेन । याकूबहुसेनस्य कलिकातागमनं लाजपतरायस्य च पेशावरगमनमवरुद्धं । लाहोरे सभाकरणमवरोधितं नियमं विधाय शासनेन । नानकानाया समुपस्थितानां निर्दोषाणां शान्तानां सिक्खानामुपरि गुलिकावर्षणेन जनकथनानुसारं पञ्चनवत्यधिकशतसंख्यकाः सिक्खा निहता बभूवुः ।

एवमसहयोगान्दोलनं चरमोत्कर्षमवाप । किन्तु गोरखपुरमण्डलान्तर्गतचौरीचौरानामकस्थाने समुद्गतो जनसम्मर्दः सैनिककार्यालयेऽग्निप्रक्षेपद्वारैव विंशतिसैनिकान् प्रज्वालितवान् । अहिंसया सत्याग्रहं कर्तुं न जानन्ति जना इति विचार्य मोहनदासगान्धी सत्याग्रहान्दोलनं स्थगितं चकार । समागते युवराजे भारतीयाः पूर्णतया तं बहिष्कृतवन्तः । स्थगितेऽसहयोगान्दोलने रत्नः कारागारान्मुक्तिमवाप । किन्तु पितरं परित्यज्य गमनेन तस्य मनसि महत्कष्टमभूत् ।

## महात्मागान्धिनः ऐतिहासिकं भाषणम्

असहयोगान्दोलने अहमदाबादकारागारे बन्दीभूतं गान्धिनं त्वरितमेव द्रष्टुमिच्छितवान् कारागारमुक्तो रत्नः । किन्तु तदा गान्धी साबरमत्याश्रमे बन्दीभूत आसीत् । अतोऽसौ तत्रैव गत्वा तस्य साक्षात्कारं कृतवान् । यस्मिन् दिने मोहनदासो गान्धी स्वीयाभियोगे सेशन्न्यायाधीशसविधे समाजगाम, तदा तेन सह बहवो जना रत्नश्च जग्मुः । अहमदाबादन्यायालये

न्यायाधीशसमक्षं समुपस्थितजनसमुदाये कृशकायो गान्धी सर्वजनहृदयस्पर्शी विलक्षणं भाषणं ददान उवाच—

"दक्षिणाफ्रिकायां विषमपरिस्थितावहं सार्वजनिकक्षेत्रेऽवतृतः। तद्देशाधिकारिभिः श्वेताङ्गैः सह मम प्रथम समागमः समीचीनो नासीत्। मया ज्ञातं यन्मानवत्वाल् विशेषतो भारतभूमौ लब्धजन्मत्वान्मम नास्ति कोऽप्यधिकारः। किन्तु ससाहसं मया विचारितं यद् भारतीयैः सह यो हि सदोषो व्यवहारः क्रियते श्वेताङ्गैः, स खलु सुन्दरे शासनप्रबन्धे एवमेव समागत्य प्रविष्टः। स्वयमेवाहं श्वेताङ्गशासनेन सह सहयोगं कृतवान्। यदा कदा दोषं दृष्ट्वा तदालोचनमप्यकरोम्। किन्तु श्वेताङ्गशासनविनाशेच्छा मे मनसि कदापि नोद्भूता।

"ततः परं बोअराणामुपद्रवे संकटग्रस्ते ब्रिटिशसाम्राज्ये स्वयमेव मया स्वकीया सेवा तेभ्य उपहारीकृता। युद्धे क्षतानां भग्नानाञ्च मानवानां सेवार्थमेकः स्वयंसेवकसंघोऽपि संस्थापितो मया स्वस्य धर्मपत्न्याः संरक्षणे। यत्किमपि युद्धमभूत् तत्र तेन सेवाकार्यं कृतम्। एवं जूलूमानवैर्यदा विद्रोहो व्यधायि, तदाऽपि क्षतानां सेवार्थमेकः स्वयंसेवकसंघः संस्थापितो मया। तेनापि संघेन महती सेवा कृता। अवसरद्वयेऽपि पुरस्काररूपेण मया पदकद्वयं प्राप्तम्।

"दक्षिणाफ्रिकायां कृतेन कार्येण अत्यन्तं प्रसन्नमना लार्डहार्डिंगो मां 'कैसरे हिन्द'-नामकं पदकमेकं प्रादात्। इङ्ग्लैण्डजर्मनयोः प्रवृत्ते युद्धे मया लन्दने भारतीयानामेकः स्वयंसेवकसंघो निरमायि। तस्मिन् संघे उत्सुकतया विद्यार्थिन आसन्। तत्रस्थराज्याधिकारिभिरपि एतस्याः सेवायाः भूरिशः प्रशंसनं कृतम्।

"लार्डचेम्सफोर्डो यदा दिल्लीनगर्यां युद्धपरिषदं संस्थापितवान्, तदाऽप्यहं स्वीयस्वास्थ्यमनादृत्य अहमदाबादे यत्नात् सैनिकानां व्यवस्थायां संलग्नोऽभवम्। कार्येऽस्मिन् साफल्यमाप्नुवानं मां शासनं प्रतिवेदितवत् यद् युद्धं समाप्तम्, अधुना नास्ति सैनिकानामावश्यकतेति।

"एतासु सर्वास्वेव सेवासु ममासीदभिलाषो यन्मम देशवासिनोऽपि एतत्प्रतिफलरूपेण समानाधिकारं प्राप्स्यन्ति । किन्त्वहो मदीयं भाग्यमेव परावृत्तम् !

"सर्वप्रथमं मम चेतसि रौलट-नियमेन महान् वज्राघातः कृतः । अयं खलु नियमो भारतीयानां स्वातन्त्र्यापहारक आसीत् । मया तदैव विचारितं यत् नियमस्यास्य विरोधे कर्तव्यं महदान्दोलनमिति । अनन्तरं पञ्जाबे भीषणतमं नरहत्याकाण्डमभूत् । तत्र जलियानवालाबागनाम्नि उद्याने सार्वजनिकहत्याया मानवानामुदरेण परिचालनस्य वेत्रप्रहारस्य कशाभिः सह घोरतमापमानजनकव्यवहारस्य च वृत्तमाकर्ण्य मर्माहतोऽहमभवम् । मयेदमपि श्रुतं यद् ब्रिटिशप्रधानमन्त्री मुहम्मदीयानां तुर्किस्थानस्थितस्य तीर्थस्य रक्षणार्थं यदाश्वासनं प्रदत्तवान्, तदपि शाब्दिकमेवासीत् ।

"अथ अमृतसरकांग्रेसे मित्राणि मां सावधानं कृत्वा मन्त्रीतः साफल्ये सन्देहमपि चक्रुः, तथाप्यहं स्वविश्वासे दृढ एवासम् । मयाऽवधारितं यन्नून भारतीयमुहम्मदीयैः सह या प्रतिज्ञा चकार प्रधानमन्त्री, तस्याः पालनमवश्यमेव भविष्यति । पञ्जाबहत्याकाण्डव्रणोऽपि परिपूरितो भविष्यति । माण्टेगूचेम्सफोर्डकृतानां सहयोगपूर्णसुधाराणां साफल्यं विधातुमपि दृढ एवासम् ।

"किन्तु मम सर्वा धारणाः धूलिसाद्भूताः । असहयोगसम्बन्धिवचनं नैव परिपूर्णम्, न च पञ्जाबहत्याकाण्डापराधिनि कोऽपि दण्डो विहितः । किम्बहुना, निष्पक्षपातं तद्विचारोऽपि नाभूत् । अद्यार्धबुभुक्षिता भारतीया निर्जीवा इव दृश्यन्ते । त इदं नैव जानन्ति यत्ते यत्किञ्चिदपि सुखमाप्नुवन्ति, तत्तु विदेशीयशासनचाटुकाराणां कृपया । ते हि चाटुकाराः विपुललाभादेभ्यः शासकीयं भाण्डागारं स्वकीयगृहञ्च भृशं परिपूरयन्ति । कुक्कुरेभ्यो भोजनोच्छिष्टमिव किञ्चिदेतेभ्यो जनेभ्यः पुरत उत्क्षिपन्ति । इदमपि नैव जानन्ति ते यन्नूनं साम्प्रतिकं भारतीयशासनं जनधनशोषक-

मेव । काममसत्येन तर्काभासेन ते स्वकार्यं साधयन्तु, किन्तु ग्रामेषु दृश्यमाना नरकङ्काला किं मिथ्या भवितुमर्हन्ति ?

"नास्ति मे कोऽपि सन्देहो यद् भारतीयेतिहासेऽभूतपूर्वो योऽपराधो जायते, तस्योत्तरदायित्वं इंग्लैण्डजनतायां भारतीयजनतायां च वर्तते। पञ्जाबहत्याकाण्डस्य यो हि निष्पक्षविचारो मया कृतः, तदनुसारं पञ्च नवतिप्रतिशतजनानां दण्डोऽन्यायपरिपूर्ण एवावगतः। भारतीयदण्डनियमं यावत् जानामि, तदनुसारमपि दशसु दण्डितेषु जनेषु नव निरपराधिन एव म्रियन्ते सुतराम्। एतेषामयमेवापराधो यदेते स्वदेशं स्निह्यन्ति। शतेषु नवनवतिजनाना भारतीयन्यायालयेषु कदापि श्वेताङ्गसमो दण्डो नैव विधीयते इति दृष्टम्। नेयं मेऽतिशयोक्तिः, किन्तु अनेन नियमेन सम्बद्धाना सर्वेषामेव भारतीयानामेतादृश एवानुभवो वर्तते।

"सर्वतो दुर्भाग्यस्येयमेव वार्ता यद् येषा श्वेताङ्गानामश्वेताङ्गाना वा स्कन्धेषु देशशासनस्य भारोऽस्ति, ते स्वयमेव न जानन्ति यदपराधेऽस्मिन् वयमप्यभियुक्ताः स्मः।

"बहवः श्वेताङ्गाः भारतीयाश्च शासका एवं जानन्ति यद् वयं यथा भारतीयशासनं सञ्चाल्यामस्तद्विश्वस्य कृते सर्वश्रेष्ठं निदर्शनम्। भारतं मन्दं मन्दं, किन्तु निश्चितमुन्नतिपथेऽग्रे सरति। ते जानन्ति यत् कथं सूक्ष्म रत्या नाटकीयदिशा च अस्मदीयो भृशमातङ्को जनेषु प्रतिष्ठितो भवति। कथं चैवत्र सबद्धप्रदर्शनस्य सामर्थ्यं दर्शयन्तो जना अन्यप्र-आत्मरक्षार्थं प्रहारस्य सर्वां शक्तिं विच्छिद्य शासनेन निःसत्वाः पौरुषविहीनाश्च कृता म्रियन्ते।

"येन नियमेन मयि राजभियोगो सविहित स नागरिकाणा स्वतन्त्रता-पहारकर्मणि महत्कष्टप्रदो वर्तते। प्रेम कदापि न बलात् समुत्पद्यते, न च नियमोपनियमयोर्वशीभूतञ्च। शंकरलालबैंकरं मां प्रति च नियमस्य यस्या धाराया अन्तर्गतोऽभियोगः प्रचरन्ति, तदनुसारमप्रीतिभावप्रवर्तनमन्याय्यम्। अस्या धाराया अध्ययनं मयापि कृतम्। ज्ञातञ्च परमप्रियदेशभक्तानां दण्ड-

प्रदानमपि । अत एवाहं स्वस्मिन् प्रचलितमभियोगं विचार्य स्वात्मानं परमं सौभाग्यशालिनं मानयामि । कस्मिन्नपि शासनेन मे न दुर्भावः । सम्राजं प्रत्यपि मम दुर्भावलेशमात्रमपि नैव विद्यते । किन्तु या शासनव्यवस्था अन्यशासनापेक्षया देशस्याधिका हानिं कृतवती, तस्याऽप्रीतिज्ञापनं परमं सौभाग्यं मन्ये । श्वेताङ्गशासकानां काले देशस्यास्य पौरुषमेव विनष्टम् । यदा मे मनसि शासनं प्रति एतादृशी धारणा वर्तते, तदा तस्मिन् प्रेमकरणं पापमेव मानयामि । अत एव मम विरुद्धं समुपस्थापितेऽस्मिन् अभियोगे भाषणमिदं स्वकर्तव्यमेव मानयामि ।

"वस्तुतो ब्रिटेनभारतदेशौ सम्प्रति विपन्नस्थित्या स्तः, असहयोगान्दोलनेन तस्या उद्धारार्थं मार्गं सूचयन्नहं द्वयोः तुल्या सेवा कृतवान् । मम मते यथा सुन्दरेण कार्येण सहयोगः प्रशस्यते, तथाऽसुन्दरेण कार्येण असहयोगोऽप्यावश्यकः । इतः पूर्वमसमीचीनं कार्यं कुर्वता विरोधो हिंसात्मकरीत्या भवदासीत् । किन्त्वहं देशवासिनः कथयामि यद् हिंसा कुत्सितं कर्म, अतः सा पूर्णतः परित्याज्या देशवासिभिः । अहिंसा नाम कृतेऽप्यसहयोगे यादृशो दण्डः समापद्येत, स सर्वोऽपि सोढव्यः । इदं सर्वं पूर्णतो विचार्यैव दण्डं प्राप्तुं समागतोऽस्मि । सहर्षं स्वीकरिष्यामि न्यायाधीशप्रदत्तं स्वकीयं दण्डम् । न्यायाधीशस्य न्यायाधीशसहायकानां च समक्षं मार्गद्वयमेव वर्तते । प्रथमस्तु शासनेन यं नियमं प्रयोक्तुमादिष्टा भवन्तः, यदि नूनमशोभनोऽयोग्यो वा भवद्भिर्मन्येत, तदा भवन्तोऽपि स्वपदं परित्यज्य असहयोगिनो भवन्तु । द्वितीयः, यदि भवन्तो विश्वसन्ति यद् नियमोऽयं समुचितस्तदाऽहं महता दण्डेन दण्डनीयः । इत्थमहं शासनस्य महान् सहयोगी भूत्वापि इदानीमसहयोगी संवृत्तः" इति ।

गान्धिनो भाषणं श्रुत्वा श्वेताङ्गन्यायाधीशो लोकमान्यतिलकस्य दृष्टान्तं प्रदाय तस्मै षड्वर्षाणि यावत्कारागारदण्डं श्रावयामास । शंकरलालबैंकरस्य एकवार्षिकं कारागारदण्डं सहस्रमुद्रात्मकं आर्थिकदण्डं च श्रावितवान् । कारागारगमनसमये मोहनदासगान्धिनं दृष्ट्वा सर्वे एव

समुपस्थिता रत्नप्रमुख जना अश्रुपरिपूर्णनेत्रा अभूवन्। पुन श्रीरत्नस्तारा पुरीमवाप।

## रत्नस्य कारागारवास

कारागारे निवसत्सु सर्वमित्रेषु मे बहिर्निवासोऽनुचित इति वार वारं विचार्य रत्नो विभिन्ना काग्रेससस्था पुनर्दृढीकृत्य असहयोगान्दोलन एव अवधानं ददौ। पूर्वं विदेशीयवस्त्रक्रयविक्रयावरोधार्थं कृतप्रतिज्ञान् पुन शैथिल्यमाप्नुवतो वस्त्र यापारिण अवलोक्य तेषामेव पुरत सत्याग्रह कर्तुं रत्नो यदा स्वीय विचार प्रकटितवान्, तदा सर्व एव ते पूर्वप्रतिज्ञाया दृढा बभूवु।

तदनन्तर पुनर्बन्दीभूते ससार्ये रत्ने राजद्रोहस्य व्यापारिभ्यो द्रव्यग्रहणस्य जनतासु भयप्रसारणस्य चाभियोग प्रचालित शासनेन। अस्मिन्नभियोगे अष्टादशमासाना कृते श्रीरत्न कारागारदण्डेन दण्डितवान् न्यायाधीश। किन्तु समयेऽस्मिन् राजनीतिकापराधे कारागारगमनं नासीन्नूतनजनाना विशेषतोऽभियोगमन्तरैव। वङ्गभङ्गान्दोलने बहवो जना कारागारदण्डमासेवन्त। लोकमान्यतिलकोऽपि वृद्धावस्थाया षड्वर्षाणि यावत्कारागारनिवास चकार।

कारागारस्य महति भवने निवसता रत्नसार्थाना मध्ये अष्टादश कारागारस्याभ्यन्तरे प्राचीने, किन्तु स्वच्छे भवने निवेशिता। श्रीरत्न-स्तत्पिता मुक्तामणिस्तत्पितृव्यजौ भ्रातरौ कतिपयेऽन्ये च जना बहिरेव विस्तृते भवने निवास चक्रिरे। कारागारे स्थानान्तरणस्य भ्रमणस्य बान्धवसम्मिलिमि वार्तालापस्य वृत्तपत्रपठनस्य च स्वतन्त्रतासीद् रत्नस्य। पुन कारागारनिवासे वृद्धि गते रत्नो मुक्तिमवाप्य सप्तसप्ताहानन्तर बन्दीभूय कारागारमेव जगाम। इदानीं तत्पिता मुक्तामणिरन्यत्र कारागारे निवेशित। अस्मिन् कारागारनिवासकाले पत्रलेखनस्य प्रतिमासम् एकवारं बान्धवैर्वार्तालापस्य चाज्ञा प्रदत्ता कारागारव्यवस्थापकै श्रीरत्नस्य।

कष्टमयं जीवनं यापयता श्रीरत्नरहिताना पञ्चाशन्मनाना निवासार्थ

एकमेव भवनं निर्धारितमासीत्। सम्बन्धिभिः परिचितैः सार्धञ्च सह स्नानं भोजनं भ्रमणं वस्त्रप्रक्षालनं विविधा वार्ता हास्यं कदाप्येकान्तवासं च कुर्वन्, कदाचिद् पर्यङ्को बहिः समुपविश्य नक्षत्रमालामवलोक्य प्रसन्नचित्तः सन् गायन् सूर्योदयास्तवेलायां प्राकृतिकं मनोरमं दृश्यञ्चावलोक्य परमानन्दं लेभे श्रीरत्नः।

तत्रैव महदान्दोलनस्य मूलभूतोऽसीति कथयित्वा कश्चन रत्ने कठोरं व्यवहारमारब्धवन्तः कारागारव्यवस्थापकाः। प्रवर्तितेन नूतनेन नियमेन कारागाराधिकारिभिः सह राजनीतिकबन्दिनां नैकवारं कलहोऽपि समजायत। रक्तहिताः शताधिकबन्दिनः परस्परं मेलनमपि परित्यक्तवन्तः। एतेऽस्माभिः कलहं करिष्यन्तीति विचार्य कारागाराधिकारिणः सह रक्षार्थम् कारागारान्तराल एव परावर्तितवन्तः। इत्थं निवासे नूनं क्लेश आसीद् रत्नस्य। किन्तु शान्तैकान्तस्थानत्वात् प्रशस्ततामापन्नो जनसम्मर्दराहित्यात् पठनादिकार्यार्थमसौ अनवरतं प्राप। वृत्तपत्राणां प्रतिबन्धात् यदा कदा केनापि सूत्रेण समागतेन मासिकपत्रेण प्रतिमासमेकवारं बान्धवजनसाक्षात्कारेण च रत्नो ज्ञातवान् यत् तत्सञ्चालितमान्दोलनं शान्तप्रायमभूत्। पूर्वतनीयं चमत्कारपूर्णं युगं समाप्तम्। सर्वेष कार्यक्षेत्रे दलद्वयमप्यभूत्। एकस्मिन्दले निर्वाचनं विजित्य राज्यसभाप्रवेशपक्षपातिनोऽपरत्र पूर्वप्रवर्तितस्य असहयोगान्दोलनस्य सञ्चालनं समर्थयन्तश्चासन्। प्रधाननेता महात्मागान्धी कारागार एवास्ते इदानीम्।

कारागारनिबद्धः श्रीरत्नो व्यायामं कुर्वन् वृक्षान्दलं निष्कास्य स्वनिवासस्थलीवर्तिनो वृक्षान् सिञ्चन् शीतकाले नदीसैकतेषु ग्रन्थानि पठञ्च समयं यापयामास। स्वेच्छाकाले चमत्कुर्वन्ति नक्षत्राण्यवलोक्य कतिपयनक्षत्राणां परिचयमप्याप्तवान्। साधारणबन्दिभ्यः पृथगेव श्रीरत्नः स्यादिति कारागाराधिकारिभिः बहुधा प्रयासे कृतेऽपि ते तत्र विफला एव सम्बभूवुः। श्रीरत्नः प्रायेण सर्वेभ्यो मिलन्नेवासीत्। कुत्रचिद्दिनेऽपि श्रीरत्नो भोक्तुमसमर्थे नष्टे मग्ने पात्रे कुत्सितं भोजनमादाय कारागारस्थ

जीवनं कियत् कष्टप्रदमिति स्फुटं ज्ञातवान् । स्वल्पवेतनभोगिनोऽयोग्याश्च कारागारकर्मचारिणः सर्वदैव बन्दिना सम्बन्धिभ्य उत्कोचं गृह्णन्तः साधारणबन्दिन इव राजनीतिकबन्दिभिर्व्यवहरन्तो विशेषाधिकाराभावेऽपि क्रूरत्वात् तीक्ष्णस्वभावत्वाच्च सर्वदा कलहायमाना यदा कदा साधारणापराधेऽपि कठोरदण्डप्रदानं कुर्वन्त आसन् । एकः कश्चित्पञ्चदशवर्षदेशीयो बालः साधारणकारागारनियमविरुद्धं वेत्रप्रहारदण्डमवाप । नग्नो वेत्रबद्धशरीरोऽसौ प्रतिवेत्रप्रहारं 'जयतु महात्मा गान्धी'ति जयघोषमुच्चचार । एकस्मिन्नेव वेत्रप्रहारे तस्य शरीरं चर्म उत्पाटितमभूत्, तथापि मूर्छां यावत् तस्मिन् वेत्रप्रहारोऽभूदेव ।

रत्नस्य कारागारमुक्तिः कांग्रेस-संघटनञ्च

कारागारयन्त्रणा दृष्ट्वा अनुभूय च श्रीरत्नः स्वदण्डावधौ समाप्ते बहिरागत्य स्वच्छं वायुं विस्तृतं राजमार्गं विशालां वसुधाञ्चावलोक्य महान्तं मोदमापेदे ।

उच्चादर्शशालिनि कांग्रेसे कूटचक्रकारिणा स्वकार्यसाधकानां मत्सरवादिनाञ्च कतिपये संघाः संघट्टिताः । अथ निर्वाचनद्वारा राज्यसभाप्रवेशविचारमधिकृत्यापि दलद्वयमभूत् । प्रायः सर्वेषां मतिर्भिन्ना विचाराश्च भिन्नाः, ईदृशी स्थितिरासीत् । एतां सर्वामेव कांग्रेसस्थितिं विचार्य श्रीरत्नो राज्यसभाप्रवेशविचारं नानुमेने । स इदं विचारितवान् यत् निर्वाचनद्वारा राज्यसभायां प्रवेशे कृते कांग्रेसलक्ष्यं निम्नतां गमिष्यति । परं देशस्य समक्षं किमप्यन्यत् कार्यमपि नास्तीत्यपि विचारणीयमस्ति ।

अपरिवर्तनवादिनः सदस्याः समाजोत्थानकर्मणि स्वाशयं प्रकटयन्तो रचनात्मककार्येऽपि स्वानुकूल्यं प्रकाशितवन्तः । सामाजिककर्मणा कार्यकर्तृभिः सह साक्षात्सम्बन्धस्य सम्पर्कस्य परिचयस्य चावसरो भविष्यतीति कल्पना आसीत्तेषां सदस्यानाम् । किन्तु राजनीतिककार्यकर्तॄणामनेन सन्तोषो न भविष्यतीत्ययमपि विचारस्तेषां दृष्टावासीत् । किन्तु असफलीभूते सत्याग्रहपर्वे

चार्यमेतद्विहाय नासीदन्यः कोऽपि मार्गः कार्येसम्पादनम्। अतः कतिपये काङ्ग्रेससदस्याः निर्वाचनद्वारा राज्यसभाया प्रविश्य स्वतन्त्रतान्दोलन पूर्ववदेव विधातु यमित्यपि विचारितवन्तः। कारागारात् निःसृतः श्रीरत्नो मतैक्याय पूर्णं प्रयास कृत्वापि साफल्यमलब्ध्वा सघटनकर्मणि संलग्नः काङ्ग्रेसस्य। परं यदा स तस्मिन्नपि कार्येऽसाफल्यमेव मतस्तदा ताराापुरी-पौरप्रतिष्ठानस्याध्यक्षपद स्वीचकार। अन्येष्वपि विभिन्नप्रान्तेषु काङ्ग्रेसकार्यकर्तारः पौरप्रतिष्ठानेषु प्रधानपदं स्वीकृतवन्तः। पौरप्रतिष्ठानकर्मणि मोदमानः श्रीरत्नो तत्र बहु समयं ददौ। अशान्तिकरकार्यसमुत्थिताद् अन्तर्द्वन्द्वाद्दात्मान परित्रातुमनेककार्येषु दत्तावधानोऽपि श्रीरत्नो मनसि समुत्थितानां विविधप्रश्नानामुत्तरमाप्तुं समर्थो न बभूव।

तस्मिन् समये तस्य चेतसि यदावरणमासीत्, तस्मान्निष्क्रम्य भारते स्वदेशस्य परिस्थितिं विचारयन् रत्नो यस्य कृते मनसि कदापि विचार नैव चकार, तदपि परिवर्तनं देशे विदेशे च नित्यमेव नूतन विचारयन् नवानं परिवर्तनञ्च विलोक्य मोहनदासगान्धिनि पूर्णं विश्वासमापेदे। परिवर्तनापरिवर्तनयोः पेषणीचक्रयोः पिष्यमाणः श्रीरत्नः कस्मिन्नपि दले क्षमा वृष्टो नैव बभूव। निर्वाचनद्वारा राज्यसभाप्रवेशविचारोऽपि मानसिकसंकीर्णप्रतीत्यामेव जनान्पातयिष्यतीति इदमपि स विचारितवान्। अपरिवर्तनवादिनो गान्धिनः पूर्णसमर्थको भूत्वाऽपि तस्य भाषणाद्यर्थं विचारयन्तो बभूवुस्तदा।

अपरिवर्तनवादिषु कार्यसम्बालनशक्तेरभावेऽपि विनम्रत्वं सुशीलत्वमकल्हत्वं समाजोत्थानव्रमना चासन्। तेषां साधारणजनैः सह सम्बन्धोऽपि समीचीन आसीत्। अत्रान्तरे बहवो जना राज्यसभाप्रवेशार्थं विविध कुटिल कुचक्रं कुर्वाणा बभूवुः।

कारागारमुक्तेरनन्तरमेकदा देशबन्धुमहाशयः समागत्य श्रीरत्नं बहुविधं प्रबोधितवान्—'तात! त्वं खलु परमबुद्धिमान् नीतिशास्त्रपारगः कष्टसहिष्णुर्भाषणशक्ति-संघटनशक्तिसम्पन्नश्चतुरो वाग्मी शान्तो देशो-

द्धारकर्मणि संलग्नश्चासि । इदानीं मोहनदासः कारागारनिबद्धोऽस्ति । काँग्रेसस्य सघटनशक्तिः शिथिलप्राया । अतस्त्वमान्दोलनं विहाय स्वराज्य-सघे सम्मिलितो भूत्वा देशीयजनसघटनकर्मणि संलग्नो भव । यदि स्वराज्यसघसदस्या राज्यसभायां प्रवेशमाप्स्यन्ति तदा काँग्रेससस्थाऽपि शक्तिशालिनी भविष्यति । सर्वे च भारतीयास्तस्या प्रभाव स्वीकरिष्यन्ति । इत्थं भारतं पूर्णस्वतन्त्रं भविष्यति। सर्व एव विषयस्त्वया विचार्यताम्' इति।

एवमुक्तेऽपि देशबन्धो रत्नस्य विचारे परिवर्तनं नाभूत् । असौ विचारितवान् यदिमे काँग्रेससदस्या यथेदानीं स्वतन्त्रं भाषणं ददाना भारत-स्वातन्त्र्यकर्मणि सलग्ना वर्तन्ते, प्राप्तेऽधिकारे मौनीभूताः तथा कार्यं कर्तुं भाषणं वा प्रदातुं नैव समर्था भविष्यन्ति । अन्यच, श्वेताङ्ग एव तस्या राज्यसभाया अध्यक्षा भविष्यन्ति । तेषामेवादेशेन निर्वाचिताः सदस्या-स्तैरुक्तं यत्किमपि कार्यं कर्तुं बाधिता भविष्यन्ति । स्वतन्त्रभावेन कार्य-करणस्यावसरमेव नाप्स्यन्ति । एवं श्वेताङ्गैः सह वैमत्ये सति पुनस्ते पदत्यागं करिष्यन्ति । अपरञ्च, कतिपयजना एव निर्वाचिता राज्यसभायां गत्वा राज्यमदमत्ता अपि भवितु शक्नुवन्ति । यादृशं सौहार्दमधुना तेषां सर्वसाधारणजनैर्विद्यते तादृशं सौहार्दं पुनर्नैव स्थास्यति । अत एवाहं राज्यसभायां प्रवेशं नैव करिष्यामि । जनसेवैव साम्प्रतिकं मे कर्तव्यमिति ।

अथ देशबन्धुर्गतवान् । रत्नश्च काँग्रेसकर्मण्येव दत्तचित्तो बभूव । अस्मिन्समये रत्नस्य महत्त्वपरिपूर्णं पारिवारिकं सुखमासीत् । पत्नी सदैव सेवाया संलग्ना बभूव, पित्रोश्च पुत्रवात्सल्यं दिनानुदिनं वर्धमानमेवासीत् । सर्वविधकष्टसहिष्णुः श्रीरत्नो यूरोपे पठित्वा यदा समागतस्ततःप्रभृत्येव धौतमुत्तरीयं गान्धिटोपिकामङ्गरक्षिकाञ्च दधानः पूर्णं स्वदेशीयवेश-भूषान्वितोऽभवत् । स्वस्थबाहुल्याभावाद् गृहस्वच्छता प्रायेण विनष्टा । मुक्तामणौ कारागारे निवसति कार्यालयकर्मण्यपि शैथिल्यमागतम् । वर्षत्रय-पर्यन्तं भारतस्वातन्त्र्यकार्यं विहाय श्रीरत्न मुक्तामणिम्या किमप्यन्यत् कार्यं नैव कृतम् । अनन्तरं पूर्णे कारागारनिवाससमये समागतो मुक्तामणिरपि ।

## पितुः कांग्रेससेवार्थं प्रोत्साहनम्

एकदा रत्नो विचारितवान् स्वयमेव, यन्मया नु प्राड्विवाककर्मापि परित्यक्तम्। किमप्यन्यत्कार्यं कृत्वा नैव समुपार्ज्यते किमपि धनम्! कथमिव प्रचलिष्यति मदीयो व्ययः ? कियत्कालं पिता कार्यं करिष्यति ? पित्र्यर्थलम्बित जीवनमनर्हमेव। मम पत्नी पुत्री चापि वर्तेते। तयोरपि व्ययो वर्तत एव। परित्याप्यहमुद्धव इव करोमि कार्यम्। नास्ति मे मनसि गार्हस्थ्यचालनस्य कापि चिन्ता। कापि सदैतनिकं कार्यं कृत्वा गार्हस्थ्य कार्यपरिचालनमेव श्रेयस्करम्। पितुः समीपे कथयेयमिमं मानसिकं विचारं तदा सोऽत्यन्तसन्तुष्टो भविष्यति। किं करोमि ! कांग्रेसकार्यमप्यपरित्याज्यमेव। अन्यलोमेन यदि मया किमप्यन्यत्कार्यं कर्तुमारभ्यते तदा सार्वजनिकजीवनमेव समाप्तं भविष्यति।

यदा कदा समागत्य व्यापारिणोऽपि महालाभान्वितं व्यापारमन्यद्वा कार्यं कर्तुं श्रीरत्नं प्रोत्साहितवान्। किन्त्वासौ किमपि नैवाशृणोत्।

अन्ततः एकस्मिन् दिने पितुः समीपे गत्वा रत्नः सविनयं प्रोवाच—'पितृपादाः ! मया किञ्चिदपि धनं नोपार्ज्यते। कथमिव मदीयो व्ययः प्रचलिष्यतीति विषयं सर्वदैव विचारयन्नपि नैव कञ्चन मार्गं निश्चेतुं शक्नोमि। यदि किञ्चिदन्यत्कार्यं कर्तुमारभ्यते तदा कांग्रेसकार्यं परित्याज्यमेव भविष्यती'ति।

श्रुत्वैव वचनं रत्नस्य मुक्तामणिः प्रोवाच—'तात ! चिन्ता नैव कार्या। मया समुपार्जितं बहुधनं वर्तते। इदानीमपि कृत्वा स्वल्पमपि कार्यं प्राप्यते बहुधनम्। त्वं यदा सार्वजनिकजीवनं विहाय अन्यकर्मणि संलग्नो भविष्यसि, तदा सर्व एव भारतीयास्त्वां लोभग्रस्तचेतसं प्रपञ्चनमनञ्च कथयिष्यन्ति। अत एव धनार्थं त्वया महत्कार्यमिदं नैव परित्याज्यम्। चिन्तां मा कुरु, कांग्रेसकर्मणि दत्तावधानो भवे'ति।

मुक्तामणिना एवमादिष्टः श्रीरत्नः समाहितो भूत्वा पुनः सार्वजनिककार्ये निरतो जातः।

● ● ●

शासनं यं प्रस्तावं पारितुमैच्छत् कतिपये नैव स्वीकृतवन्तः। पुनस्तत् प्रस्तावविचारमेवात्यजत्। किन्तु सिक्खानामुपरि निश्चितदीर्घताधिकं दीर्घतनस्य कृपाणस्य धारणमधिकृत्याभियोगोऽभूत्। ततः पञ्जाबप्रान्तीयकाङ्ग्रेससमितिरेतद्विरुद्धं प्रस्तावमेकं पारितवती। तेन सर्वं एव बन्दिनः सिक्खा मुक्ताः, तथापि कतिपये दीर्घकालीनबन्दिनो नैव मुक्ता अभूवन्।

तदनन्तरमकस्मादेव शासनेन अमृतसरस्थित दरबारसाहबस्थानस्य कुञ्चिका गृहीता। तेन नानकसाहबस्य जन्मदिवसे तत्रोत्सवो नाभूत्। शासनेन दरबारसाहबस्थानस्य प्रबन्धकरणार्थमेको मन्त्री नियुक्तः। किन्तु प्रबन्धकारणसमये शिरोमणिगुरुद्वाराप्रबन्धकारिणीयभया निषिद्धोऽसौ मन्त्री त्यागपत्रं दत्तवान्।

अन्ततः शासनद्वारा कुञ्चिकाग्रहणमेव सर्वान्दोलनस्य मूलमभूत्। जनसभाभिः कुञ्चिकाग्रहणस्य विरोधोऽभूत् सर्वत्र पञ्जाबप्रान्ते। शासनेन राजद्रोहिण्यस्ताः सभा निरोधिता। द्वौ सिक्खनेतारौ बन्दितावपि जातौ। अत्रान्तरे गुरुगोविन्दसिंहस्य जन्मदिवसः समापतितः। निश्चयावधि शासनं तालिका प्रदातुं नानुमेने। पुनः प्रचलितेऽभियोगे तालिकाप्रदानार्थं तदपेरेऽपि शासने दरबारसाहबप्रबन्धकारिणी सभा ता नैवाग्रहीत्।

अद्यावधि सिक्खाना शतद्वयं बन्दीभूतम्। शासनं बन्दीकरणकार्यात् विरतं बभूव। सर्वं एव बन्दिनो मुक्ता बभूवुः। ततः परं शासनेन कुञ्चिकापि प्रदत्ता। किन्त्वेको बन्दी कारागार एवासीत्।

अत एव सिक्खा राजद्रोहिसभानियमविरुद्धं सत्याग्रहं पुनरपि प्रारब्धवन्तः। पश्चात् सर्वं एव सिक्खा मुक्ताः। अकालिनः कृष्णोष्णीषधारकाः सञ्जाताः। पूर्वनिश्चित-कार्यक्रमानुसारं पञ्जाबस्य त्रयोदशमण्डलेषु पटियालाकपूरथलाराज्ययोश्च सिक्खाना बन्दीकरणं शासनेन प्रारब्धम्। पञ्चदशदिवसाभ्यन्तर एव सप्तदश अकालिनो बन्दिनः सम्बभूवुः। शिरोमणिगुरुद्वाराप्रबन्धकारिणीसभाया अध्यक्षः पञ्जाबप्रान्तीयकाङ्ग्रेसाध्यक्षश्च बन्दिनौ कृतौ शासनेन। घोषितञ्च तेन यत् सङ्गरूपाणा

: ५ :

# नाभाराज्ये सिक्खान्दोलनम्

अत्रान्तरे पञ्जाबप्रान्तस्य नाभाराज्ये सिक्खैर्महदान्दोलनं प्रारब्धम्। श्वेताङ्गाः पञ्जाबप्रान्तं श्वेताङ्गसाम्राज्ये विलीनीकृतवन्तः। तेन सिक्खधर्मस्य केन्द्रभूतेऽमृतसरनगरे दरबार-साहबस्य कार्यसञ्चालनेऽव्यवस्था जाता। अमृतसरसिक्खानामेका या सभासीत् सा मग्ना। दरबारसाहबस्य मन्त्री तस्याः सर्वाधिकारी बभूव। स च प्रतिवर्षं लक्षशो मुद्रा व्ययीकुर्वन्नासीत्। नियन्त्रणाभावेन आचारहीनताऽपि समुत्पन्ना। एकस्मिन् पक्षे मन्त्री प्रन्थिनश्चासन्, अपरस्मिंश्च सिक्खाः। द्वयोः प्रायेण कलहो जायते स्म। अस्यामवस्थायां शासनं किंकर्तव्यविमूढं सञ्जातम्। अन्ततः एका सभा संस्थापिता, या खलु पश्चात् 'शिरोमणिगुरुद्वाराप्रबन्धकारिणी सभा' नाम्ना विख्याता। परिवर्तनकारिणः सिक्खा 'अकालीति' नाम्ना विख्याताः। ते च बहूनि गुरुद्वारास्थानानि हस्तगतानि कृतवन्तः।

पुनस्तरनतारने कलहो जातो यस्मिन् बहवः सिक्खा आहता बभूवुः। एतत्पूर्वं 'नानकाना'नामकस्थाने निर्दोषाणां यात्रिणां हत्या समभूत्। राजकर्मचारिणां दृष्ट्या आन्दोलनमेतद् गुरुद्वाराशक्तिं हस्तगतां कर्तुमेवासीत्। तद् दृष्ट्वा मठाध्यक्षा मदोन्मत्ता बभूवुः। एतेषु अकालिभिः सह सन्धिप्रस्तावा अप्यासन्। किन्तु इदानीं ते सन्धितो विचलिता बभूवुः। शासनं सुधारकसिक्खानां दमने तत्परमासीत्।

अथ 'नानकाना'नामकस्थाने शतशः सिक्खाः कारागारं प्रापिताः शासनेन। मठाधीशाश्च स्वाधिकारे संस्थापिताः। किन्तु सुधारकार्यं यावत् शिरोमणिगुरुद्वाराप्रबन्धकारिणी सभा शासनेन सहयोगस्य प्रस्तावं पारितवती।

शासनं यं प्रस्तावं पारितुमैच्छत्तं कतिपये नैव स्वीकृतवन्तः। पुनस्तत् प्रस्तावविचारमेवात्यजत्। किन्तु सिक्खानामुपरि निश्चितदीर्घताधिकं दीर्घतमस्य कृपाणस्य धारणमधिकृत्याभियोगोऽभूत्। ततः पञ्जावप्रान्तीयकाङ्ग्रेससमितिरेतद्विरुद्धं प्रस्तावमेकं पारितवती। तेन सर्व एव बन्दिनः सिक्खा मुक्ताः, तथापि कतिपये दीर्घकालीनबन्दिनो नैव मुक्ता अभूवन्।

तदनन्तरमकस्मादेव शासनेन अमृतसरस्थित दरबारसाहबस्थानस्य कुञ्चिका गृहीता। तेन नानकसाहबस्य जन्मदिवसे तत्रोत्सवो नाभूत्। शासनेन दरबारसाहबस्थानस्य प्रबन्धकरणार्थमेको मन्त्री नियुक्तः। किन्तु प्रबन्धकरणसमये शिरोमणिगुरुद्वाराप्रबन्धकारिणीसभया निषिद्धोऽसौ मन्त्री त्यागपत्रं दत्तवान्।

अन्ततः शासनद्वारा कुञ्चिकाग्रहणमेव सर्वान्दोलनस्य मूलमभूत्। जनसमाभिः कुञ्चिकाग्रहणस्य विरोधोऽभूत् सर्वत्र पञ्जावप्रान्ते। शासनेन राजद्रोहिण्यस्ताः सभा निरोधिता। द्वौ सिक्खनेतारौ बन्दिनावपि जातौ। अत्रान्तरे गुरुगोविन्दसिंहस्य जन्मदिवसः समापतितः। निरवग्रावधि शासनं तालिका प्रदातुं नानुमेने। पुनः प्रचलितेऽभियोगे तालिकाप्रदानार्थं तत्परेऽपि शासने दरबारसाहबप्रबन्धकारिणी सभा ता नैवाग्रहात्।

अद्यावधि सिक्खानां शतद्वयं बन्दीभूतम्। शासनं बन्दीकरणकार्यात् विरतं बभूव। सर्व एव बन्दिनो मुक्ता बभूवुः। ततः परं शासनेन कुञ्चिकापि प्रदत्ता। किन्त्वेको बन्दी कारागार एवासीत्।

अत एव सिक्खा राजद्रोहिसभानियमविरुद्धं सत्याग्रहं पुनरपि प्रारब्धवन्तः। पश्चात् सर्व एव सिक्खा मुक्ताः। अकालिनः कृष्णोष्णीषधारकाः सञ्जाताः। पूर्वनिश्चित-कार्यक्रमानुसारं पञ्जाबस्य ग्रयोदशमण्डलेषु पटियालाकपूरथलराज्ययोश्च सिक्खानां बन्दीकरणं शासनेन प्रारब्धम्। पञ्चदशदिवसाभ्यन्तर एव सप्तदश अकालिनो बन्दिनः सम्बभूवुः। शिरोमणिगुरुद्वाराप्रबन्धकारिणीसभाया अध्यक्षः पञ्जाबप्रान्तीयकाङ्ग्रेसाध्यक्षश्च बन्दिनौ कृतौ शासनेन। घोषितञ्च तेन यत् खड्गरूपागा

कृपाणानां कृते शासनत आज्ञाग्रहणमावश्यकम्। जनाश्च निर्धारितरीत्या कृपाणधारणं कुर्वन्तु इत्यपि शासनेनादिष्टम्। सैनिकसिक्खानामपि कृपाणधारणं राज्यदृष्ट्याऽपराध एव निश्चितोऽभवत्। बहवो जना बन्दिनो बभुवुः। बहूनां च चतुर्वर्षेभ्य आरभ्य अष्टादशवर्षाणि यावत् कारागारदण्डोऽप्यभूत्।

एतस्मिन्नेव समये विभिन्नप्रान्तीयकाग्रेससंस्थानां विशिष्टनेतारोऽस्य अन्यायपूर्णकार्यस्य विचारार्थं पञ्जाबमागताः। तत्र सिक्खानां भीषणं दण्डं दृष्ट्वा ते मर्माहता अभूवन्। बन्दिनां निवासं परितः कण्टकाकीर्णलौहमयपुष्टसूत्राणां प्राकारो विहित आसीत् शासनेन। तन्मध्ये स्थितानां बन्दिनां कृते कतिपयदिवसं यावत् कणमात्रमप्यन्नं नैव प्रदत्तं शासनेन। बहवः सिक्खा बन्दिनो बभूवुः।

पञ्जासाहबनामकधूमशकटीस्थानत एकं वाष्पयानं गच्छन्नासीत्। सैनिकबन्दिनां तेषामुद्धारार्थं दर्शनार्थञ्च श्रद्धेन सहितः परमोत्साहसम्पन्नश्च पञ्चसहस्रसैनिकानामेकः समूहः प्रस्थितः। वाष्पयानालये भोजनमादाय स्थितास्ते यदा ज्ञातवन्तो यद् वाष्पयानं नात्र स्थिरं भवेत्, तदा कतिपये सिक्खा वाष्पयानस्य लौहपथे सुप्ताः। तथापि समागतं वाष्पयानं तत्राविश्रम्यैव अग्रे प्रस्थितम्। अस्मिन् साहसिककर्मणि द्वौ मृतौ एकादश चाहता बभूवुः। बहवो जनाः प्रताडिताः। पुनः प्रताडनमवरुध्य बन्दिनो विधातुं शासनमारेभे, संघमुख्यांश्च कठोरदण्डेन घातयामास। पुनर्जनाग्रहे शासनमकालिसिक्खान् मोचयितुं प्रारेभे। सप्तत्यधिकशतसंख्याका अकालिसिक्खा रावलपिण्डीनगरे मुक्ताः, किन्तु निर्दयतापूर्वकं ते प्रताडिताः।

एतस्मिन्नेवावसरे नाभानरेशः स्वसिंहासनं परित्यक्तवान्। किन्तु सिक्खा मेनिरे यत् ■ सिंहासनादवतारित इति। तेन च राज्यस्य जैतोनामके स्थानेऽन्यत्र च महदान्दोलनमारब्धं सिक्खैः। तत्र भाषणदातॄन् शासनं राजद्रोहिणो मेने। स्वधर्मानुकूलाखण्डपाठकरणसमयेऽपि बहवः

सिक्खा बन्दिनो बभूवुः । इत्थं नाभाराज्यस्य जैतोनामकस्थानेऽखण्ड-पाठमेवोद्दिश्य कलहः प्रादुर्बभूव । तदनन्तरं प्रतिदिनमेव सत्याग्रहपूर्णं जनान्दोलनं प्रचलितम् ।

## श्रीरत्नस्य नाभा-गमनं कारावासश्च

श्रीरत्नो जनान्दोलनस्यैतस्य वृत्तं प्रतिदिनमेव पठन्नासीत् । दिल्ली-नगर्यां काङ्ग्रेसविशेषाधिवेशने भगवता रत्नेन नाभामागत्य तत्रत्य परिस्थितिं ज्ञातुं निमन्त्रणं प्राप्तम् । तदनुसारं सार्थाभ्यां सह नाभाराज्यस्य जैतोनामकस्थानं जगाम सः । तत्रायमेकं शासकीयमादेशपत्रं प्राप्तवान्, यस्मिल्लिखितमासीद्यत् त्वं नाभाराज्ये मा प्रविश, प्रविष्टश्चेच्छीघ्रमेव बहिर्गच्छ । रत्नसार्थावपि एवमेवादिष्टौ । पठित्वा तदादेशपत्रं राज्याधिकारिणं श्रीरत्नः सूचितवान् यद् वयं दर्शकाः न तु राज्यनियम-विरोधकर्तारः । किञ्च यदा वयं नाभाराज्य एव स्मः, तदा तत्र प्रवेशकरणस्य वार्ता नैव समुपस्थिता भवति । किञ्च सहसा सार्थावहं-महदयोऽपि नैव चलितुं शक्नोमि । जैतोनगरीतः कतिपयघटिकानन्तरमेव वाष्पयानं याति । अतोऽपि अहमिदानीमत्रैव स्थास्यामि । यथावसरं मिलिते वाष्पयाने गमिष्यामीति । श्रीरत्नो यावदिदं सूचितवान्, तावदेव स बन्दी बभूव ससार्थः ।

श्रीरत्नं बन्दिनं विधाय राज्यकर्मचारिणः कारागारमानयन् । आदिवसं लौहशृङ्खलया हस्तौ बद्ध्वा कारागारे संस्थाप्य सायंकाले ससार्थं तं वाष्पयान-विश्रामस्थानं नीतवन्तो राज्यकर्मचारिणः । शृङ्खलाबद्धहस्तं श्रीरत्नं कञ्चिद-भिनवं भयानकं दृश्यं मत्वा कुक्कुरा बुक्कन्तो बभूवुः । प्रथमं तु श्री-रत्नः खिन्नो बभूव, किन्तु बुक्कता पृष्ठतो धावता कुक्कुराणां जैतोवीथ्यां दृश्यमवलोक्य परमानन्दमवाप । एवं राज्यकर्मचारिणः श्रीरत्नं वाष्पयानविश्रामस्थानं नीत्वा वाष्पयानस्य तृतीयश्रेण्यामेव प्रवेशितवन्तः । मन्थरगामिनि जनसम्मर्दसमाकुले च वाष्पयाने स्थितस्य श्रीरत्नस्यार्ध-

रात्रिर्व्यतीता, पूर्वार्धरात्रिस्तु कारागारे । तत्र शयानस्य तस्योपरि मार्जारिका मूषकाश्च क्रीडमाना आसन् । तासां तेन क्रीडनेन सहसा स समुत्थितः ।

द्वित्रिदिवसानन्तरमेव आंग्लभाषानभिज्ञस्य मूर्खस्य कस्यचिन्न्यायाधीशस्य समीपे स्वाभियोगे सम्प्राप्ति सहार्यो रत्नः । सप्ताहपर्यन्तं रत्नाभियोगे संलग्नो न्यायाधीशोऽक्षरमेकमपि नैव लिखितवान् । लेखनसमयेऽपि स स्वसहायकेनैव विलेखयन्नासीत् । श्रीरत्नो नियमेन स्वकीयं हार्दिकं वचनमपि नैव प्रकटितवान् । तदभियोगः प्रतिदिनं वर्धमान एवासीत् । अथ तदुपरि कूटचन्द्रकरणस्याभियोगो निश्चितोऽभूत् । बहुवारं न्यायालयं गतेऽपि स किमपि फलं नैव लब्धवान् । पश्चादेकस्मिन् दिवसे ज्ञातवान् यद् द्विवर्षाधिकारागारदण्डेन दण्डितोऽवभूवमिति ।

तारापुर्यां स्थितो मुक्तामणिः स्वपुत्रस्याभियोगं विचारयन् कमपि वृत्तमनवाप्य ब्रिटिशसम्राट्प्रतिनिधिसमीपे पत्रमेकं प्रेषितवान् । तदा नाभाराज्यस्य वृत्तं राज्याद् बहिर्नागच्छत् । सम्राट्प्रतिनिधितोऽपि किमप्युत्तरमनवाप्य मुक्तामणिः स्वयमेव नाभाकारागारं गत्वा श्रीरत्नेन सह सर्वां वार्तां चकार । श्रीरत्नेन तारापुरीगमनाय प्रार्थितो मुक्तामणिः प्रस्थितः । किन्तु गच्छता तेन श्रीरत्नस्याभियोगे प्रार्थनाकरणार्थमेकः प्राड्विवाको नियोजितः ।

एकस्मिन्दिवसे राज्यकर्मचारिणो न्यायाधीशसमक्षमेव श्रीरत्नप्राड्विवाकहस्तात् पर्गलसमूहमपि ग्रहीतुं चेष्टमाना बभूवुः । प्राप्तकारागारदण्डोऽपि श्रीरत्न एकस्मिन्दिने कारागाराध्यक्षेणाहूय एवमादिष्टो यत्तव कारागारदण्डः स्थगितः, अतस्त्वं यथेष्टं गच्छ नाभां परित्यज्य सहार्थं इति ।

तदनन्तरं श्रीरत्नो राजकर्मचारिभिर्वाष्पयानालये प्रापितः । वाष्पयानेन स अम्बाला दिल्लीमार्गेण तारापुरीमाजगाम । तारापुर्यामागमनानन्तरं श्रीरत्नो विषमज्वरपीडितो भूत्वा पुनः स्वस्थतामवाप ।

: ६ :

# कुम्भपर्वणि स्नाननिरोध-विरोधः

एकस्मिन्वर्षे कुम्भमेलासमारोहावसरे गंगायमुनयोः संगमे स्नानार्थिनां स्नानमेव निषिद्धं शासनेन स्नानार्थिनो जलनिमग्ना भविष्यन्तीति कथयित्वा। रतनश्च वृत्तपत्रे सर्वमेव वृत्तान्तं पठितवान्। अथ कुम्भदिवसे रतनो गतवान् संगमस्थानम्। तत्र मदनमोहनमालवीयोऽपि समुपस्थित आसीत्। ■ स तु स्नानादेशप्राप्त्यर्थं शासनस्य सविधे एकमावेदनपत्रमपि प्रेषितवान्, किन्तु शासनं किमप्युत्तरं नैव प्रादात्। तेन समुद्भूतो विवादः शासन-स्नानार्थिनां मध्ये। वृत्तपत्रे सर्वमिदमुदन्तजातं पठित्वा रजः कतिपयैः सार्धैः सह गंगातीरं गतवान्। तत्र स स्नानार्थं समुद्यतान् साधारणयात्रिणो विशेषयात्रिणो नेतॄन् महान्तांश्चावलोकितवान्। शासनद्वारा जनानां स्नानावरोधार्थं विविधवर्णघोटकारूढाः सैनिकाः शासकीयकर्मचारिणश्च समुपस्थापिता आसन्। वृहत्काष्ठकीलकाश्च सङ्गमस्थाने समारोपिताः शासनेन।

सर्वमिदं दृष्ट्वा व्यचिन्तयदसौ यत् किं करोमि, कथं सर्वेषामेव यात्रिणां संगमे स्नानं भविष्यतीति। विचारयन्नेवं सर्वैरेव यात्रिभिः सह स गंगारक्षकाणामतिष्ठत्। 'इदानीमागमिष्यति स्नानाज्ञा' इत्थं विचारयतां सर्वेषामेव धैर्यं विलुप्यमानमिवाभूत्। धीरवः स्वमनसि विचारितवान् यदद्युत्क इदानीं स्नानं किं भविष्यति? सर्वैः यात्रिभिः सह स्नानमेव कर्तव्यमिति विचार्य सहायकैः सहैवोत्पपात काष्ठनिर्मितावरोधकस्तूपान् विध्वंस्य समुत्पाट्य च 'जयतु गंगे' ति प्रवाहः। असौ कदा समुत्थितः, यदा न संगमे स्नातः, इति विचारयतां सैनिकानां समक्षमेव सर्वे जनाः संगमस्नानमाचरितवन्तः। इत्थं वैदेशिकशासने महान् धार्मिकविजयो बभूव धीरवस्य।

---

: ७ :

# गान्धि-साक्षात्कारो यूरोप-यात्रा च

एकदा सहसा तारापुर्यां समागतोऽयं सन्देशो यन्मोहनदासः कारागारे रोगाक्रान्तो वर्तते । चिकित्सालये तस्य शल्यचिकित्सापि सम्बभूव । एतेन चिन्तिता बहवो भारतीयास्तं द्रष्टुं गतवन्तः । श्रीरत्नोऽपि पित्रा मुक्तामणिना सहैव गतवान् । गान्धी षड्वर्षात्मिकाया कारागारयातनाया वर्षद्वयं समाप्य स्वास्थ्यलाभाय बम्बईसमीपस्थे जुहूनामके स्थाने निरवसन्नासीत् । श्रीरत्नोऽपि तत्रैवैकस्मिन् गृहे निवासं चक्रे ।

तत्र लघु श्रीरत्नः पित्रा सह गान्धिनं साक्षात्कुर्वन् समुद्रतटे भ्रमन् कदाचित् समुच्छलत्तरङ्गसुशोभिते रत्नाकरे सन्तरंश्च परमानन्दमवाप । यथावकाशं रत्नो मोहनदासगान्धिना सह देशस्वातन्त्र्यसम्बन्धिनी वार्तामपि करोति स्म । कियत्कालात् जुहूनिवासं कृत्वा स पुनस्तारापुरीमवाप । गान्धिना सह कृतायामपि वार्तायां श्रीरत्नस्य शङ्कायाः समाधानं नाभूत् । किन्तु गान्धिनः प्रभावः सर्वत्रैव भारते शिक्षितसमाजे आसीत् । मुक्तामणिश्च साधु महात्मानमेव मत्वा तस्य समादरमकरोत्, किन्तु महापुरुष इति मत्वाऽपि समादरं चकार । महतीनां शक्तीनां समन्वयस्तु कदापि तस्मा नैव बभूव, किन्तु प्रस्तर इवाचल एवासीत् । यद्यप्यर्धनग्नस्य गान्धिनो नातिदृढाकारं शरीरम्, किन्तु तस्य स्पष्टं निश्छलं च भाषणं श्रुत्वा सर्व एव श्रोतारो मन्त्रमुग्धा इव भवन्त आसन् । मुक्तामणि-मोहनदासगान्धिनि यादृशी शक्तिरासीत्, तादृशी शक्तिर्नान्यजनसमूहेऽपि । एतादृशस्य मोहनदासस्य वचनेन अत्यन्तुष्टोऽपि रत्नस्तस्मिन् महाश्रद्धा-वानभूत् ।

एकदा श्रीरत्नस्य धर्मपत्नी रमा रुग्णा बभूव। भारतीयचिकित्सकैः कृतायामपि चिकित्सायामारोग्यालाभात् चिकित्सकानामनुमत्या तामादाय रत्नो बम्बईतो जलमार्गेण स्विट्जरलैण्डं जगाम। तत्र रमायाः स्वास्थ्यलाभात् परमः प्रसन्नो रत्नस्तया सह यूरोपस्य विविधप्रदेशेषु भ्रमणं चकार। तस्मिन्समये भारतीयवार्तां यदा कदा वृत्तपत्रे पठन्नासीत्। एकदा जर्मनप्रदेशीयकर्मकराणां दले सम्मिलितो भूत्वा रत्नः प्रभावोत्पादकं भाषणं च प्रदत्तवान्। मुक्तामणिरपि स्वकीयां पुत्रवधूं द्रष्टुं यूरोपमागतवान्। तेन सह रत्नो रूसराजधानीं मास्कोनगरीं जगाम। गत्वा च तत्र सर्वाण्येव राजनीतिकपरिवर्तनानि विलोकितवान्। पुनर्लन्दनं गत्वा तत्र कियत्कालपर्यन्तं श्रार्धीरिस्मानसिरयल्सम्पन्नो रत्नः समाजगाम भारतवर्षम्।

: ८ :

# युवकान्दोलनम्, एकता-सम्मेलनञ्च

आगत्य भारतवर्षमसौ राजनीतिककार्ये संलग्नो बभूव । अनन्तरं कस्मिन् काँग्रेसमहाधिवेशने श्रीरत्नस्य बहवः प्रस्तावाः पारिता बभूवुः । बभूव च श्रीरत्न. काँग्रेस प्रधानमन्त्री । तदानीं भारते यन्त्रकर्मकरसंघ-वाष्पयानकर्मचारिसंघ कृषकसंघप्रभृतयोऽनेके संघा संस्थापिता । कृपरै-ध्वनीव परिवर्तनमभूत् । नवयुवकानामप्यान्दोलनं वर्धमानमेव आसीत् ।

एतस्मिन्नेव समये केनचिन्मुहम्मदीयेन 'रंगीला रसूल'नामकमेकं पुस्तकं प्रकाशितम् । शासन लेखकेऽस्मिन् राजन्यायालयेऽभियोगं प्रचालितवान् । वर्षद्वयकारागारदण्डेन दण्डितोऽपि लेखक उच्चन्यायालये निर्दोषो बभूव ।

पुनश्च स लेखकः 'रिसाला वर्तमान'नामक एकस्मिन्नन्याभियोगे दण्डितो बभूव । एताभ्यां द्वाभ्यामभियोगाभ्यां शासनेन विचारितं यन्नियमा एवानिश्चिता वर्तन्ते । अतः कश्चित्कठोरनियमः पारयितव्य इति । ततः 'यः कश्चिज्जनः समाजे कस्यचिदपि धर्मानुगामिनो धार्मिकभावनाया उपरि वचनेन लेखेन संकेतेन वाऽत्याचारमपमानं तत्प्रयत्नं वा करिष्यति, स तु वर्षद्वयकारागारदण्डेन आर्थिकदण्डेन उभयदण्डेन वा दण्डितो भवितुमर्हति' एष नियमो राजसभासदस्यैर्दिनद्वयं विचार्य पारितः । एतत्पूर्वमेव हिन्दुमुहम्मदीययोः परस्परं महान् कलहो बभूव । यस्मिन् बहुषु स्थानेषु बहवो जना मृताः । पर्युरिमानिस्थानेषु हिन्दुमुहम्मदीययोः परस्परं कलहः समभवत् ।

## एकता-सम्मेलनम्

एतस्मिन्नन्तरे लार्डरीडिंगस्थानापन्न इर्विनलार्डस्योत्तराधिकारी सम्राट्-

प्रतिनिधिर्लॉर्ड इरविनाह्वो भारतीयधारासभायां भाषणं कुर्वन्नित्थं प्राह यत्पञ्चदशमासेभ्योऽपि न्यूनसमये हिन्दुमुहम्मदीययोः कलहे पञ्चाशदधिकद्विशतसंख्यका मानवा मृताः, पञ्चविंशतिशतसंख्यका आहताश्च । अतो हिन्दुमुहम्मदीययोः परस्परं समुद्भूतस्य कलहस्योपशान्त्यर्थम् 'एकता सम्मेलनम्' अत्यावश्यकम् । तदनुसारं लार्डप्रधानस्यैव प्रधानप्रयासेन सम्मेलनमिदमभूत् । सम्मेलनेऽस्मिन् बहुतर्कवितर्कानन्तरं एकप्रस्तावः पारितः । सम्मेलनेन हिन्दुमुहम्मदीयनेतृसमीपे प्रार्थना कृता यद् देशेऽहिंसाया वातावरणं समुत्पादनम् । एकतासम्मेलनेन काङ्ग्रेससंस्थायै एतादृशोऽधिकारः प्रदत्तो यत्सा सर्वप्रान्तीयैकता संघं संस्थाप्य वर्तमानं हिन्दुमुहम्मदीयवैमनस्यं दूरीकरोतु । सम्पूर्णे चैकतासम्मेलने काङ्ग्रेससंस्थापि स्वीयकार्यकारिणीसमितौ हिन्दुमुहम्मदीयैकतासंस्थापनार्थं प्रस्तावमेकं पारितवती ।

---

: ९ :

# साइमनायोगः, तद्बहिष्कारश्च

लार्डप्रधानोऽपि शान्तिसंस्थापनार्थं देशे सर्वत्र भ्रमणं कुर्वन् शान्त्युपदेशं चकार । तेन सर्वत्रैव शान्तिलक्षणं दृष्टिगोचरमभूत् । किन्तु सहसा स्वकीयभ्रमणं परित्यज्य स दिल्लीमाजगाम । समागत्य दिल्लीं भारतीयप्रधाननेतॄन् स दिल्लीमाहूतवान् । गान्धीमहोदयः दिल्लीतो बहुदूरं बंगलोरे निवसन्नासीत् । लार्डप्रधानस्य निमन्त्रणं सम्प्राप्य सद्यएव दिल्लीमागत्य तत्साक्षात्कारं कृतवान् । विशेषवार्तामकृत्वैव लार्डप्रधानो गान्धिनो हस्ते ब्रिटिशराजकीयसभायाः भारतमन्त्रिणः पत्रमेकं प्रदत्तवान् यस्मिन् साइमनायोगस्य विषये भारतमन्त्रिणो घोषणाऽऽसीत् । साइमनायोगस्य निम्नलिखितमुद्देश्यमासीत्—

‘ब्रिटिशाधीनभारतस्य, शासनकार्यस्य, शिक्षावृद्धिकार्यस्य, प्रातिनिधिकसंस्थाया विकासस्य तत्सम्बद्धान्यविषयस्य च विचारं कृत्वा शासनस्य सविधे मतप्रदानं कर्तव्यम् । उत्तरदायिशासनस्य स्थापनमुचितं नवेति विचार्य अद्यावधि संस्थापितस्योत्तरदायिशासनस्य साफल्यं कीदृशम् ? तस्मात् आवर्धनञ्च समुचितं न वेत्यपि विचार्यम् । यदि समुचितं न चेत् तर्हि तस्मिन्न्यूनताकरणं किं वान्यत् कर्तव्यमित्यस्यापि विषयस्य विचारो विधातव्यः, शासनं च परिवर्तनीयम् । सहैवास्यापि विचारः कर्तव्यो यत्प्रान्तेषु राजकीयसभाद्वयस्थापनमुचितं नवेति ।

यदा च साइमनायोगः भारतभ्रमणं कृत्वा स्वयं प्रतिवेदनं प्रदास्यति तदा भारतीयं शासनं साम्राज्यशासनञ्चोभावेव विचारं कुर्याताम् । विचारानन्तरं साम्राज्यशासनं राज्यसभायां स्वीयं मतं समुपस्थापयेत् ।

तावत्सम्राजो राज्यसभाया किमपि न कार्यं नास्ति यावद्भारतस्य विभिन्न विचारकाणां नेतॄणां मतं नैव प्रकटीभविष्यति। अत एव सम्राजः शासनं निश्चितवान् यदुभयोरपि सदनयोरेका मिलिता सभा साइमनायोगस्य पूर्वं स्वकीयं विचारं प्रकाशयेत। एतादृशः प्रबन्धोऽपि कर्तव्यो येन पूर्वोक्ता योगसमीपे द्वे अपि सभे स्वकीयं निर्णयं दातुमेकं प्रतिनिधिमण्डलं प्रेषयेताम्। संयुक्तसभा यस्य यस्य विचारं ज्ञातुमिच्छेत्तैनैतुभिमिलित्वा विचारोऽपि कर्तुं शक्येत।'

पत्रमिदं पठित्वा महात्मागान्धी प्रोवाच—'किमेतदर्थमेव अहमाहूतः? एतत्तु पत्रालयद्वारापि लभ्यमासीत्।'

एतदनन्तरमेव मद्रासे कांग्रेसाधिवेशनमभूत्। तस्मिन्नधिवेशने हिन्दूमुहम्मदीययोर्मतैक्याय एको मुहम्मदीय एव सभापतेरासनमलञ्चकार। स खलु स्वीये भाषणे हिन्दूमुहम्मदीययोरैक्यसंस्थापने पूर्णं बलमदात्। सहयोगस्यासहयोगस्य पूर्णस्वाधीनताप्राप्तिप्रश्नस्य साम्राज्यविरोधप्रकारस्य च विषये विविधाः प्रस्तावाः पारितास्तस्मिन्नधिवेशने। श्रीरत्नस्य यूरोपदेशादागमनेन कांग्रेससदस्येषु महानुत्साहोऽप्यासीत्।

तदनन्तरमेव समाजगाम भारते पूर्वोक्तः साइमनायोगः। गान्धिन आदेशेन साइमनायोगं बहिष्कर्तुं देशे पूर्णं वातावरणं प्रस्तुतम्। जनाश्च कृतप्रतिज्ञा बभूवुः।

सर्वप्रथमं साइमनायोगो बम्बईनगरमागतवान्। तस्मिन्दिवसे बम्बईनगरं पूर्णतया हड्तालादिकर्मैरहितं शून्यमिवाभवत्। मद्रासे चत्वारो जनाः संघबद्धा भूत्वा तं बहिष्कर्तुं सचेष्टाः समभवन्। उपन्यायालयसमीपे महति जनसम्मर्दे सैनिकैर्गुलिकाप्रहरणं कृतम्। तेनैको मृतोऽनेके चाहता बभूवुः। कलिकातायामपि छात्राः सैनिकैः सह महान्संघर्षो बभूव।

तदनन्तरं सर्वप्रथमं दिल्ल्यां समागते आयोगे 'साइमन! परावर्तो' मोरि घोषयन्तो बहवो जनाः पुञ्जिताः। ते आयोगं पूर्णतया बहिष्कृतवन्तः।

लाहौरे लालालाजपतरायस्य नेतृत्वे बभूव आयोगस्य बहिष्कारः। सहसा

जनानामग्रे भूत्वा लालालाजपतरायः आयोगबहिष्करणे नेतृत्वं चकार । तस्मिन्नेव समये कश्चिद्युवा श्वेताङ्गसैनिकाधिकारी लालालाजपतरायस्य वक्षःस्थले महान्तं लगुडप्रहारमकरोत् । किन्तु धैर्यशाली लालामहाशयः कमपि प्रतीकारं नाकरोत् । तस्य सार्था अपि किमपि समुद्धतं कार्यं नैवाकुर्वन् । लाजपतरायस्य सार्था अपि बहुभिः श्वेताङ्गैराहताः, किन्तु लाजपतराये आक्रमणेन कोटिशो जना व्यथिताः । लालामहाशयोऽनेन लगुडप्रहारेण कतिपयदिनाभ्यन्तर एव मरणमापेदे । तस्मिन्निदमाक्रमणं च भारतीयानां नासिकोच्छेदमेवाकरोत् । लालामहोदयस्य निधनेन साइमनायोगबहिष्कारो भृशं वृद्धिं गतः ।

साइमनायोगो लखनऊनगरे आगन्तुमिच्छितवान् । तस्य स्वागतार्थं शासनेन महदायोजनं कृतम् । काँग्रेसद्वारापि कतिपयदिवसेभ्यः पूर्वमेव तद्विरोधे सभा प्रदर्शनञ्च बभूव । विरोधिप्रदर्शने सम्मिलितुं श्रीरत्नोऽपि लखनऊनगरे समागतः । तत्र समागत्य स षोडशजनानां संघं विधाय पताकोपशोभितः आयोगं बहिष्कर्तुमग्रेसरो बभूव । कियद्दूर एव गोविन्दवल्लभपन्तोऽपि संघेन सहागच्छमदवयत ।

शीघ्रमेव अश्वारोहिसैनिकाः समागत्य श्रीरत्नस्य पुरतस्तात्स्वयंसेवकेषु लगुडप्रहारमारब्धवन्तः । लगुडप्रहारव्यथिताः स्वयंसेवकाः पलायमाना अपि सैनिकैस्तत्र ताडिताः, यावत्ते आहता भूत्वा पृथिव्यां न निपतिताः । लगुडप्रहारव्यथितान् स्वयंसेवकान् सार्थानालोक्यापि श्रीरत्नो न पलायितः । सैनिकाः सर्वत एव समवरुद्धवन्तः । तदैव श्वेताङ्गाश्वारोही स्वाश्वं धावयन् तं रत्नसमीपं समाजगाम । श्रीरत्नस्तं 'ताडय' इत्यवोचत्, शिरोरक्षार्थं किञ्चिन्निर्देशं च बभूव । तावदेव समागत्य अश्वारोही तस्योपरि द्विवारं यष्टिना प्राहरत् । प्रहारेण कम्पायमानशरीरोऽपि श्रीरत्नो दण्डायमान एवातिष्ठत् । तावदेव रत्नस्य स्वयंसेवका एकत्रिताः अन्योऽपि स्वयंसेवक-संघः प्रधानेतृसहितः ताडयमानरत्नमाजगाम । पुनः सर्वे एव सैनिकास्तान् समर्दं संस्थिताः । एकत्र शासकप्रधानकर्मचारिणोऽन्यत्र बहवो जनाः

श्रीरक्ते लगुडप्रहारस्य वृत्तं श्रुत्वा समवेताः । अनन्तरं स्वयंसेवकाना प्रदर्शनकारिणाञ्च गमनार्थं मार्गं प्रदाय गच्छता तेषामग्रे घोटकारोहिणोऽपि गमनञ्चक्रुः । द्वितीयदिवस एव साइमनायोगस्यागमनं निश्चितमासीत् ।

तद्दिने श्रीरक्तो बहुभिः स्वयंसेवकैः सह साइमनायोगं बहिष्कर्तुं वाष्पयानालयं जगाम । सर्वे एव जनास्तत्र पंक्तिबद्धा भूत्वा दण्डायमानाः स्थिताः । अश्वारोहिणः पदातयोऽन्येऽपि सैनिका दर्शकाश्च तत्र समवेताः । अश्वारोहिणः सर्वैरेवाश्वान् परिचालयन्तो जनेषु लगुडप्रहारं कुर्वन्त इतस्ततो धावमाना आसन् । श्रीरक्तोऽपश्यद् यन्निरपराधिनो दर्शका अपि दण्डेन ताडिता भवन्तीति । ताडितेषु मरणार्तं हाहाकारं कुर्वन्तो भूमौ शयाना वर्तन्ते । सर्वत्र भूमिर्युद्धभूमिरिव जाता । आहतानां स्थानं द्रष्टुं तेषां कृते किमपि कर्तुं वा समय एव नासीत्, यतो हि रक्तस्य सन्निधेऽपि तत्सार्थीन प्रहरन्तोऽश्वारोहिणः सैनिकाः समागताः । तथापि रक्तोऽचल इव स्थितः ।

अथ समागतान् घोटकान् पश्चात्पादेषु संस्थाप्य तेषामग्रेतना पादा रक्तस्य शिरसि पातिताः अश्वारोहिसैनिकैः । तदनन्तरमश्वारोहिणः पदातयश्च सैनिका रक्तोपरि लगुडप्रहारमारब्धवन्तः । तत्ताडनमतीव भयङ्करमासीत् । गतदिवसस्य शक्तिरपि विनष्टासीत् तस्य । सर्वत्रैव रक्तशरीरे ताडनाघातस्य चिह्नानि समभूवन्, नेत्रयोः समन्ततः रक्तधारश्च व्याप्तः । पुनः बहुवारं लगुडप्रहारं कृत्वा रक्तस्वयंसेवकानां पंक्तिं भङ्क्त्वा सैनिका अग्रं गताः । पश्चाद्रक्तस्य कतिपये सार्थास्तं समुत्थाप्यान्यत्र निन्युः । शरीरस्यास्य अनर्थस्य मूलं साइमनायोगो वाष्पयानादुत्तीर्य पुष्पयानकाः प्रस्थितः

भारतीयसैनिका पुन ससङ्कोचमेव प्रदर्शनकारिषु प्रहार चक्रु । कृतेऽपि लगुडप्रहारे पूर्णाहिंसाव्रतधारकस्य श्रीरत्नस्य चेतसि भारतीयसैनिकान्प्रति कापि दुर्भावना नाभूत् ।

तस्मिन्वर्षे भारते साइमनायोगबहिष्करणस्य सर्वदलसम्मेलनस्य च बाहुल्यमासीत् । किन्तु रत्नस्य चेतोऽन्यस्मिन्नेव विषये सलग्नमभूत् । कार्यमपि तेन साहसमेव कृतम् । काग्रेसस्य प्रधानमन्त्रित्वात्तेन सामाजिकार्थिककर्माण्येव कृतानि । असौ सम्पूर्णभारतभ्रमण कृत्वा काग्रेसस्य पूर्ण प्रचार चकार । तस्मिन्नेव वर्षे मुक्तामणेरध्यक्षत्वे कलिकाताया काग्रेसाधिवेशनमभूत्, सर्वदलसम्मलनप्रस्तावोऽपि तत्र पारितोऽभूत् ।

---

# इरविन-प्रस्तावः, पूर्णस्वराज्यनिश्चयश्च

अथ लार्ड इरविनो लन्दनं गत्वा समाजगाम भारतवर्षम्। आगत्य चानेन स सम्राजो विचारमधु प्रकटितवान्—'सम्राट् सर्वतोभावेन इच्छति यद् भारते अभद्रा उत्तरदायित्वशासनस्य स्थापना भवेत्। तेन च तस्य महती प्रसन्नता भवेत्' इति।

ततो दिल्ल्यां कांग्रेसाधिवेशने प्रधानतया इमे प्रस्तावाः पारिता बभूवुः—

१. प्रचलितवातावरणशान्त्यर्थं परस्परं विचारविनिमयपूर्णनीतेरनुसरणं कर्तव्यम्। २. राजनीतिकबन्दिनो मुक्ता भवेयुः। ३. प्रगतिशील-राजनीतिकसंस्थानां विशिष्टाः सदस्या राज्यसभाया भवेयुः। ४. प्रधानलार्डइरविनघोषणाया आशयेन यत् किमपि कथितं तदर्थः कीदृशोऽस्तीति विषये वयं सन्दिग्धाः। अस्माकं सम्मतौ जनेष्वस्यानुभवो नूतनमानदण्डो यत एव नवीनयुगस्यारम्भो भवेत्। नवीनविधानं देशस्यैतां भावनां सुस्थितामेव करोतु नाम।

अस्य नवीनविचारस्य कारणं कर्मकरशासनस्य उदारा दृष्टिरासीत्। एतस्मिन्नेव समये स्नेतानगुटवा पार कर भारतसहायतायाः प्रयत्नो ऽपि धन कर्मकर शासनस्य साहाय्याय प्रेरितवन्तः।

समूहे कोऽपि नास्ति विरोधो यदि कार्ये व्यवहारे च तस्य शब्दसमूहस्य रक्षा भवेत्। यदि व्यवहारतो नूनमौपनिवेशिकस्वराज्यं मिलेत्तदा तस्य विधानार्थमहं प्रतीक्षामपि कर्तुं शक्नोमि। किन्तु हृदयपरिवर्तनं तात्त्विकं भवेदेतस्यैव आवश्यकता सपदि विद्यते। श्वेताङ्गाः भारतं स्वतन्त्रं स्वाभिमानसम्पन्नञ्च मानयन्तु। भारतेऽधिकारिमण्डलस्य भावना च सत्यपरिपूर्णा भवेत्। किं श्वेताङ्गाः स्वकीयधनप्राणरक्षार्थं स्वकीयदुर्गाणां नालिकायन्त्राणाञ्च स्थाने प्रजायाः सद्भावनाया विश्वासं कर्तुं तत्परा वर्तन्ते? यद्येतादृशं कार्यं कर्तुं ते न तत्पराः, तदौपनिवेशिकस्वराज्यमपि मां नैव सन्तुष्टीकरिष्यति। औपनिवेशिकस्वराज्यस्य ममायमेवार्थो 'यद्यहं विचारयेयं तदा तत्क्षणं श्वेताङ्गशासनतः सम्बन्धविच्छेदं कुर्याम्।' ब्रिटिशभारतयोर्मध्ये बलात्कारो नैव चलिष्यति" इति।

अनन्तरं लाहापुर्यां सर्वदलाधिवेशनमभूत्। तत्र प्रस्तावस्य कृतेः पूर्वमेव रत्नः सुभाषचन्द्रबोसश्च कार्यसमितेस्त्यागपत्रं प्रदत्तवन्तौ। मुक्तामणिश्च महान् क्षोभितो बभूव। स एव ज्ञातवान् यद् ब्रिटिशमन्त्रिमण्डलं यत्किञ्चिदपि निश्चिनोति, तस्मिन् भारतीयाः स्वराज्यं श्वेताङ्गा ब्रिटिशराज्यञ्च पश्यन्तु इति।

## लार्डइर्विन-साक्षात्कारः

अथैकस्मिन्दिने मुक्तामणिमोहनदासौ प्रधानलार्डं साक्षात्कृतवन्तौ। तत्र लार्डप्रधानो वन्दिनां मुक्तिविषये वार्तामारब्धवान्। किन्तु महात्मागान्धी औपनिवेशिकस्वराज्यविषये वार्तां विधातुमुद्यत आसीत्। तस्यायमिति विचार आसीत् यत् भाविनी गोलमेजपरिषदपि औपनिवेशिकस्वराज्यस्याधारे कृता भवेत्। किन्तु वार्तावसरे लार्डप्रधानः स्पष्टमेवोक्तवान् यत् 'लण्डनं स्वयं विचारं स्वधीकृतवान्। इतः परमहं किमपि कर्तुं न समर्थः। नास्ति चैतादृशी परिस्थितिर्यया औपनिवेशिकस्वराज्यघोषणां कृत्वा गोलमेजपरिषदाहूता भवेत्।' लार्डस्य इर्विनस्यैतादृशं वचनं श्रुत्वा सर्व एव निराशा भूत्वा परावृत्ताः।

हेमन्तर्तौ उत्तरभारतस्य काङ्ग्रेसाधिवेशनं रत्नस्याध्यक्षत्वे लाहौरे सम्पन्नमभूत्। तत्राल्पवयस्कोऽपि रत्नः प्रभावपूर्णं भाषणमदात्। स स्पष्टं कथितवान् यत् 'लार्डमहोदयस्य भाषणं श्रवणे दर्शने च सुन्दरं मेलनकारकञ्च। किन्तु यत्र यस्यां कठोरपरिस्थितौ स्मः, तस्यां मधुरेण वाक्येन किमप्यन्तरं नैव भविष्यति। न खलु वयं स्वेच्छया कमपि कठोरसमानारम्भं कुर्मः। सामञ्जस्यस्य द्वारमिदानीमप्युद्घाटितमेव वर्तते। किन्तु पेजज्ञुल्सनेस्य व्यावहारिकीयनिर्देशश्चिह्नम्बरस्यमस्माकं कृते व्याख्यानमेव। वयं कलिकाता-काङ्ग्रेसाधिवेशनप्रस्तावे दृढाः स्मः। अस्माकं सम्मुखे पूर्णस्वाधीनताया एकमात्रं लक्ष्यमस्ति।'

ततः परमलब्धख्यातिकजानीना देशीयराजन्यवृन्दप्रकाशनस्य विषये विचारं कुर्वन्नसौ कथितवान् यद् 'हिंसायाः परिणामो बहुधा विपरीत एव भवति। अस्माकं देशे बहवो जना नैतिकदृष्टिमपहाय केवलं व्यावहारिकदृष्ट्यैव विचारयन्ति। किन्तु वयं हिंसामार्गं सत्यहेन विचारं परित्यक्तवन्तः। भारते हिंसया विनाश एव भविष्यति। स्वतन्त्रतायाः कस्मिंश्चि-दप्यान्दोलने जना योगदानं कुर्वन्तु, किन्तु तदान्दोलनं शान्त्यैव भवेत्। सविनयावज्ञान्दोलनस्य वार्ता पृथगेव। साफल्यं कियत् कदा वा मिलिष्यति, तन्नास्ति मदधीनम्। किन्तु निश्चितमिदं यत् यः साहसं कृत्वा कार्यक्षेत्रेऽग्रसरो भवति, विजयवैजयन्ती तमेव वृणीते' इति। अन्ते रत्नोऽकथयत् यत् 'परिणामादत्यभीतो भाग्यहीनः साफल्यं कदापि नैव प्राप्नोति' इति।

एतेन विचारेण श्रीरत्नो श्रीगान्धी च उभावपि सहमतावास्ताम्। सम्भावितद्वितीयगोलमेजपरिषदि योगदानेन काङ्ग्रेसस्य कोऽपि लाभो नास्तीत्यपि विचारस्तत्रैव सुस्थिरोऽभूत्। काङ्ग्रेसमहासमितिः स्वकीयरचनात्मककार्यपूर्त्यर्थं यदा यत्र चेच्छेत्तदैव सविनयावज्ञान्दोलनमारभेत, अयमप्यधिकारो महानेतृगान्धिमहाशयायैव प्रदत्तः। पुनस्तत्रैव राज-

सभाबहिष्कारप्रस्तावोऽपि पारितोऽभूत्, तदनुसारं सप्तविंशतिराज्यसभासदस्यास्त्यागपत्रं प्रदत्तवन्तः ।

सर्वत्रायोजिते स्वतन्त्रतादिवसे सार्वजनिकघोषणा चेत्थमभूत्—'अन्यदेशवासिन इव वयं भारतीया अपि स्वतन्त्रा भविष्यामः । स्वातन्त्र्यमस्माकं जन्मसिद्धोऽधिकारः । वयमवश्यमेव परिश्रमफलं भोक्ष्यामहे । जीवननिर्वाहार्थञ्च सर्वमावश्यकं सौविध्यमाप्स्यामो यस्मिन् विकासस्य पूर्णोऽवसरो भविष्यति । श्वेताङ्गशासनेन न केवलं भारतीयस्वातन्त्र्यमेवापहृतम्, किन्तु स्वातन्त्र्यस्याधारोऽपि । दरिद्राणां रक्तशोषणं दरीकृत्य राजनीतिकार्थिकसामाजिकाध्यात्मिकदृष्ट्यापि तेन भारतवर्षं विनाशितम् । अतो वयं विश्वसिमो यद्भारतं श्वेताङ्गशासनतः सम्बन्धं विच्छिद्य पूर्णं स्वराज्यं प्राप्नुयात् । देशे स्वराज्यस्थापनार्थं यथासमयं काङ्ग्रेससंस्था यमादेशं प्रदास्यति, तस्य पूर्णतया पालनं करिष्याम इति सशपथं वदामः ।

अनन्तरं प्रान्तकाङ्ग्रेसादेशात् द्विसप्तत्यधिकशतसंख्यकाः सदस्याः धारासभात्यागं कृतवन्तः ।

: ११ :

# सविनयावज्ञान्दोलनम्

स्वाधीनतादिवसकृतप्रतिज्ञावद्धान्वितो मोहनदासगान्धी देशस्य सर्वावस्था विज्ञाय सत्याग्रहस्यायमेवावसर इति निश्चितवान् । किन्तु सर्वेषा-मेव मनसि प्रश्नोऽयमासीत् यदयं सत्याग्रहः केन प्रकारेण विधातव्यः । सहसा लवणमिति शब्दश्चमत्कारपूर्णो जातः । लवणनियमभङ्गो विधातव्य इति श्रीगान्धिनो घोषणाप्यभूत् । किन्तु श्रीरत्नेनालोचितं किं लवणनियमभङ्गेन देशः स्वतन्त्रो भविष्यतीति ।

एतस्मिन्नेव समये प्रधानलार्डेरविन मोहनदासगान्धिनोः पत्र व्यवहारे महात्मा गान्धी लार्डं स्वकीयं लवणनियम-भङ्गविचारं सूचितवान् । गान्धिनो दाण्डीयात्रारम्भवार्तां[1] श्रुत्वा सर्वे जना समुत्साहवन्तो बभूवुः ।

अहमदाबादे कांग्रेसनेतृणां सम्मेलने सर्व एव समुपस्थिता जनाः सविनयावज्ञान्दोलनं विधातुं प्रतिज्ञाय भारतस्य विभिन्नभागेषु गतवन्तः ।

ततः परावर्तमानौ मुक्तामणि-श्रीरत्नौ कतिपययात्रिभिः सह जम्बूसरे निवसन्तं श्रीगान्धिनं साक्षात्कर्तुं गतवन्तौ । श्रीगान्धी च ताभ्यां सह वार्तां विधाय ततोऽन्यत्र जगाम । आगत्य च तारापुरीं मुक्तामणिः स्वकीयं भवनमेकं कांग्रेसकार्यालयाय प्रदत्तवान् ।

## लवणनियम-भंगः

सत्याग्रहार्थं सागरतीरनिवासिनो गान्धिन आदेशं प्रतीक्षमाणः श्रीरत्न-स्तारापुरीं निवसन्नेवासीत् । सहसा श्रीमहात्मा गान्धी दाण्डी[1]नामकस्थाने लवणनियमं भङ्क्त्वा सविनयाज्ञाभङ्गान्दोलनार्थं देशवासिभ्य आज्ञा

1. बम्बईसमीपवर्ती दाण्डीनामकः साधारणग्रामः ।

प्रदत्तवान् । ततस्तूर्णमेव नगरेषु ग्रामेषु सर्वत्र लवणनिर्माणकार्यारम्भोऽभूत् । श्रीरत्नोऽपि लवणनिर्माणं कृत्वा रायपुरस्थैकस्या सभाया गच्छन् बन्दीभूत्वा षण्मासेभ्यो दण्डमवाप । महद्बलवत्यस्मिन् आन्दोलने जनानां लगुडप्रहारो बन्दीकरणं गुलिकार्पणम्, एवमादि निरोधकं कार्यं कृतं शासनेन । अस्मिन् स्त्रियोऽपि महत्तमं सहयोगमकार्षुः । महात्मा गान्धी मुक्तामणिश्चापि बन्दिनौ भूत्वा कारागारं गतवन्तौ । सप्तवर्षाणि यावद्राष्ट्रकार्यकरणानन्तर श्रीरत्नोऽपि कारागारमवाप । एतस्य कारागारो सर्वेभ्यः कारागारेभ्यो भिन्न एवासीत् ।

भारतीयस्वातन्त्र्यकर्मणि देशे सर्वत्र भ्रमणेन कठिनपरिश्रमेण च श्रान्तः श्रीरत्नो कारागारे शून्यतामनुभवन् द्वित्रिदिवसपर्यन्तं केवलं सुष्वाप । ग्रीष्मर्तुकाले प्रान्तशासनादेशस्य श्रीरत्नस्य चतुष्पादिका कारागाराधिकारिभिर्लोहशृङ्खलया निबद्धा । तत्र शङ्कायमाना रक्षिणो बन्दिनमस्य रक्षणं चक्रिरे । रात्रौ रक्षिणा प्रधानकर्मचारी नियतसमये स्वागत्य तत्रस्थाना बन्दिना वृत्तं विज्ञाय पुनर्गच्छमासीत् । किन्त्वेतेन दैवभक्तस्य श्रीरत्नस्य किमपि प्रयोजनमासीत् । एतस्मिन्नाशये महदपराधिन एव निरुद्धा आसन् ।

कियत्कालपर्यन्तं श्रीरत्नस्य कृते व्यायामकरणार्थमन्यकार्यार्थं वा बहिर्गमनस्यादेशो नासीत् । किन्तु पश्चात्तदनुसृतः कारागारनिरीक्षकैर्धर्मपरिपालनार्थमादेशः । तत्र दैनिकवृत्तपत्रमल्पवाप्यापि शासनविरुद्धपक्षेण भारतीयान्दोलनस्य समाचारमज्ञातस्य श्रीरत्नो व्यथितमना बभूव । यदा भारतीयाः स्वातन्त्र्यान्दोलननिरतास्तस्मिन्नेव समये जीवन्ता अपी कारागार-नियमैर् दुःखमेवासेदे ।

सुचारुः : कारागारगमनात्पूर्वं डॉ०मन्नेव राष्ट्रप्रधानेन कार्यकर्तार्यसमिति प्रतिबन्ध्य आदिष्टं यत् 'यदि सन्निविष्टस्य यत्र क्वापि विचारार्थं एकत्रा भविष्यन्ति तर्हि तत्रैव बन्दिनो भविष्यन्तीति ।

कारागारागमनसमये सुगमानि दीर्घकालपूर्णानि शरीर उदासीनमनाश्चासीत् ।

कारागारेऽप्यधिकारिभिर्यत्रासौ निवासितस्तत्रत्या स्थितिर्नरकतुल्या आसीत्। अतस्तस्य तस्मिन् कारागारनिवासे महद् दुःखमभूत्।

यत्र कारागारे श्रीरत्न आसीत्तत्रैव त्रिषु भवनेषु नवोऽन्येऽपि बन्दिनो मुक्तामणिदेशा कुर्वन्त आसन्। कारागाराधिकारिभिर्मुक्तामणिमन्यत्र नेतुं कृतः प्रयासस्तैर्विफलो व्यधायि। तत्र मुक्तामणेः सेवायामेकोऽप्यन्यदेव सर्वदा समुपस्थित एवाभूत्। भवनाच्छादनस्य यत्र तत्र भग्नत्वाद्वर्षासु वर्षति मेघे छिद्रेण पतत्सु मुक्तामणिशय्यायां पानीयेषु तत्रस्थाः श्रीरत्नप्रभृतयो बन्दिनो विस्तीर्णमास्तरणं क्व नेयमिति विचारयन्तो बभूवुः। यदा कदा च मुक्तामणिर्ज्वराक्रान्तोऽप्यभूत्।

एतस्मिन्नेव समये कारागाराधिकारिण एकं नूतनं भवनं निर्मातुमारभन्त। किन्तु पूर्ण एव भवननिर्माणकार्ये कारागारान्मोचितोऽभूत् मुक्तामणिः।

: १२ :

# प्रथमगोलमञ्च-परिषद्, तद्भूमिका च

इत्थमवज्ञान्दोलने बहुषु जनेषु बन्दिमन्दिरं गतेषु शासनेन सह सन्ध्यर्थं चेष्टमानौ सप्रूजयकरौ श्रीगान्धिनं पत्रेण सहैकस्मिन्दिवसे श्रीरत्नस्य समीपमागतवन्तौ। एतस्य सन्धिप्रयासस्य वार्ता श्रीरत्नेन पूर्वमपि वृत्तपत्रे पठिताऽऽसीत। सभूतायामपि बहुवार्तायामैकमत्यं नाभूत्। श्रीरत्नः स्पष्टमवदत्—'श्रीगान्धिना सह वार्तामन्तराऽहं किमपि निश्चेतुं नैव शक्नोमी'ति।

अनन्तरं सप्रूजयकरौ प्रधानलार्डसमीपं गत्वा विधाय च वार्तां कारागारमागत्य श्रीरत्नं कथितवन्तौ यद् भवता स्वपित्रा सह यरवदा-कारागारनिवासिनं श्रीगान्धिनं सकाशं गत्वा विचारं कर्तुं शक्यते। किन्तु शासनविरुद्धमान्दोलनकारिणा वल्लभभाई-मौलानाअबुलकलामाजादादीनां साक्षात्कारः कदापि नैव कर्तव्य इति। एतस्मिन्समये प्रथमगोलमञ्च-परिषदो वार्ता चलन्त्यासीत्।

द्विनिदवसानन्तरमेव मुक्तामणि, महमूद, श्रीरत्नश्चैते त्रयो विशेष-वाष्पयानेन यरवदाकारागारे गतवन्तः। तत्र सर्व एव नेतारो मिलित्वा श्रीगान्धिना सह वार्तां चक्रुः। शासकीयौ मध्यस्थौ सप्रूजयकरौ कांग्रेस-मध्यस्थश्च श्रीमहात्मा गान्धी आसीत्। मुक्तामणिश्रीरत्नौ कथितवन्तौ—'यावन्मुख्यविषयेषु मतैक्यं न जायेत, तावत्तस्यापि परिषदः कोऽपि लाभो नास्ति, किं पुनः गोलमञ्चपरिषदः।' अनन्तरं सर्व एव समवेता नेतारः स्व स्व कारागारं प्रस्थिताः। एतस्याः परिषदः वृत्तं पश्चात्प्रकाशितमभूत्।

प्रधानलार्डेन एकस्मिन् भाषणे उक्तं यद् अहन्तु प्रान्तीयशासनाना सविधे राजनीतिकबन्दिनां मुक्त्यर्थं प्रेरणामेव कर्तुं शक्नोमि, किन्तु तेषाम-पराधे विचारस्तैरेव कर्तव्य इति। कियत्कालं यावद्गान्धि-प्रधानलार्डयोः प्रचलत्यपि पत्रव्यवहारे किमपि फलं नाभूत्। सप्रू-जयकरयोर्नीतिमाः असाफल्येन देशहितैषिणो नैराश्यता नैवाप्तवन्तः।

## प्रथमगोलमञ्चपरिषद्

अनन्तरं लन्दनस्य सुसज्जिते विशाले राजकीये भवने महता उत्साहेन गोलमञ्चपरिषत् समुद्घाटिता बभूव। एतस्यां परिषदि भारतस्थितदेशीय-राज्यानां षोडश ब्रिटिशभारतस्य सप्ताधिकपञ्चाशत् लन्दनस्थितस्थित-विभिन्नदलानां त्रयोदशैवेति षडशीतिप्रतिनिधयः सम्मिलिताः। प्रारम्भिक-भाषणे सर्वं एवौपनिवेशिकस्वराज्यस्य चर्चां कृतवन्तः। पटियाला बीकानेरा-ल्वरभूपालप्रतिनिधयः संघराज्यस्य पक्ष आसन्।

प्रधानमन्त्री कथितवान् यत् शासनविधानस्य साफल्यार्थं प्रथमं व्यावहारिकं रूपं प्रदाय तदनन्तरं तद्विकासोऽपि विधेयः। या शासनव्यवस्था विकासशीला भविष्यति, सा भाविसन्ततिः वरदानं मानयिष्यतीति।

अनन्तरं संघटिताः कतिपयोपसमितयो रक्षाधिकारे सीमान्तविवादेऽल्प-संख्यकयाचनाविषये बह्मदेशे शासकीयकर्मचारिविषये च स्वीयं विचारं प्रकटितवत्य। पश्चात्प्रधानमन्त्री भारतस्य भाविशासनविषये घोषणा कृत्वा परिषद् समापितवान्।

गोलमञ्चपरिषदः सप्ताहाभ्यन्तर एव सत्यार्थी महात्मागान्धी कारागारान्मुक्तिमवाप। तस्मिन्नवसरे प्रधानलार्डभाषणं शब्दाडम्बर-दृष्ट्याऽतीव सुन्दरमासीत्।

: १३ :

# कांग्रेस-कार्यसमितेः प्रस्तावः

अथ प्रयागे कांग्रेसकार्यसमितिर्निम्नलिखितमेकं प्रस्तावं पारितवती—"इयं सभा गोलमञ्चपरिषदि ब्रिटिशराज्यसभासदस्यैः भारतीयनरेशप्रतिनिधिभिः ब्रिटिशराज्यसमर्थकैश्च पारितं प्रस्तावं मानितुमसमर्था वर्तते। प्रस्तावसमर्थकानां मध्ये नासीदेकोऽपि मान्यः कांग्रेससदस्यः। अस्याः समितेर्विचारे गोलमञ्चपरिषद्भारतीयानां प्रतिनिधीनां विचारज्ञानार्थमेकं प्रदर्शनमेवासीत्। वस्तुतो देशभक्तं श्रीरत्नं श्रीगान्धिनं मुक्तामणिञ्च कारागारे निबद्ध्य सत्याग्रहिषु लगुडप्रहारं कृत्वा श्वेताङ्गशासनं भारतीयजनानां स्वतन्त्रताशब्दमवरोद्धुमसफलं प्रयत्नं चकार। इयं समितिर्ब्रिटिशप्रधानमन्त्रिणो रेम्जेमैकडानल्डसाहबस्य घोषणां पठित्वा तामस्पष्टां साधारणीञ्च मत्वा नैव स्वीकरोति। लाहौरस्य पूर्णस्वाधीनताप्रस्तावे दृढा चेयं समितिर्यरवदायां श्रीरत्न श्रीगान्धि मुक्तामणिभिः प्रकटितं विचारं समर्थयति। देशवासिनः स्वाधीनतादिवसं सोत्साहं सम्पाद्यैतत् सिद्धं कुर्वन्तु यद्देशवासिनो निर्भया आशान्विताश्च भूत्वा स्वाधीनतासंग्रामे तत्परा वर्तन्ते।"

अस्मिन् समये कांग्रेसकार्यवाहकाध्यक्षः श्रीराजेन्द्रप्रसाद् आसीत्।

प्रस्तावाः प्रकाशिता भवन्तु न वेति समुत्पन्ने विचारे 'मम लन्दनयानातः प्रत्यावर्तनात्पूर्वं किमपि नूतनं कार्यं नैव विधेयं भवद्भिरिति प्रार्थनापरिपूर्णं श्रीसप्रूमहाशयस्यैकं पत्रं कांग्रेसकार्यसमितिसदस्यानां सविधे समागतम्। किन्त्वेतैः पारितानां प्रस्तावानां प्रतिलिपिः शासनस्य समीपे गतासीत्।

———

: १४ :

# कृषकान्दोलने रत्नदम्पत्योः कारागारः

अस्वस्थत्वात् कारागारदण्डावधिपूर्वमेव मुक्तो मुक्तामणिः भार्यया प्रभावत्या सह स्वास्थ्यलाभार्थं मसूरीं जगाम। पञ्चमासपर्यन्तं कारागारदण्डं समुपभुज्य मुक्तः श्रीरत्नोऽपि स्वभार्यया रमया सार्धं पितृपादानां दर्शनार्थं मसूरीं गतः। तत्र सर्वामेव समुचितां व्यवस्थां विधाय स पुनस्तारापुरीमागत्य कृषकान्दोलनाय पूर्णं योगदानमकरोत्।

एकस्मिन्दिवसे कृषकसम्मेलनस्यायोजनं तारापुर्यामेवाभूत्। तस्मिन्नेव दिने मुक्तामणेरपि मसूरीतः प्रयागे प्रत्यावर्तनं निश्चितमासीत्। एकस्यां कृषकसभायां भाषणं दत्त्वा स्वपितुरानयनार्थं श्रीरत्नस्तैलयानेन वाष्पविश्रामस्थानं जगाम। किन्तु वाष्पयानस्यागमने विलम्ब आसीदिति कृत्वा पुनरप्यसौ अन्यस्यां कृषकसभायां भाषणं प्रदातुं परावृत्तः। तत्र सभाकार्यं समाप्य धर्मपत्न्या रमया सह समागच्छन्नसौ मार्गे बन्दीभूत्वा पुनः कारागारं जगाम। अनेकेष्वभियोगेषु वर्षद्वयार्थं कारागारदण्डमवाप श्रीरत्नः। एषा खलु तस्य पञ्चमीकारागारयात्रासीत्।

विलम्बतः तारापुरीमागतो मुक्तामणिः स्वपुत्रस्य कारागारगमनवृत्तं श्रुत्वा रोगाक्रान्तोऽपि हस्ताभ्यां मञ्चं प्रताड्य अहं खलु रोगी भूत्वैव न स्थास्यामि, किन्तु पुनरेव कार्यं करिष्यामीति प्रोक्तवान्। किन्तु विधेर्विधानमन्यदेवासीत्। प्रतिदिनमसौ क्षीणतामेवापेदे।

श्रीरत्नस्य कारागारगमनात् कृषकाणां करावरोधान्दोलने महद्बलमायातम्। सर्व एव करावरोधान्दोलनकारिणस्तारापुरीतः अन्यत्र गत्वा आन्दोलनप्रचारकर्मणि संलग्नाः। ते ग्रामेषु नगरेषु जनपदेषु च सभाः

संस्थापितवन्त । पुन श्रीरत्नस्य जन्मदिवस आयोजितासु बर्हीषु सभासु जनाना भा,णान्यपि बभूवु ।

दण्डप्रदानेऽपि सत्याग्रहिणा साफल्यं विचार्य निष्प्रभा शासका कतिपयबन्दिनामुपरि वेत्रप्रहारमकुर्वन् । तद्विरोधे श्रीरत्न दिनत्रयमुपवासं चकार। तत पर श्रीमदनमोहनमाल्वीयोऽपिस्वकीयकारागारदण्डमुपभोक्तु श्रीरत्ननिवासकारागार एव समाजगाम । यद्यपि माल्वीयस्य वासगृह श्रीरत्नवास गृहाद्भिन्नमासीत्, तथापि तस्य समीप प्रतिदिन गत्वा तेन सह पूर्ण परिचय चकार स । श्रीमदनमोहनमाल्वीयो मूर्तिमानानन्द एवासीत् ।

स्वकीयचिकित्सार्थमेकदा मुक्तामणि कलिकाता गत आसीत्। अनन्तर श्रीरत्नधर्मपत्नी रमापि कारारोधान्दोलने बन्दिनी भूत्वा जगाम कारागारम् । कारागारगमनसमये सा तत्र समुपस्थितमेक पत्रप्रति निधिमित्थमुक्तवती—'स्वपते पदचिह्नमनुसरन्ती परम प्रसन्नाह विश्वसिमि यद् भवन्त पताकामेतामवनता नैव करिष्यन्ति ।' कलिकातायामस्वस्थ एव मुक्तामणि पुत्रवध्वा कारागारगमनवृत्त श्रुत्वा त्वरितमेवतारापुरीमागत ।

तत स श्रीरत्न साक्षात्कर्तु जगाम कारागारम् । तत्र श्रीरत्न स्वजनक क्षीणकलेवरमवलोक्य चिन्तितोऽभूत् । किन्तु मुक्तामणिस्तमुवाच—'पुत्र ! पूर्वापेक्षयाहमिदानीं स्वस्थोऽस्मी'ति । मम पितुरन्तिम समय समागत इति विचारणापि नासीत्तस्य चेतसि ।

: १५ :

# मुक्तामणेर्महाप्रयाणम्

अथ स्वतन्त्रतादिवसे यदा गान्धिवर्यस्य कार्याणां सिंहावलोकनं कुर्वन्नासीच्छ्रीरत्नस्तदैव कश्चित् कारागारकर्मचारी समागत्य उवाच—'तव पितुः स्वास्थ्यमतीव क्षीणं चिन्ताजनकञ्चास्ति, अतस्त्वं कारागारान्मुक्तोऽसि । गच्छ स्वगेहमि'ति । त्वरितमेवासौ स्वपितुः समीपमागतवान् कारागारात् ।

यस्मिन्दिने श्रीरत्नः कारागारान्मुक्तस्तस्मिन्नेव दिवसेऽन्येभ्योऽपि बहुभ्यः कारागारेभ्यो बहवो जना मुक्ताः । मुक्तश्च महात्मा गान्धी तं द्रष्टुं व्याकुलस्य मुक्तामणेः समीपमाजगाम त्वरितमेव तारापुर्याम् ।

समागते श्रीगान्धिनि तारापुर्यामेव समुपस्थितेषु बहुषु सदस्येषु काङ्ग्रेसकार्यसमितेरधिवेशनमभूत् । तत्र 'सविनयाज्ञाभङ्गान्दोलनमवरोद्धुं यावत्कार्यसमितेरादेशो न भवेत्तावत्तत्प्रचलेदेव । तथैव मद्यस्य विदेशीयवस्तूनाञ्च बहिष्कारः पूर्णतया भवेदि'ति प्रस्तावः पारितो जातः । मुक्तामणेरस्वस्थत्वात् कार्यसमित्यधिवेशने रत्नो न सम्मिलितः ।

एकस्मिन्दिवसे श्रीगान्धिनं प्रोवाच मुक्तामणिः—'महात्मन् ! स्वतन्त्रं भारतं द्रष्टुमहं नैव स्थास्यामि । भवता स्वराज्यं विजितम् । शीघ्रमेव भवतो हस्ते तत् समागमिष्यति । अहन्तु त्वरितमेव महाप्रस्थानं करिष्यामी'ति ।

ततः कार्यसमितिसदस्याः प्रस्थिताः । केवलं जीवराजमेहता, असारी, विधानचन्द्ररायश्चैते सुप्रसिद्धाश्चिकित्सका मुक्तामणिचिकित्सार्थं तारापुर्यां संस्थिताः ।

एकस्मिन्दिवसे मुक्तामणिः किञ्चित्स्वस्थ इवादृश्यत, तदा तस्य

स्वास्थ्य परीक्षितु त सर्वे लखनऊनगर नीतवन्तस्तैल्यानेन । महात्मा गान्धी अपि सदैव गतवानासीत् । तस्यामेव रात्रौ मुक्तामणिरतीव व्यग्रो जात । तस्मै निद्रापि नायाता ।

सहसा द्वितीयदिवसे मुक्तामणि शान्तं विलोक्य स्वपिति इति रत्नो मानितवान् । किन्तु तन्माता प्रभावती शलरर्ता यदसौ महानिद्रायामेव सुप्तः । एवं ज्ञात्वा सा छिन्ना कदलीव मूर्च्छिता भूमौ निपपात । सर्व एव जना विस्मिता बभूवु । रत्नश्च स्वपितरमुपरत विज्ञाय साश्रुधारो बभूव । तत्रैव समुपस्थितो गान्धी महात्मा त प्राबोधयत् । उपरते मुक्तामणौ तत्र महान् जनसम्मर्द समुपस्थित । रत्न शून्यचेता इवासीत् ।

तदनन्तर तैल्याने मुक्तामणिशरीर सस्थाप्य सर्वे जनास्त्रिवेण्या सगमे नीतवन्त । तत्रैव वैदिकविधिना रत्न स्वपितुरन्तिम सस्कारमकरोत् । सर्व एव जनास्तत्र सगमे मुक्तामणिनाम्ना जलाञ्जलि दत्वा मुक्तामणिभवनमागतवन्त । गान्धिन विहाय सर्वे एव जना स्वावास गतवन्त । पुन श्रीरत्नो वैदिकेन विधिना मुक्तामणे पिण्डदानादिक्रिया निधाय बहून् ब्राह्मणान् भोजयामास ।

एकस्मिन्दिवसे महात्मा गान्धी श्रीरत्न प्रोवाच—"तात, किं कथयामि, सर्वोदास्यपरिपूर्णं मुखमवलोक्य चिन्तितोऽप्यहमतीव चिन्तासमुद्रे निमग्नो भवामि । जानात्येव भवान्, यथा महान् राजनीतिज्ञो देशभक्तश्च मुक्तामणिर्नैव शोचनीयोऽस्ति । तस्याचला कीर्तिर्भारते सर्वदैव स्थास्यति । ब्रह्मादिकीटपर्यन्त सर्वमेवेद जगद्विनाशशीलम् । सगर राम युधिष्ठिर प्रभृतयो महाशक्तिशालिनोऽपि राजानो विहाय भूतल महापथपथिका सवृत्ता । प्रतिदिनमेव जना शरीरमिद विहाय परम धाम गच्छन्त्येव । ये खलु भूतलस्था प्राणिनस्ते सर्वे एव धनधान्यपरिपूर्णं सर्वसौख्यसमन्वित भवन पत्नीं पुत्र पशुं तैल्यान वाष्पयान वायुयानादिकञ्च विहाय परलोक गता, गच्छन्ति गमिष्यन्ति च । केवल परमात्मान विहाय नास्त्यन्य दविनाशि किमपि । सर्वेषामेव प्राणिनामत्र सगम पान्थसगम इव । यथा

बहवो पान्था एकस्मिन् कूपे समवेता भूत्वा भोजनपानादिकं सहारं विधाय स्वकीयं गन्तव्यस्थानं गच्छन्ति, तथैवास्मिंल्लोके कियद्वर्षाणि यावदेकत्र स्थित्वा पुनः स्वकर्मानुकूलमपरं लोकं गच्छन्ति प्राणिनः। केवलं कीर्तिरेवात्र तिष्ठति। कीर्तिशाली मानवो मृतोऽपि जीवित एवेति शास्त्रे निर्णयः—'कीर्तिर्यस्य स जीवति'।

"विचारयतु भवानेव, यथा ते पिता मुक्तामणिः स्वनामधन्यो विख्यात-श्चासीत् संसारे। तस्य कीर्तिरपि सर्वत्रैव वितता विभाति। सर्वथा चिन्तां विहाय स्वस्थो भव। धैर्यपूर्वकं सर्वं कार्यं कुरु। पूज्या माता सर्वदैव मान्या, देशसेवा सर्वदैव कर्तव्ये" ति। प्रबोध्यैवं मोहनदासो गान्धी तारापुरतः प्रस्थितः।

---

: १६ :

# इरविन-गान्धिनोः सामञ्जस्यम्

भारतस्य राजनीतिकस्थितिरिदानीं शोकपरिपूर्णाऽऽसीत्। लन्दने सर्व एव जनाः प्रायेण भारतस्य स्वाधीनतायाः कृते महान्तं चीत्कारं कुर्वन्तो बभूवुः। भारते च दमनचक्रस्य प्रभाव आसीत्। यस्मिन्दिवसे, प्रायेण यस्मिन्समये मुक्तामणेर्देहावसानमभूत् तस्मिन्नेव दिवसे तस्मिन्नेव समये गोल्मञ्चपरिषदः सदस्याः सप्रू जयकर श्रीनिवासशास्त्रिप्रभृतयो लन्दनतो बम्बईनगरे जलयानादवतीर्णाः। ते च राष्ट्रियमहासभासदस्यान् सम्बोध्यैकं भाषणं प्रदत्तवन्तो यदिदानीमपि गोलमञ्चपरिषदेका प्रतारणैव विद्यते भारतीयानां कृते।

अस्माकञ्च महतीच्छा वर्तते यत् काङ्ग्रेसस्य अन्येषाञ्चापि सर्वदलानां सदस्या अग्रे समागत्य पूर्णं विचारं कुर्वन्तु। अत्रान्तं भारतीयवातावरणं तथा शान्तं वर्तं य यथा आवश्यकविषयेषु विचारो राजनीतिकबन्दिनां मुक्तिश्च भवेताम्।

गोल्मञ्चपरिषदो नेतारो बम्बईतः तारापुरीमेव आगताः। तत्रैव मोहनदासोऽप्यासीत्। अन्येऽपि कतिपयकाङ्ग्रेसकार्यसमितिसदस्याः आसन्। भारतस्य गृह एवैकमधिवेशनमभूत् कार्यसमितेः।

गोलमञ्चपरिषदः सदस्या गान्धिना सह पूर्णरीत्या तर्कवितर्कं कृतवन्तः। पश्चान्निश्चितं बभूव यद् गान्धी महात्मा लार्डप्रधानसमीपे पत्रमेकं लिखतु।

महात्मा गान्धी च त्वरितमेव तत्परो भूत्वा पत्रमेकं लिलेख। एतस्मिन्नपि समये भारते श्वेताङ्गानां दमनकार्यं पूर्णतया व्याप्तमेवासीत्।

श्रीगान्धी पत्रेऽस्मिन् भारते प्रचलितोऽत्याचारस्य बोरसदे सम्भूतस्य स्त्रीणामुपरि महदत्याचारस्य च चर्चां कुर्वन् सैनिककार्याणां निष्पक्षविचारस्य प्रार्थनां चकार । किन्तु पत्रस्यैतस्य कोऽपि विचारो नाभूत् ।

तदनन्तरं 'ननु मनुष्ये ऽहमिति भवन्तं साक्षात्कृत्य भवता सह वार्तां कर्तुमिच्छामी'ति भावपरिपूर्णमेकं पत्रं पुनरपि न्यलेखि लार्डप्रधानसमीपं गान्धिना। तस्य पत्रस्य त्वरितमेवोत्तरं सम्प्राप्य महात्मा दिल्लीं प्रस्थितवान्। कांग्रेसकार्यसमितेः कतिपयसदस्या अपि त्वरितमेव दिल्लीं गत्वा लार्ड-प्रधानेन सह वार्तां कर्तुं सर्वाधिकारं गान्धिने प्रददुः। मोहनदासो गान्धी बहुवारमिरविनस्य समीपं गतवान्, किन्तु कोऽपि निर्णयो नाभूत्। इत्थं पञ्चदशदिवसपर्यन्तं भूताया वार्तायामेकस्मिन्दिवसे गान्धिनः प्रधानलार्डेन सह मतैक्यमभूत् निम्नलिखितविषयेषु —

१. विधानसम्बन्धिप्रश्ने सम्राट्शासनस्यानुमत्या निश्चितमिदमभूत् यद् भारतीयवैधशासनस्य तस्यामेव योजनायामग्र विचारो भविष्यति, यस्या गोलमञ्चपरिषदि पूर्वं विचारोऽभूत्। तत्र या योजना निर्मिता, सा संघशासनस्यैकम् अनिवार्यमङ्गमासीत्।

२. ब्रिटिशप्रधानमन्त्रिणो वक्तव्यानुसारमेतादृशं कार्यं कर्तव्यम्, येन शासनसुधारयोजनायामग्रेऽपि विचारो भवेत्तत्र च कांग्रेसप्रतिनिधयोऽपि भविष्यन्ति।

३. सविनयावज्ञान्दोलनमवरुद्धं भविष्यति। शासनं स्वयमपि किञ्चित्कार्यं करोतु। सविनयावज्ञान्दोलनस्य वैधरूपेणावरोधस्यार्थेनार्थो यत्तेषां सर्वेषामेव कार्याणामवरोधो भवेद् यैः सविनयाज्ञाभङ्गो बलमाप्नोति।

४. विदेशीयवस्त्राणां विषये निश्चितमभूद्यत् सविनयाज्ञाभङ्गान्दोलनावरोधे ब्रिटिशवस्तूनां बहिष्कारो राजनीतिकशस्त्ररूपेण नाद्य समानयनं निश्चितरूपेणावरुद्धं भवेत्। अत एव ये सत्यान्दोलनसमये ब्रिटिशवस्तूनां क्रयविक्रयौ अवरुद्धवन्तस्ते यदीच्छेयुस्तदा पुनरप्यबाधरूपेण क्रयविक्रयौ कर्तुं शक्नुवन्ति।

५ विदेशीयवस्तूना स्थाने भारतीयवस्तूना व्यवहार कर्तुं मद्यादीना व्यवहारावरोधार्थञ्च ये खलु कार्यकारका उपाया विद्यन्ते तेषां, सम्बन्धे निश्चितमिदमभूद्देतादृशा उपाया कार्ये नैवानेतव्या, ये राजकीय नियमोल्लङ्घन भवेत् ।

६. सविनयाज्ञाभङ्गान्दोलसम्बन्धिनो ये नियमा प्रचालितास्ते सर्व एवावरुद्धा भवेयु ।

७. या सस्था नियमरहिता घोषितास्ता खलु पुनर्वैधा भवेयु ।

८. सविनयावज्ञासम्बन्धिन सर्व एवाभियोगा समाप्ता भविष्यन्ति ।

९. ते सर्व एव बन्दिनो मुक्ता भविष्यन्ति, ये खलु सविनयाज्ञाभङ्ग सम्बन्धे बन्दिनो भूता ।

१०. जनेषु लग्ना सर्व एवार्थदण्डा नैव गृहीता भविष्यन्ति । किन्तु गृहीतार्थदण्डा नैव प्रदत्ता भविष्यन्ति ।

११. सविनयावज्ञान्दोलने येऽपार्श्वद्विशिष्टस्थानवासिना व्ययेन ये सैनिका नियुक्तास्ते प्रान्तीयशासनाना निश्चयेन समुत्थापिता भविष्यन्ति । किन्तु जनेभ्यो गृहीता व्ययादधिका अभ्यर्था नैव पुन प्रदत्ता भविष्यन्ति । नित्यगृहीता अगृहीता एव ।

१२ सविनयाज्ञाभङ्गान्दोलने गृहीता चलसम्पत्तिर्यन्नविक्रीता तदा परावर्तिता भविष्यति ।

१३ या त विक्रीता, सा विक्रीतैव ।

१४ ये तु शासनकार्यकर्माणि परित्यक्तवन्तस्तेषा रिक्तानि स्थानानि परिपूरितानि जातानि चेत्तदा पूर्वकार्यकरान् नैव नियोक्ष्यति शासनम् ।

१५. देशस्य वर्तमानपरिस्थितिमवलोकयत् शासनं लवणनियमं परावर्तयितु नेच्छति ।

१६. यदि काग्रेससस्था एतत्समयस्यं नैव मानयिष्यति, तदा शासनं सर्वसाधारणजनरक्षार्थं यदुचितं भविष्यति, तदेव करिष्यति ।

इत्थं लार्डइर्विनेन सह मतैक्य कृत्वा महात्मा गान्धी रात्रौ द्वियामा-

वसरे राजकर्मचारिणामाविश्चकार । सर्वं एव श्रीरत्नप्रभृतयोऽर्धरात्रिपर्यन्तं गान्धिनः प्रत्यागमनकाम्यया जागरणं विधाय सुप्ताः ।

महात्मा गान्धी तत्रागत्य श्रीरत्नं समुत्थाप्य सर्वमेव मतैक्यविषयं कथितवान् । श्रुत्वा रत्नः सर्वेष्वेव विषयेषु सहमतो बभूव, किन्तु सर्वप्रथमं लिखिते विषये महान् दुःखितो बभूव । स च तद्विषयं कदापि तत्परो नासीत् । तथापि तस्मिन्नवसरे किमपि नैवावदत्, तूष्णीमेव केवलम् ।

'एतेन मतैक्येन युक्तप्रान्तीयकृषकेषु कीदृशः प्रभावो भविष्यति । करावरोधान्दोलनं पूर्णतया सफलमासीत् । शासनेन सह अस्मिन्सामञ्जस्येन करावरोधान्दोलनमेव विलयं गमिष्यति । विलीने चान्दोलने राजनीतिकाधार एव नश्येत् । पुनः कृषकाः इदानीमार्थिकविषये किमपि दातुमसमर्थाः । एतदर्थमेव किमस्माभिर्लब्धं यावत् आन्दोलनं व्यधायि ? किं पूर्णस्वाधीनतायाः प्रस्तावोऽपि एतदर्थमेवाभूत् ?'' इत्थं विचारयन्नेव श्रीरत्नः शेषां रात्रिं निनाय ।

यद्यपि महात्मा गान्धी लार्डप्रभृतिभ्यः पुरतः कृषकाणामसामर्थ्यं कथितवान्, किन्तु तेनोक्तं यत् प्रान्तीयशासनं स्वयमेव कृषकाणां दुःखं दूरीकर्तुं विचारयिष्यतीति ।

: १७ :

# कराची-कांग्रेसाधिवेशनम्

तदनन्तरमेव कराचीमहानगरे वल्लभभाईपटेलस्याध्यक्षत्वे कांग्रेसाधिवेशनमजायत। इदमधिवेशनं शोकानन्दपरिपूर्णमासीत्। तत्पूर्वमेव पञ्जाबप्रान्ते भगतसिंह राजगुरु शुकदेवनामकास्त्रयो भारतीययुवानः स्वातन्त्र्यसंग्रामे दत्ताङ्गाः शूलमारोपिताः। तेषां कृते शोकप्रस्तावः पारितो बभूव। काकोरीवधिनानां मुक्तामणिप्रभृतिदेशभक्तानां कृतेऽप्यन्यः शोकप्रस्तावः पारितो बभूव। कारागारगतानां बन्दिनां कृतेऽप्यपरः प्रस्तावः पारितः समभूत्। सर्वसाधारणजनानां श्रमिकवर्गाणां चाधिकारे करव्यययोरधिकारविषये आर्थिकसामाजिकविषये चानेके प्रस्तावाः पारिता बभूवुः।

कराची कांग्रेसाधिवेशनावसरे एव कानपुरनगरे-हिन्दूमुहम्मदीययोः परस्परं महान्कलहः समभूत्। तस्मिन् बहवो हिन्दवो मुहम्मदीयाश्च मृताः। तत्र नासीदेकापि तादृशी प्रतोली, यस्यां परस्परं कलहो नाभूत्। तथ्यमिदमासीद्यत् सत्यार्थे भगतसिंहे शूलमारोपिते कानपुरे कर्मविरामं कर्तुं सर्वत्रैव घोषणा समभूत्। हिन्दवः कर्मविरामं कृतवन्तः, किन्तु मुहम्मदीयाः कार्माणि कुर्वन्त एवासन्। इत्थमेव हिन्दवो रुष्टाः। हिन्दूनां व्यापारस्थानं भ्रष्टीकुर्वन्तो मुहम्मदीयास्तेषां गेहेषु अग्निं चिक्षिपुः। तेन हताहतयोरग्निकाण्डस्य च संख्या वृद्धिं गता। हिन्दूमुहम्मदीययोः परस्परं मेलनप्रयासं कुर्वाणो गणेशशङ्करविद्यार्थी मुहम्मदीयैर्घातितः।

युक्तप्रान्तीयजनानां प्रियपात्रं गणेशशङ्करविद्यार्थिनं कराची कांग्रेसाधिवेशने सम्मिलिताः सहस्रशो जना जानन्ति स्म। 'परमनिर्भयो बुद्धिमान् विचारशीलो वाग्मी च गणेशशङ्करः स्वकीयं जीवनं तृणमिव मत्वा हिन्दूमुहम्मदीययोर्मैत्र्याय मुहम्मदीयानां समूहे गतो धर्मान्धैर्मुहम्मदीयैर्घातितः" वृत्तमिदं श्रुत्वा युक्तप्रान्तीयप्रतिनिधयः कराचीकांग्रेसे शोकसागरे निमग्नाः।

---

: १८ :

# लङ्कायां श्रीरत्नस्य विश्रामः

दिल्लीनगर्यां सम्पन्नायां इरविन-गान्धीवार्तायां अवसरे कराची-महाधिवेशने च विरोधसार्वभारवहनाद्क्लान्तः श्रीरत्नो विश्रान्तिलाभार्थं पत्न्या सह लङ्कां जगाम। विकाले भारते यत्रापि स गच्छति स्म, तत्रैव काङ्ग्रेसकार्यकर्तारो मिलित्वा अमुं कार्यव्यग्रं कुर्वन्ति स्म। अत एव तेन लङ्कायां विश्रामकरणं विचारितम्। किन्तु तत्रापि कृषककर्मकरराष्ट्रिय-सभायाः सदस्या आगच्छन्त एवासन्।

तत्र रत्नो प्रसिद्धस्थानानि ऐतिहासिकानि वस्तूनि दृष्ट्वा महान्तं मोदमापेदे। अनुराधापुरे शान्ता सुशोभिता वात्सल्यमयी प्राचीनानेका बुद्धमूर्तिं विलोक्य रत्नस्य चेतः परमां शान्तिं प्राप। बौद्धमठेषु शान्तान् निश्चलान् बौद्धभिक्षूंश्चापि विलोक्य स भृशं समाहितो बभूव। इत्थं कियत्कालं लङ्कायां विश्रम्य श्रीरत्नः पुनर्बम्बईनगरं ॥ आगतवान्।

अत्रान्तरे स्वदेशं गतवानिरविनः। तत्स्थाने समागतश्च लार्डप्रधानो भूत्वा विलिङ्गटनः। इरविनेन सह मतैक्ये सम्पन्ने सत्यपि शासन सर्वैः-अत्याचारं कुर्वन्नेवासीत्।

: १९ :

# द्वितीयगोलमञ्च-परिषत्, तद्भूमिका च

एकदा श्रीगान्धी महात्मा शिमलायां गत्वा राज्यकर्मचारिणामन्यायव्यवहाराणां वार्तां भारतशासनसमीपे निवेदितवान् । पुनर्बम्बईमण्डलाधीशस्य सन्निधे पत्रं लिखित्वा तस्य प्रतिलिपिर्बम्बई-शासनसमीपेऽपि प्रेषितवान् । किन्तु उभयोः शासनयोः उत्तरमसन्तोषजनकमेवासीत् । शिमलायां गान्धिना सह श्रीरस्नोऽपि आसीत् । तेनापि शासकैः सह वार्ता कृता ।

एतस्मिन्समये महात्मा गान्धी द्वितीयगोलमञ्चपरिषदि लन्दनं गच्छेन्न वेति विषयोऽपि कांग्रेसस्य समक्ष समुपस्थित आसीत् । भूतपूर्वसामञ्जस्यविषये भारतीयशासनेन सहापि पत्रव्यवहारो बभूव । भारतीयशासनस्य गृहमन्त्रिणा इमर्सनसाहबस्य समीपेऽप्येकं पत्रं प्रैषयत् श्रीगान्धी । उत्तररूपेण तेन लिखितं यत् भारतीयशासनेन व्याख्यानिर्णायकमण्डलप्रश्नयोर्विषये पूर्णतया विचारितम् । भवद्वर्गीयैरपि तेषु विषयेषु शासनं पूर्णं ध्यानमदात्, यान् विषयान् भवानस्यामेव श्रेण्यां मानयति । सहैव तेन इदमपि ध्याने धृतं यदेतेषु वर्षेषु निर्णायकमण्डलसंस्कारस्य परिणामः शासनस्य कृते गहनतमे विषये पात एव भविष्यति । भवान् स्वयमेव मानयिष्यति यत् शासनस्य कृते तादृश्या कस्या अपि व्यवस्थायाः स्वीकरणं दुःसम्भवं येन शासनमेव निहतं भवेत्, न्यायालयद्वीम्न्यपि प्रवेशः स्यादिति ।

उपरोक्तलेखेन स्फुटमभवत् यत्तत्रैक्यं सर्वथा निःसारम् । बम्बईशासनस्य इमर्सनसाहबस्य चोत्तराभ्यां महात्मा गान्धी द्वितीयगोलमञ्चपरिषदि-लन्दने गन्तुमसमर्थो बभूव । पुनः दूरभाषनियन्त्रेण लार्डवेलिङ्गटनो शासकस्तु

निषेध गान्धी। प्राप्यानुमतिं स श्रीरत्नेन सहैव शिमलायां तेन सह वार्तालापं चकार।

## द्वितीया गोलमञ्चपरिषद्

तदनन्तरमेव गान्धी काङ्ग्रेसप्रतिनिधिर्भूत्वा द्वितीयगोलमञ्चपरिषदि गन्तुं निश्चितवान्। बम्बईनगरं यावन्मोहनदासगान्धिना सह श्रीरत्नाऽपि जगाम। लन्दनं गन्तुं पोते गान्धिनं समुपवेश्य श्रीरत्नस्तारापुरीमागतो च राष्ट्रियकर्मणि संलग्नो बभूव।

द्वितीयगोलमञ्चपरिषदोऽधिवेशने भाषणं कुर्वन् महात्मा गान्धी इत्थमुक्तवान्—"नास्ति खल्वयं मे भ्रमो यत् स्वतन्त्रता वादविवादाभ्यां संधिचर्चया वा मिलिष्यति। किन्त्विदमवश्यं कथयिष्यामि यत् परिषत्सु समितिषु वा सम्भूतस्य निर्णयस्य निकषो बहुमतं न चेत्तदा परिषदः संयोजकाः तादृशीनां समितीनां निर्णये बहुजनसम्मतिरनेनेति कथं लिखन्ति? विरुद्धं मतं ददानस्यैकस्य नामोल्लेखोऽपि न क्रियते। स खल्वेकः कः? किमनोपस्थितानां दलानां मध्ये काङ्ग्रेससंस्था एकं दलं वर्तते?

"मया कथितपूर्वं यत् शतसंख्यकजनानां मध्ये पञ्चाशीतिजनानां काङ्ग्रेससंस्थैव प्रतिनिधित्वं करोति। इदानीमपि साधिकारं कथयामि यत् काङ्ग्रेससंस्था राज्ञां सामन्तानां शिक्षितानाञ्च प्रतिनिधित्वं करोति। अन्ये प्रतिनिधयो दलविशेषाणामेव प्रतिनिधयः। काङ्ग्रेस एवैतादृशी संस्था या खलु सम्प्रदायवादाद् दूरे वर्तते। एतस्य मन्त्रः सर्वेषामेव कृते समुद्घाटितोऽस्ति। तथापि भवन्त इमामनेकदलेष्वेकं दलं मानितवन्तः! किन्तु कदापि इदं नैव विस्मर्तव्यं यत् काङ्ग्रेस एव तादृशी संस्था, यया कश्चित् कार्यकारी निर्णयो भवेत्। कतिपय एवमनुभवन्तोऽप्यासन् यत् काङ्ग्रेससंस्था समानं शासनं चालयितुं प्रयतते। यदि सा हिंसकखड्गविषपूर्णचषकगुलिकाकुन्तादीनां मार्गमपहाय अहिंसकं शासनं चालयितुं शक्नोति, तदा को ह्ययमन्यायः?

"सत्यमिदं यत् कलिकातापौरप्रतिष्ठानोपरि एकः कलङ्कः संलग्नः। किन्तु यदैव तद्धर्त्तृविषये पौरप्रतिष्ठानसदस्यस्य ध्यानमाकृष्टं तदैव तेन स्वापराधः स्वीकृतः, यथोचितं परिमार्जनमपि कृतम्। काङ्ग्रेससंस्था हिंसां विहायाहिंसां मानयति। अत एव सविनयावज्ञान्दोलनं तया परिचाल्यते। इदमपि शासनेन वरदानं नैव मानितम्। किन्तु तत् तद्विरोधोऽपि कर्तुं नाशक्नोत्। स्वयं लेनिनस्तस्मद्दृशसाहसिकोऽपि नात्र क्षमोऽभवत्। पौरसदस्य-द्रोही सत्याग्रहः सरलीभूतेति लार्डचेम्सफोर्डोऽपि स्वीकरोति। लार्डेन इरविनेन नूतनाध्यादेशैर्देशः पूर्णं संतापितः, किन्त्वसौ साफल्यं नैवालभत्।

"इच्छाम्यहं यद् यथासमयं भवतापि ज्ञायतां काङ्ग्रेसस्य किमस्ति ध्येयमिति। परमात्मनः कृतेऽपि द्विषष्टिवर्षदेशीयस्य विशेषतः कृशगात्रस्य ममापि अवसरः प्रदातव्यः। यस्याः संस्थायाः प्रतिनिधिरहमस्मि, तस्यै मह्यञ्च स्वहृदयकोणे किञ्चित्स्थानं दीयताम्।

"यद्यपि भवन्तो मयि विश्वसन्ति, किन्तु काङ्ग्रेसेऽविश्वास एव भवताम्। परं क्षणार्धमपि तस्याः भिन्नं मां मा मानयन्तु, यस्या अहं समुद्रस्यैको बिन्दुरिवास्मि। अहं काङ्ग्रेससंस्थाया अतीव लघुरस्मि। यदि भवान् मयि विश्वासं कृत्वा किमपि स्थानं दद्यात्, तदा भवन्तमामन्त्रये यत् काङ्ग्रेससंस्थायामपि विश्वासः क्रियताम्। अन्यथा मयि विश्वासो वन्ध्यो भवेत्। काङ्ग्रेससंस्थया योऽधिकारः प्रदत्तस्तदतिरिक्तो नास्ति कोऽप्यधिकारो मत्पार्श्वे। यदि भवान् काङ्ग्रेसप्रतिष्ठानुकूलं कार्यं न करिष्यति, तदा आतङ्कवादमेव नमस्करिष्यति। तदा तदातङ्कवादशमनाय भवत आतङ्कवादस्य काप्यावश्यकता नैव भविष्यति।

"किं भवानिदं नैव द्रक्ष्यति यदहं गोधूमपटीं विहाय स्वतन्त्रतापटीमिच्छामि। यावच्च स्वतन्त्रता नैव मिलिष्यति, तावद्देशेऽनेके जनाः स्वयमशान्ता देशमप्यशान्तं करिष्यन्ति" इति।

गोलमञ्चपरिषद् अधिवेशने समुपस्थितानां सभ्यानां मध्ये मोहनदास एवैको धौताधोत्तरीयो यष्टिकाधारी सहजमनुमीयमान आसीत्। सामञ्जस्या-

न्वेषणार्थमनेके उपायास्तेन कृताः । तत्र च परिषदि भारतीयभूपानां मुहम्मदीयानामन्येषाञ्च प्रतिनिधय आसन् । मुहम्मदीयप्रतिनिधिद्वारा साम्प्रदायिकभावपरिपूर्णो यो हि विचारः प्रकटीभूतः, तद्विरुद्ध तत्रैव महात्मा गान्धी स्वरचितमेव स्वीयामप्रसन्नतां प्रकटीकृतवान्। गान्धिनोऽन्येषाञ्च राष्ट्रियविचारशालिनां मुहम्मदीयानामेष विचार आसीद् यन्मुहम्मदीयानां विचारः स्वतन्त्रतायाः प्रतिकूलो वर्तते। तथापि त एव कथितवन्तो यन्मुहम्मदीयानां साम्प्रदायिकविचार मानितु वयं तत्पराः, यदि नाम तेऽस्माकं राजनीतिकविचारे योग दद्युः । किन्तु मुहम्मदीया गान्धिनः प्रस्तावं नैव स्वीकृतवन्तः । साम्प्रदायिकभावेन प्रच्छन्नां राजनीतिकभाव एवाधीतेषाम् ।

ब्रिटिश शासनं गोलमञ्चपरिषदि सदस्यानां निर्वाचनमतीव चातुर्येण कृत्वा साम्प्रदायिकविचारवानेव तत्र संघटय्य परिषदं स्वहस्तगतां चकार । एतदेवासाफल्यकारणं तस्याः । एतयैव कूटनीत्या श्वेताङ्गानां साम्राज्यं पुनरपि स्थिरीभूतम्। तैः साम्प्रदायिकतायाः प्रश्न एतादृशो मुख्यः कारितस्तस्यां परिषदि, यस्मिन् कदापि तत्रोपस्थितानां मतैक्यं नाभूत्। इत्थं गोलमञ्चपरिषदसफला जाता। मोहनदासोऽपि परावृत्य बम्बईनगरमागतवान्। लन्दनात्समागतं तं बहवो जना अभ्यनन्दयन्।

---

: २० :

# कार्यसमितेः प्रस्तावः, पुनर्दमनञ्च

काँग्रेसकार्यसमित्या गान्धिनो यूरोपयात्राया विषये उत्तरप्रदेशे सीमाप्रान्ते प्रसारितनूतनाध्यादेशादुत्पन्नाया परिस्थितौ विचारात्परं यो हि प्रस्तावः पारितो बभूव, तस्मिन् देशस्य घटनाया गान्धिनो लार्डप्रधान समीपे शीघ्रगामितारादादिप्रेषणविषयाः शासकीयनीतौ अपरिवर्तनेनेव द्योतयन्ति । वङ्गीयातङ्कवाददुर्घटनाया अपि महती निन्दाभूत् कार्यसमितौ । गोलमञ्चपरिषदश्चर्चां कुर्वन्त सदस्याः पूर्णस्वाधीनताया प्रस्तावं पारितवन्तः, कथितञ्चैतच्च यद् लार्डप्रधानसकाशाद्यदि किमपि सन्तोषजनकमुत्तरं नायास्यति, तदा कार्यसमितिः दिल्लीसामञ्जस्यमुच्छिन्नमेव मानयिष्यति । ततश्च पुनरपि सविनयावज्ञान्दोलनं परिचालयितुं सा जनानामन्त्रयिष्यतीति ।

कार्यसमितेरादेशेन महात्मा गान्धी लार्डविलिंगटनस्य सविधे एक-माशुप्रापकसंवादं प्रेषयामास । तस्योत्तरमपि समागतम् । पुनरसौ अपर-माशुप्रापकसंवादं प्रेषयामास । तत्र श्रीगान्धी लिखितवान् यद् 'मम सार्थाना कार्यज्ञानं नास्ति मम, कथञ्चाहं यूरोपं आसम् । लार्डप्रधानेन यदुत्तरितं तत्तु न सद्भावस्य मित्रतापूर्णव्यवहारस्य च पर्याप्तमुत्तरम् । स खलु स्वकीय-निर्णये पुनर्विचारं करोतु नाम । अहिंसा मम प्रथमाचारधर्मोऽस्ति । तथा सविनयावज्ञान्दोलनं न केवलं जनानां जन्मसिद्धोऽधिकारः, किन्तु तत् सदा-ऽऽक्रान्तेरपि पदं ग्रहीतुं शक्नोति । अत एवाहं कदापि स्वाचारधर्मं नैव परित्यक्ष्यामि । तत्पालनार्थैव कार्यसमितिरेवं प्रस्तावं स्वीकृतवती । तस्य प्रतिलिपिः प्रेष्यते मया । यदि लार्डप्रधानो मया सह वार्ताकरणमुपयोगी मानयति, तदा वार्तालापपर्यन्तमेव प्रस्तावः प्रकाशितो नैव भवेत् । अत्र पुनर्विचार्यतामि'ति ।

लार्डवेलिंग्डननामकेन गोलमञ्चपरिषदो व्यापारिकसदस्येन सहापि श्रीगान्धिनो वार्त्तया किमपि फलं नाभूत्। अनन्तरं श्रीगान्धिपटेलौ बन्दिनौ जातौ। श्रीरत्नश्च गान्धिनो गोलमञ्चपरिषद आगमनात्पूर्वमेव कारागारं गतवान्। भारतीयत्रिंशत्सहस्रजनैः सह काङ्ग्रेसस्य प्रायेण सर्व एव नेतारो बन्दिनो बभूवुः। श्वेताङ्गाः सर्वत्र भारते दमनचक्रं प्रचालितवन्तः।

एतस्मिन् समये शासनेन चत्वारो नूतना अध्यादेशाः प्रचारिताः। ते च यथा—१. अवरप्रमण्डलाधिकारिणामधिकारे वृद्धिः। २. सैनिकाना कृते व्यापकतमोऽधिकारः। ३. अभियोगं विनैव जनानां बन्दीकरणम्। ४. नागरिकाधिकारस्य समाप्तिश्च।

अथ शासनं यदैच्छत्तदा सूचनामन्तरैव धनेषु जनेषु च स्वाधिकारं संस्थापयितुं शक्नुयात्। श्रीरत्नमभियुक्तं विधाय द्विवर्षकृते कारागारदण्डं प्रादात्। कारागारनिवासी स यदा यदा स्वबान्धवैः सह मिलेत्तदा एकस्मात् कारागारादपरं कारागारम्, तस्माच्च तृतीयं कारागारं प्रापितः शासनेन। कारागाराल्लब्धमुक्तिरसौ मासपञ्चकमेव बहिः स्थित्वा पुनः कारागारं गतः।

---

# : २१ :

# हरिजनान्दोलनम् , गान्धिनोऽनशनञ्च

रैम्जेमेक्डानल्डसाहबस्य निर्णयेन अस्पृश्यजातयो हिन्दूजातिभ्यः पृथग्भूताः। तेषां निर्वाचनस्य पृथगेव करणस्यादेशः प्रदत्तः शासनेन। कारागारनिवासी श्रीरत्नः श्रुत्वेदं वज्राघातसमं दुःखमाप। द्वितीय-गोलमञ्चपरिषदि विषयस्यैतस्य चर्चां श्रुत्वा महात्मा गान्धी प्रोक्तवानासीत्—'यदि कयापि रीत्याऽन्त्यजान् हिन्दूसमाजात्पृथक् करिष्यति शासनम्, तदाहं स्वप्राणांस्त्यक्ष्यामी'ति। तदनुसार तेनानशन प्रारब्धम्।

श्रीगान्धिनोऽनशनवृत्तं श्रुत्वा पञ्जरबद्धसिंह इव व्याकुलमना श्रीरत्नो विचारितवान् यत् यदि श्रीगान्धी अनशनव्रतेऽस्मिन् मरणमाप्स्यति तदाऽस्य देशस्य का गतिर्भविष्यति ? कोऽस्मान् समुचितं मार्गं प्रदर्शयिष्यति ? कस्य सविधे गत्वा स्वीयं विचारमहं प्रकटयिष्ये ? भारतस्य भविष्यदन्धकाराच्छन्नमेव प्रतिभाति। किं करोमि, क्व गच्छामि ! कथं कारागारबद्धस्य ममानशनव्रतधारिणा तेन साक्षात्कारो भवेदिति।

उपवासस्य प्रथमदिवस एव कारागारान्मुक्तो महात्मा गान्धी पूना-नगरस्थसर्वरक्षिकाया संस्थापितः शासनेन। तत्र च तस्य सविधे संसारस्य सर्वभागेभ्यः सहानुभूतिसूचकानि पत्राणि समागतानि। स्वसङ्कल्पपरित्यागार्थं बहवो जनास्तं प्रार्थितवन्तः। किन्तु स्वसिद्धान्तेऽचलोऽसौ कस्यापि किमपि नैव शुश्राव। सप्रू प्रभृतयः कतिपयनेतारस्तस्य कारागामुक्त्यर्थं प्रयतमाना बभूवुः। कांग्रेससदस्या अपि शासनेन सह सामञ्जस्यार्थं प्रयत्नं कृतवन्तः।

लन्दने देशबन्धु एण्ड्रूज पोलक लेन्सबरीप्रभृतयोऽपि श्वेताङ्गानामेतस्मिन्विषये ध्यानमाकृष्टवन्तः। एतस्या विज्ञप्त्या प्रभावशालिना लन्दन-

निवासिना हस्ताक्षराणि कृत्वा प्रार्थनापि संवृत्ता श्रीगान्धिनः प्राणरक्षार्थम्।

भारतेऽपि निश्चिते एकस्मिन्दिने सर्वे जनाः प्रार्थनामुपवासञ्च कृतवन्तः। गान्धिन उपवासस्य प्रभावः सर्वत्र देशे संभूतः। बम्बईनगरे महद्भिर्जनैरेका परिषत्संघटिता, सा च पुनः पूनायां गता। एतस्यामस्पृश्यनेता अम्बेदकरः शीघ्रमेव सम्मिलितो बभूव। पण्डितमदनमोहनमालवीयघनश्यामदासबिडलाऽमृतलालठक्कर - पटेल जयकराम्बेदकर - राजेन्द्रप्रसादप्रभृतय एकत्रिता भूत्वा पूनायामेकस्मिन्परिपत्रे स्वकीयं हस्ताक्षरं कृतवन्तः। दलितजातयोऽपि पृथङ्निर्वाचनात् परावृत्ताः। उच्चजातयोऽपि तेभ्यः संरक्षणं प्रदत्तवन्तः। निश्चितं बभूव यदेतत् सामञ्जस्यं तावत्सुस्थिरं तिष्ठेद्यावत् सर्वेषां विचारे पूर्णं परिवर्तनं न भवेत्। दलितजातीनां प्रारम्भिकनिर्वाचनं दशवर्षाणि यावत्पृथग्भवेत्। ब्रिटिशशासनमपि पूनानिश्चयं स्वीकृतवान्। पूनानिश्चयेन दलितजातयोऽपि राज्यसभायां द्विगुणं स्थानं प्राप्य कृतज्ञा बभूवुः।

अथ महात्मा गान्धी महति जनसम्मर्दे स्वकीयानशनं परित्यज्य दलितजातीनां 'हरिजने'ति नामकरणं चकार। 'हरिजनसेवकसंघो'ऽपि स्थापितः। 'हरिजनसेवक'नाम्नी पत्रिकापि प्रकाशिता मोहनदासगान्धिना। हरिजनसेवकसंघस्य सभापतिर्घनश्यामदासबिडलामहोदयः, मन्त्रिपदवानोऽमृतलालठक्करश्चाभूताम्।

यदैव स्वनः कारागारान्मुक्तिमिच्छन्नासीत्, तदैव भारते सविनयाज्ञाभङ्गान्दोलनस्य नूतनं रूपमभूत्। तत्सञ्चालनार्थं गुजरातप्रदेशे गच्छन् महात्मा गान्धी पुनर्बन्दीभूत्वा यरवदाकारागारं जगाम।

काङ्ग्रेसमहासभा यद्यपि शासनेन अवैधा घोषिता, तथापि तस्या अधिवेशनमेतस्मिन्नेव समये दिल्लीनगर्यां बभूव। अधिवेशनं गच्छन्तः कतिपदे जना मार्ग एव बन्दिनो जाताः। कलिकातायां कतिपदेषु स्गुह-

प्रहारोऽपि बभूव। इत्थमन्यायपूर्णव्यवहारे कृतेऽपि शासनेन यथाकथञ्चित् कलिकातायामेवाधिवेशन सम्पन्नम्।

काग्रेसस्य कलिकाताधिवेशनानन्तरं शीघ्रमेव नूतनायामेकस्या घटनाया हरिजनान्दोलने कार्यकर्तृणा संख्या वृद्धिं गता। एतेषा कार्यकर्तृणा पवित्रतापूर्वकं कार्यकरणार्थं महात्मा गान्धी एकविंशतिदिवसपर्यन्तमुपवासस्य पुनरपि प्रतिज्ञा चकार। स उक्तवान् यदहं स्वकीयमात्मानं सार्थानान्चात्मानं पवित्रीकर्तुमेव अमुमुपवासं प्रारब्धवान्। अनन्तरं शासनेनैका विज्ञप्तिः प्रसारिता यस्यामीदृशी घोषणासीद् यद् गान्धिन उपवासस्य उद्देश्यं विचार्य शासन तं मोचयतीति।

मुक्त्यनन्तरं गान्धिनो घोषणानुसारं पट्सप्ताहपर्यन्त सत्याग्रहः स्थगितो बभूव। तदनन्तरमेकस्या शासकीयविज्ञप्त्या निम्नलिखितो विचारः उद्घोषितो यत् शासनमेतस्मिन्विषये राष्ट्रियसभया सह सामञ्जस्यार्थं नैव प्रस्तुतम्। सत्याग्रहस्थगनेन ताः प्रतिज्ञा नैव परिपूर्णाः, या बन्दिना मुक्त्यर्थं प्रस्तुता वर्तन्ते।

अथैतस्मिन्नेव समये वियेनात एका विज्ञप्तिः प्रसारिता बभूव, यस्या विट्ठलभाईपटेल सुभाषचन्द्रबोसयोर्हस्ताक्षरमासीत्। विज्ञप्त्या लिखितमासीत् यदावयोः सम्मत्या महात्मा गान्धी राजनीतावसफलो बभूव। अत एव समागतोऽवसरो यदस्माभिर्नवसिद्धान्तानुसारं नूतनमुपायमयलम्ब्य काग्रेसकार्ये कर्तव्यं तत्र परिवर्तनञ्च विधेयम्। गान्धिन आशैयं स्वर्गो या खलु तस्य जीवनसिद्धान्तेन सङ्गता न भवेत्। यदि काग्रेसे स्वयमेव आमूलं परिवर्तनं भवेत्तदाऽतीव सुन्दरम्, नो चेत्तस्मिन्नेव उग्रविचारवतामेका नूतना संस्था प्रकटीभवेदिति।

एष खलु प्रथमोऽवसरो यदा गान्धिन उपरि समाक्षेपोऽभूत्। महात्माऽयं कष्टावसरेऽपि समालोचनामिमा श्रुत्वा शान्तोपमेवासवान्।

तदनन्तरं पूनायामेका परिषदाहूता, यस्यां सामूहिकसत्याग्रहमार्गमपहाय व्यक्तिगतसत्याग्रहस्य निश्चयोऽभूत्। व्यक्तिगतसत्याग्रहस्य निश्चये

श्रीरत्नः प्रोक्तवान्—'प्रभो ! अनशनद्वारा प्राणत्यागेन को लाभः ? नूनमनशनद्वारा प्राणोत्सर्गो विचारशून्यानां कदर्याणां बालिशानां कार्यम् । अन्यच्च, इदानीं कांग्रेससंस्था अवैधा घोषिताऽस्ति । संकट-कालेऽस्मिन् कांग्रेस-परित्यागोऽनुचित एव । हरिजनसेवाकार्यं पुनः कर्तव्यमेवे'ति ।

महात्मा गान्धी श्रीरत्नवचनं श्रुत्वा परमप्रसन्नो भूत्वा हरिजन-सेवायां दत्तावधानो बभूव । अनन्तरं दशमासपर्यन्तं देशे भ्रमणं कृत्वा तेनाष्टलक्षमुद्राः एकत्रीकृताः, मद्रासप्रान्ते कतिपयमन्दिराणां हरिजन-प्रवेशार्थमुद्घाटने साफल्यमासादितम् । श्रीरत्नश्च वार्तालापं कृत्वा तारापुरीमाजगाम ।

: २२ :

# रत्नस्य भूकम्प-पीडितानां सेवा

अथैकस्मिन्दिवसे देशभक्तिपरिपूर्णहृदयः श्रीरत्नः स्वधर्मपत्न्या रमाया-श्चिकित्सासम्बन्धिसम्मत्यर्थं सविनयाज्ञाभङ्गान्दोलने प्राप्तकष्टैर्वङ्गीयैः सह सहानुभूतिप्रकाशनार्थं प्राचीनमित्रैः सह वार्ताकरणार्थं च कलिकातां गन्तुमुद्यतः। प्रायेण दिवसस्यैकवादनसमये युक्तप्रान्तीयकृषकैः सह विविधा वार्ताः कुर्वन् स स्वभवनस्यैकभागे स्थित आसीत्। रमा कलिकातागमनार्थं सर्वाणि वस्तून्येकत्रितानि कुर्वन्ती बभूव। सहसा तैलयानध्वनिरिवैको ध्वनिः समुदतिष्ठत्। सर्वतः श्रूयमाणध्वनिना आश्चर्यचकितः श्रीरत्नो विचारितवान् यत् तैलयानं क्वापि नैव दृश्यते, पुनः कथमेतादृशो ध्वनिः सर्वतः श्रूयत इति। तावदेव श्रीरत्नः भवनमन्यान्यपि च भवनानि कम्पमानानि विद्युत्स्तम्भान् वृक्षादींश्च प्रकम्पितानवलोक्य भूमिकम्पोऽयमिति निश्चितवान्। भूमिकम्पस्यानुभवी धैर्यशाली चासौ भूमिकम्पोऽयमिति मत्वापि कृषकैः सह वार्तां कुर्वन्नेव तस्थौ। बहुधा शीघ्रं बहिरागच्छेति स्वमातृभ्यः शब्दं शुश्राव, किन्तु शय्यासीनां वृद्धां मातरं विना पत्नीं च विहाय स बहिर्गन्तुं नैवैच्छत्। किञ्चित्क्षणस्थायी भूमिकम्पोऽयं विहारप्रदेशस्य सर्वनाशमेव कर्तुं क्षमो भवेदिति स कल्पयितुमेव न शशाक।

पूर्वनिश्चयानुसारं तस्यामेव सन्ध्यायामसौ वाष्पयानेन विहारप्रदेशस्य दक्षिणभागमार्गेण कलिकातां प्रस्थितवान् स्वपत्न्या रमया सह। तत्र कलिकातायामातङ्कवादिनामुद्दिश्य त्रिषु सभासु भाषणं प्रदाय शान्तिनिकेतनस्थकवीन्द्ररवीन्द्रस्य दर्शनं विधाय तारापुरीं प्रत्यावर्तमानोऽसौ

भूमिकम्पपीडितानां साहाय्यार्थं तद्विषये विचारार्थञ्च वायुयानादवतीर्य पाटलिपुत्र एवावतस्थे ।

भूमिकम्पे दशलक्षगृहाणि विनष्टानि । पञ्चषष्टिसहस्रसंख्यकाः कूपास्तटाकाश्च भग्ना विनष्टाश्च बभूवुः । प्रायेण दशलक्षबीघापरिमिता कृषिभूमिः सैकतमयी ऊषरा जाता । एतस्मिन्समये श्रीरत्नस्य बिहारागमन-मवदिशाना बिहारवासिनां कृते शुष्यमाणजलतटाकस्थितानां म्रियमाणानां मीनानामकस्मात् जलोपलब्धिरिवाभूत् । आगत्य पाटलिपुत्रेऽसौ निवासार्थं स्वश्यालकस्य गृहं जगाम । किन्तु श्यालकादयः भूमिकम्पेन विनष्टे गृहे कुटीं निर्माय निवसन्त आसन् । तत्रैव श्रीरत्नोऽपि निवासं चक्रे ।

अपरेद्युरसौ राजेन्द्रप्रसादेन सह बिहारवाटिकाभूत मुजफ्फरपुरं जगाम । तत्र गृहविहीनानां बहिर्वसतां व्यथा येनापि त्यक्तकारुण्येन भयङ्करेण दैत्येन विनाशितानीव आबालवृद्धस्त्रीजनसहितानि गृहाणि चापि गृहेभ्योऽप्युपरि समुत्थितान् राजमार्गान् भग्नान् राजमार्गाणां गर्तेभ्यः समुच्छलन्तीं निःसरन्तीञ्च सैकतमयीं जलधारां जलधारया मृतानसंख्यान् मानवान् पशूंश्च चापि क्रोशपर्यन्तमर्धक्रोशपर्यन्तं सैकतजलमयेषु वा तटानेकसंख्यकज्वालामुखीमुखविस्तारानिव विशालान् गर्तान् विलोक्य विधवानामार्तनादं मृतमातृपितृकानां शिशूनां क्रन्दनं बुभुक्षितानां भयभीतानां चीत्कारञ्च दृष्ट्वा श्रुत्वा च महति शोकसागरे निमग्नः कारुण्यपरिपूर्णः श्रीरत्नः स्रवदश्रुधारो बभूव ।

तस्मिन् स्थाने वायुयानद्वारा भ्रमन्तः श्वेताङ्गा भयानकानि दृश्यानि विलोक्य उत्तरीयफ्रांसस्य युद्धक्षेत्राणीव इमान्यपि सन्तीत्यब्रुवन् ।

श्रीरत्नः स्वमनसि विचारितवान् यद् भूमिकम्पः पूर्वं पार्श्वाभ्या बभूव, येन दण्डायमाना मानवाः पृथिव्या पतिता । अनन्तरमूर्ध्वाधोगतिभ्यां वर्धमानश्चाभूत् । भूमिकम्पसमये शताधिकानामाकाशे समुत्पततां वायुयानानां ध्वनिरिवैको ध्वनिर्जनैः पूर्वं श्रुतः, पूर्वम् तदनन्तरमसंख्यस्थानेषु गर्तेभ्यः समुच्छलन्त्यो जलधाराः प्रादुर्बभूवुः ।

ये तत्रैतत्पूर्वं दृश्यं दृष्टवन्तस्ते महाप्रलयो भवतीति मेनिरे। नगरेषु उच्चाट्टालिकानां पतनैः पृथ्वीं प्रस्फोट्य जलधाराप्रवहणे स्तोमरायुमण्डलैश्च समीपस्थान्यपि वस्तूनि द्रष्टुमसमर्था अभूवन् जनाः। ग्रामेष्वेतादृशं धूल्याच्छादनं नासीत्, किन्तु तत्र दर्शकजनानामेवाभावः। जीविता अपि मानवास्तनातीव त्रस्ताः भयात्कम्पमाना भूमिषु पतिताः।

एको दशवर्षदेशीयो बालको भूमिकम्पदिवसात् दशदिवसानन्तरं भूमिखनित्रा जनैर्निष्कासितः। स च त्रस्तश्चकितश्चासीत्। यदासौ भूमिकम्पस्फुटितगर्तमध्ये पतितस्तदुपरि च इष्टकाः पतन्त्यो बभूवुस्तदा महाप्रलयो जात इति मेने। तस्य सर्व एव बान्धवा मृताः, अवशिष्टः स एकाकी एवासीत्। मुजफ्फरपुरे प्रलयङ्करभूकम्पसमय एवैका बालिका समुत्पन्ना। तस्याः पिता मृतो माता च जीविताऽऽसीत्। जनास्तन्नाम 'कम्पोकुमारी' इति कृतवन्तः। नेपालसीम्नः पर्यन्तं भ्रमन् श्रीरत्नो जनानां सर्वथा निराश्रयत्वमवलोक्य महान्तं खेदमातनोत्।

उत्तरविहारदशां निरीक्ष्य दक्षिणविहारे भूकम्पप्रलयग्रस्तं विध्वस्तभवनं प्रायेण मृतसर्वमानवं समाप्तसभाचत्वराग्रदर्शि-निर्भरशीर्णयानं पतितदेवमन्दिरं भिन्नस्फाटिकं शिवार्तनादविनादितं विधुरचिन्ताग्रस्तं शिशुक्रन्दनकरुणं भूगर्तस्थितमानवशवसम्पन्नं नरकङ्कालभयङ्करं महाश्मशानमिव मुङ्गेरनगरं ददर्श श्रीरत्नः।

भूमिकम्पस्य सर्वक्षेत्रेषु सर्व एव जना अभावग्रस्ता व्याकुलीभूता भ्रमसाहाय्यमपेक्षमाणाश्चासन्। साहाय्यार्थमागता विहारवासिनः स्वयमेव भयभीता आतङ्कग्रस्ताश्चान्येषु स्थानेषु प्रवासयन्त आसन्। भिन्नभिन्नप्रदेशेभ्यः समागतानां मनसि महान् क्षोभभाव आसीत्। कार्यकर्तॄणां संस्थानां मध्ये पुनः परस्परं सहयोगाभाव एव परिलक्षितोऽभूत्।

एकस्मिन् दिवसे खनित्रेण भूमिं खनित्वा मृतान् मानवान् निष्कासयन्तं सहार्थं श्रीरत्नमवलोक्य अन्येऽपि बहवो जनास्तत्र प्रवृत्ताः। कार्येऽस्मिन् महोत्साहः समभूत्। श्रीरत्नस्य भूमिखननसमये एका मृता बालिका

भूमिकम्पपीडितानां साहाय्यार्थं तद्विषये विचारार्थञ्च वाष्पयानाद्दवतीर्य पाटलिपुत्र एवावतस्थे।

भूमिकम्पे दशलक्षगृहाणि विनष्टानि। पञ्चषष्टिसहस्रसंख्यकाः कूपास्तडागाश्च भग्ना विनष्टाश्च बभूवुः। प्रायेण दशलक्ष बीघापरिमिता कृषिभूमिः सैकतमयी ऊसरा जाता। एतस्मिन्समये श्रीराजस्य बिहारागमन-मवाशिष्टानां बिहारवासिनां कृते शुष्यमाणजलतडागस्थितानां म्रियमाणानां मीनानामकस्मात् जलोपलब्धिरिवाभूत्। आगत्य पाटलिपुत्रेऽसौ निवासार्थं स्वस्यालकस्य गृहं जगाम। किन्तु स्यालकादयः भूमिकम्पेन विनष्टे गृहे कुटीं निर्माय निवसन्त आसन्। तत्रैव श्रीराजोऽपि निवासं चक्रे।

अपरेद्युरसौ राजेन्द्रप्रसादेन सह बिहारवाटिकाभूतं मुजफ्फरपुरं जगाम। तत्र गृहविहीनानां बहिर्वसतां व्यथा केनापि त्यक्तकारुण्येन भयङ्करेण दैत्येन विनाशितानीव आबालवृद्धस्त्रीजनसहितानि गृहाणि क्वापि गृहेभ्योऽप्युपरि समुत्थितान् राजमार्गान् भग्नानां राजमार्गाणां गर्तेभ्यः समुच्छलन्तीं निःसरन्तीञ्च सैकतमयीं जलधारां जलधारायां मृतान-सङ्ख्यान् मानवान् पशूंश्च क्वापि क्रोशपर्यन्तमर्धक्रोशपर्यन्तं सैकतजलमयेषु था तदानेकसंख्यकजालमुखीमुखविस्तारानिव विशालान् गर्तान् विलोक्य विधवानामार्तनादं मृतमातृपितृकाणां शिशूनां क्रन्दनं बुभुक्षितानां भय-भीतानां चीत्कारञ्च दृष्ट्वा श्रुत्वा च महति शोकसागरे निमग्नः कारुण्य-परिपूर्णः श्रीराजः सवदश्रुधारो बभूव।

तस्मिन् स्थाने वायुयानद्वारा भ्रमन्तः श्वेताङ्गा भयानकानि दृश्यानि विलोक्य उत्तरीयफ्रान्सस्य युद्धक्षेत्राणीव इमान्यपि सन्तीत्यब्रुवन्।

श्रीराजः स्वमनसि विचारितवान् यद् भूमिकम्पः पूर्वं पार्श्वाभ्यां बभूव, येन दण्डायमाना मानवाः पृथिव्यां पतिताः। अनन्तरमूर्ध्वाधोगतिभ्यां वर्धमानश्चाभूत्। भूमिकम्पसमये शताधिकानामाकाशे समुत्पतता वायुयानानां ध्वनिरिवैको ध्वनिर्जनैः पूर्वं श्रुतः, पूर्वम् तदनन्तरमसंख्यस्थानेषु गर्तेभ्यः समुच्छलन्त्यो जलधाराः प्रादुर्बभूवुः।

ये सत्येतत्पूर्वं दृश्यं दृष्टवन्तस्ते महाप्रलयो भवतीति मेनिरे। नगरेषु उच्चाट्टालिकानां पतनैः पृथ्वीं प्रस्फोट्य जलधाराप्रवहणे स्तीव्रवायुमण्डलैश्च समीपस्थान्यपि वस्तूनि द्रष्टुमसमर्था अभूवन् जनाः। ग्रामेष्वेतादृशं धूल्याच्छादनं नासीत्, किन्तु तत्र दर्शकानामेवाभावः। जीविता अपि मानवास्तत्रातीव त्रस्ताः भयात्कम्पमाना भूमिषु पतिताः।

एको दशवर्षदेशीयो बालको भूमिकम्पदिवसात् दशदिवसानन्तरं भूमिं खनित्वा जनैर्निष्कासितः। स च त्रस्तश्चकितश्चासीत्। यदासौ भूमिकम्प-स्फुटितगर्तमध्ये पतितस्तदुपरि च इष्टका पतन्त्यो बभूवुस्तदा महाप्रलयो जात इति मेने। तस्य सर्व एव बान्धवा मृताः, अवशिष्टः एकाकी एवासीत्। मुजफ्फरपुरे प्रलयङ्करभूकम्पसमय एवैका बालिका समुत्पन्ना। तस्याः पिता मृतो माता च जीवितासीत्। जनास्तन्नाम 'कम्पोत्कुमारी' इति कृतवन्तः। नेपालसीम्नः पर्यन्तं भ्रमन् श्रीरत्नो जनानां सर्वथा निराश्रयत्वमनुभूय महान्तं खेदमाससाद।

उत्तरविहारदशां निरीक्ष्य दक्षिणविहारे भूकम्पप्रलयमस्तं विध्वस्तभवनं प्रायेण मृतजनैर्मानवं समस्तप्रभावचतुरराजमार्ग-निर्भरणीस्थानं पतितदेवमन्दिरं विनष्टवाटिकं विधवार्तनादनिनादितं विधुरचिन्ताग्रस्तशिशुक्रन्दनकरुणं भूगर्तस्थितमानवशवसम्पर्कं नरकैकालमयङ्करं महा-श्मशानमिव मुङ्गेरनगरं ददर्श श्रीरत्नः।

भूमिकम्पस्य सर्वक्षेत्रेषु सर्व एव जना आश्रयरहिता व्याकुलीभूता आकाशाश्रयमेवालम्ब्याश्रयाश्चासन्। साहाय्यार्थमागता विहारवासिनः स्वजनैर-भवर्मता आर्तग्रस्ताश्चान्येषु स्वादेश प्रकाशयन्त आसन्। भिन्नभिन्न-प्रदेशेभ्यः समागतानां मनसि महान् क्षोभार आसीत्। कार्यकर्तॄणां सङ्घटना मध्ये पुनः परस्परं सहयोगाभाव एव परिलक्षितोऽभूत्।

एकस्मिन् दिवसे खनित्रेण भूमिं खनित्वा मृतान् मानवान् निष्कासनं सहायार्थं श्रीरत्नस्यैव अन्येऽपि बहवो जनास्तत्र प्रवृत्ताः। कार्येऽस्मिन् महत्कष्टः समभूत्। भूगर्भस्थ भूमिखननसमये एका मृता बालिका

निःसृता। सर्वास्वेव सेवा-संस्थासु प्रधानतया विहारकेन्द्रीय-साहाय्यसंस्थाया अध्यक्षो राजेन्द्रप्रसादः उपाध्यक्षश्च राजर्षिरनुग्रह-नारायणसिंह आस्ताम्। यद्यपि तदानीं परमदयालुः परमोत्साहसम्पन्नो महान् देशभक्तः अनुग्रहनारायणसिंहः कारागार आसीत्, किन्तु भूकम्प-दिवसादेकविंशतितमे दिवसे ततो मुक्तः स श्रीरत्नराजेन्द्राभ्यां सह सर्वत्र सेवां कर्तुं प्रवृत्तः।

साहाय्यरूपेणैकत्रिताः प्रायेण एककोटिमुद्राः अभावग्रस्तेषु क्षेत्रेषु वितरिताः। विहारप्रदेशादन्यप्रदेशेभ्यः समागतेषु नेतृषु प्रधानतया श्रीरत्न-स्यागमनेन सेवकानां चेतसि महानुत्साहः सञ्चारितोऽभूत्।

महात्मा गान्धी अपि मासं यावत्तत्र स्थित्वा स्वयंसेवकेभ्यो निर्देशमकरोत्। श्रीरत्न-राजेन्द्रानुग्रहनारायण श्रीकृष्णसिंह-जयप्रकाशनारा-यणप्रभृतयः सर्वविधं स्वकीयं सौख्यमपहाय श्रीगान्धिनो निर्देशेन कर्मणा मनसा वाचा परिश्रमेण धनसंग्रहेण च भूकम्पविपद्ग्रस्तानां वास्तविकीं सेवां चक्रुः। तेन कथमपि पीडितानामश्रुमोचनमभूत्।

---

: २३ :

# रमाया अस्वास्थ्यं महाप्रयाणञ्च

भूकम्पप्रपीडितानां विहारवासिनां सेवां सम्पाद्य अतीव श्रान्तः श्रीरत्नः तारापुरीमागत्य किञ्चित् विश्रम्यमाण आसीत्। अत्रान्तरे केवलमेकादशदिवसानन्तरमेव स कलिकातायां प्रदत्तभाषणाभियोगे बन्दीभूत्वा कारागारं प्रापितः। ततः शीघ्रमेव तत्कारागारादन्यस्मिन् कारागारे परावर्तितः। कारागारे निवसतस्तस्य धर्मपत्नी रमा रोगाक्रान्ता स्वास्थ्ये ह्रासमवाप।

एकस्मिन्दिवसे सहसा कश्चित् कारागारकर्मचारी समागत्य श्रीरत्नं प्रोवाच—'भवतो मुक्तिः शीघ्रमेव भविष्यति। यावद् वैद्याः पत्न्याः सेवार्थं भवतो बहिर्वासमानस्य न मानयिष्यन्ति, तावदेव भवान् पत्न्याः सेवार्थं बहिः स्थास्यती'ति। निश्चयेन आकस्मिकपरिवर्तनेन श्रीरत्नस्य चेतसि किमपि परिवर्तनं नाभूत्।

अकस्मादेव वैद्यैः सम्बन्धिभिश्च परिपूर्णे स्वकीयावासे स्वपत्न्याः समीपमाजगाम देशभक्तो रत्नः। रमायाः स्वास्थ्यविषयिणीं वार्तां ज्ञातुं बहवो जनास्तत्रागताः। सर्वविधसौख्यसम्पन्ने भवने निवसन्नपि श्रीरत्नो धर्मपत्न्याश्चिन्तनीयामवस्थां विलोक्य सर्वदा व्यग्र एवासीत्।

अस्थिचर्मावशिष्टायाः पतिभक्तिपरायणायाः रमायाः शरीरमतीव क्षीणमभूत्। तस्याः शरीरच्छायामात्रमेव विलोक्य रत्नः साशङ्को मनसावेत् यदसौ मामपहाय शीघ्रमेवेयं परलोकं यास्यतीति। अष्टादशवर्षे पूर्वं तदुद्वाहसमयादारभ्य अद्य यावत् यावन्ति कार्याणि तत्सङ्गतौ बभूवुः, सर्वेषां तेषां स्मृतिचिह्नानि सहसैव श्रीरत्नस्य चेतःपटले नूतनानीवाङ्कितानि समभूवन्।

षड्विंशतिवर्षदेशीयेन श्रीरत्नेन सह सप्तदशवर्षदेशीयाया रमाया यदा पाणिग्रहण समभूत्तदा सा चञ्चलाऽबोधबालिका आसीत्। रत्न पुन सर्वं विषयविज्ञाता दृष्टपुष्टाङ्गो युवा। तयोर्विचारे महद्वैषम्यमासीत्। यदा कदा द्वयो कलहोऽपि जायते स्म। उभावपि स्वाभिमानिनौ शीघ्रमेव क्रोधावेश-वशीभवन्तावास्ताम्। किन्तु सभूतेऽपि बाह्यकोपेऽन्तरे द्वावपि परमस्नेह परिपूर्णौ सदा सम्यग्विचारशालिनौ चास्ताम्।

श्रीरत्नस्य विवाहवर्ष एव पञ्जाबहत्याकाण्डम्, असहयोगान्दो लनञ्चाभूत्। एतस्मिन्नेव समये देशसेवक श्रीरत्नो राजनीत्या प्रविश्य सार्वजनिकसभाकार्येषु तन्मयो बभूव। यथावसर बहुवारमसौ कारागारमपि गतवान्, बहून् कष्टेऽपमानव्यासवान्। किन्तु हृदये रमा प्रति तस्य प्रेम वर्धमानमेवासीत्।

रमाया व्याधेरारम्भो श्रीरत्नस्य कारागारनिवासश्च सहैव प्रादुर भूतानाम्। कारागारवासी रत्नो निश्चिते दिवसे एव रुग्णया रमया सह मिलितु शक्नोति स्म। यदा कदा जायमान तन्मेलनममूल्यतम जायते स्म। नियतदिवसे मेलने जाते पुन कारागारे निवसन् श्रीरत्न मेलनदिवसान् गणयन्नेवासीत्। प्राप्ते मेलनदिवसे प्रातरुत्थाय परमोत्साहसम्पन्नो जायते स्म। रमया सह मिलित्वाऽसौ कारागारनिवासदु ख विस्मरन्निवासीत्।

एकदा रत्नेनालोचित यद् इय मे धर्मपत्नी विवाहदिने यादृशी सद्य-स्फुटयौवना मुग्धा सर्वशृङ्गारान्विता मम गेह समागता, तादृशी एतर्हि इदानीमपि मे दृष्टिपथे विभाति। अहो अस्या प्रेमपाटवे माधुर्यपरिप्लुत वचा मत्सेवायामिरुचिश्च।

आवयोर्विवाहस्य अष्टादश वर्षाणि व्यतीतानि, किन्तु तेषु ममाधिक समय कारागार एव व्यतीत। गृहदशापि परिवर्तिता। मे केशा काशा इव सभूता, नेत्रे सोपनेत्र जात, त्वचि च शैथिल्य ममागतम्। तात पादा महापथपथिका अभूवन्, मातापि रुग्णा वरीवर्ति। सहधर्मिणी अर्धाङ्गिनी रमाऽपि महाप्रयाणमिच्छन्ती वर्तते। मे तनया बाला इन्दिरा कथमिव

मातुर्मार्वियोगं सहिष्यति ? अहो विधेर्वैचित्र्यम् ! इदानीं देशः स्वतन्त्रोऽपि न जातः ! किं भविष्यति, किं कर्तव्यम् ? नास्ति कोऽपि मे सहायकः दैवे ! प्रतिकूलतामुपगते हि विधौ सर्वमेव प्रतिकूलं जायते ।

मम कारागारगमनमवश्यम्भावि । पश्यामि च समागते मयि रमा प्रसन्नतामाप्नोतीति । अस्मिन्समये अस्याः सविधे ममोपस्थितिः परमावश्यकी । इदानीमेतस्याः सेवाकार्यमावश्यकम् । किन्तु कारागारदण्डावधेः समाप्तिरेव नाभूत् । किं कार्यम् ? क्व गन्तव्यम् ? कस्य वा साहाय्यं ग्राह्यमि'ति ।

एवं विचारयन्नेव श्रीरत्नस्त्वरितं गान्धिनः सविधे पत्रमेकं स्वकीयस्थितिवर्णनपरं लिलेख । यद्यपि श्रीरत्नः संयतभाषायामेव पत्रं लिखितवान् गान्धिनः समीपे, तथाप्यसौ पत्रं पठित्वा नितरां दुःखितो बभूव ।

दिनानि व्यतीतान्येवाभूवन् । यदा कदा शृण्वन्नप्यासीदसौ यदागामिनि दिने परश्वो वा त्वं पुनः कारागारं प्रयास्यसि । शासनञ्च चिकित्सकान्प्रत्यकथयत् प्रतिदिनमेव ते रमायाः स्वास्थ्यस्थितिं तस्मै सूचयन्तु । विश्वासभाजस्तेऽपि चिकित्सकाः प्रतिदिनमेव तत् सूचयन्त आसन् ।

समागते श्रीरत्ने रमाया आरोग्यं प्रतिदिनमेव उत्तरोत्तरं सन्तोषजनकं भवत्यासीदिति तु उक्तपूर्वम् । अत्रान्तरे बम्बईनगरे काङ्ग्रेस्याधिवेशनं कतिपयमासानन्तरञ्च भारते राज्यसभासदां निर्वाचनं भाव्यमानमासीत् । अत एव श्रीरत्नस्य कारागाराद्बहिर्निवासोऽसम्मतो जातः ।

कारागारनिर्गमनदिवसादेकादशे दिवसे राजकीयपुरुषसमन्वितमेकं तैलयानं श्रीरत्नस्य गृहद्वारि समाजगाम । तस्मादवतीर्यैकः सैनिककर्मचारी समीपमागत्य श्रीरत्नमवोचत्—'महाशय ! शासकीयादेशेन भवन्तं निवेदयामि यद् भवता पुनरपि मया सह कारागारे गम्यतामि'ति ।

श्रीरत्नो वृद्धां मातरं रुग्णां धर्मपत्नीं पुत्रीञ्च परित्यज्य मित्रैः प्रस्थापितो भूत्वा शीघ्रमेव सैनिकयानद्वारा कारागारमाजगाम । प्रसारितकराया विलपन्त्याः कारागारगमनसमये तैलयानसन्निधे समागतायाः मातुर्मुखमुद्रा

श्रीरत्नस्य चेतसि बहुकाले यावन्मूर्तिमती आसीत् । इदानीं श्रीरत्नः शासनस्य क्रीडनक इवासीत् । श्रीरत्नः कारागारनिवासदुःखान्नैव भीतः, किन्तु धर्मपत्न्या रमाया दशां संस्मृत्य विह्वलो भयान्वितश्चावश्यमेव बभूव । प्रतिदिनमेव राजकर्मचारी रमास्वास्थ्यसम्बन्धिनीं सूचनां श्रीरत्नस्य सविधे प्रापयन्नासीत् ।

रमाचिन्ताकुलमतेः श्रीरत्नस्य दिवसाः पर्वतप्राया अभूवन्, का कथा घोरतमानां रात्रीणां यापनस्य ! एकस्मिन्दिवसे सहसा श्रीरत्नस्य चेतसि विचारः प्रादुर्बभूव यदहं बम्बई-कांग्रेसाधिवेशनानन्तरं नूनं मुक्तो भविष्यामि । किन्तु तदधिवेशनस्य कृतेऽपि मासद्वयस्य विलम्ब आसीत् ।

कारागारं गते श्रीरत्ने व्यतीते चैकमासे कश्चित्सैनिकः एकस्मिन्दिवसे श्रीरत्नं रमायाः समीपं निनाय । किञ्चित्कालं च द्वयोर्वार्तालापं कारयित्वा पुनरपि कारागारमानयत् ।

चिन्ताकुलमतिं श्रीरत्नं कतिपये जना अकथयन् यद् भवान् 'कारागारनिवासावधि यावद्राजनीतौ भागं नैव ग्रहीष्यामी'ति समाश्वासनं ददातु चेत् शासनं भवन्तं रमायाः रक्षार्थं मुक्तं कर्तुं प्रभवेदि'ति । किन्तु राजनीतिप्रायणस्य भारतोद्धारकर्मणि संलग्नस्य श्रीरत्नस्य कृते कथनमिदं लघुत्वापादकमासीत् ।

पुनरप्येकस्मिन्दिवसे श्रीरत्नं समानीतवान् रमायाः समीपे राजकर्मचारी । वार्तालापानन्तरं रमायाः संकेतेन श्रीरत्नस्तस्या मुखसमीपे स्वकर्णं उपयोजितवान् । साध्वी रमा तं मन्देन कर्णे प्रोवाच—'आर्यपुत्र ! यादृशं कतिपये जनाः कथयन्ति, तादृशं शासनस्य सविधे कदापि भवता मनस्विदुर्लभमाश्वासनं न देयम् । अन्यथा मम चेतसि महद् दुःखं भविष्यति ।' रमाप्रोक्तं वचो निशम्य हर्षात् श्रीरत्नस्य वपू रोमाञ्चितमभूत् । पीडितायां रुग्णायामपि सर्वथा स्वानुरूपां स्वादर्शाद् रेखामात्रमप्यच्युतामर्धाङ्गिनीं विलोक्य स्वात्मानं स बहु मेने ।

एतादृशदिवसे रमासमीपे निवसता श्रीरत्नेन विचारितमासीद्यद् रमा

उरापुरीं परित्यज्य पर्वतीयस्थानं गच्छेत्तदा स्थानवायुजलपरिवर्तनेन नूनं स्वास्थ्यमवाप्स्यति । तदनुसारमेव रमा भुवालीनामकं पर्वतीयस्थानं गतवती । भुवालीगमनात् पूर्वेद्यु रमया सह वार्तालापकरणार्थं श्रीरत्नमानीतवान् राजकर्मचारी, वार्तालापकरणात्परं पुनरपि कारागारं नीतवांश्च । तदा रमायाः स्वास्थ्येऽपूर्वां वृद्धिमवलोक्य श्रीरत्ना महान्तमोदमापेदे ।

भुवाल्यां गतया रमाया कारागाराधिकारिणः श्रीरत्नमपि भुवालीसमीपस्थमेव कारागारं नीतवन्तः । एतेन रमया सह साक्षात्कारस्य महत्सौविध्यमभूत् । रमाया रोगस्य ह्रासेन धर्षणेन च श्रीरत्नोऽपि आनन्दमोदासौन्यष्वान्नुभवन् बभूव । किन्तु पर्वतं यत्रपुष्येणेन तस्य चेतसि प्रसादोऽवश्यमेवाभूत् ।

अत्रान्तरे श्रीराजेन्द्रप्रसादस्याध्यक्षत्वे बम्बईनगर्यां काँग्रेसाधिवेशनं सुसम्पन्नम् । तस्याभिभाषणं मनोह्लादकारि राजनीतिकविचारपरिपूर्णं स्वतन्त्रतामूलकं चासीत् ।

एतस्मिन्नेवाधिवेशने महात्मा गान्धी काँग्रेसपरित्यागस्यापि विचारं प्रकटितवान् । किन्तु काँग्रेसकार्यसमितिसदस्यैः प्रस्तावः पारितो यत् महात्मा गान्धी स्वविचारे परिवर्तनं करोत्विति । महात्मा गान्धी स्वसंकल्पे पर्यन्तं दृढ एव स्थितः । इदमुक्तवान् यत्काँग्रेसस्थानो बहिःस्थितोऽप्यहं यथावसरं काँग्रेससदस्यानां मार्गप्रदर्शनमवश्यमेव करिष्यामि । अनन्तरं सर्व एव सदस्यास्तस्मै देशसेवायाः कृते त्यागार्थञ्च सहर्षं धन्यवादं प्रदत्तवन्तः ।

ततः परमेव राज्यसभानिर्वाचनस्यावसरः समापतितः । सर्वेष्वेव निर्वाचनस्थलेषु काँग्रेससदस्या विजयप्राप्त्यर्थमुद्यताः । विहार मध्यप्रान्त-महाराष्ट्र-गुजरात कर्णाटकमद्रासप्रदेशादिषु काँग्रेससदस्या एव निर्वाचने विजयं लेभिरे । किन्तु पञ्जाबप्रान्ते केवल एक एव काँग्रेसगण्यो निर्वाचितः ।

काँग्रेसाधिवेशने भारतीयनिर्वाचने च सम्पन्ने श्रीमा…

मुक्त्यर्थमाशान्वितो बभूव। कारागारे वसन्नपि स प्रतितृतीयसप्ताहं रमया सह मिलन्नासीत्।

श्रीरत्नस्य जननी इदानीं स्वास्थ्यलाभार्थं बम्बईनगरे गतासीत्। एकस्मिन्दिवसे श्रीरत्नः श्रुतवानासवान् यत् तस्य माता प्रभावती पक्षाघात-रोगेणाक्रान्तेति। स्वपत्न्या अस्वस्थता मातरि पक्षाघाताक्रमणं कारागारे स्वावासञ्च विचार्य असौ अधीरश्चिन्ताकुलो मर्माहतश्च बभूव। तेन आलोचितमेकस्मिन्दिवसे यदहमिदानीं बम्बईनगरे स्यां तदा जननीदर्शने सौविध्यं भवेत्। किन्तु पराधीनत्वात् किंकर्तव्यविमूढो जातः।

पुनः श्रीरत्नस्य धर्मपत्नी मुवालीतो यूरोपस्य बीडनवीलर नामकस्थाने चिकित्सार्थं गतवती। एकदा सहसैव कश्चित्कारागाराधिकारी श्रीरत्नस्य समीपमागत्य तं सूचितवान् यद् भवतो धर्मपत्न्याः स्वास्थ्यमतीव चिन्ता-जनकम्। सम्प्रति सा भारतात् यूरोपं गता। अतो भवानिदानीं कारागा-रान्मुक्तः क्रियत इति।

कारागाराधिकारिणा मुक्तः श्रीरत्नः शीघ्रमेव वायुयानद्वारा यूरोपं गतवान्। कृतेऽपि महत्युपचारे कृतायामपि महत्या सेवाया संभूतेऽपि बहुधनव्यये श्रीरत्नधर्मपत्नी रमा तत्रैव निधनं गता। स्वधर्मपत्न्या निधनं गताया श्रीरत्नो महाव्याकुलो बभूव। किन्तु दैवाधीनं सर्वसंसारमवश्य-भाविनं मृत्युञ्च विचार्य कथञ्चित् शान्तिमापेदे।

---

: २४ :

# कांग्रेस-सदस्यानां राज्यसभा-प्रवेशः

निर्वाचिताः कांग्रेससदस्या राज्यसभाया कार्यमारब्धवन्तः। शरच्चन्द्रबोस इदानीं सर्वरक्षितरूपमेवासीत्। तस्य मुक्त्यर्थं सर्वैरेव सदस्यैरेकः प्रस्तावः प्रस्तावितः पारितश्च। ग्रामोद्योगसम्बन्धे शासनेन यत्परिपत्रं प्रकाशितं तदर्थं समुपस्थापिते प्रस्तावे महान् विवादो जातः। अत एवासौ स्थगितो बभूव।

ब्रिटिशभारतयोर्व्यापारिकसम्बन्धेऽपि जनमतस्यैव विजयोऽभूत्। शासनीय-करसम्बन्धे वाष्पयानशुल्क-निर्धारणसम्बन्धे स्याम-प्रदेशीय-तण्डुल-विक्रयसम्बन्धे च जनमतमेव विजयमवाप।

तदनन्तरं कांग्रेसकार्यसमितेः अधिवेशनद्वयमभूत्। तत्र च अनेके प्रस्तावाः पारिता बभूवुः।

एतस्मिन्नेव समये कांग्रेसाध्यक्षस्य राजेन्द्रप्रसादस्य मुस्लिमलीगाध्यक्षेण जिन्नासाहबेन सह साम्प्रदायिकसामञ्जस्यविषये मासमेकं यावद्वार्ता प्रचलिता, किन्तु फलं किमपि नाभूत्। एतेनासाफल्येन देशो निराशायामेव पतितः।

अथ कांग्रेससदस्यान् शक्तिशालिनः मन्मत्वा। तेषु शासनं सन्दिहानमभूत्। समुद्भूते सन्देहे राष्ट्रियसभाकार्यकर्तॄणां कारागारदण्डप्रदानं स्वगृहेष्वेव सर्वरक्षिका (नजरबन्द)-रूपेण निवासनं भाषणप्रदानेन कतिपयसदस्यानां कारागारदण्डप्रदानं कांग्रेसकार्यालयनिरीक्षणम्, एवमादिकार्याणि शासनेन कृतानि।

तदनन्तरं जबलपुरनगरे कांग्रेसाधिवेशने निश्चयो जातो यद् ये जनाः

सर्वेरधिकासु कारागारेषु वा वर्तन्ते, तेषां बान्धवानां रक्षार्थं देशवासिनः सकाशाद् द्रव्यसंग्रहः कर्तव्यः ।

तदनन्तरमेव क्वेटायां भूमिकम्पो बभूव । बिहारभूमिकम्पस्य व्रणः शुष्कोऽपि नाभूत्तावदेव क्वेटायां भूमिकम्पवार्तां श्रुत्वा काङ्ग्रेससदस्यानां दुर्दशाञ्च विचार्य महान् व्यथितो बभूव कारागारनिबद्धः श्रीरत्नः । एतस्मिन्समये सहस्रशो देशभक्ताः कारागारनिबद्धा आसन् ।

---

# लखनऊ-कांग्रेसाधिवेशनम्

अनन्तरं लखनऊनगरे कांग्रेसस्य वार्षिकाधिवेशनस्य आयोजनमभूत्। किन्तु प्रश्न आसीत् सभापतिनिर्वाचनस्य भाविनः कांग्रेसाधिवेशनस्य सभापतिः को भवेदिति।

महात्मा गान्धी धार्मिकनेता इवालक्षितो बभूवेदानीम्। असौ राजनीतिक-पदं विहाय साधुपदमगृह्णात्। गान्धिनः परं यदि कश्चित्सभापतिपदयोग्य आसीत्तदा श्रीरत्न एव। स खलु कांग्रेसमग्रगामिनं पश्चाद्गामिनं वा विधातुं समर्थः। तस्मिन् रूस जर्मनीइंग्लैण्डामेरिकाचीनफ्रांसस्पेनेटलीप्रभृतिदेशेषु घटितानां घटनानां गम्भीराध्ययनयोग्यताप्यासीत्। इत्थं कारागारमुक्तः श्रीरत्नः प्राचीन-नवीनयोः संयोजने शृङ्खलेव गान्धिवाद-साम्यवादयोर्मध्ये सेतुरिव च विराजमानो लखनऊ-कांग्रेसमहाधिवेशनस्य सभापतिपदमलञ्चकार।

किन्तु तत्र यत्किञ्चिदभूत् तेन स महान् दुःखितो बभूव। स 'एकस्मिन्पक्षेऽहम्, परस्मिंश्च सर्वं एव जनाः' इत्यनुभूतवान्। एतस्मिन्नधिवेशने कार्यद्वयं निश्चितमभूत्। प्रथमं कृषक-कार्यक्रमस्य अन्तिमरूपप्रदानं द्वितीयञ्च मन्त्रिनिर्वाचनस्य घोषणापत्रनिर्माणम्।

बहूनां च प्रवरकार्यकारिणीसदस्यानां सभापतिना सह मतभेदो बभूव। श्रीरत्नस्तु सभापतिपदं परित्यक्तुमैच्छत्, किन्तु सर्वेषामत्याग्रहेण स्वपदे स्थितः एवासीत्। सुभाषचन्द्रबोसमहाशय इदानीं कारागार आसीत्।

इदानीं भारते महद्दमनचक्रं प्रचलितम्। शासनेन सन्देहास्पदानां जनानां गृहनिरीक्षणं बन्दीकरणञ्च, विद्यार्थिनां विद्यालय-महाविद्यालयेभ्यो निष्का-

सनम्, कर्मकराणामधिकारसीमितीकरणम् एवमादि अत्याचारजातं प्रारब्धम् । कपूरथला-जोधपुर-मैसूर बडौदा सिरोही मरुस्थल-राजनन्दग्रामप्रभृतिराज्याना नरेशा अपि तदनुकरणं कृतवन्तः । केवल वङ्गदेश एव त्रिसहस्राधिकाजना बन्दिनो भूत्वा कारागारे निगडिता । पञ्जाबप्रदेशे पञ्चाशद्राष्ट्रियसभा-सदस्याः शासनेन सूचिता यत्ते स्वावासस्थानं कदापि नैव परित्यजन्तु ।

एकेनादेशेन शासनेन ढाकामण्डलान्तर्गतेषु उनविंशतिस्थानेषु नारायण-गञ्जमण्डलस्य च षोडशस्थानेषु च जनेभ्य सूचितं यदेतद्ग्रामवासिनो द्वादशवर्षेभ्य आत्रिंशद्पदेशीया मानवा. सूर्यास्तात् सूर्योदयं यावत् गेहेभ्यो बहिर्नैव निःसरन्तु । अस्यार्थस्ते मन्दिरेषु क्रीडास्थलेष्वपि नैव गन्तुं शक्ष्यन्तीति । एतदादेशोल्लंघने षण्मासकारागारदण्डोऽपि निर्धारितः ।

: २६ :

# देश-विदेश-परिस्थितेर्विमर्शः

लखनऊ-कांग्रेसानन्तरं श्रीरत्नः सर्वप्रथमं भारतीयनागरिक-स्वतन्त्रता-संघस्य संस्थापनमकरोत् । एतस्याध्यक्षो रवीन्द्रनाथठाकुरमहाशय आसीत् । एतस्मिन्नेव वर्षे भारतीयराज्यसभाया निर्वाचनमप्यासीत् । अतः सार्ध-त्रिकोटिमतदातॄणां समीपे कांग्रेससन्देशप्रेषणमपि श्रीरत्नेन कृतम् । पूर्व-निर्वाचित-धारासभाया ये सदस्या आसंस्ते तु कर्मकराणां समुचितवेतन-निर्धारणार्थं प्रयतितवन्तः । ब्रिटिशभारतयोः राष्ट्रियसमित्योः देशीयराज्या-नाञ्च दृष्टिरत्र कांग्रेससंस्थया समाकृष्टा । वाष्पयानव्यवसायाः शासना-धीना भवन्त आसन् , निम्नश्रेणीनां कर्मकराणां वेतने न्यूनता च भवन्त्या-सीत्—अत्रापि विषये गंभीरो विचारोऽभवत् ।

एवं राष्ट्रियमहासभायाः ( कांग्रेसस्य ) अस्मिन् समये कार्यवृद्धिरभूत्, किन्तु अनुशासनं सर्वत्र प्रलुप्तम् । सर्व एव कांग्रेससदस्याः स्वेच्छाकारिणो बभूवुः । कांग्रेससभापतेः श्रीरत्नस्य च विचित्रा परिस्थितिरभवत् । स्थितिमिमां दृष्ट्वा श्रीरत्नेन स्पष्टमेवोक्तं यत् सदस्याना-मिदं स्वेच्छाचारित्वं विलोक्य नितरां खिन्नो भवामि । इदानीं कांग्रेस-संस्थाया दलद्वयमभूत् । समाजवादिना दले जयप्रकाशनारायणाचार्यनरेन्द्र-देवाच्युतपटवर्धनप्रभृतयो मुख्या आसन् । श्रीरत्नप्रभृतयो नेतार एतद्विपरीत-विचारवन्तो बभूवुः । तथापि समाजवादिविचारेभ्यः श्रीरत्नस्य मतवैषम्यं-नाममात्रमेवासीत् ।

कांग्रेससभासदां विचित्रां परिस्थितिमवलोक्य श्रीरत्नः पुनरपि प्रोवाच यद् एतया विचित्रया परिस्थित्या मम समाजवादिविचारस्य नास्ति कोऽपि

सम्बन्ध । लखनऊकाङ्ग्रेसाधिवेशने यदन्तरमासीत्, तत्तु राजनीतिकमेव । लखनऊ काङ्ग्रेसे काप्यतादृशी वार्ता नासीद्, या समाजवादशब्देनोच्चारिता भवेत् । यदा च स्वतन्त्रभारतस्य विचारोऽस्माकं चेतसि वर्तते, तद मतवैषम्यं कीदृशम् ? अस्तु नाम, वयमत्र सहमता असहमता वा भवेम, किन्तु स्वतन्त्रताविचारे एकमता एव । यदा कदाऽपि वयं पृथग्भूता अपि भविष्याम इति ।

अथान्यस्मिन्नपि विषये वदन् श्रीरत्नः प्रोवाच यत् 'स्वदेशीयवस्त्रधारणेऽस्माकं विश्वासो वर्तते । सर्वैरेव भारतीयैः स्वदेशनिर्मितमेव वस्त्र परिधातव्यम् । नूनमहं रूसस्य सामाजिकविषये च यो आर्थिकसिद्धान्तो वर्तते, तत्र विश्वसिमि । किन्तु तस्यान्धानुकरणं कदापि न कर्तव्यमि'ति ।

अत एव श्रीरत्नेन साम्यवादं विहाय समाजवादस्य चर्चा कृता—'साम्यवाद-शब्दो रूसस्य दासत्वं प्रकटयति । स्पष्टार्थस्त्वयं यत्समाजात् स्वार्थभावना निःसार्य ऐकात्मभावस्य प्रस्थापनम्, प्रतियोगितायाः स्थाने सहयोगभावनायाः संस्थापनम्, उत्पादने लाभं विहाय तस्य जनसाधारणस्य भोगार्थञ्च उपयोगीकरणमिति । वर्तमानराज्यव्यवस्था हिंसाया प्रतिष्ठिता वर्तते । किन्त्वहं मुददा समर्था प्रेमप्रवाहप्रपूरिता सर्वजनसौख्यकारिणीं हिंसारहितामहिंसाश्रासमप्रां राज्यव्यवस्थामिच्छामि । यतो हिंसा निःसृता, घृणा विलुप्ता, श्रेष्ठतमभावना च समागता, तदेवाहं समाजवादं कथयामी'ति । इत्थं श्रीरत्नेन समाजवादस्य व्याख्यापि कृता ।

एतस्मिन्नेव समयेऽन्ताराष्ट्रियपरिस्थितौ घटनाद्वयमभूत् । प्रथमा, ब्रिटिशसम्राजः पञ्चमजार्जस्य मरणात्परं तज्ज्येष्ठपुत्रस्य अष्टमेडवर्डस्य राज्यसिंहासन-परित्याग इति । स हि सामाजिकराजकीयपरम्परामनादृत्य दीनानां समुत्थाने सहानुभूतिं प्रदर्शयन् दरिद्राणां गृहेषु तदवस्थावलोकनार्थं सदैव गच्छन्नासीत् । एडवर्डस्यानेन स्वभावेन ब्रिटेनदेशीया महाजना क्रुद्धा बभूवुः ।

अथासौ एडवर्डः एकयाऽमेरिकादेशोद्भवया महिलया सह प्रेमापि

कुर्वन्नासीत् । 'अर्नेस्ट सिम्पसन' नाम्ना तया पूर्वपरित्यक्तो पती जीविता-वेवास्ताम् । पुनर्नूतनः सम्राट् तां परिणेतुमियेष । किन्तु ब्रिटिशराज्यसभा-सदस्यैर्मन्त्रिभिश्च सम्मिलिते वक्तव्ये स्पष्टमुद्घोषितं यत् सम्राट् शासनं हीन-वंशजया स्त्रिया सह सम्राजो विवाहार्थं नियमं नैव विधास्यति । सम्राजा पुनः राज्यसिंहासनं परित्यक्तुं शक्यत इति ।

अनन्तरं राज्यसिंहासनपरित्यागार्थं साधारणसभया राज्यसभया च नियमे पारिते सम्राट् राज्यसिंहासनं परित्यज्य अन्धकारपूर्णरात्रौ पोतेनापरिचितं स्थानं जगाम । अहो प्रेम वैचित्र्यं स्त्रियः मायाजालञ्च, याभ्यां सम्राडपि विशाले राज्यं तृणमिव परित्यज्य अज्ञातस्थानपथिकोऽभूत् ।

द्वितीया घटना रूसदेशे घटिता । काङ्ग्रेससंस्थायाः कैजपुराधिवेशनतः एकमासपूर्वं सोवियतरूसस्य विधाने विचारकरणार्थं क्रेमिनल भवने चत्वारिंशदधिकद्विसहस्रसंख्यकाः सदस्याः समवेताः । विगतद्वादशवर्षेषु रूसेन सामाजिकार्थिकराजनीतिकविषयेषु योन्नतिः कृता, तस्या अभि-व्यक्तिरत्राभवत् । अत्रान्तरे कृषिप्रधानदेशो रूसः सर्वेष्वेव विषयेषु महती-मुन्नतिं चकार । जगतः समुन्नतेषु देशेषु तस्य गणना जायते स्म । न केवल कृषेरुन्नतिः, किन्तु व्यापारेष्वपि महत्युन्नतिः कृता तेन । सर्वाण्येव कार्याण्याधुनिक-वैज्ञानिकरीत्या तत्र जायन्ते स्म । नूतनं विधानं नूतनां रीतिं द्वादशवर्षेषु रूसवासिना जीवने परिवर्तनं नवीनविधानस्य प्रामुख्यं मध्यवर्गीयानामालोचनसंशोधनादिकमिति विषयास्तत्र विचारणीया अभवन् । एतेषु विषयेषु स्टालिनस्य प्रभावपरिपूर्णं भाषणं श्रुत्वा समुपस्थितानां जनानां यो हि करतलध्वनिः समुद्भूत् , तस्य प्रभावो भारतेऽपि स्फुटं प्राभवत् ।

कतिपये भारतीया अप्येवं कथयन्तो बभूवुर्यत् रूसदेशे यादृशं परिवर्तनमभूत् , तादृशमेव परिवर्तनं भारतेऽपि भवितुमर्हतीति ।

---

# फैजपुर-कांग्रेसे श्रीरत्न-भाषणम्

एवं कृते विधाने पारिते श्रीरत्नस्याध्यक्षतायां फैजपुरनगरे कांग्रेसाधिवेशनमभूत्। तत्र श्रीरत्नस्य भाषणं चमत्कृतिपूर्णं सर्वविषयालोचनं चासीत्। तस्य सारोऽयं यत् यूरोपदेशे वर्धमानेन अधिनायक (फासिस्ट)-वादेन विश्वस्मिन् महायुद्धमवश्यम्भावि। परं प्रतिक्रियावादिना प्रतिकूलशक्तावपि कांग्रेससंस्था भारते लोकतन्त्रं स्थापयितुं चेष्टते। तदर्थं सा युध्यत्यपि। कांग्रेससंस्था साम्राज्यवादविरोधिनी राजनीतिपरिपूर्णा च संस्था वर्तते। किन्तु सा भारतस्य राजनीतिकसामाजिकविषयेष्वपि परिवर्तनं कर्तुमिच्छति। आशासे यद्वर्तमानभारतीयघटनाप्रवाहे समाजवाद आगमिष्यति। वर्तमानभारतीयार्थिकरोगस्य समाजवाद एवैकमौषधं वरीवर्ति।

तदनन्तरमसौ राष्ट्रियमहासभासदस्यैः सह नूतनविधानस्य निर्वाचनघोषणापत्रस्य विधानपरिषदो धारासभायाश्च कृते निर्वाचितकांग्रेससदस्यानां सम्मेलनस्य सहयोगरीतिविरोधावश्यकतायाः नूतनविधाननिर्माणस्य चर्चामकरोत्। पश्चादसौ पदग्रहणप्रश्नस्य विस्तरेण विवेचनां कृतवान्। कथञ्च लखनऊ कांग्रेसे स इदं स्पष्टीचकार यत् पदग्रहणेन विधानास्वीकारवार्ता समाप्तिं गमिष्यतीति, सर्वानिदं स्मारितवांश्च।

अथासौ प्रावोचत् यत् मत्समक्षं सर्वप्रधानमुद्देश्यमिदमेव यद् देशस्य सर्वा एव साम्राज्यविरोधिन्यः शक्तय एकं संयुक्तसंघं संघटयन्तु। कांग्रेससंस्था श्वेतादर्शं संयुक्तसंघं पूर्वमेव निर्मितवती। इदानीमपि स वर्तते। अयमेव निश्चयो भवेद्यत्सर्वमपीदं कार्यं कांग्रेससंस्थाधिष्ठितमेव भवतु।

संयुक्ताना कर्मकराणां कृषकाणाञ्च सक्रियसहयोगेनायं संघः सुदृढो भविष्यति। तदर्थमस्माभिः प्रयतितव्यमिति।

फैजपुरकाङ्ग्रेसस्य प्रस्तावेनैकेन देशः सूचितो यत् यदि युद्धारम्भो भवेत्तदेयं ब्रिटिशसाम्राज्यद्वारा भवद्धनजनशोषणमवरुंध्यात्। तत्रैव इदमपि सुस्पष्टमभूद्यद् युद्धे न केनापि साहाय्यमृणं वा दातव्यमिति। भारतीयसीमान्तरक्षणार्थं समीपवर्तिराष्ट्रैर्मित्रताकरणार्थञ्च प्रयत्नो विधेयः। काङ्ग्रेससंस्था विश्वसिति यत्सीमाप्रान्ते प्रचलिता शासकीया नीतिः नूनमसफला जाता। इत्थं श्रीरत्नः सर्वेषामेव विषयाणामालोचना विचारणा च स्वकीयभाषणे व्यधायि।

---

: २८ :

# भारतीय-मन्त्रिमण्डल-संघटनम्

फैजपुर काङ्ग्रेसाधिवेशनानन्तरमेव भारते धारासभाया राज्यसभायाश्च निर्वाचनमभूत् । तत्र काङ्ग्रेससदस्या एव विजयिनोऽभवन् । इदानीं लार्ड-प्रधानस्य लिनलिथगोसाहवस्य शासनमत्र प्रचलदासीत् ।

निर्वाचितसदस्या समाज प्रति शपथग्रहणात्पूर्वं निम्नलिखितं शपथं गृहीतवन्तः—'अखिलभारतीयराष्ट्रियमहासभासदस्योऽहमत्र विषये शपथं करोमि यदहं भारतवर्षस्य वास्तविकीं सेवां करिष्यामि, धारासभाया बहिश्च भारतीयस्वातन्त्र्यार्थं भारतीयजनानां शोषणस्य दारिद्र्यस्य निवारणाय च प्रयतिष्ये । अहं काङ्ग्रेसादर्शोद्देश्यप्राप्त्यर्थं काङ्ग्रेसानुशासनानुसारं तथा कार्यं करिष्यामि यथा भारतं स्वतन्त्रं भवेत्, विविधदुःखैः प्रपीडिता भारतीया जनाः स्वतन्त्राः सुखिनश्च जायेरन्नि'ति ।

निर्वाचने विजितप्रान्तेषु काङ्ग्रेससदस्यानां मन्त्रिमण्डलमपि संगठितम् । विजयोत्सवोऽपि सम्बभूव । सुभाषचन्द्रबोसः कारागारान्मुक्तिं लेभे । अस्वस्थस्य तस्य स्वास्थ्यलाभार्थं सर्वैः शुभकामना प्रकटिता ।

नूतनसदस्यसंगठितेन नवमन्त्रिमण्डलेन जनसाधारणजीवने नूतना प्रक्रिया प्रारब्धा । जनास्ततः सर्वजनहिते दृढमाशान्विताः सम्बभूवुः । भारतीयसंस्कृतिसमुत्थानं मद्यनिषेधमृणस्थानपरत्वं नियमप्रतिबन्धनावरोधं शिक्षावर्धनं ग्रामपञ्चायतानां सञ्चालनं सुलभं न्यायं सुलभां भोजनव्यवस्थां नागरिकाधिकाररक्षणं व्यापारोन्नतिं राजनीतिकार्यकर्तृणामाजीवदानानु समूलं परिवर्तनं दरिद्रजनानामविकसितजातीनाञ्च समुत्थानं परिभावयन्त एव सत्य-साम्राज्यस्वप्नं जनाः कामयमाना अभवन् । सर्वं एव जनाः सर्वथा

: २९ :

# हरिपुरा-कांग्रेसाधिवेशनम्

एतस्मिन्नेव समये सुभाषचन्द्रबोसस्याध्यक्षतायां हरिपुरास्थाने कांग्रेसाधिवेशनमभूत्। तत्राध्यक्षीये भाषणे बोसमहाशय इत्थमुवाच— 'अहं वर्षेऽस्मिन् तादृशीं परिस्थितिं प्रापयिष्यामि, यया श्वेताङ्गसाम्राज्य स्वेच्छाचारितां परित्यक्तुं नूनं विवशं भवेत्। प्रयत्नेऽस्मिन् भारतीया जागतिकीं परिस्थितिमवश्यमेव ध्यास्यन्ति। अहमेतादृशीं नीतिमनुसरिष्यामि ययाऽन्ताराष्ट्रियपरिस्थितेरपि पूर्णो लाभो भवेत्। श्वेताङ्गा भ्रमजालेऽस्मिन् नैव पतन्तु यद् विरोधिनोऽपि कांग्रेससदस्या यथा प्रान्ते मन्त्रिमण्डलं विहितवन्तस्तथा ते भारतीयशासननियमयोजनामपि स्वीकरिष्यन्ति। कांग्रेसमहासभा साम्प्रदायिकप्रश्नान् समापयन् भारते मतैक्यस्थापनस्यापि प्रयासं करिष्यति। राष्ट्रियतायाः संरक्षणं कुर्वन्नेवेयं मुहम्मदीयैः सहापि सामञ्जस्यार्थं प्रयत्नं विधास्यति। एवमेव यद्यल्पसंख्यकाः समाननीतिमनुकर्तुं तत्परा भविष्यन्ति, तदा कांग्रेसमहासभापि तेषां सर्वामेव याचनां स्वीकरिष्यतीति।

इदानीं प्रान्तेषु मन्त्रिमण्डलसंघटनस्य सप्तैव मासा व्यतीताः, किन्तु अत्रान्तरे श्वेताङ्गप्रान्तपालैः सह तेषां भूयान् मतभेदः प्रचलितः। विहारादिविषयेष्वेतादृश्यपि चर्चा श्रुतिं गता यन्मन्त्रिमण्डलैस्त्यागपत्रं प्रदेयमिति।

सभापतेरभिभाषणोत्तरं स्वर्गतायाः श्रीरक्त-जनन्याः प्रभावत्याः कृते शोकप्रस्तावः पारितो बभूव तस्मिन् हरिपुराकांग्रेसाधिवेशने।

प्रायेणैतस्मिन्नेव समये कलिकातायां भाषणं कुर्वन् मुस्लिमलीगाध्यक्षो मुहम्मदालिजिन्नासाहवः प्रोवाच यत् कांग्रेसोच्चाधिकारिणां मानसिकस्थितिरिदानीं विकृतिं गताऽस्ति ।[1]

हरिपुराधिवेशनकाले एव विश्वं विनाशकारिभिर्युद्धाभ्रैराच्छादितम् । चीन-जापान फिलस्तीनयूरोपादिदेशा युद्धस्वप्नं पश्यन्त आसन् । अत एव तस्मिन्नधिवेशने 'भारतं सर्वैः राष्ट्रैः सह मित्रवद्व्यवहारं सम्मनुते' एकदर्थकोऽप्येकः प्रस्तावः पारितोऽभूत् । यदि युद्धे भारतं बलादाकृष्येत तदासौ तस्य महान्तं विरोधं प्रकटीकरिष्यति । तथैव भारते युद्धोपकरणानामेकत्रीकरणमपि सम्मेलनमिदं विनिन्दति, अयमपि प्रस्तावः पारितो बभूव ।



: ३० :

# द्वितीयं विश्वयुद्धं रत्नस्य यूरोप-यात्रा च

किञ्चित्कालानन्तरमेव द्वितीय विश्वयुद्धमारब्धम् । जर्मनप्रधानेन हिटलरेण यूरोपदेशे महती विभीषिका समुत्पादिता ।

यद्यपि भारतं पराधीनदेश आसीत्तथापि कांग्रेसमहासभा अन्ताराष्ट्रियपरिस्थितौ सविशेषमवहिताऽभूत् । श्रीरत्नश्च यूरोपं गत्वा तत्रस्थं क्षात्त्रविधं वृत्तं कांग्रेससमितिसमीपे प्रैषयत् ।

श्रीरत्नो मसवाया भारतीयव्यापारिभिः सिकन्दरियायाञ्च नहसपाशाप्रभृतिनेतृभिर्वार्तां विधाय स्पेनदेशं गतवान् । तस्मिन्नवसरे यूरोपदेशे बमवर्षणेन मृतान्निरपराधान् मानवानवलोक्य महतीं निन्दां चकार श्रीरत्नः । ततः स पेरिसनगरं गत्वा तत्र ध्वनिविस्तारकयन्त्रेण भारतीयस्वाधीनताविषयमाश्रित्य पूर्णस्पष्टीकरणात्मकं भाषणमेकं प्रदाय स्वाधीनताया विषयेऽस्मिन् सर्वेभ्यो योगदानार्थं प्रार्थितवान् । पेरिसवासिनो जनाः श्रीरत्न-भाषणं श्रुत्वाऽतीव विस्मितास्तं प्रशंसितवन्तः । सर्वो ह्येषः कार्यक्रमो निरपराधिनां मानवानां बमवर्षणद्वारा हत्याया विरोध एवासीत् । इंग्लैण्डेऽपि श्रीरत्नस्य विविधः कार्यक्रमोऽभूत् । ततश्चीनदेशभ्रमणं विधाय श्रीरत्नो दिल्लीमागतवान् ।

दिल्ल्यां कांग्रेसकार्यसमितिसमक्षं स्वकीयभ्रमणविवरणं समुपस्थाप्य सर्वैः सदस्यैर्युद्धस्थितिमाश्रित्य विचारमप्यकरोत् श्रीरत्नः ।

एतस्मिन्नेव समये मुस्लिमलीगस्य भारतीयस्वतन्त्रताविरुद्धं साम्प्रदायिकभावपरिपूर्णं पाकिस्तानयाचनासहितञ्च कार्यक्रमं श्रुत्वा श्रीरत्नो देशखण्डनविरोधपरं विविध साधक बाधकयुक्तिपूरितं हार्दिकभावोपेतं

पत्रमेकं मुस्लिमलीगाध्यक्षस्य जिन्नासाहबस्य समीपे प्रेषितवान्। किन्तु भारतखण्डने पाकिस्ताननिर्माणे च दृढप्रतिज्ञस्य जिन्नासाहबस्य हृदयं लेशतोऽपि न परिवृत्तम्।

अथ चैका असाधारणघटनाऽपि सञ्जाता। एकस्मिन्दिने वर्द्धमानं गतस्य काङ्ग्रेसाध्यक्षसुभाषचन्द्रबोसस्य स्वागतार्थं सम्मेलितानां जनानां स्वयं बोसमहाशयस्यापि उपरि मुस्लिमलीगसदस्यैः प्रस्तरेष्टिकाखण्डाः प्रक्षिप्ता। सौभाग्येन सुभाषः ससार्थो रक्षितः, तथापि तस्य साधारणाघातस्तु बभूवैव।

जिन्नासाहबो यां दुर्नीतिमवलम्बितवानासीत्, ततः स पदमपि पश्चान्न ससार। काङ्ग्रेससदस्यैर्निश्चितं यज्जिन्नासाहबद्वारा साम्प्रदायिकस्थितौ किमपि परिवर्तनं नैव भवितुं शक्यमिति।

# त्रिपुरी-कांग्रेसाधिवेशनम्

तदनन्तरं भाविनं कांग्रेसवार्षिकमहाधिवेशनमाश्रित्य महत् मतवैषम्यं समुत्पन्नम्। अन्ततस्तत्र विजयिनो रुग्णस्य सुभाषचन्द्रबोसस्याध्यक्षतायां त्रिपुरीसमीपे नवनिर्मितविष्णुदत्तनगरे तदधिवेशनमभूत्। एतस्मिन्नेव समये महात्मा गान्धी राजकोटसमस्यामुद्दिश्य तत्रत्यप्रजाजनहिताय अनशनं प्रारब्धवान्। स्वकीयाध्यक्षीयभाषणे सुभाषचन्द्रोऽन्ताराष्ट्रियपरिस्थितौ म्यूनिकसामञ्जस्ये मिस्रदेशीयप्रतिनिधि-मण्डलविषये गान्धिनोऽनशने कार्यसमितिसदस्यानां परित्यागे देशीयराज्यकोलाहले च विचारणां चकार। सहैव स उक्तवान् यत् भारतीयस्वातन्त्र्यप्राप्त्यर्थं ब्रिटिशसाम्राज्यशासनाय निश्चितैकोऽवधिः प्रदातव्यः। तत्पूर्वं यदि भारतं स्वतन्त्रं न भवेत्तदा भारतव्यापी सत्याग्रहो विधेयः। प्रारब्धे महति सत्याग्रहे नूनं ब्रिटिशसाम्राज्यं भारतं परित्यक्ष्यतीति।

सुभाषचन्द्रबोसस्य विचारानुसारं संघयोजनायाः प्रतीकारकरणनिश्चयमेवासीत्। स संघयोजनातः पूर्वमेव कार्यारम्भपक्षपाती आसीत्।

शान्तिमार्गावलम्बी भारतः सुभाषचन्द्रस्य भाषणं श्रुत्वा क्रान्तिकर्मणा कथमिवायं भारतं स्वाधीनं विधास्यतीति विचारयामास। अस्मिन् समये गान्धिनः शरीरं राजकोटेऽनशने तल्लीनम्, आत्मा च त्रिपुरीमहाधिवेशने आरतम्।

स्वतन्त्रता स्वयमागतेव जाता। किन्तु देशस्य कर्णधारः को भवेद् इदानीं कम्पमानमीशस्यदनं देशं तीरं प्रापयेदित्यपि विचारणीयमासीत्। यतो हि तस्मिन्समये समाजवादिनः साम्यवादिनः कृषकान्दोलनकारकाः सम्प्रदाय-

वादिनो लीगमतावलम्बिनो मुहम्मदीया अन्यवादवादिनश्च जना भारते बाहुल्येन संभूताः। विदेशे महायुद्धकार्याणि च प्रचलन्त्यासन्।

सुभाषचन्द्रघोषस्य सिद्धान्तं श्रुत्वा वङ्गीयसदस्यान् विहाय प्रायः सर्व एव अप्रसन्नाः। महता प्रयत्नेन सुभाषचन्द्रस्य प्रस्तावोऽयं पारितो बभूव। परिसमाप्ते कांग्रेसाधिवेशने रोगाक्रान्तं सुभाषं चिकित्सकेन सहैव तस्य मित्राणि झरियानामक स्थानं वैद्ययानेन निन्युः।

कार्यसमितिसदस्यानां निर्वाचनं नैवाभूत्। प्रतिदिनमेव भारतीयजनाः कार्यसमितिसदस्यानां निर्वाचनं प्रतीक्षमाणा आसन्। अस्यां विकट-परिस्थितौ कलिकातायाम् अखिलभारतीयकांग्रेसाधिवेशनमभूत्। तत्र सुभाषचन्द्रघोषः कांग्रेसाध्यक्षपदं तत्याज। समुपस्थितैः सर्वैरेव जनैः राजेन्द्र-प्रसादः कांग्रेसाध्यक्षो निर्वाचितः।

दक्षिणभारत-यात्रासमये स्वकीयं स्वागतमवलोक्य सुभाषचन्द्रघोषो विचारितवान् यदेते स्वागतकारिणो ममानुयायिनो भविष्यन्तीति। अत एवायं स्वतन्त्राम् 'अग्रगामिदल'-नाम्नीं संस्थां संस्थापितवान्।



# रत्नस्य लंका-गमनं गान्धी-विचारश्च

अत्रान्तरे लङ्कायां पार्थिवैः कतिपयनियमैः प्रवासिभारतीयानां परिस्थितिश्चिन्तनीया जाता। मैत्रीपूर्णव्यवहारसम्पन्नयोर्देशयोर्मध्ये व्यर्थं कलहं विचार्य काँग्रेसकार्यसमितिः शान्तिसंस्थापनार्थं श्रीरत्नं लंकां प्रेषितवान्। तत्रस्था भारतीयाः सिंहलाश्च वायुयानादवतरणसमये श्रीरत्नस्य महद् स्वागतं चक्रिरे। लंकाराज्यपरिषन्नेतुः जयतिलकस्यानुमत्या या स्वागतसमितिः संघटितासीत्, तस्या अपि स्वागतं स्वीचकार श्रीरत्नः।

ततः परं श्रीरत्नः 'सीलोन-इण्डियन काँग्रेसप्रतिनिधिभिः 'सीलोन-सेण्ट्रल इण्डियन असोसियेशन' प्रतिनिधिभिरन्यैश्च व्यक्तिभिर्मिलितवान्। बह्वीषु सार्वजनिकसभासु भाषणान्यप्यदात्। मन्त्रिभिः सह वार्तायामसौ सिंहलवासिनां लंकानिवासिनां भारतीयानाञ्च मध्ये परस्परं व्यापकईर्ष्या समस्या समाधातुमधिकं श्रममदात्। श्रीरत्नः कथितवान् यदस्याः महत्याः समस्यायाः समाधानमावश्यकम्। अस्याः समक्षं लघुसमस्याः गौणाः। स भारतीयानादिदेश यत्ते भारतीयानां तत्प्रतिनिधीनाञ्च पारस्परिकमतभेदं विहाय स्वाभिमानिनो भवन्त्विति। सहैवासौ भारतीयान् कथयत् यत्तेषां गृहाणि लङ्कायां वर्तन्ते। अतस्तस्य देशस्य सेवा तैः सत्यविचारपूर्वकं कर्तव्येति।

इत्थं श्रीरत्नस्य लंकागमनेन भाषणेन सद्व्यवहारेण च लंकानिवासिभारतीयानां समस्यायाः किञ्चिदंशमेव समाधानमभूत्। किन्तु भारतीयानां स्वदेशप्रेषणयोजनाया वैफल्यमेवातिष्ठत्। यद्यपि श्रीरत्नस्य लङ्कायात्रया द्वयोर्देशयोः परम्परागतमैत्र्याः स्मरणं नूतनमभूद्, तथाप्युद्देश्यसिद्धिर्नैव जाता। लंकाशासनस्याप्येकः प्रतिनिधिर्वार्तायै भारतमागतवान्, किन्तु परिणामे किमपि परिवर्तनं नाभूत्।

अथ द्वितीयविश्वयुद्धे आरब्धे सति सम्राट् साम्राज्यमुद्दिश्य सन्देशमेकं प्रसारितवान् । सन्देशेऽस्मिन् असौ एतादृशस्यैकस्य राज्यस्य निन्दाम् करोत्, येन पूर्वतनीयं सन्धिवचनमनादृत्य अपरस्य राज्यस्य स्वाधीनताया-माक्रमणं कृतम् । अनन्तरं लार्डप्रधानो लिनलिथगोमहोदयोऽपि वर्तमानयुद्ध-विषये विचारं प्रकाश्य 'भारतं पशुबलविरुद्धं मानवीयस्वातन्त्र्यार्थं युद्धं करिष्यती'ति विश्वासमपि प्रकटितवान् । असौ गान्धिना सह वार्तामपि युद्धारम्भे चक्रे ।

पश्चात् गान्धी स्पष्टीकृतवान्—"कांग्रेसकार्यसमितिर्विषयेऽस्मिन् मत्तः कमप्यादेशं नैवादात् । विशुद्धाहिंसापूर्णसिद्धान्तसम्पन्नत्वादहं राष्ट्रियविचार-धारायाः प्रतिनिधित्वमपि नैव करोमि ।' इत्यमहं लार्डप्रधानमभ्यकथयम् । अत एव वार्तालापस्य साम्राज्यस्य वा कोऽपि प्रश्न एव नासीत्तत्र । रिक्तहस्त एवाहं लार्डप्रधानभवनात् समागतोऽस्मि । यदि किमपि सामञ्जस्यमपि भविष्यति तदा तत् कांग्रेसशासनयोर्मध्ये भवेदि"ति । इत्थं कांग्रेसविषये स्वकीयां स्थितिं स्पष्टीकुर्वन्नसौ लार्डप्रधानं सूचितवान् यत् मम सहानुभूतिर्मित्रदेशाभ्यामुद्देश्यौ प्रत्यस्ती'ति ।

लार्डप्रधानेन सह वार्तालापात्पूर्वमेव महात्मा गान्धी हिटलरसमीपेऽपि निम्नलिखितं पत्रमेकं प्रेषितवान्—"मम सुहृद एवं कथयन्ति यन्मानवजाति-कल्याणार्थं हिटलरसमीपे पत्रमेकं भवता लेख्यम् । किन्तु जनानुरोधमद्यावधि नाहं मानयमासम्, यतो हि इदं मम साहसं भविष्यति । किन्त्विदानीं मा कश्चित्प्रेरयति यद् भवताऽधिकं नैव विचार्य हिटलरः प्रार्थनीयः, कामम् एतस्याः प्रार्थनायाः किमपि फलमेव भवेत् । इदं खलु स्पष्टं यत् संसारे भवानेवैकाकी युद्धावरोधनक्षमो महापुरुषः । हिंसामार्गं परित्यज्याहिंसामार्गेण साफल्यमाप्तस्य मम प्रार्थनामादृत्य किं भवान् हिंसामार्गं परित्यक्ष्यति ? अस्तु, भवत्सविधे पत्रं निलिख्य यदि मयापराधोऽपि कृतस्तदा भवता स क्षन्तव्य इति । किन्तु हिटलरो गान्धिनः पत्रे किमपि ध्यानं नैव ददौ ।

---

: ३३ :

# वर्धा-कार्यसमिति-प्रस्तावः

तदनन्तरं वर्धानगरे काम्रेसकार्यसमितेरधिवेशनमभूत् । तत्र हिटलरस्य पशुबलेन समर्दितं पोलैण्डदेशं प्रति सहानुभूतिः प्रदर्शिता सर्वैः । तथैव इंग्लैण्डफ्रांसौ येनोद्देश्येन युद्धे सम्मिलितौ तस्य प्रशंसापि कृता । कार्यसमिति-सदस्यैराश्चर्यमपि प्रकटितं यत् यदा स्वाधीनदेशाः स्वस्वराज्यसभाया युद्धे सम्मिलितुं तं परित्यक्तुं वा निर्णयं कुर्वन्ति तदा युद्धेन साक्षात् सम्बन्धा-भावेऽपि भारतं बलाद् युद्धे नियोजयितुं कथं नाम ब्रिटिशसाम्राज्यं विवशीकृतवत् ? संघयोजनायाः कार्यं सपदि न भविष्यतीति लार्डप्रधान-घोषणया समितिः प्रसन्नतामनुभवति ।

समितिर्मनुते यत्संघयोजनाकार्ये स्थगिते केन्द्रे वर्तमानमनुत्तरदायि शासनं प्रान्तीयशासनेषु नियन्त्रणं विधास्यति । इत्थमेतादृशी परिस्थितिः समुत्पन्ना यस्या मौनावलम्बनं देशस्य कृतेऽश्रेयसे भविष्यति । अतः केन्द्रीय प्रान्तीयशासनयोः स्थितेः स्पष्टीकरणमावश्यकम् । विगतस्य युद्धस्यानुभवतः शासने विश्वासोऽनुचित एव । अतः समितिः पूर्वमेव शासनं सूचितवती यत्केवलं घोषणामात्रेण किमपि न भवेत्, घोषणायाः प्रत्यक्ष कार्यान्वयनमपि आवश्यकम् । तथैव सत्याग्रहविषयेऽपि तत्र प्रस्तावः पारितो बभूव ।

अपरपक्षेण चैतादृशं विचारितं यत्काम्रेसमन्त्रिमण्डलानि कार्यं कुर्वन्ति चेन्मन्त्रिणः सत्याग्रहिणां काम्रेसजनानां बन्दीकरणार्थमादेशप्रदानाय विवशा भविष्यन्ति । इत्थं युद्धसमाप्तिपर्यन्तं राष्ट्रियसंगठनभूतकाम्रेसस्यैव परि-समाप्तिर्भविष्यति । अतः मन्त्रिणः पदत्यागं कुर्वन्तु शासकीयं कार्यं वा कुर्वन्तु इत्यत्र पक्षस्य चयनं कार्यम् ।

महात्मनः गान्धिनो विचार आसीद्यदस्माभिः स्वकीयनैतिकसमर्थन मात्रम्, मन्त्रिणः कार्यं कुर्वन्तु नाम। यतः पूर्णस्वराज्यस्य स्वाधीनोपनिवेशपदस्य वा प्राप्त्यर्थं श्रीरत्न आग्रहान्वित आसीत्, तद्विषये गान्धिनो विचारेण तन्मन्त्रिभिरेव प्राप्यम्। किन्तु मयाऽनेन कृतायाः प्रतिज्ञायाः पूर्तौ सन्देह एवासीत्। किञ्च मोहनदासस्य दृष्टिकोणेन भाविन्या घोषणायाः पूर्तेः समानताधिक दर्शिता बभूव। श्रीगान्धी शान्तभक्त्या एवं नैव विचारितवान्, किन्तु काङ्ग्रेसस्य आन्तरिकीं परिस्थितिं विलोक्यैव एवमुवाच।

वस्तुतो महात्मा गान्धी प्रस्तावाधारेण वार्ताकरणे कस्या अपि याचनायाः समुत्थापने अवसरनिर्धारणे निष्ठावशात् प्रतायानपि कस्याश्चिद्याचनाया वा स्वीकरणे नैव तत्पर आसीत्। असौ हरिजयाग-आन्दोलनस्यापि विरुद्ध आसीत्। सर्वं एव जानन्त आसन् यद् घोषणा-पत्रप्रस्तावनिचारस्य मुख्या भागः श्रीरत्नेन सम्बद्ध इति। अत एव मोहनदासो विचारितवान् यदि प्रस्तावः पारितो भवेत्तदा श्रीरत्न एवाध्यक्षो भूत्वा कार्यसमितिसदस्यानां निर्वाचनं कुर्यात्। स च स्वकीयेऽहिंसासिद्धान्ते सुस्थिरो भूत्वा मध्यस्थ एव भवितुमिच्छतवान्। अत एव स्वयम-सहमतोऽपि असौ श्रीरत्नप्रस्तावं पारयितुमिच्छन्नासीत्। दिनत्रयात् पूर्वमेव राजेन्द्रप्रसादोऽध्यक्षपदत्यागपत्रं प्रदाय कथञ्चित् सेवाग्रामं गतवानासीत्। वैधानिकवादित्वात् श्रीरत्नस्याध्यक्षत्वविपक्षः प्रस्तावोऽयं पारितु नायकानाम्। पुनर्युद्धसमितौ प्रस्तावः समुपस्थितः, तस्याध्यक्ष आसीत् श्रीरत्नः।

पुनः सम्राट् स्वकीयघोषणाया भारतीयानां प्रत्येकवर्गतः युद्धाय साहाय्य समर्थनञ्च याचितवान्।

अथ काङ्ग्रेसकार्यसमितेर्घोषणायाः श्रीगान्धिना तत्सम्बन्धिनि विचारे कृते तत्प्रकाशितमभूत्। श्रीगान्धिना विचारेणानुमोदिता विश्वयुद्ध-

सम्बन्धिनीयं प्रकाशिता घोषणा दिनचतुष्टयैर्निर्मिता बभूव । समितेराग्रहेण श्रीरत्नस्तां निर्मितवान् ।

स्वविचारं प्रकटयन् महात्मा गान्धिना उक्तम्—'मम विचार आसीद् दहिंसात्मकरीत्या किञ्चित्पणमन्तरैव ब्रिटिशशासनस्य समर्थनं कर्तव्यम् । किन्तु समितिरहिंसात्मकदृष्टिकोणं ग्रहीतुमसमर्था श्वेताङ्गैः सह महान्तमुदारतायाः परिचयं ददौ । अत एव वक्तव्यमिदं सम्पूर्णपीडितराष्ट्राणां कृते कथितुं शक्यते । कांग्रेसकार्यसमितिश्च न केवलं भारतीयहितमिच्छति, परं सर्वेषामेव शोषितराष्ट्राणां हितमिच्छति ।

समितिश्च वक्तव्यमेतत्पारयित्वा सहैव श्रीरत्नस्याध्यक्षत्वे नूतनां समितिं संगठितवती । एतस्या नूतनायाः समित्याः कार्यं यथासमयं परिवर्तितपरिस्थित्यनुसारं भविष्यति । आशासेऽहं यन्मम वक्तव्यस्य समर्थनं कांग्रेससंस्थायाः सर्ववर्गीया जनाः करिष्यन्ति । राष्ट्रेतिहासस्य सर्वाधिकमहत्त्वपूर्णे काले कांग्रेसमहासभया विश्वासः कर्तव्यो यत् यदि किञ्चित्करणमावश्यकं भवेत्, तदा शैथिल्यं कदापि नैव प्रकटयिष्यामि ।

यदि कांग्रेसजना दलगताभ्य-न्तरिकसाधारणकलहे संलग्ना भविष्यन्ति तदा स महद्दुःखस्य विषयो भविष्यति । यदि समितिकार्येण कस्मिन्महत्त्वपूर्णः परिणामः समुद्भवति, तदा सर्वेषामेव कांग्रेसजनानां सहयोग आवश्यकः ।

एवमेव आशासेऽहं यदन्या अपि सर्वा राजनीतिकसंस्थाः स्वकीयमतिनिर्धारणार्थं ब्रिटिशशासनप्रार्थनाकरणे युद्धसमये तन्नीत्यनुसारं संभाव्यमानेषु सर्वेष्वपि विषयेषु च समितेः साहाय्यं प्रदास्यन्ति । श्वेताङ्गाः स्वतन्त्रवादविषये यत्किञ्चिदपि कथितवन्तः, तस्मादयमेव परिणामो निःसरति यद् भारतं ब्रिटिशसाम्राज्याधीनानन्यानपि देशान् स्वाधीनान् घोषयन्तु । यदि युद्धोद्देश्यमेतदतिरिक्तमन्यत्किञ्चिद् भवेत्तदा पराधीनराष्ट्राणि शस्त्रव्यवहारेण स्वेच्छया वा ब्रिटिशशासनस्य कथं साहाय्यं करिष्यन्ति । आवश्यकता ब्रिटिशराजनीतिज्ञानां मानसिकपरिवर्तनस्यैव

विद्यते । युद्धात्पूर्वं लोकतन्त्रवादे विश्वासस्य या घोषणाऽभूत्, याञ्च स्वैवाङ्गराजनीतिज्ञा अधुनापि वारं वारमुद्घोषयन्ति, तदनुसारमेव कार्यक्रमस्यावश्यकता वर्तते । प्रश्नस्त्वेवाद्यो यद् ब्रिटिश आधुनिकभारतं युद्धे बलात्सनाथयितुमिच्छति, आहोस्वित्तस्य सन्धिसहयोगं ग्रहीतुमिच्छति ? कांग्रेसस्य समर्थनं ब्रिटिशभारतयोः कृते सर्वोत्कृष्टो महानैतिकनिधिरेव भविष्यति । कांग्रेसस्य समीपे सैनिका नैव सन्ति । सा ह्यहिंसात्मकसिद्धान्तेन युद्धं करोति' इति ।

---

: ३४ :

# जेटलैण्ड-भाषणं गान्धिन उत्तरञ्च

अनन्तरं लन्दने जेटलैण्डसाहबस्य क्षोभपूर्णं भाषणमभूत्। असौ कथितवान् यद् भारतस्य सर्वं एव वर्गाः युद्धे साहाय्यं प्रदत्तवन्तः। भारतीयनरेशा धनं सेवा सैनिकाश्च प्रदातुं कथितवन्तः। देशस्य सर्वभागेभ्य एव जनाः सहानुभूतिपूर्णं सन्देशं प्रेषितवन्तः। काँग्रेससंस्थापि देशद्वये सम्पन्नायाः प्रतिज्ञायाः पूर्तौ सहयोगं प्रदातुं तत्परा। अथ लार्डसभाया लार्डस्नेलकथितवाक्यं पुनरपि कथयन्नयमकथयत् यत् काँग्रेसनेतृभिः स्वशासनस्याधिकारपूर्णस्वरूपसम्बन्धे यत्स्वकीयं याचनं पुनः समुपस्थापितं तत्तु स्वाभाविकमप्यसामयिकमस्तीति। अन्ते चासौ न्यायोचितयाचनेऽपि काँग्रेसं भर्त्सयित्वा श्वेताङ्गानां जीवनमरणसमये सत्याग्रहस्य वार्तामनुचितेत्यपि कथितवान्।

एतस्योत्तरं महात्मा मोहनदास इत्थं प्रदत्तवान्—'लार्डसभाया वादविवादावसरे काँग्रेसं विनिन्दन् स्वकीयं प्राचीनं प्रभावञ्च प्रकटयन् लार्डजेटलैण्डो यत्कथितवान्, तच्छ्रोतुमप्यहं नैव तत्पर आसम्। काँग्रेसे सर्वं एव जनाः सनागता इत्यहं मानयामि। कस्या अप्यन्यस्याः संस्थाया निन्दा विना कथितुं शक्यते यत्काँग्रेसमहासभा जातिधर्मभेदं विहाय विगतपञ्चाशद्वर्षेभ्यः सर्वसाधारणस्य प्रतिनिधित्वं कुर्वती। गृहस्थानां भारतीयराज्यप्रजानां स्वार्थविरोधो न कोऽपि स्वार्थोऽस्य।'

अयमेव स्वविचारं प्रकटयितुं श्वेताङ्गानप्यसौ अकथ्
श्वेताङ्गाः सर्वेषामेव स्वाधीनतार्थं युद्धं कुर्वन्ति, तदा
वक्तव्यं यद् भारतस्य स्वाधीनतापि तेषां युद्धोद्देश्ये स

एतस्याः स्वाधीनतायाः स्वरूपस्य स्पष्टीकरणं भारतीयानामधीनमेव । यदा ब्रिटेनदेशो जीवनमरणयोः संग्रामे व्यस्तो विद्यते तदा श्वेताङ्गाः स्वविचारं स्पष्टीकुर्वन्तु । काङ्ग्रेससदस्यानां कथनमनुचितमिति जेटलैण्डकथनमेव महदनुचितम् । भारतीयजना इदं पृच्छन्ति यद् युद्धात्परं भारतस्य पदं स्वाधीनदेशस्येव भविष्यति न वेति ? अस्योत्तरं स जनानां समक्षं किं प्रदास्यति ? अत एव श्वेताङ्गानां मित्रभूतोऽहं राजनीतिज्ञान् कथयामि यत्साम्राज्यवादिनां प्राचीनां भाषां विहाय ते सर्वजनहिताय नूतनयुगारम्भं कुर्वन्त्वि'ति ।

### श्रीरत्न-भाषणम्

काङ्ग्रेससुदीपसमितेरध्यक्षः श्रीरत्न इत्थं स्वकीयमुद्गारं प्रकटितवान्— 'कार्यसमित्या प्रकाशितं भाषणं न केवलं भारतस्य, किन्तु संसारनिवासिनां सर्वेषामेव पीडितजनानामप्यस्ति । यस्यां भाषायां जेटलैण्डो भाषणं ददौ, सा मृता समाप्ता च । एतादृशं भाषणं विंशतिवर्षेभ्यः पूर्वं दातुमुचितम् ।'

स्वाभिमानी श्रीरत्न एवमप्युक्तवान् यदहं भयविघ्नपरम्परेण स्वकीयं याचनं समुपस्थापितवान् । किन्तु वयं संसारस्य स्वाधीनताया निश्चिन्ता भूत्वा तत्स्वाधीनताया भारतस्वाधीनतायाश्च विश्वसिमः । तदैवास्माकं हृदये युद्धस्यापि कोऽप्यर्थो भविष्यति । तदैव वयमनेनादर्शध्येयप्राप्त्यर्थं युद्धं कर्तुं शक्नुमः । तत्तु न केवलमस्माकं कृते, किन्तु संसारस्यापि कृते सम्यगुपयुक्तं भविष्यति । बहूनां श्वेताङ्गानामपि तदेव लक्ष्यं यन्मम भारतस्यास्ति । किन्तु यदि नास्त्येतल्लक्ष्यं तेषां तदा किमर्थं वयं युद्धं कुर्मः । यस्यादर्शस्य स्पष्टशब्दैर्घोषणा भवति, तदनुसारी च व्यवहारोऽपि भवति, तस्यैव कृते स्वाधीनभारतमपि युद्धं कर्तुमर्हति ।'

तदनन्तरं लाटप्रधानो लिनलिथगोमहोदयो द्विपञ्चाशज्जनैः साक्षात्कारमकरोत्, येषु मोहनदास राजेन्द्रप्रसाद श्रीरत्न-सुभाषचन्द्र वल्लभभाईपटेल-जिन्नासाहेब नरेन्द्रमण्डलाध्यक्षप्रभृतयो मुख्या आसन् ।

---

: ३४ :

# जेटलैण्ड-भाषणं गान्धिन उत्तरञ्च

अनन्तरं लन्दने जेटलैण्डसाहबस्य चोभपूर्णं भाषणमभूत्। असौ कथितवान् यद् भारतस्य सर्व एव वर्गाः युद्धे साहाय्यं प्रदत्तवन्तः। भारतीय-नरेशा धनं सेवा सैनिकाश्च प्रदातुं कथितवन्तः। देशस्य सर्वभागेभ्य एव जनाः सहानुभूतिपूर्णं सन्देशं प्रेषितवन्तः। काग्रेससंस्थापि देशहृद्ये सम्पन्नायाः प्रतिज्ञायाः पूर्तौ सहयोगं प्रदातुं तत्परा। अथ लार्डसभायां लार्डस्नेल-कथितवाक्यं पुनरपि कथयन्नयम् कथयत् यत् काग्रेसनेतृभिः स्वशासनस्या-धिकारपूर्णस्वरूपसम्बन्धे यत्स्वकीयं याचनं पुनः समुपस्थापितं तत्तु स्वाभाविक-मप्यसामयिकमस्तीति। अन्तेः चासौ न्यायोचितयाचनेऽपि काग्रेसं भर्त्सयित्वा श्वेताङ्गानां जीवनमरणसमये सत्याग्रहस्य वार्ताप्यनुचितेत्यपि कथितवान्।

एतस्योत्तरं महात्मा मोहनदास इत्थं प्रदत्तवान्—'लार्डसभायां वाद-विवादावसरे काग्रेसं विनिन्दन् स्वकीयं प्राचीनं प्रभावञ्च प्रकटयन् लार्डजेटलैण्डो यत्कथितवान्, तच्छ्रोतुमप्यहं नैव तत्पर आसम्। काग्रेसे सर्वं एव जनाः समागता इत्यहं मानयामि। कस्या अप्यन्यस्याः संस्थाया निन्दां विना वक्तुं शक्यते यत्काग्रेसमहासभा जातिधर्मभेदं विहाय विगतपञ्चाशद्वर्षेभ्यः सर्वसाधारणस्य प्रतिनिधित्वं कृतवती। मुहम्मदी-यानां भारतीयराज्यप्रजानां स्वार्थविरोधी न कोऽपि स्वार्थोऽस्य।'

अयमेव स्वविचारं प्रकटयितुं श्वेताङ्गानप्यसौ अकथयत्—'यदि श्वेताङ्गाः सर्वेषामेव स्वाधीनतार्थं युद्धं कुर्वन्ति, तदा तैः स्पष्टमेव वक्तव्यं यद् भारतस्य स्वाधीनतापि तेषां युद्धोद्देश्ये सम्मिलिता वर्तते।

एतस्याः स्वाधीनतायाः स्वरूपस्य स्पष्टीकरणं भारतीयानामधीनमेव । यदा ब्रिटेनदेशो जीवनमरणयोः संग्रामे व्यस्तो विद्यते तदा श्वेताङ्गाः स्वविचारं स्पष्टीकुर्वन्तु । काङ्ग्रेससदस्याना कथनमनुचितमिति जेटलैण्डकथनमेव महदनुचितम् । भारतीयजना इदं पृच्छन्ति यद् युद्धात्परं भारतस्य पदं स्वाधीनदेशस्येव भविष्यति न वेति ? अस्योत्तरं स जनाना समक्षं किं प्रदास्यति ? अत एव श्वेताङ्गाना मित्रभूतोऽहं राजनीतिज्ञान् कथयामि यत्साम्राज्यवादिना प्राचीना भाषा विहाय ते सर्वजनहिताय नूतनयुगारम्भं कुर्वन्त्वि'ति ।

श्रीरत्न-भाषणम्

काङ्ग्रेसयुद्धोपसमितेरध्यक्षः श्रीरत्न इत्थं स्वकीयमुद्गारं प्रकटितवान्—'कार्यसमित्या प्रसारितं भाषणं न केवल भारतस्य, किन्तु संसारनिवासिना सर्वेषामेव पीडितजनानामभ्यर्थनास्ति । यस्या भाषाया जेटलैण्डो भाषण ददौ, सा मृता समाप्ता च । एतादृशं भाषण विद्यार्थिभ्यः पूर्वं दातुमुचितम् ।'

स्वाभिमानी श्रीरत्न एवमप्युक्तवान् यत्राहं कार्यविवरणरूपेण स्वकीयं याचन समुपस्थापितवान् । किन्तु वयं संसारस्य स्वाधीनताया विश्वस्ता भूत्वा तत्स्वाधीनताया भारतीयस्वाधीनतायाञ्च विश्वसिमः । तदैवास्माकं हृदये युद्धस्यापि कोऽप्यर्थो भविष्यति । तदेव वयमेतादृशध्येयप्राप्त्यर्थं युद्धं कर्तुं शक्नुमः । तन्न न केवलमस्माकं कृते, किन्तु संसारस्यापि कृते साम्यमुपयुक्तं भविष्यति । बहूना श्वेताङ्गानामपि तदेव ध्येयं यन्मम भारतस्यास्ति । किन्तु यदि नास्त्येतल्लक्ष्यं तेषा तदा किमर्थं वयं युद्धं कुर्मः । यस्यादर्शस्य स्पष्टशब्दैर्घोषणा भवति, तदनुसारी च व्यवहारोऽपि भवति, तस्यैव कृते स्वाधीनभारतमपि युद्धं कर्तुमर्हति ।'

तदनन्तरं लार्डप्रधानो लिनलिथगोमहोदयो द्विपञ्चाशद्भिः साधारणजनैः समभाषत, येषु मोहनदास राजेन्द्रप्रसाद श्रीरत्न-सुभाषचन्द्र वल्लभभाईपटेल-जिन्नासाहब नरेन्द्रमण्डलाध्यक्षप्रभृतयो मुख्या आसन् ।

---

: ३५ :

# मन्त्रिमण्डल-त्यागः

तदनन्तरमखिलभारतीयराज्यप्रजापरिषदोऽधिवेशनं लुधियानानगरे श्रीरतनस्याध्यक्षत्वे सम्पन्नम्। तस्मिन्नपि कार्यसमितिः स्वकीयं वक्तव्यमित्थं प्रसारितवती—'वयं भारतस्याखण्डतायां स्वाधीनतायाञ्च विश्वसिमः। भारतीयकाङ्ग्रेससंस्था एतस्मिन् संकटसमये राष्ट्रस्य लोकतन्त्रीयस्वाधीनताया यद् याचनं गभीरेण शब्देन समुपस्थापितवती तेन समितिः सन्तुष्टा। प्राप्यमाणायां स्वाधीनतायां ब्रिटिशभारतीयप्रजा इव देशीयराज्यप्रजा अपि समभागिन्यो भविष्यन्ति। अस्माभिरपि समानं कार्यं कर्तव्यम्। अत एव काङ्ग्रेसेन युद्धोद्देश्यसम्बन्धे स्पष्टीकरणार्थं ब्रिटिशशासनाय यद् कथितं तस्मिन्नपि समितिः सन्तुष्टा। भारतीयनरेशा एकत्र यूरोपदेशे लोकतन्त्ररक्षार्थं ब्रिटिशसाम्राज्याय साहाय्यं प्रदातुं कथयन्तोऽन्यत्र च स्वीयराज्येषु निरङ्कुशं शासनं सञ्चालयन्ति। अतः समितिर्नरेशानपि प्रार्थयति यद् ते एतस्मिन् देशेऽपि लोकतन्त्र-शासनस्य घोषणां कुर्वन्तु, कर्मणा मनसा वाचा च पालयन्तु स्वकीयां घोषणाम्। यावदाधारभूतं परिवर्तनं न भविष्यति, तावत्प्रजाभ्यः सहयोगाशा नरेशानां कृते व्यर्था इति।

: ३६ :

# रामगढ़-कांग्रेसाधिवेशनम्

श्रीअबुलकलाममाजादस्याध्यक्षत्वे बिहारप्रदेशीयरामगढनामकस्थाने काग्रेसस्य त्रिपञ्चाशदधिवेशनमभूत् । तत्र रामगढकाग्रेसस्य स्वागताध्यक्षः श्रीराजेन्द्रप्रसादः स्वकीयं स्वागतभाषणं विभिन्नघटनापरिपूर्णं जनहृदयस्पर्शकरं चमत्कारपरिपूर्णमतीव मनोहरं प्रददौ । तद्भाषणं यथा—

## श्रीराजेन्द्रप्रसादस्य भाषणम्

"यदा कदा वयं भूतकालादपि शिक्षामवाप्यातीव प्रभाविताः प्रेरिताश्च भवामः ।

कस्मिंश्चित्समये दक्षिणबिहारे राज्ञोऽजातशत्रो राज्यं उत्तर-बिहारे च वज्जीना सुप्रसिद्धं प्रजातन्त्रराज्यञ्चास्ताम् । अजातशत्रुः वज्जीराज्यं विजित्य स्वकीयराज्ये विलीनीकर्तुमुद्यत आसीत् । एतस्मिन्नन्तरे गौतमबुद्धोऽजातशत्रुराजधान्या राजगृहे समागत्य गृध्रकूटपर्वते स्वकीयासनं समाधत्त । वज्जीविरोधिन्याः स्वकीययोजनायाः विषये गौतमस्य को विचार इति विज्ञातुं स्वकीयमन्त्रिणं सत्कारं बुद्धसमीपे प्रेषयदाशु अजातशत्रुः । मन्त्रिद्वाराऽजातशत्रोर्विचारं विज्ञाय भगवान् स्वकीयशिष्यमानन्दं प्रश्नाञ्चकार । ततश्च उत्तराणि प्राप्य अजातशत्रोः समाधानमकरोत् ।

भगवानकथयत्—'आनन्द ! किं श्रुतवानसि त्वं यद् वज्जीजनाः सर्वदैव सभामायोजयन्ति, बहवो जनाश्च तस्या सभाया सम्मिलिता भवन्ति ?' आनन्द उवाच—'तथागत ! श्रुतवानस्म्यहं यद् वज्जीना सर्वदैव सभा भवति, भवन्ति च तत्र बहवो जनाः समवेताः' इति । श्रुत्वानन्दवचनं बुद्ध उक्तवान्—'आनन्द ! वज्जीना सभा यावत्सर्वदा भविष्यति यावच्च बहवो जनाः सभाया सम्मिलिता भविष्यन्ति, तावत्तेषामभ्युन्नतिरेव भविष्यन्ति, न तु विनाशः' इति ।

इत्यमन्यानपि षट् प्रश्नान् कृत्वा प्राप्तोत्तरो भगवान् बुद्धः प्रोवाच—'आनन्द ! यावद्वज्जीगण एकत्र स्थास्यति, मिलित्वा कार्यं स्वकीयराष्ट्रिय-

कर्तव्यपालनं नियमेऽपारिते स्वेच्छया आदेशानारम्भं स्वनियमानतिक्रमणं स्वपारितनियमानुसारं सामूहिकरूपेण कार्यं वृद्धानां श्रेष्ठानाञ्च सम्मानं तेषां मान्यविचारस्वीकारं स्वकीयनारीः प्रति मधुरव्यवहारं, स्वकीयचैत्यानां समादरं धार्मिकप्रयोजनेन प्रदत्तसम्पत्त्यनपहरणमर्हतां करणं वाह्यप्रदेश-स्थितानामर्हतां स्वदेशप्रवेशाज्ञाप्रदानञ्च करिष्यति, तावदसौ सम्पन्न एव स्थास्यति, न केनापि प्रकारेण तेषां विनाशो भविष्यती'ति ।

यदाऽजातशत्रुणेदं श्रुतं तदा तस्य मनसि विश्वासो जातो यत् स्वसैनिक-बलेन वज्जीविजयोऽसम्भव इति । शक्यते इदानीमपि बुद्धादेशान् संसार-मतिः । कस्मिंश्चिदपि जीवितसमाजे मतभेदः स्वाभाविकः । किमद्य वय कार्येतद्विषयेऽपीदं कथयितु न शक्नुमः ? किं वयमिदानीमेकत्र मिलित्वा न तिष्ठामः, किं स्वनिर्मितं नियमं नैवोल्लङ्घयामः ? किं स्वनिर्मितनियमानुसारं सामूहिकरूपेण कार्यं कुर्मः ? किं विश्वासेन निश्चयेन च कथयितु शक्नुमो यद् वृद्धानां श्रेष्ठानाञ्च समादरं कुर्मस्तेषां च मान्य विचारं मानयामः ? वज्जीवत्मेतास्वेव मूलभित्तिषु संस्थितमासीत् । यदि वयमप्येतेषां प्रश्नानामुत्तरमोमिति दातुं शक्नुमस्तदा अस्माकं शक्तिरेत-दप्यधिका भविष्यति ।

एतस्मिन्समये भगवान् तथागतो वज्जीसभां प्रदर्शयन् भिक्षूनकथयत्—'यूयमेताः सभाः पश्यत, अनुमानमपि कुरुत यद् देवानां सभा कीदृशी भवता'ति । किमस्माकं कृतेऽप्येतादृशं संगठनं राष्ट्रियसभायाः संगठनस्यैव-मेव सञ्चारनञ्च सम्भवि नास्ति ? यन्महात्मागान्धी अस्मासु हिंसान्यूनताया अनुशासनाभावस्य च निन्दां कुर्वन् बुद्ध इवोपदेशं प्रददात्' इति ।

### श्रीआजादस्य भाषणम्

अबुलकलामाजादस्याभिभाषणं यथा—'अद्यास्माकं संगठनमतीव संकटकालीनसमयात्प्रस्थानं करोति । एतादृशे संकटकालीनसमये परस्पर विरोधान्वितसम्भावनानामाशा समुपस्थिता सम्भवति । यदियं निर्बाधं

सत्यमार्गेणैवाग्रसरा भविष्यामस्तदा स्वकीयोद्देश्यमवश्यमेव प्राप्स्यामः, अन्यथा मार्गभ्रष्टा भूत्वा काठिन्ये पतिष्यामः ।

असौ विस्तारेण कांग्रेस-याचनं तदुपरि ब्रिटिशशासनोत्तरं कांग्रेस-कार्याणि च विचारयन्नुवाच यदस्माकं स्थितिः स्पष्टा वर्तते । वयं ब्रिटिश-शासनं कियदपि सुदृढं नैव विलोकयितुमिच्छामः । अत एव स्वकीयदासत्व-वर्धनमपि नैवाभिलषामः । अस्माकं भावना सहयोगदिशि वर्धते । यस्यां स्थितौ वयमद्य स्मः, निर्णयो विधेयो यदस्यामेव स्थितौ स्थास्यामोऽथवा अग्रे वर्धमाना भविष्याम इति । गमनावरोधस्यार्थः पश्चात्परावर्तनम् । वयं पश्चात्परावर्तनं स्वीकुर्मः । अत एव केवलमग्रेसरा एव भविष्यामः । मम विश्वासो वर्तते, यदाहमिदं कथयामि यदग्रेसरो भविष्यामि, तदाग्रेसर एव भविष्यामि, भवन्तश्च सर्वे मया सहैव भविष्यन्ति चेति ।

तत्र च भारतेन महायुद्धेन च सम्बद्ध एकः प्रस्तावः पारितो बभूव ।

## द्वौ सम्मेलनान्तरौ

कांग्रेसाधिवेशनात्पूर्वं तत्रैव 'किसाननगर'नामके विशालमण्डपे जनसमुदायसमुपस्थितौ सुभाषचन्द्रबोसस्याध्यक्षतायां सम्मेलनमेकमभूत् । समुपस्थिता जनसमुदायाः 'युद्धाय वयं तत्पराः' इति घोषणां गगनभेदि-शब्दैः कृतवन्तः ।

अस्मिन् सम्मेलने युद्धसमितिनिर्माणार्थमप्येकः प्रस्तावः पारितो बभूव । शीघ्रमेवान्दोलनारम्भार्थमपि सर्वे सदस्याः समुक्तवन्तः । संक्षेपेण कांग्रेस-संस्था हिंसामयकार्यस्य निन्दनं विधाय अशान्तिपूर्णकार्यं कर्तुं सर्वे सदस्या विचारितवन्तः । सर्व एव जना युद्धाय तत्परास्तिष्ठन्त्वित्यपि कथितवन्तः ।

कांग्रेसाधिवेशनात्परं बंगे मार्क्सवादिदलस्याधिवेशनं सम्पन्नम् । कतिपय-जनैस्तत्र गान्धिवादस्य विरुद्धे विज्ञापनं वितरितम् । गान्धिवादस्य विनाशो भवतु एतादृशमपि घोषं श्रुतवन्तो जनाः । [illegible]धिवेशनात्परं कलि-कातामार्गेण वाष्पयानद्वारा परावर्तमानस्य गान्धिन उपरि प्रस्तरप्रहारोऽपि केनचित्कृतः, किन्तु परमशान्ति सम्पन्नोऽसौ नैव किमप्युक्तवान् । ●

: ३७ :

# जेटलैण्ड-भाषणं भारतीयस्थितिश्च

भारतमन्त्रिपदादवकाशं गृह्णन् लार्डजेटलैण्डसाहबो भारतीयस्वाधीनताविषये पुनरपि भाषणं कुर्वन्नुवाच—'नाहं बलाद्भारतोपरि काञ्चिद्वार्तां संस्थापयितुमिच्छामि, किन्तु सामञ्जस्येनैवाग्रे वर्धितुमिच्छामि । भारतीयैः स्वदेशार्थं विधाननिर्माणं कर्तव्यम्, किन्तु द्विशतवर्षेभ्यस्तेषां ब्रिटेनेन सह यः सम्बन्धस्तस्य विस्मरणं कदापि न कार्यम् ।

देशीयराजसमूहानां विषये भारतरक्षणप्रश्नेऽल्पसंख्यकानामष्टकोटिसंख्यकानां मुहम्मदीयानां विषये च प्रश्नयो रामगढकांग्रेसाधिवेशने पारितस्य स्वतन्त्रतान्दोलनस्योत्तरं ददानश्च कथितवान्—यदि भारतीयाः सत्याग्रहं करिष्यन्ति तदा तस्य क्रूरतया प्रतीकारो भविष्यति । अन्तेऽसौ एवमप्युवाच यत् किं कांग्रेससंस्था देशस्यैकताया अस्मिन्प्रश्ने विचारमयरोत्स्यति यदर्थमिय महद्दुरभुका प्रतिभाति । एतस्य प्रश्नस्योत्तर एव भारतभाग्यमवलम्बितम् । अस्यां परिस्थितौ सत्याग्रहोऽत्यावश्यको बभूव । रामगढाधिवेशनात्परं कांग्रेससंस्था सत्याग्रहावश्यकतायामपि विचारितवान् । प्रान्तीयकांग्रेससमितयोऽपि सत्याग्रहसंघसंगठनरूपेण स्वकार्यारम्भं चक्रुः । अखिलभारतीयकांग्रेससंस्थया घोषणा प्रसार्य सर्वे एव कांग्रेसाधिकारिणः सावधानीकृताः । सा च घोषणेत्थम्—'ये खलु कांग्रेससदस्या निर्धारितां प्रतिज्ञां ग्रहीतुमसमर्थाः, कांग्रेसानुशासने वर्तमाना आन्दोलनोत्तरदायित्वं स्वकीयस्कन्धेषु वोढुमशक्ताश्च, ते स्वकीयं पदं विहाय पृथग्भवन्तु' इति । सविनयाज्ञाभङ्गान्दोलनारम्भात् पूर्वमेतस्याः प्रतिज्ञायाः पूर्तिरावश्यका बभूव ।

## भारतीया परिस्थितिः

एतस्मिन्समये या स्थितिः समुत्पन्ना सा निःसन्देहं भयान्विता। कर्णधारस्य स्वलक्ष्यज्ञानाभावाद् देशस्य नौकाऽज्ञातदिशि वहन्ती सम्बभूव। सर्वा एव राजनीतिकसंस्था स्वात्मक पोलं खेलन्त्यो बभूवुः। किन्तु काग्रेससंस्था स्पष्टमेवोक्तवती यत् यदि श्वेताङ्गा भारतात्स्वकीय साम्राज्यवादि-हस्तं समुत्थापयेयुस्तदा तान्प्रति मित्रतापूर्णं हस्तं प्रसारयितुं वयं तत्पराः।

अत्रान्तरे सुभाषचन्द्रबोसस्य अग्रगामिदलनाम्नी संस्था स्वकीय-मन्त्रिमित्थं प्रदाय किञ्चित्कर्तुं शासनं बाधितवती। शासनं चैतत्परिणाम-स्वरूपं दुष्परिहराया प्रतिक्रियायाः प्रतीक्षां कर्तुं समर्थमासीत्। किन्तु दलेनै-तेन किमपि कार्यमेव न भवेदिति विचारयताऽभूयत।

कांग्रेसकार्यसमितौ इदमिदानीमनन्तरस्तदादेशपालकाश्चैतस्मिन् संकट-समये किंकर्तव्यविमूढा अभूवन्। मोहनदासगान्धिकथनानुसारं संग्रामाय स्त्रीपुरुषाणां समुद्यतीकरणञ्च आवश्यकमासीत्।

---

: ३८ :

# एमरी-सम्राजोः भाषण-घोषणे

एतस्मिन्समये ब्रिटिशसाम्राज्ये विविध परिवर्तनमपि जातम् । लार्ड-जेटलैण्डस्य स्थाने एमरीसाहबो भारतमन्त्री बभूव । एतत्पूर्वं भविष्यत्समये ब्रिटेनस्य षड् राजनीतिज्ञा भारतीयसमस्याया सहानुभूतिपूर्वकं विचारं विधास्यन्तीति टाम्सनसाहबो वर्धामागत्य कथितवान् । षड्स्वेतेषु चर्चिलैमरीसाहबयोरपि नामनी आस्ताम् ।

चर्चिलो भारतीयस्थितौ विलयमाप्स्यतीति देशनेतॄणां निश्चितं मतमभूत् । कतिपये नेतारो इत्थमपि कथितवन्तो यच्चर्चिलसाहबो भारतं स्वामिनं विधास्यति, साम्राज्यस्य सर्वाण्येव द्वाराणि पिधाय मार्शल्लानामकं नियममुद्घोषयिष्यति । अत एव भारतमिदानीं त्रिशङ्कुरिवेति कथयन्तो बभूवुर्जनाः ।

अथ सम्राट् एकस्मिन् भाषणे उक्तवान्—'यदद्याहं साम्राज्यविषये नूतनं विचारयामि । अधुनैतस्य विशिष्टदृष्ट्या महत्त्वं स्पष्टमसन्दिग्धञ्च विभाति । इदानीमस्य स्वरूपो दूषितव्यवस्थया भवति, यया तस्य कापि तुलना नैव भवितुं शक्नोति । मम शत्रवो विरुद्धं ममैकस्य साम्राज्यवाद-शब्दस्य व्यवहारं कुर्वन्ति । एतस्यार्थोऽन्यदेशेषु अधिकार एव । किन्तु साम्राज्यस्यैतस्य स्वतन्त्रवासिनो वयमेतस्य शब्दस्य व्यवहारं तेषां मुखमर्दनपूर्वकमुत्तरं प्रदातुमेव कुर्मः । तेषामेव भावना दूषिता, ममोद्देश्यं तु शान्तिमयमेव'ति ।

एमरीसाहबोऽपि निम्नलिखिता घोषणा चकार—'ब्रिटिशराष्ट्रमण्डले स्वतन्त्रभारतं समानमेव पदं लभेतेति पूर्ववाइसरायमिव ममापि विचारो

ऽस्ति। भारतीयपरिस्थितिदृष्टिकोणानुकूलं विधानं निर्मातुं भारतस्यैवाधिकारः।' साधारणसभायाञ्च जेटलैण्डभाषणस्य पुनरावृत्तिं कुर्वन्नसौ एवमप्याह यद् 'ब्रिटिशशासनस्य विचारो वर्तन्ते वर्तमानयोजनान्तर्गताया नीतेरन्यवार्तायाश्च पुनर्विचारकरणस्यास्ति। भारते कस्यापि नूतनविचारसंस्थापनस्य स्थाने सामञ्जस्यस्यैव विचारो वर्तते। मन्मते भारतीयविधानपरिषद् विभिन्नप्रान्तानां दशदशप्रतिनिधिभिर्भवेत्। तस्यां च श्वेताङ्गा अन्यवर्गीयाश्चापि भवेयुः। किन्तु सामयिकदृष्ट्या महत्त्वपूर्णा भारतीयपरिस्थितिर्विधानपरिषदं निर्मातुं योग्या न वर्तते।' एतस्यां विकटपरिस्थितौ भारतीयानां कर्तव्यं निर्दिशन्नसौ उक्तवान् यत् 'ते लार्डप्रधानस्य सहयोगेन कार्यं कर्तुं शक्नुयुश्चेत्तदा महानानन्दस्य विषयः स्यात्। किन्तु काग्रेससंस्था यदि वर्तमानपरिस्थितिप्रतिकूलं किञ्चित्कार्यं विधास्यति तदा तद् दुर्भाग्यपूर्णमेव भविष्यति।'

एतेन युरपस्थभूयद् युद्धेन प्राप्यमाणाया स्वाधीनतायाः भारतीयेभ्यः किमपि न मिलिष्यति। प्रत्युत प्रतिकूलप्रहार एव भविष्यति।

---

: ३९ :

# स्टैफर्डक्रिप्सस्य विचारः

श्वेताङ्गेषु केवलं स्टैफर्डक्रिप्ससाहब एवैक एतादृश आसीद्यस्य चेतसि भारतं प्रति सहानुभूतिः समभूत्। तेनैव कथितं यत्सर्वश्रेणीय-भारतीयेषु भावनैषा दृढीभवति यद् ब्रिटिशराज्यसभा भारतीयसमस्यासु दृष्टिपातं नैव करोति। कांग्रेसयाचना राष्ट्रियमाचना वर्तते। एतस्याश्च सर्वे विचारयन्तो जनाः सम्मिलिता इति भारतीयानामुद्घोषणम्। तेषां मनसीयमाशंका वर्धमाना जायते यत् ब्रिटिशशासनमस्मद्भावनाया उपेक्षामपि करिष्यति। एतत्फलं दृढतरेण सह सविनयाज्ञाभङ्गान्दोलनमेव भविष्यति। कांग्रेसविश्वासिनः कृषकाः कर्मकराश्च विचारयन्ति यद् कांग्रेस एवास्मान् सामन्तेभ्यो धनाधिकारिभ्यो धनिकेभ्यश्च मोक्ष्यतीति।

भारतविभाजनस्य कृते जिन्नायोजनाया विरोधं कुर्वन्तो बहवो भारतीयाः कांग्रेसादेशं प्रतीक्षन्ते। प्राप्ते चावश्यकादेशे सत्याग्रहयुद्धे सम्मिलिता भूत्वा ते स्वप्राणैः परिचयं प्रदास्यन्ति। श्रीगान्धिनोऽहिंसात्मकनीत्या तेषां महान् विश्वासो वर्तते। अतोऽहं ब्रिटिशशासनं प्रार्थयामि यदसौ युद्धसमाप्तेः परं भारतं स्वाधीनं करिष्यामीति घोषणां करोतु। मम विश्वासो वर्तते यदनया घोषणया साम्प्रदायिकसमस्यापि समाप्तिमापत्स्यतीति।

साम्प्रदायिकसमस्यासम्बन्धे कथनं विशेषतः स्टैफर्डक्रिप्स एवमुक्तवान्— यत् साम्प्रदायिककाठिन्येन केन्द्रीयशासनसंस्थापनाय सन्तोषजनकोपाये विवादास्पदोऽभूत्। इदमेव कारणं पोलैण्डविषयेऽपि कथितुं शक्यते, यत्र कतिपये मुद्रिता जर्मनजनाः सीमासु निवसन्ति। पैलेस्टाइनविषयादपि एतादृश्येव स्थितिः। युगोस्लावियायां स्लोवाकाश्च यत्र निवसन्ति। एवमेव

अल्पसंख्यजातिरक्षणार्थं बहुसंख्यकजातयः स्वाधिकारेभ्यः प्रवञ्चिता भवेयुरिति नास्ति न्यायपूर्णा नीतिः। किन्तु बहुमतानामधिकारे सद्योधनमवश्यमेव कार्यम्। एतत्तु काङ्ग्रेसेन स्वयमेव कृतम्। किन्तु भवन्तो बहुमतेभ्यस्तेषामधिकारः एतदर्थमेवापहरन्ति यत्तेऽल्पसंख्यकानां रक्षणार्थं विश्वासप्रदानं कुर्वन्ति। एवंकुर्वाणा भवन्तो बहुसंख्यकानल्पसंख्यके परिवर्तयन्ति। यदि भवन्तः प्रजातन्त्रस्य समर्थकास्तदाल्पसंख्यकेभ्यः कृते इदमावश्यकं भवति यत्ते बहुसंख्यकानां शासनं स्वीकुर्वन्तु। नैवास्ति काऽपि नूतना वार्त्तेयम्। अधुना सर्वत्र स्वाधीनदेशे एवमेव पश्यामि।

यदि भवन्तः प्रजातन्त्रं मानयन्ति, प्रजातन्त्रपद्धतिं स्वीकर्तुमिच्छन्ति च, तदा दत्तावधाना विचारयन्तु यत् कश्च समाजो भारते बहुमतसम्पन्नोऽस्तीदानीम्। निःसन्देहं काङ्ग्रेस एव बहुमतसम्पन्नः। वयमधुना यदि भारतं स्वाधीनं नैव करिष्यामस्तदा यूरोपस्थितौ कीदृशः प्रभावो भविष्यतीत्यपि विचार्यताम्। मन्मतेऽस्य त्रिविधः प्रभावो भविष्यति। प्रथमम्, वयमेव प्रभाविता भविष्यामः। सर्वदैव स्वतन्त्रताविषये वयं यत्किञ्चिदपि कथयामः, तेन जना अत्र विषये विश्वासं नैव करिष्यन्ति। एतेनास्माकं युद्धप्रयत्ने एकतायाश्च न्यूनता समागमिष्यति। द्वितीयम्, ये खलु तटस्थदेशा भारतविषये विचारयन्ति, तेषां ब्रिटिशविरोधिप्रवृत्तौ प्रोत्साहनं भविष्यति। तृतीयम्, भारतमस्माकं विरोधी भविष्यति। अत एतेषां विषयाणामस्माभिः समुचितरूपेण सत्यव्यवहारेण चावश्यमेव विचारो विधेयः।

यदि वयं प्रजातन्त्रसंरक्षणायैव युद्धं कुर्मस्तदा स एव विषयो ब्रिटिशसाम्राज्यस्य एतस्मिन् भागे भारतेऽपि व्यवहर्तव्यः। अन्यथा भारतीयाः कथयिष्यन्ति यत् श्वेताङ्गानां कथने करणे च महदन्तरं भवतीति। अत एव कोऽपि समुचितो निर्णयः कर्तव्यः। नूनमस्माभिर्भारतं स्वाधीनं विधातव्यम्। स्वाधीनं भारतमस्माकं सन्मित्रं शक्तिशालिसहायकं च भविष्यतीति।

---

: ४० :

# कार्यसमितेरधिवेशनम्

अथ महापराक्रमी हिटलरः फ्रांसं विजितवान् । फ्रांसपतनात्पूर्वं डेजिंग-पतनं नार्वेदेशाक्रमणं चेकोस्लोवाकियापराजयः, पोलैण्डविनाशो, हालैण्ड-बेलजियमदेशयोः पतनञ्च फ्रांसपतनस्य शृङ्खलाभूतमिवाभवत् । फ्रांस-पतनात्परं कांग्रेससंस्था प्रस्तावमेकं पारितवती यत् शक्तिशाली हिटलरः केनापि नैवावरोद्धुं शक्यः । स च देशानन्यान् विजित्य नूनमेव इंग्लैण्ड-देशेऽप्याक्रमणं करिष्यति । इंग्लैण्डाक्रमणं भारताक्रमणमिव भविष्यति । अतोऽत्र विचारार्थं कांग्रेसाधिवेशनं शीघ्रमेव विधातव्यमिति ।

अनन्तरं दिल्ल्यां कार्यसमितेरधिवेशनमभूत् । तत्र पूर्णस्वाधीनताया एव प्रस्तावः पारितो बभूव । किन्तु जिन्नासाहबस्य विकृतमस्तके भारत-खण्डनं कृत्वा पाकिस्ताननिर्माणस्यैव विचारो भ्रमन्नासीत् । तत्कालीन-कांग्रेसाध्यक्षः अबुलकलामाजादो जिन्नासाहबस्य समीपे पत्रमेकं लिलेख— 'प्रियजिन्नासाहब ! दिल्लीनगर्यां कांग्रेसकार्यसमित्या यो हि प्रस्तावः पारितस्तस्याभिप्रायः संयुक्तमन्त्रिमण्डलनिर्माणमेवास्ति । कस्यापि दल-विशेषस्य शासनमत्र कार्यसमित्या नानुमन्यते । किं लीगसंस्था द्विराष्ट्र-सिद्धान्तमपहाय किमप्यन्यं कर्तुं नाहता ? यद्येतादृशी वार्ता चेत्तदा पत्रेण विज्ञाप्योऽहमि'ति ।

जिन्नासाहबः पठित्वा पत्रं निम्नलिखितमुत्तरं प्रदत्तवान्—'भवतः पत्रं प्राप्य मयैतद्गोप्यं नैव रक्षितुं शक्यते । मन्मते मुहम्मदीयभारतस्य पूर्णो विश्वासो नास्ति । अत एवाहं भवता सह कामपि वार्तां कर्तुं नैव समुद्यतः । किं भवान्नेव विचारयति यत् कांग्रेसप्रधानो भवान् केवलं प्रदर्शनायैव,

येन काग्रेसस्य राष्ट्रियरूप दृष्टिगोचरं भवेत्, बाह्यदेशाश्च छलिता भवेयुः। अस्या स्थितौ भवान्नैव मुहम्मदीयाना न च हिन्दूना प्रतिनिधिः। काग्रेस-श्चैका हिन्दू सस्था वर्तते। यदि भवति स्वाभिमानश्चेत्तदा शीघ्रमेव हिन्दू-संघेभ्य परित्यज्यताम्। अद्यावधि भवता लीग विरोधे महती शक्ति प्रद-र्शिता। किन्तु सदा तत्रासफलीभूतो भवानिति तु जानात्येवेति।

पश्चात्पूनानगरे काग्रेसकार्यसमितेरधिवेशनमभूत्। तत्रैव प्रस्तावः पारितो बभूव यत्काग्रेससंस्था स्वतन्त्रताप्राप्तिनिमित्तमहिंसासिद्धान्तमेव मानयति। तथापि युद्धपरिस्थितिं विचार्य तस्मिन् शैथिल्यमपि कर्तुं शक्नोति इति। प्रस्तावेऽस्मिन् बहवो विरोधिनो बभूवुः। राजेन्द्रप्रसाद प्रफुल्लघोष-कृपलानी शकररावदेव हरेकृष्णमेहताप्रभृतीनां भाषणानि प्रस्तावविरोधे समभवन्।

महात्मा गान्धी तत्र नैव गतवान्। श्रुत्वा प्रस्तावविषयं स काग्रेसतः सम्बन्धविच्छेदमेव कृतवान्। परमः प्रसन्नः एमरीसाहबो 'नास्ति भारते गम्भीरा परिस्थितिरि'ति लन्दने कथितवान्। किन्तु महात्मा गान्धी तदुत्तरं ददन् उवाच यदेमरीसाहबस्य विचारो भ्रान्तोऽस्ति। सम्बन्धविच्छेदे कृतेऽपि काग्रेससस्था मदीय मार्गदर्शनमिच्छति। ब्रिटिशेतिहासे विकट सकटपूर्णसमये काग्रेससस्था केनापिप्रकारेण चेतसि व्याकुलतोत्पादन नैवेच्छति। सा सयमेन कार्यं करोति। अत एव तस्या उपहास करोत्येमरीसाहब इति। संयमाभावे भारते प्रकटीभवन्त्याः महत्या ज्वालायाः प्रमाणमनुमातु न कोऽपि शक्नोति। ब्रिटिशशासन व्याकुलं मा भवदित्येव सत्याग्रह-स्थगनस्यान्तिममुद्देश्यम्। किन्तु काग्रेससमर्थकेषु ब्रिटिशशासनस्य भ्रमः समुत्पद्यते। काग्रेसमर्दने ब्रिटिशशासन कदापि लाभं नैवाप्स्यति, यथा च तत् काग्रेससदस्याना मर्दनं बन्दीकरणञ्च विचारयति। यदि ममानुमान सत्यं तदा ससारस्य कापि शक्तिः सत्याग्रह नैवावरोत्स्यति। किन्तु मदी-यैषा प्रार्थना यावत् ब्रिटिशशासने विपत्मेघा गर्जन्ति, तावत् सभामात् विराम एव विधातव्य इति। ● ●

लार्डप्रधानवक्तव्यविषये कांग्रेससंस्थया सह पत्रव्यवहारानन्तरं लन्दने भारतमन्त्रिणा एमरीसाहबेन पुनरप्येकं भाषणं प्रदत्तम्। लार्ड-प्रधानो भारतमन्त्री च द्वावप्येकस्मिन्नेव निष्कर्षे वर्तेते इति स्फुटमभूत्। द्वे एव घोषणे भारतीयराजनीतिकपरिस्थितिमवलोक्य केन्द्रीयशासननिर्माणे निर्णायिके एवास्ताम्।

एतद्भाषणं निर्णयञ्च श्रुत्वा विचार्य च जनाः किंकर्तव्यविमूढा भूत्वा गान्धिमहाशये दत्तदृष्टयो बभूवुः। स एवेदानीं महासमुद्रभ्रमजाले पतितां कांग्रेससंस्था स्वविचारपोतेन समुद्धर्तुं समर्थ आसीत्।

: ४१ :

# लार्ड-लिनलिथगो-भाषणम्

अनन्तरं प्रधानलार्डलिनलिथगोसाहबः स्वकीये भाषणे विभिन्न-राजनीतिकप्रतिनिधिभिः सह साक्षात्कारस्य सम्राट्शासने विचारविमर्शा-नन्तरं कतिपयभारतीयानां स्वशासनपरिषदि स्थानग्रहणस्य युद्धसमिति-संगठनस्य च वार्तां कथयित्वा अल्पसंख्यकसमस्यायां समागते समये राष्ट्रमण्डलान्तर्गतनूतनवैधानिकयोजनानिर्माणव्यवस्थायाञ्च स्वाभिप्रायं प्रकटितवान्। प्रधानलार्डस्य वक्तव्यमप्रत्याशितमासीत्। तेन काँग्रेससंस्था सन्तोषं नैवालभत।

मारुपतने जाते शिथिलीभूते च साम्राज्यवादे काँग्रेससंस्थया कृताया-मसंदिग्धायां पूर्णस्वतन्त्रताविषयकघोषणायां लार्डप्रधान एतादृशीं विधान-परिषदं निर्मातुं चर्चां चकार, यस्याः याचना काँग्रेससंस्थया पूर्वमेव कृता। इदानीं यदा काँग्रेससंस्था पूर्णस्वाधीनतायाः याचनां करोति, तदा लार्डप्रधानस्य नूतनोऽयं रागः समजनि।

पुनर्लार्डप्रधानो लिनलिथगोसाहबः प्रोक्तवान् यत्सम्राट्शासनस्य नीतिर्मम भाषणे निहिता वर्तते। आशासेऽहं यत्काँग्रेससंस्थाऽत्र विचारं विधाय युद्धपरामर्शदातृसमित्या सहयोगं करिष्यति। साक्षात्करणार्थं पूर्वमाहूतोऽप्याजादः पुनः सम्राट्प्रतिनिधिना निमन्त्रितोऽपि तत्समीपे नैव गतवान्।

लार्डप्रधानवक्तव्यविषये काङ्ग्रेससंस्थया सह पत्रव्यवहारानन्तरं लन्दने भारतमन्त्रिणा एमरीसाह्वेन पुनरप्येवं भाषणं प्रदत्तम् । लार्ड-प्रधानो भारतमन्त्री च द्वावप्येकस्मिन्नेव निश्चये वर्तेते इति स्फुटमभूत् । द्वे एव घोषणे भारतीयराजनीतिकपरिस्थितिमवलोक्य केन्द्रीयशासननिर्माणे निर्णायिके एवास्ताम् ।

एतद्भाषणं निर्णयञ्च श्रुत्वा विचार्य च जनाः किंकर्तव्यविमूढा भूत्वा गान्धिमहाशये दत्तदृष्टयो बभूवुः । स एवेदानीं महासमुद्रभ्रमजाले पतिता काङ्ग्रेससंस्था स्वविचारपोतेन समुद्धर्तुं समर्थ आसीत् ।

: ४२ :

# प्रजा-दमनं व्यक्तिगत-सत्याग्रहश्च

पूनाप्रस्तावो महान् विपन्मूलक आसीत्, तथापि बहवः सदस्यास्तं समर्थितवन्तः। पुनः सत्याग्रहस्य विचारः सर्वैः कृतः, किन्तु सत्याग्रहः कथं प्रारब्धव्य इति विचारयन्तो बभूवुः सर्वे। महात्मनो गान्धिन विचारश्च स्वतन्त्रता निमित्तीकृत्य सत्याग्रहारम्भो नैव विधेय इति सम्बभूव।

अत्रान्तरे शासनेन महद् दमनचक्रं प्रारब्धम्। यः कोऽपि युवा काँग्रेसस्वयंसेवको भवति स्म, तमेव बन्दिनं विधाय शासनाधिकारिणः कारागारं प्रेषयन्तो भारतीयपरिस्थितिं गम्भीरां कृतवन्तः। तैश्च सम्पूर्णभारते सभाप्रतिबन्धो व्यधायि। सन्देहान्विता जनाः स्वगृहेष्वेव बन्दिनो विधाय सर्वरक्षिकाया निगडिताः। यस्मिंश्च शासनस्य सन्देहोऽभवत्, असौ प्रतिसोमवारं स्वकीयामुपस्थितिं निम्नराज्याधिकारिणः सविधे प्रदद्यादेषोऽपि नियमः प्रचारितो बभूव।

अन्येऽपि नियमाः प्रचारिताः। यथा—सन्दिग्धः कश्चिदपि मानवो राज्यद्रोहात्मकान्दोलने युद्धविरोधिप्रचारे भागमगृह्णन् कस्यचिदपि विद्यालयस्य महाविद्यालयस्य वा छात्रेण सह सम्पर्कं कस्याञ्चिदपि सभायां भागं वा नैव स्थापयेद् गृह्णीयाच्च। यदि एकस्मात्स्थानादन्यस्थाने गामुकश्चेत्तदा शासनं चतुर्विंशतिघटिकाभ्यन्तर एव सूचयेत्। सुभाषचन्द्रबोसोऽपि कलिकातास्थिते स्वनिवासभवन एव बन्दीबभूव।

एतस्या गम्भीरपरिस्थितौ विचारकरणार्थं कांग्रेसकार्यसमितेरधिवेशनं वर्धानगरे सम्बभूव। पूनाया पारितः प्रस्तावोऽधुना कार्यरूपे परिणतो नैव भविष्यतीति तत्र निश्चितम्। यावच्च महात्मा गान्धी आदेशं नैव

मद्यात्तावत् व्यक्तिगतसत्याग्रहोऽपि स्थगितो भवेदित्यपि सिद्धान्तस्तत्रैव सर्वसम्मत्या निश्चितः ।

अथ महात्मा संसारवासिनां श्वेताङ्गानां नाम्ना सुप्रसिद्धं स्वीयं पत्रं प्रचारितवान् । तद्यथा—संसारवासिना श्वेताङ्गाना सविधे प्रार्थयामि यत्ते युद्धमार्गं परित्यज्य अहिंसामार्गं स्वीकुर्वन्तु । भवता राजनीतिज्ञैः समुद्घोषितं युद्धं प्रजातन्त्रस्य रक्षार्थं भवति । समाप्ते संग्रामे भवतु कस्यापि पक्षस्य विजयः, किन्तु तदा प्रजातन्त्रस्य नामापि संसारे नैव स्थास्यति । संग्रामोऽयं मानवानामभिशाप इवावतीर्णः । अद्यावधि कदापि मानवैरित्थं मानवता न विस्मृता, यादृशी एतस्मिन् सर्वजनसंहारकारके युद्धे । अद्य मानवकर्तव्यं पशूनपि लज्जयति ।

युद्धारम्भ एव मया प्रवृत्तेरिदं कर्तव्यं ज्ञातम् । किन्तु मयि तादृशं साहस नासीद्येन भवन्तं किमपि कथयेयम् । अद्य ईश्वर एव साहसं प्रदत्तवान् । इदानीं भवता कृतेऽवसरोऽप्ययमस्ति । भवन्तो नाजीवादं विनाशयितुं चेष्टन्ते, किन्तु तस्य विनाशः कदापि नैव भविष्यति । नैवेच्छाम्यहं यद् ब्रिटिशः कदापि विजितो भवेत् । नेच्छामि च पाशविकबलपरीक्षायामसौ विजयं लभेतेति । भवतो बाहुबलं जगत्प्रसिद्धम् , किन्तु बुद्धिबलं मानव-क्लेशप्रदाने नैव सुप्रसिद्धं जायते । अहमद्यावधि ब्रिटिशस्य निःस्वार्थमित्र-मस्मि । आसीत्तादृशः समयो यदाहं भवतां साम्राज्ये मुग्धो जानन्नासं यत्साम्राज्यमिदं भारतं लाभान्वितं करोति । किन्तु यदैव मया विपरीता वस्तुस्थितिः संदृष्टा, तदैवाहिंसामार्गेण साम्राज्यवादं जनतन्त्रवादे परिवर्तयितुं प्रयत्नो व्यधायि, विधीयते चेदानीमपि । मम देशस्य भाग्ये स्यान्नाम किमपि, किन्तु भवतः प्रति मे स्नेहस्तादृश एव स्थास्यति । सार्वभौमी ममाहिंसा सम्पूर्णस्य जगतः कल्याणमिच्छति । तस्मिन्जगति भवन्तोऽपि विशाला एव । भवतः प्रति स्नेहेनैव ममेदं निवेदनमकारि ।

किन्तु पत्रस्यैतस्य कुत्रापि कोऽपि प्रभावो नाभवत् । संगरः पूर्ववदेव संध्मातः । ध्यानेन संयोगेन ब्रिटिशशासितहृदयं भारतं प्रति काठिन्यपूर्णमेव

जातम्। किंकर्तव्यविमूढा भारतीयाः सत्याग्रहमारब्धवन्तः। सर्वप्रथमं विनोबा-महोदयः स्वकीयग्रामे युद्धविरोधि भाषणं प्रदाय सत्याग्रहारम्भमकरोत्। पुनः पदातिनं भाषणप्रदातारं तं बन्दिनं विधाय शासनं मासत्रयस्य कृते कारागारदण्डमदात्।

श्रीरत्नोऽपि तदा तारापुर्यां स्वकीयप्रान्ते च भाषणं कुर्वन्नासीत् संग्रामविरोधि। असौ वर्धानगरे आगत्य विचारविमर्शं कृतवान्। परं ततस्तारापुरीपरावर्तनकाले बन्दीबभूव। न्यायाधीशस्तं चतुर्वर्षकारागारदण्डेन दण्डितवान्। वल्लभभाईपटेलस्याऽपि अनिश्चितकालिकः कारागारदण्डोऽभवत्। अनन्तरं सम्भूते भारतव्यापिनि महति सत्याग्रहे भूतपूर्वमन्त्रिणः कैलासनाथकाटजूप्रभृतयः काम्रेसस्य प्रधाननेतारः, कार्यसमितिसदस्यादयश्च बन्दिनो भूत्वा कारागारे जग्मुः। रोगाक्रान्तत्वाद्राजेन्द्रप्रसादो बन्दी नैव बभूव। कारागारं गतापि सरोजिनीदेवी मुक्ता।

युद्धसंलग्नस्य यूरोपस्य महान् विनाशोऽभूत्। कथने कारणे चास्वाधीनं भारतमपि युद्धे सम्मिलितमकारि श्वेताङ्गैरिति।

---

# शान्तदलीय-सम्मेलनम्

एतस्मिन्नवसरे सप्रू जयकर श्रीनिवासशास्त्रिणः शान्तदलीयानामेकं सम्मेलनं बम्बईनगरे कृतवन्तः । तत्र निर्णयोऽभूत् यत् लार्डप्रधानस्य शासन-परिषदि सर्वे भारतीयाः सदस्या भवन्तु । रक्षाविभागोऽर्थविभागौ च तेषामेवाधीनौ स्याताम् । युद्धसमय एषा परिषत्सामूहिकरूपेण सम्राजं प्रति सम्मानकारिणी भवेत् । अन्यस्वाधीनदेशानामिव भारतस्यापि स्थानं भवेत् । अस्यार्थस्त्वयमेव यत्परिसमाप्ते युद्धे निश्चितावधौ एव भारतं पूर्णस्वाधीनम् भविष्यति । एतादृशो विचारस्तत्र जातः । किन्तु हिन्दु-मुहम्मदीयसमस्यायाः समाधानं कथं भवेदेव प्रश्नो जटिल एवासीत् ।

मोहनदासो गान्धी स्वतन्त्र आसीत् । अतः स जिन्नासाहबेन सह वार्तां कारयितुं विचारयामास । 'ट्वेन्टीएथ सेन्चुरी'नामकपत्रे लेखमेकं लिखित्वा-ऽसौ वार्तामिमां प्रारभत । तत्र लिखितवान् भारतीयवैधानिकसमस्याया[illegible] कुर्वन्नसौ साम्प्रदायिकसमस्यानिराकरणार्थं भारतवासिन एव दोषभाज इति ।

पत्रं पठित्वा महात्मा गान्धी जिन्नासाहबेन साक्षात्कर्तुं [illegible] दिष्टवान् । किन्तु भवतो मेलनमधिकं सुन्दरं भविष्यति [illegible] सम्पृक्तवान् । हिन्दूनेतारमेव मानयित्वा यदि [illegible] वार्तां करिष्यति तदावयोः सम्मेलनं [illegible] विचार्य गान्धी तेन सह वार्तां नैवाकरोत् ।

---

: ४४ :

# एमरी-भाषणं गान्धिन उत्तरञ्च

पुनर्लन्दननगरे भारतमन्त्री भाषणमेकं प्रदत्तवान्। स्वीयभाषणेऽसौ पूर्वं सप्रूमहाशय तत्प्रस्तावञ्च प्रशस्य प्रस्तावानुसारं वर्तमानशासनसंशोधनवार्तां कथयित्वा तत्स्थाने नूतनशासनगठनवार्ताञ्च प्रस्तुत्य युद्धसमये नूतन संगठनमसम्भवमिति कथितवान्। नूतनशासनसंगठनेन आन्तरिकवैधानिकसमस्या भाविविधानविषयेऽपि नूतनाः समस्याः समुपस्थिता भविष्यन्ति। अहमिदं कामप्यभद्रता विना कथयिष्यामि यत् लार्डप्रधानप्रस्तावो एतदर्थमेव कार्यान्वितो नाभूद्यन्मुहम्मदीयाना हिन्दूनाञ्च मध्ये किमपि सामञ्जस्य कठिनतममासीदिति। जिन्नासाहवेन कदाप्यभाणि यत् यथा डचसैनिकेषु सर्वे एव सेनापतयः, न च कोऽपि सैनिकस्तथैव कांग्रेसेऽस्मिन् सर्वे एव नेतारः, न कोऽपि कार्यकारकः पश्चाद्गन्ता वा इति। भाषणेनैतेन साहाय्यमवाप्य एमरीसाहबोऽकथयत् — बम्बईसम्मेलने प्रस्तावसमर्थकाः क आसन्निति नैव जानीमः।

साधारणसभाया जनान् सम्बोधयन्नसौ उक्तवान् यद्वग आसाम-सिन्ध-पञ्जाबप्रान्तेषु प्रान्तीयमन्त्रिमण्डलानि कार्याणि कुर्वन्ति, किन्तु सप्तप्रान्तेषु कांग्रेसोच्चाधिकारिणः कार्यं कर्तुं मन्त्रिमण्डलानि निवारितवन्तः। सम्पूर्णमेव विधानेषु परिवर्तनं भवितुमर्हति, किन्तु भारतीयाः स्वकीयान्तरिकसाम्प्रदायिकविरोधं परित्यज्य ब्रुवन्तु यत् ते कीदृशं विधानमिच्छन्ति। युद्धकाले भारतीयशासने परिवर्तनमसम्भवि, तथापि भारतीयनेतारः प्रारम्भिकवार्तां कर्तुं शक्नुवन्ति। वर्तमानविधानेन भारते यादृशं नियन्त्रणं तादृशं नियन्त्रणमन्येन नूतनेन विधानेन नैव भवितुमर्हति। किन्तु कांग्रेसंस्था एतदस्वीकृतमेव करिष्यति।

भारतस्य उत्तरपश्चिमसीमानं पूर्वोत्तरसीमानञ्च भारतात् पृथक्कृत्य स्वतन्त्रं राज्यं संस्थापितं भवेदिति जिन्ना याचना बलवती जायते इदानीम्। तथाऽस्थितपाकिस्तानयोजनाया यानि व्यावहारिककाठिन्यानि, तैर्नास्ति मम कोऽपि सम्बन्धः। बालकनराष्ट्रियजना कीदृग् भीषणपरीक्षणे गच्छन्तीति विलोक्यतेऽस्माभिः। एतेनेदमपि ज्ञातुं शक्यते यद् भारतस्यैक्यभङ्गेऽस्य कीदृशो भयङ्करः परिणामो भविष्यतीति।

इत्थं लार्डप्रधानः परिषद: संस्थापने स्वकीयं प्रयत्नं मुस्लिमलीग-संस्थाया हिन्दूना समक्षं स्वकीययाचनया परित्यक्तवान्। स च मुहम्मदीय-याचना स्वीकर्तुमसामर्थ्यञ्च प्रकटितवान्।

महात्मा गान्धी भारतमन्त्रिणो भाषणं पठित्वा निम्नलिखितमुत्तरं प्रदत्तवान्—'एमरीसाहबेन साधारणसभाया सुरवामुलमिव विस्तृतं प्रदत्तं भाषणं पठित्वा मम चेतसि महद् दुःखमभूत्। विपदि जनाना हृदयं नवनीतमिव कोमलं भवति, ते च सत्यस्य मूल्यं मानयन्ति। किन्तु ब्रिटिश-शासन यस्मिन्महति सङ्कटे निमग्नमस्ति तस्य कोऽपि प्रभाव एमरीसाहबे नैवाभूत्। अनुमीयते च मया चिक्कणमृद्घट इव तस्य हृदयमिति। अत एव तस्य कर्णयोः कीटोऽपि [redacted] सरति। एतादृशीं तस्य निर्भयता विचार्य कांग्रेससंस्था कदापि स्वकीयानहिंसानीतिं नैव परित्यजेदिति मे निश्चिता धारणा।

वर्तमानभारतीयपरिस्थितेरवहेलनया तेन ब्रिटिशशासनस्य किमपि साहाय्यं नैवाकारि। पुनः साभिमानं वचनमुच्यते तेन यद् ब्रिटिश-राज्यमेव भारते शान्तिसंस्थापनं चकार। किन्तु ढाकायामहमदाबादे च किं भवति, इति तु मन्ये स न जानाति। मम धारणा वर्तते यदसौ वद-यिष्यति वङ्गे खलु स्वायत्तशासनमस्ति। स जानात्यपि यत्सङ्कटपूर्णपरिस्थिता-वस्था कायदुर्बलितास्वमन्त्रिणामेतेषा कियती शक्तिरिति। ते च मन्त्रिणः कांग्रेससंस्थाया लीगसंस्थाया अन्यदलविशेषस्य वा भवेयुः।

भारते नास्ति मतैक्यमिति कथयित्वा एमरीसाहबो नूनं भारतमप-

मानितवान् । भारते वैमत्यं विधाय राज्यं कर्तव्यमिति ब्रिटिशानां परम्परागता रीतिः । किन्तु भोघ्यत्यसौ संयुक्तभारतस्यैव वार्ताम् । भारतीयवैमत्यदोषो ब्रिटिशराजनीतिज्ञानामेवेति मया पुनः पुनरुद्घोष्यते । यावद्भारतस्य पराधीनता नैव यास्यति, तावद्वैमत्यमपि स्थास्यत्येव । यदि श्वेताङ्गा भारतान्निर्गच्छेयुस्तदा काँग्रेससंस्था मुस्लिमलीगसंस्थाऽन्यदलानि वा परस्परं मिलित्वा स्वहिताय कार्यं करिष्यन्तीति प्रतिज्ञायते मया । सर्वदलीयशासननिर्माणमपि तदैव भविष्यति । तस्मिन् वैज्ञानिकी भावना मा भवतु, किन्तु तत् नूनं स्थायी भविष्यति । इदानीमन्नवस्त्रविहीनं भारतं समुन्नतिपथेऽग्रसरं भवतीति तस्य भाषणं श्रुत्वा मम चेतसि महदाश्चर्यं भवति । मया तु पुनरपि कथ्यते यद्भारतस्येयं दुर्दशा न समृद्धिसूचिका, किन्तु दारिद्र्यसूचिकैव । अतो भारतमर्दनकारिणो ब्रिटेनस्य विरोधे सर्वे जनाः पताका समुत्थापयन्त्विति ।

---

# सुभाषस्यान्तर्धानम् , नेतृमुक्तिश्च

अनान्तरे श्रीसुभाषचन्द्रबोसो गुप्तरीत्या स्वकीयां जननीं जन्मभूमिं विहायान्यत्र गतवान् । कुत्र गतवानिति शासनमपि नैव जानाति, किन्त्वसौ-कलिकातातः प्रस्थानं कृत्वा काबुलप्रदेशमवाप्य ततोऽपि पश्चिममार्गेण जर्मनीं जगाम । तत्र हिटलरेण सम्मानितो जापानदेशमागत्य 'आजादहिन्द-फौज'नामकं हिन्दुमुहम्मदीयजनपरिपूर्णं सैन्यसंगठनं कृत्वा अंग्रेजविरुद्धं युद्धमारेभे ।

श्रीगान्धिनो भाषणानन्तरं प्रधानशासकशासनपरिषदो विस्तारो जातः । तत्र सुल्तानअहमदः, होमी मोदी, सराकबरः, माधव श्रीहरि अणे, राघवेन्द्र-रावः, फीरोजखाँ नूनः, मुदालियरः, सरकारः, इत्यष्टौ भारतीयसदस्यास्त्रयश्च गौराङ्गा इत्यमेकादश सदस्याः सम्मिलिता बभूवुः । हिटलरश्च रूसमा-क्रान्तवानासीदिदानीम् । संगठितैतया परिषदा क्रिप्सम्वेदकरी व्याकुली भूत्वा ता विरोधितवन्तौ ।

प्रचलति काङ्ग्रेससत्याग्रहे बहवो देशभक्ताः कारागारं गतवन्तः । आरब्धस्य सत्याग्रहस्य वर्षमेकमभूत् । शासकीयविचारानन्तरं श्रीरत्नाजाद-प्रभृतयो नेतारः कारागारान्मुक्ता बभूवुः । जना एतेषां भाषणं श्रोतुकामा आसन् ।

### श्रीगान्धिन ऐतिहासिकं भाषणम्

एतस्मिन्नेव समये श्रीगान्धिन ऐतिहासिकं भाषणमभून्निम्नलिखितम्— 'विद्यार्थिजनादेशात् ब्रिटिशजननिभृतोऽस्मि । किन्त्वेतस्या निष्ठाया अयमर्थो नहि यद् ब्रिटिशजननिधयो भारतं क्रीतदासं मानयन्तु । दास-त्वमनन्तरैवेयं भारत-स्वतन्त्रता ।

एमरीमहाशयो व्रणे लवणघर्षणमिव भाषणं प्रदाय निरन्तरमेव मां दुःखीकरोति। एतामेव पृष्ठभूमिं ध्यात्वा मुक्तानामपि समीक्षा क्रियते। यदि भारतशासनमेव विश्वसिति यदेतस्य सर्वं एवोत्तरदायिनो जना युद्धप्रयत्ने सहयोगं प्रदास्यन्ति, तदा तस्य स्वाभाविकपरिणामः सविनयाज्ञाभङ्गान्दोलनकारकाः पुनः कारागारे बद्धा भवन्तु। ते सर्वे एवैतत्कथनस्यापवादाः।

अहन्त्वेतस्या मुक्तेरयमेवार्थमवगच्छामि यत् शासनम् आशान्वितमस्ति तेषां विचारपरिवर्तनार्थम्, किन्तु प्रत्युपकारभावनारहितमेतदान्दोलनं पूर्णं विचार्य कृत्वैव प्रारब्धं जनैः। अधिकांशतो भारतीयजनप्रतिनिधिभूता युद्धविरोधी कांग्रेससंस्था स्वाभिप्रायं प्रकटयितुमिच्छन्त्येव आन्दोलनमिदमारब्धवती। युद्धफलस्वरूपं भारतं स्वतन्त्रं नैव भविष्यतीति दृढविश्वासस्तस्य बभूव। कोट्यधिकमूकजनप्रतिनिधिरियं भारतं स्वतन्त्रं विधातुमहिंसामार्गमेव अवलम्बते। अहिंसैव तस्या नीतिः। अधुना सत्याग्रहस्थगनस्यायमेवार्थो भवेत् यदियं स्वकीयां नीतिं परित्यक्तवती। कांग्रेससंस्थाया कृतेऽपि विरोधे शासनं भारतीयजनतायाः सकाशाद्विपुलं धनं यथेष्टं सैनिकांश्च प्राप्नुवन् वर्तते। कांग्रेसविरोधस्तु नैतिकविरोध एव। एतेन न्यायपूर्णविरोधेन भारतमवश्यमेव स्वतन्त्रं भविष्यतीति मे विश्वास इति।

## श्रीरत्न-भाषणम्

कारागारान्मुक्तः श्रीरत्नोऽपीत्थं भाषणमदात्—'एकस्य विदेशीयशासनस्याज्ञया कारागारगमनं तस्मान्मुक्तिं वा समवाप्य नाहमस्म्यानन्दितः। कारागारस्य सङ्कुचितात् प्राकाराभ्यन्तरात् विशालकारागारतुल्ये भारते समागमनं कथन्नाम आनन्ददायकं भवेत्? किन्तु नूनमेतादृशोऽपि समयः समागमिष्यति यदाऽहं स्वतन्त्रो भूत्वा निःश्वासग्रहणं करिष्यामि। तथापीदानीमसौ दूरवर्ती समयः, अत एवैतेन स्थानपरिवर्तनेन नाहमानन्दितो भवामि। यदाऽखिलसंसारे हिंसाया घृणायाः सर्वनाशस्य च साम्राज्यं वर्तते तदाऽहं मुदं भूत्वा कथमिव स्थास्यामि? यत्र स्वेच्छाचारिणा श्वेताङ्गेणा

साम्राज्यमस्ति, तत्राहं शान्तिं नैवाप्स्यामि। अत एव स्वतन्त्रभारतस्य स्वातन्त्र्यसारस्य च हिताय सर्वानेव भवतो देशवासिन आह्वयामि' इति।

ततः परं श्रीगान्धिनाऽपि भाषणं प्रदत्तम्। तद्यथा—'संप्रति सत्याग्रहेण शीघ्रतया या मुक्तिर्भवति, तयाहमस्मिन्निष्कर्षे समागतो यदस्माभिरवश्यमेव कार्यसमितेरधिवेशनं कर्तव्यम्। शासनस्यैतादृशी धारणा वर्तते यद् बम्बईप्रस्ताव एभिर्वरीत्स्यते, यदनुसारमान्दोलनमिदं समारब्धम्। अत एवाहं अखिलभारतीयराष्ट्रसभाकार्यसमितेरधिवेशनं कर्तुमाजादसाहबं कथितवान्। बन्दिना मुक्त्या काठिन्यपरिपूर्णमप्यान्दोलनं कार्यसमितेरधिवेशनं यावत्स्थगितमेव। यद्यस्माकं स्वकीयसिद्धान्तप्रापणं तथा देशस्योद्धारकरणं च लक्ष्यं तदा सर्वमेव काठिन्यं सोढव्यम्। ये कार्यसमितिसदस्या बम्बईप्रस्तावपरिवर्तनेच्छवस्ते यद्यपि सत्याग्रहं मा कुर्वन्तु। किन्तु सत्याग्रहो निर्बाधरूपेण प्रचलन्नेव भवतु। सत्याग्रहे योगदानमनिच्छतामपि शासनं बन्दीकर्तुं शक्तम्। एवमेव श्रीराजाजादसाहबौ बन्दिनौ जातौ। बाह्यकारणाधारे महता सत्याग्रहस्थगनस्य नास्त्यधिकारो ममेति स्पष्टं वदामि। एतदर्थं कांग्रेसस्यैव वर्तते।'

---

: ४६ :

# बारदोली-प्रस्तावः, तत्प्रतिक्रिया च

अथ श्रीगान्धिनो निवासे बारदोल्यामेव काङ्ग्रेसकार्यसमितेरधिवेशनं समभूत्। तत्र निम्नलिखितः प्रस्तावः पारितो बभूव—'संमतिरियं गान्धिनेतृत्वे विश्वासं कुरुते, राष्ट्रद्वारा वर्तमानान्दोलने सहयोगप्रदानस्य प्रशंसां करोति। सत्याग्रहेण जनशक्तिवर्धनमभूदिति समितेर्मतम्। ब्रिटेनो भारतीयस्वातन्त्र्यं विरुध्य जनाकाङ्क्षाविरुद्धं स्वेच्छाचारित्वं प्रदर्शितवान्। प्रजातन्त्रस्य स्वाधीनतायाश्चोद्देश्येन युद्धफलस्वरूपे यस्मिन्संकटेऽसौ विलितोऽस्ति, तस्मिन्नपि ध्यानमददानः किमपि परिवर्तनं कर्तुं नैवेच्छति। यत्किञ्चिदपि परिवर्तनमभूत्तेन परिस्थितिरतीव गम्भीराऽभूत्। साम्प्रतं राजनीतिकबन्दिनां मुक्तिरपि सारहीनैव। सा यस्यां परिस्थितौ समभूत्, तत्सम्बन्धे च या शासकीयघोषणाऽभूत्, ताभ्यां नीतौ किमपि परिवर्तनं न जातमिति स्पष्टमेव लक्ष्यते। विश्वव्यापि युद्धमपि भारतद्वारसमीपे समागच्छत्। कार्यसमितिरेतेषु सर्वेष्वेव विषयेषु दत्तावधानाऽस्ति। भारतस्य सम्पूर्णमेव वातावरणं द्वेषाज्ञान् प्रत्ययविश्वासविरोधाभ्यां परिपूरितमस्ति। अत एवासौ साम्राज्यवादस्य किमपि साहाय्यं न करिष्यति। अत एव काङ्ग्रेससंस्थापि बम्बईप्रस्तावे दृढीभूताऽस्ति।'

एतस्मिन् पारिते प्रस्तावे लन्दनवासिनां ध्यानमाकृष्टमभूत्, किन्तु प्रत्यक्षरूपेण कापि प्रतिक्रिया न तत्र जाता।

अथ प्रधानलार्डः समानसङ्कटं विलोक्य भारतं यज्जनतासमीपे सहयोगस्वीकृतायाश्च प्रार्थनां चकार। तद्विषये भारतीयदलविशेषेणं किमप्युत्तरं दत्तमिति साधारणसभायां भाषणं कुर्वन्नेमरीसाहबः कथितवान्। 'कियत्-

कालाद्भारतीयघटनाविषये ज्ञानाभावात् मया किमपि वक्तुं न शक्यते' इति चर्चिलसाहबोऽप्यमेरिकायामेकस्य प्रश्नस्योत्तररूपेण प्राह । साधारणसभाया मेकस्मिन् वितर्के ब्रुवन् पेथिकलारेन्सो बभाषे यन्मम विचारे भारतीय-समस्यायाः किमपि समाधानं युद्धप्रयत्नस्याङ्गभूतमेव । देशस्य सर्वैर्दलैर् जनानां हार्दिकीच्छेयं वर्तते यद् युद्धानन्तरं भारतीयानामौपनिवेशिक-स्वराज्यमवश्यमेव मिलिष्यतीति प्रधानमन्त्रिणा घोषणा कर्तव्या ।

एडगरग्रेनविल्साहबेन आलोचनमित्यङ्गीकृतं यत् शासनं भारती-यानां सर्वसाधनानामेकत्रीकरणे सफलं भवेत्, यदि प्रधानमन्त्री घोषणां करिष्यति यदन्यस्वाधीनताप्राप्तौपनिवेशानामिव भारतप्रतिनिधिरपि लन्दन-युद्धमन्त्रिमण्डले सम्मिलितो भविष्यतीति । अन्येऽपि लार्डविंटर्टन-आर्डेली-ह्वीवनग्रायर-सिम्परमैनप्रभृतयो राजनीतिज्ञाः स्वेच्छया मुस्लिम-लीगरूपायाः पाकिस्तानयाचनां विरोधयन्तो भारतीयस्वतन्त्रताया एव समर्थनं चक्रुः ।



# श्रीच्यांगस्य भारतागमनम्

अत्रान्तरे वर्तमानचीनदेशोद्धारकः च्यागकाईशेकः स्वधर्मपत्नीसहितो भारतमाजगाम। श्रीरत्न एतेन सह बहुवारं साक्षात्कारं कृत्वा विविधविषयेषु वार्तां चकार।

विश्वकविश्रीरविन्द्रनाथसंस्थापिते शान्तिनिकेतने रथीन्द्रनाथस्य स्वागतभाषणस्योत्तरं ददानोऽसौ चीनप्रधानो बभाषे 'यदस्मिन् अन्ताराष्ट्रीयविश्वविद्यालये समागत्याहं महान् प्रसन्नोऽस्मि। कवेः साक्षात्कारमकृत्वापि तज्जीवनस्वरूपिणीमिमां संस्थामवलोक्याहं परमं प्रसन्नः।

एतन्निता अध्यापकाश्छात्राश्चैतस्याः संस्थायाः परम्परां रक्षन्तो गुरुदेवनिर्मितामाधारशिलां परिपालयिष्यन्ति। यथा मम संस्थापकेनोऽस्मासु भ्रातृत्वबीजवपनं कृत्वा नवीनचीनस्य यथाबुद्धिमकरोत्, तथैव भवतां गुरुदेवोऽपि महतो देशस्याध्यात्मोन्नतिं विधाय नूतनां जागृतिमुत्पादितवान्। स्वकीयसहृदयतायाश्चीनवासिनां शुभकामनायाश्चातिरिक्तं भरता कृते चीनदेशान्मया किमप्यन्यं नैवानीतम्। ईश्वरः करोतु तद्विशाल कार्ये यस्य भारं भरता नेतारो देशवासिनां स्कन्धेषु निहितवन्तः।'

ससार्धं सपत्नीकश्च च्यागकाईशेकः कलिकातातो विशेषवायुयानेन शान्तिनिकेतनं गतवानासीत्। तेन सह श्रीरत्नोऽपि तत्र जगाम। शान्तिनिकेतनात्सैन्ययानेनासौ उत्तरायणमगात्। तथापि रथीन्द्रनाथ एव स्वागतं चकार तस्य। पुनः कवेरन्तिमनिवासस्थानमुदीचीं गत्वा विश्रामानन्तरं कलाविभागनिरीक्षणं चकार। सिंहसदने विश्वभारतीसदस्या वैदिकमन्त्रेण स्वागतमारभ्य भारतीयविधिना मस्तके चन्दनतिलकं विधाय च्यागाय धौतवस्त्रद्वयमुत्तरीयञ्च तत्पत्न्यै शाटिकाञ्च उपहारीकृतवन्तः। रवीन्द्रनाथो कवेश्चीनं प्रति सहानुभूतिं प्रकाशयन् कथितवान् यत्स्वशान्तिसमयेऽपि भवतो देशविषये सहानुभूतिं दर्शयन् प्रशंसामेव चकार।

तत्रच्यागधर्मपत्नी स्वागतोत्तरप्रदाने कुर्वन्ती उवाच—'यत् भारस्य

सहैव मानवसमाजकष्टस्य अन्तोऽपि न भविष्यति। वर्तमानपाशविकबल-सम्पन्ने समये चीननिवासिना भारतवासिनाञ्चेद् कर्तव्य यत्तेऽटलान्तिकाधिकारपत्रस्य षड्विंशतिराष्ट्राणां सम्मिलितघोषणापत्रे प्रतिपादित-सिद्धान्तस्य चैकीभूय समर्थनं कुर्वन्तु। आशासे च भारतनिवासिनो मित्र-राष्ट्रैः सह भूत्वा पूर्णविजयं यावद् युद्धं करिष्यन्ति। मम महान् सुहृद्-ब्रिटिशो भारतीययाचनाप्रतीक्षामन्तरैव तस्मै तां राजनीतिकशक्तिं प्रदा-स्यति ययासौ भौतिकीमात्मिकीञ्च शक्तिमधिकामुन्नतां कर्तुं शक्ष्यति, अनु-भविष्यति चायं सहयोगी आतङ्कवादविरोधकारी चेति। ब्रिटेनस्य दृष्ट्या मम विचार एवाधिकबुद्धिमत्तापूर्णो न्याय्यो भूत्वा ब्रिटिश[illegible]यशो [illegible] इति।

: ४८ :

# क्रिप्स प्रस्तावः, चर्चिल-भाषणञ्च

यथा यथा युद्धाग्नि ज्वाला विस्तृता, तथा तथा भारते ब्रिटेने च युद्ध-चर्चापि विस्तृता सम्बभूव । क्रिप्ससाहबोऽपि भारतचीनरूसदेशानां युद्ध-सिंहावलोकनं विधाय लन्दनमागतवान् । 'युद्धविषये भारतीयराजनीतिविषये चाग्रे किं वदिष्यती'ति युद्धसिंहावलोकनं कृत्वा समागतस्य क्रिप्सस्य भाषणं प्रतीक्षमाणाः सर्वे एव जनाः सम्बभूवुः । भारतीयप्रश्ने क्रिप्स एव विचारं विधातुं समर्थ इत्यपि सर्वदा धारणा बलवती जाता । ब्रिटिश राजनीतिरङ्गेषु क्रिप्सस्य स्थानमत्युच्चं सम्बभूव । एमरी लिटलटनेड-नैटलीप्रभृतयो राजनीतिज्ञाः क्रिप्सात्पश्चाद्भूवुः । तेन पूर्वमपि भाषणं प्रदाय भारतेन सह सहानुभूतिः प्रदर्शितासीत् ।

अथ ब्रिटेनप्रधानमन्त्रिणो भाषणस्य प्रतीक्षां कुर्वन्तो जना बभूवुः । चर्चिलेन साधारणसभायां युद्धविषयकमेव भाषणमित्थं प्रदत्तम्—'जापान निर्धारिता जनानां युद्धप्रगतिकरणाद्भारतस्य सङ्कटपूर्णाः परिस्थितिः सम्बभूव । तां विचार्य भारतरक्षणार्थं सर्ववर्गाणां सङ्गठनं विधेयम् । मया पूर्वमपि प्रोक्तं यद् युद्धानन्तरमेव यथासम्भवं शीघ्रतया भारतीयौपनिवेशिक स्वराज्यं प्रदास्यामि । अन्यस्वाधीनताप्राप्तदेशा इव भारतमपि स्वाधीनता सम्पन्नमत्युन्नतं स्थानमाप्स्यति । भारतीया एव पारस्परिकसामञ्जस्ये नैतादृशं विधानं निर्मास्यन्ति, यद्देशस्य सर्वैरेव पुरुषैः स्वीकृतं भवेत् । एतस्मिन् विषयेऽल्पसंख्यकानां कृतेऽपि ध्यानमवश्यमेव रक्षितव्यम् । भारते दलितजातयोऽपि वर्तन्ते । अथ च भारतीयनरेशैः सह भूतपूर्व सन्धेरपि विचारो विधेय एव । एको युद्धमन्त्रिमण्डलसदस्यो भारतं

सहैव मानवसमाजकष्टस्य अन्तोऽपि न भविष्यति । वर्तमानपाशविकबलसम्पन्ने समये चीननिवासिना भारतवासिनाञ्चेदं कर्तव्यं यत्तेऽतलान्तिकाधिकारपत्रस्य षड्विंशतिराष्ट्राणां सम्मिलितघोषणापत्रे प्रतिपादितसिद्धान्तस्य चैकीभूय समर्थनं कुर्वन्तु । आशासे च भारतनिवासिनो मित्रराष्ट्रैः सह भूत्वा पूर्णविजयं यावद् युद्धं करिष्यन्ति । मम महान् सुहृद् ब्रिटिशो भारतीययाचनाप्रतीक्षामन्तरैव तस्मै ता राजनीतिकशक्तिं प्रदास्यति ययासौ भौतिकीमात्मिकीञ्च शक्तिमधिकामुन्नतां कर्तुं शक्ष्यति, अनुभविष्यति चायं सहयोगी आतंकवादविरोधकारी चेति । क्रियात्मकदृष्ट्या मम विचार एवाधिकबुद्धिमत्तापूर्णो न्याय्यो भूत्वा ब्रिटिशसाम्राज्ययशो विस्तारयिष्यति" इति ।

श्रीच्यांगस्य यात्रा यथाऽप्रत्याशिता तथैव गोपनीयाऽप्यासीत् । सर्वप्रथमं च्यांगधर्मपत्नी तस्य कार्यक्रमविषये श्रीरत्नं पप्रच्छ । तदनन्तरं च्यांगः कलिकातामागतयानिति द्वितीयं पृच्छमासवान् श्रीरत्नः । गान्धिना सह वार्ताविषयकं काठिन्यमनुभूयासौ पप्रच्छ—किं तेन सह वार्तार्थं कलिकातानगरमुपयुक्तं भविष्यति । समय एव गान्धी च्यांग-समीपे पत्रं लिलेख । 'भवत्पत्रस्य ममोपरि महाप्रभावः समभूत्' इति च्यांग उत्तरं ददौ । 'सर्वस्मिन्नेव समये भवतः साक्षात्काराय तत्परोऽस्मीति च स लिलेख । द्वयोः साक्षात्कारः कलिकातायामेव जातः । हार्दिकी महती पञ्चसमयं यावद्वार्तापि संबभूव । कमपि पणमन्तरेण भारतं युद्धे साहाय्यं कुर्यादिति च्यांगकथनमासीत्, किन्तु महात्मा गान्धी 'कस्यामपि परिस्थितौ युद्धे साहाय्यं नैव प्रदास्यामी'ति कथितवान् । एतेन द्वयोरैकमत्यं नाभूत्, किन्तु तयोर्मिथः सद्व्यवहारोऽवश्यमेव समभूत् ।

जिन्नामहोदयेन सहापि च्यांगस्य वार्ता जाता । गान्धिच्यांगौ पत्रिकासम्वादवितरकयन्त्रद्वारा भारतनाम्ना सन्देशञ्च प्रसारितवन्तौ । ब्रिटेनो भारते राजनीतिकपरिवर्तनमवश्यमेव करिष्यतीत्याशामभिव्यक्तां चकार च्यांगः । पश्चादसौ स्वदेशं परावृत्तः ।

● ●

: ४८ :

# क्रिप्स प्रस्तावः, चर्चिल-भाषणञ्च

यथा यथा युद्धाग्निज्वाला विस्तृता, तथा तथा भारते ब्रिटेने च युद्धचर्चापि विस्तृता सम्बभूव। क्रिप्ससाहबोऽपि भारतचीनरूसदेशानां युद्धसिंहावलोकनं विधाय लन्दनमागतवान्। 'युद्धविषये भारतीयराजनीतिविषये चायं किं वदिष्यती'ति युद्धसिंहावलोकनं कृत्वा समागतस्य क्रिप्सस्य भाषणं प्रतीक्षमाणाः सर्वे एव जनाः सम्बभूवुः। भारतीयप्रश्ने क्रिप्स एव विचारं विधातुं समर्थ इत्यपि सर्वेषां धारणा बलवती जाता। ब्रिटिशराजनीतिज्ञेषु क्रिप्सस्य स्थानमत्युच्चं सम्बभूव। एमरी ग्रिटलरनेहनेटलीप्रभृतयो राजनीतिज्ञा क्रिप्सात्पश्चाद्बभूवुः। तेन पूर्वमपि भाषणं प्रदाय भारतेन सह सहानुभूतिः प्रदर्शितासीत्।

अथ ब्रिटेनप्रधानमन्त्रिणो भाषणस्य प्रतीक्षां कुर्वन्तो जना बभूवुः। चर्चिलेन साधारणसभायां युद्धविषयकमेव भाषणमित्थं प्रदत्तम्—'जापानविजयिना जनानां युद्धप्रगतिकरणाद्भारतस्य सङ्कटपूर्णा परिस्थितिः सम्बभूव। तां विचार्य भारतरक्षणार्थं सर्ववर्गाणां संगठनं विधेयम्। मया पूर्वमपि प्रोक्तं यद् युद्धानन्तरमेव यथासम्भवं शीघ्रतया भारतीयौपनिवेशिकस्वराज्यं प्रदास्यामि। अन्यस्वाधीनताप्राप्तदेश इव भारतमपि स्वाधीनतासम्पन्नमत्युन्नतं स्थानमाप्स्यति। भारतीया एव पारस्परिकसामञ्जस्येनैतादृशं विधानं निर्मास्यन्ति, यद्देशस्य सर्वैरेव मुख्यवर्गैः स्वीकृतं भवेत्। एतस्मिन् विषयेऽल्पसंख्यकानां कृतेऽपि ध्यानमवश्यमेव रक्षितव्यम्। भारते दलितजातयोऽपि वर्तन्ते। अथ च भारतीयनरेशैः सह भूतपूर्वसन्धेरपि विचारो विधेय एव। एको युद्धमन्त्रिमण्डलसदस्यो भारतं

·

गत्वा तत्रत्यनेतृभिः सह वार्तालापद्वारा सन्तोषमाप्नुयात् । अस्माभिर्यो निर्णयो विहितोऽसौ न्यायोचितो भारतं यसमस्याया अन्तिमो निर्णयश्चेति । अस्यायों निर्णयमेनं भारतीयाः स्वीकरिष्यन्ति । अस्माभिर्नैव विस्मर्तव्यं यद्विश्वसंग्रामे भारतेन मुख्यो भागो ग्रहीतव्यः । वीरैर्ब्रिटेनवासिभिः सह भूत्वा तैर्युद्धमपि विधातव्यमिति । भारतवर्षमेतादृशं स्थानं यतो वयमातंका-रयाचारयोर्महदाक्रमणं कर्तुं शक्नुमः ।

भारतीयभविष्यत्सम्बन्धे इत्ताना वचनाना विषये या चिन्ता प्रकटी-भूता, तस्या विचारयन् सम्राट्शासनं स्पष्टनिश्चितवचनैश्च तानुपायान्प्रकट यितुमावश्यकं मानयति यैर्भारते शीघ्रातिशीघ्रं स्वायत्तशासनं स्थापयितु-मिच्छति । इदं किल नवीनभारतस्य जन्मदानमेव । एष संघः स्वाधीनता-प्राप्तोपनिवेशो भविष्यति । ब्रिटेनेन अन्यस्वाधीनोपनिवेशैश्च सह सम्बन्धः सम्राजं प्रति राजभक्त्या सुस्थिरो भविष्यति । असावाभ्यन्तरिकशासने अन्यासु वैदेशिकसमस्यासु च कथमपि पराधीनता नैवाप्स्यति । अतः सम्राट्शासनं निम्नलिखिता घोषणा करोति—

( क ) भविष्यति युद्धसमाप्तेरनन्तरं शीघ्रमेवैका विधाननिर्माणो-द्देश्येन निर्वाचित संस्था निर्मिता ।

( ख ) विधाननिर्मातृसंस्थायां भारतीयनरेशद्वारा भागमाप्तुं यादृशी व्यवस्था सा चाधो वर्ण्यते ।

( ग ) सम्राट्शासनमेतादृशं विनिर्मितं विधानं स्वीकृत्य तत्कार्यान्विती-करणभारं सदैव ग्रहीष्यति यदाधोलिखितानियमाः पूरिता भविष्यन्ति—

१. यदि ब्रिटिशभारतस्य कोऽपि प्रान्तो नवीनं विधानमस्वीकर्तु-मिच्छेत् तदा तस्य वर्तमानवैधानिकस्थितिरक्षणस्य पूर्णाधिकारो भविष्यति । पश्चादिच्छेत्तदा विधाने सम्मिलितो भवेदिति व्यवस्थापि भविष्यति सदैव ।

२. नूतनविधानासम्मिलिताः प्रान्ता इच्छेयुश्चेत्सम्राट्शासनं तेभ्यो नूतन विधानं दातुमपि स्वीकरिष्यति, भविष्यति च तेषां पदं पूर्णतया भारतीय संघपदमिव ।

३. सम्राट्शासनस्य विधाननिर्मातृसंस्थायाश्च मध्ये एकः सन्धि-र्भविष्यति । इंग्लैण्डहस्तेभ्यो भारतीयहस्तेषु शासनाधिकारहस्तान्तरण-समस्यया अस्मिन् पूर्णः समावेशो भविष्यति । प्रदत्ताश्वासनं ध्यायन् सम्राट्शासनं जातीयधार्मिकाल्पसंख्यानां रक्षायां प्रबन्धं करिष्यति । किन्तु तस्मिन्नेतादृशः कोऽपि प्रतिबन्धो न भविष्यति, येन भारतीय संघस्य ब्रिटिश राष्ट्रमण्डलीयान्यसदस्यैः सह स्वीयभाविसम्बन्धनिश्चयाधिकारे कापि न्यूनता समापतेत् । देशीयनरेशा नवीनविधानानुसारं प्रचलिष्यन्ति न वेतस्य तेषां सन्धौ संशोधनमावश्यकम् ।

( घ ) यदि प्रमुखसंस्थाः युद्धसमाप्तेः पूर्वमेव कस्या अपि प्रणाल्या विषये मिलित्वा निश्चयं नैव करिष्यन्ति, तदा विधाननिर्मात्र्याः संस्थाया निर्माणं निम्नप्रकारेण भविष्यति—

प्रान्तीयनिर्वाचनप्रभावे जाते ( युद्धानन्तरं प्रान्तीयनिर्वाचनस्या-वश्यकता भविष्यति ) प्रान्तीयधारासभायाः सदस्या मिलित्वैकस्या निर्वा-चनमण्डलाधिकारिणैकत्र स्थित्वा विधाननिर्मातृसंस्थाया निर्वाचनं करिष्यन्ति । निर्वाचकमण्डले यावन्तः सदस्या भविष्यन्ति, तद्दशमांश-प्रतिनिधयोऽस्या विधाननिर्मातृसंस्थाया भविष्यन्ति ।

ब्रिटिशभारतमिव भारतीयराज्यान्यपि स्वप्रतिनिधीन् निर्वाचयिष्यन्ति स्वकीयजनसंख्यानुसारम् ।

भारतस्य सम्मुखे यो हि संकटमयः समयस्तस्मिन् यावन्नूतनं विधानं नैव निर्मितं भवति, तावत्सम्राट्शासनं भारतरक्षणस्य नियन्त्रणस्य चोत्तर-दायित्वपूर्णमधिकारं स्वाधीनं स्थापयिष्यति । किन्तु भारतीयजनतायाः साहाय्येन सम्पूर्णसैनिकार्थिकसाधनानां सञ्चालनस्य भारो भारतशासने स्यात् । सम्राट्शासनं भारतीयानां विविधवर्गीयनेतॄनाह्वयति । ते च शीघ्रमेव प्रभावोत्पादकरीत्या विचारविमर्शे भागं गृह्णन्तु ।

इत्थं भारतीया एतस्मिन्महति कार्यसम्पादने रचनात्मिकया सहायतां प्रदाय भाविन्याः स्वाधीनतायाः कृते महत्त्वपूर्णं कार्यं करिष्यन्ति' इति ।

क्रिप्सशाहवो भारतं समागत्य भारतीयनेतॄणां समक्षे स्वीयप्रस्ताव-मभिव्यक्तीचकार। किन्तु रूवं एव नेतारः क्रिप्सप्रस्तावं बहिष्कृतवन्तः। प्रस्तावेऽस्मिन् सर्वजनामोदकरी वार्तासीत्। काँग्रेसप्रसन्नतार्थं पूर्वभूमिकाया-मौपनिवेशिकस्वराज्यस्य विधानपरिषदश्चोल्लेखं कृत्वा राष्ट्रमण्डलात्तयोः पार्थक्याधिकारस्यापि चर्चासीत्। कोऽपि प्रान्तो भारतसंघात् पृथग्भवितु-मर्हतीति मुस्लिमलीगसंस्थायाः कृतेऽपि महदानन्दकारिणी वार्ता निहिता-सीत्। भारतीयराज्यप्रजा उपेक्ष्य विधानपरिषदि प्रतिनिधिप्रेषणस्य नरेशानामप्यधिकार आसीत्तत्र। काँग्रेसकार्यसमितिर्विस्तेनप्रस्तावितायाः अस्या योजनायाः रहस्यं शीघ्रमेव ज्ञातवती यद् ब्रिटेन सत्ताहस्तान्तरणं नैवेच्छति, अनेन विधिना स स्वतन्त्रतामेव विलोपितवानिति।

राज्यप्रजापरिषदोऽध्यक्षः श्रीरत्न. सर्वेष्वेव विषयेषु विचारयन् विषयेऽस्मिन् प्रजापरिषद् उपाध्यक्षत्वेन पत्र लिखितुं साक्षात्कर्तुञ्च क्रिप्सं कथितवान्। किन्तु कृतेऽपि तेन सह वार्तालापे क्रिप्सयोजनाऽसफलीबभूव। क्रिप्सः श्रीरत्नं स्पष्टं लिखितवान् यत् सर्वदलीयजना अपि यदि रक्षा विभागं याचयिष्यन्ति, तदापि स हस्तान्तरितो न भवेत्। भवन्तोऽत्र विषये प्रधानसेनापतिना सह वार्ता कुर्वन्त्विति। रक्षाविषयकप्रश्नः क्रिप्स-योजनावैफल्ये मुख्यं कारणमभूत्।

यदा भारते क्रिप्सवार्ता प्रचलन्त्यासीत् तदैव अमेरिकाया लन्दनप्राप्तेन्द्रितो लार्ड हेलिफैक्स इत्थमकथयत् यत् 'यद्यस्माकं प्रयत्नोऽयमसफलो भविष्यति, तदा महता दलाना सहयोगं विनैव ब्रिटिशशासन स्वकर्तव्यं पालयिष्यति। सर्वोपरिसुसंगठितराजनीतिकदलभारतीयकांग्रेससहयोगेन वयं वञ्चिताः स्मः। कांग्रेससंस्था भारतस्य लघुभागोऽस्ति। भारतस्यान्याः संस्था. सम्पूर्णभारतस्य प्रतिनिधित्वं कांग्रेस एव करोतीति मानितुं नैव तत्पराः।' इति।

कांग्रेसद्वारा प्रस्तावस्यास्य अस्वीकारे इमानि कारणान्यभूवन्—
१. शासनपरिषदो धारासभा प्रत्यनुत्तरदायित्वम्, २. प्रान्ताना भारतसंघात् पृथग्भवितुमधिकारप्रदानम्, ३. भारतीयराज्यप्रजाना

योजनाया प्रतिनिधित्वाभावः, ४. रक्षायां युद्धे च भारतीयानामधिकारप्रदानमिति। मुस्लिम्-लीग-संस्थया पुनर्द्वाभ्यां कारणाभ्यां प्रस्तावोऽयं न स्वीकृतः—१. यदा काङ्ग्रेससंस्था योजनामिमां स्वीकरिष्यति, तदाहमपि स्वीकरिष्यामि। २ प्रस्तावानुसारेण प्रान्तानां संघात् पृथग्भवनस्य स्पष्टरूपेणाधिकारोऽप्यत्र नास्तीति। अथ च प्रस्तावानुसारं पाकिस्तानयाचनापूर्तिरपि नाभवत्। प्रस्तावे भारत-विभाजनयोजनां विचार्य हिन्दुमहासभयाऽपि प्रस्तावममुमस्वीकृतवती। अस्वीकृतवन्तश्च दलितवर्गाः स्वकीयसंरक्षणाभावं विचार्यामुं प्रस्तावम्। भारतीयसिक्खाः कर्मकराश्च काङ्ग्रेसप्रतिपादितकारणैरेव प्रस्तावममुं न स्वीकृतवन्तः। महात्मा गान्धी चेमं प्रस्तावमर्थहीनमकथयत्। केवलं 'रेडिकल-डेमोक्रेटिक'दलमेव प्रस्तावं पूर्णतया स्वीचकार।

---

नास्त्यत्र मे कोऽपि विरोधः । किन्तु साम्प्रतं भावी सत्याग्रहः सामूहिको भवेत् । मम कापि योजना गोप्या नास्ति । सर्वाण्येव मे कार्याणि सर्वेषामेव समक्षं सन्ति'' इति ।

महात्मा गान्धी पत्रकारेभ्यः 'वृत्तपत्रे वृत्तप्रकाशनं निर्भयैः कर्तव्यमि'ति, नरेशेभ्यः 'शासनं प्रजाना हस्ते दातव्यमि'ति, अध्यापकेभ्यश्छात्रेभ्यश्च 'स्वातन्त्र्यभावना हृदये धारयन्तु भवन्तः' इति, राजकर्मचारिभ्यश्च 'सत्वरं पदत्यागं मा कुर्वन्त्वि'ति परामर्शमदात् ।

श्रीराजगोपालाचार्या गान्धिनोऽहिंसासिद्धान्ते विश्वासमकुर्वन् मुहम्मदीयानाञ्च पाकिस्तानयाचना स्वीकुर्वन् काग्रेससदस्यपदादपि त्यागपत्रमदात् । तस्यायं सिद्धान्त आसीद्यत् पाकिस्तानस्वीकारेण हिन्दूमुहम्मदीययोरुभयोः स्वतन्त्रतायै सम्मिलितः प्रयत्नो भविष्यतीति ।

अनन्तरं सर्व एव नेतारः शासनेन सह सामञ्जस्यार्थं प्रयत्नमकुर्वन् । किन्तु शासनं किमपि ध्यानं नैवादात्, प्रत्युत दमनचक्रमेव तेन प्रारब्धम् । सूर्योदयात्प्रागेव काग्रेसकार्यसमितिसदस्यान् चत्वारिंशत्नागरिकांश्च बन्दिनो विधाय कारागारं प्रैषयत् । गान्धी महात्मापि सर्वराष्ट्रिकाघोषाभायको बभूव ।

बन्दीभूतस्य गान्धिन एको लेखः पश्चात्प्रकाशितोऽभूत् । लेखेऽस्मिन् स एव व्यलेखि—''भारतीयकाग्रेसकार्यसमितिः पूर्णस्वतन्त्रतासम्बन्धिनं यं प्रस्तावमपारयत् तद्विषये स्वस्थितेः स्पष्टीकरणं ममावश्यकम्, यतो हि ममैव प्रेरणया प्रस्तावोऽयं पारितः' इति सर्वेषां धारणा वर्तते । •

भवन्तस्तु मत्तो नैवापरिचिताः । पश्चिमीयदेशेषु प्रायोऽमेरिकैव एतादृशो देशो यत्र सर्वाधिकानि मम मित्राणि सन्ति । ब्रिटिशोऽपि नास्त्यपवाद एतस्य । अहं भवतो निवेदयामि यद् 'भारतं त्यजे'ति नाम्ना प्रसिद्धं सूत्रं ध्यात्वा भवन्तो भारतादपसरन्तु । बाल्यादेवाहं सत्योपासक एतादृशी मम धारणा । मह्यमिदमावश्यकं वस्तु । भक्तिभावपरिपूरितेन अन्वेषणेन सत्यमेवेश्वरं मानयामि । एतेनैव सत्येन प्रत्यक्षमीश्वरं पश्यामि । स च मे

प्रतिलोम व्यासः । आवयोर्मध्ये सत्यमेव संक्षोभूतं विचार्य ससाहसं कथयामि यत्सहसा ज्ञानमिदं नाभविष्यत्तदा नाहमिदमकथयिष्यं यद् ब्रिटेनो भारतं त्यक्त्वा स्वकर्तव्यपालनं कुर्यात् । यदि च ब्रिटेनो न्यायेनैतेन कार्यं करिष्यति, तदा तद्विरुद्धं व्यासोऽसन्तोषो भारताद्विदितो भविष्यति । अव्याजं काँग्रेससंस्था यदि भारतीयस्वतन्त्रताया याचनं करोति चेदत्र को ह्यन्यायस्तस्य ?

नेतॄणां बन्दीकरणात्परं शासनं स्वयंसेवकानां प्रताडनं सार्वजनिकसभायां गमनावरोधनं शस्त्रास्त्रैः सह प्रचलनञ्चावरुद्धवत् । बम्बईनगरमिव सम्पूर्णे भारते निषेधादेशः प्रसारितः शासनेन । प्रान्तीयशाखोपशाखान्विता काँग्रेससंस्था चावैधा घोषिता । सर्वे एव कार्यकर्तारोऽनियमकार्यकरणदोषेण लाञ्छयित्वा कारागारे निगडिताः ।

अथ काँग्रेसोपरि समागतं संकटं श्वेताङ्गानां बर्बरतापूर्णमत्याचारं भारतं परतन्त्रताशृङ्खलानिबद्धं गान्धि वल्लभप्रभृतिनेतृसमूहं कारागारगतञ्च विलोक्य 'भारत त्यज', 'म्रियता म्रियता 'वे ति समुद्घोषणं कुर्वन्तो बहवो भारतीया विद्रोहाग्निज्वालासन्दीपने तत्परा बभूवुः ।

प्रस्फुरितां विद्रोहाग्निज्वालामवलोक्य क्रोधान्विताः श्वेताङ्गाः सर्वमेव दमनचक्रं परिचालितवन्तः । जनानामुपरि न केवलं यष्टिकाप्रहारम्, किन्तु नालिकास्त्रगुलिकावर्षणं यमवर्षणं गृहदाहनमिष्टिकापातनं सह प्रविश्य बलात्कारं नेतॄणां बन्दीकरणञ्चापि कृतवन्तः श्वेताङ्गाः । एतेन विशाक्तवातावरणेन क्रोधज्वालामालाकुला जनसम्मर्दः प्रचलत्सु वाष्पयानेषु प्रस्तरप्रहारं वाष्पयानानां तैलयानानाञ्चावरोधनं वाष्पयानान्येष्वावातकरणं भारतस्थितराजसम्पत्तिहरणं वैश्वानरप्रक्षेपद्वारा तेषां दाहनमग्निमाण्डागारप्रदीपनं तैलयानचक्रापाटनं ध्वनिप्रापकतारसूत्रकर्तनं धूमयानादयानानां व्यर्थीकरणञ्च कृतवान् ।

नूतननियमद्वारा निषिद्धेष्वपि सर्वेषु भारते महान् कर्मविरामोऽप्यभूत् । एतस्मिन् कर्मविरामे विद्यालय-महाविद्यालय-विश्वविद्यालयीयाश्छात्रा

योगदानं कृत्वा सत्याग्रहान्दोलने प्रवृत्ता। अलीगढमुस्लिमविश्वविद्यालय विहाय ढाकातो दिल्लीपर्यंत लाहौरात् मद्रासपर्यन्तञ्च सर्वा एवा शिक्षण-संस्था कार्यविरता बभूवुः। हिन्दूविश्वविद्यालय सनिका पूर्वमेव स्वाधिकारे कृतवन्तः। एतस्मादान्दोलने समुत्पादितलौहमार्गाणां वाष्पयानानां प्रचलनमवरुद्धम्। मद्रासमेलनामकं वाष्पयानं कतिपयदिवसपर्यन्तं नैव चचाल।

निजगुण्टानामकवाष्पयानालयादारभ्य बेजवाडावाष्पयानालयपर्यन्तं सप्ततिक्रोशं यावल्लौहमार्गो समुत्पाटिता। बिहारे मुंगेरनगरस्य द्विसप्ताह यावत् संसारात्सम्बन्धविच्छेदो जातः। वाष्पयानव्यवस्थाविरतीकरणे बिहार एव प्राथम्यमलभत। अहमदाबादे सर्वाण्येव वस्त्रयन्त्रालयानि कार्यविरतानि बभूवुः, किन्तु बम्बय्यां कतिपयान्येव वस्त्रयन्त्रालयानि विरतानि। पौरपतिस्थानस्यासंख्या विद्युद्दीपिका अग्निशामकयन्त्राणि च जनाश्चूर्णी कृतवन्तः।

कलिकातायाञ्च सर्वत्रैव विद्युद्यानानि जनैः प्रज्वालितानि। कर्म-विरामञ्च चक्रुर्जनाः। अभियोग विनैव बहवो जना कारागारदण्डमाप्नुवन्तः। पत्रालयादिकार्यविरोधोऽपि जातः।

सर्वत्रैव विद्रोहाग्निज्वाला प्रस्फुटिता, किन्तु बलिया मण्डलनिवासिनां कार्यं महत्साहसपूर्णमासीत्। जनाः घोषितवन्तो यत्बलियामण्डलवासिभिरेवास्मिन्विद्रोहे भारतस्य शिरः समुन्नतम्। ते च स्वसाहसेन समुत्खाय श्वेताङ्गराज्यं स्वतन्त्रराज्यमेव संस्थापितवन्तः। तत्र महानत्याचारोऽपि श्वेताङ्गानामभूत्।

पूनायां दिल्ल्यां नासिके च सैनिका महद्गुलिकावर्षणं कृतवन्तः। बिहारराजधान्यां पटनानगरे एकेन जनसम्मर्देन राज्यसभाभवनं विध्वंसितुमचेष्टि। तत्र गुरखासैनिकानां गुलिकाप्रहारेण पञ्च मरणमापेदिरे। बिहारस्य बम्बईनगर्योश्च वङ्गाला, श्वेताङ्गात्याचारविरोधे स्वकार्य-विरामं चक्रुः।

इत्थं श्वेताङ्गानां सैनिकानां सर्वत्र गमनागमनेन गुलिकाप्रहारेण निरपराधिनां स्वातन्त्र्यसंग्रामसंलग्नानां भारतीयमानवानामाबालवृद्धानां हत्यया वेत्रप्रताडनेन यत्र तत्राग्निप्रक्षेपेण स्त्रीभिः सह बलात्कारेण सामूहिकदण्डग्रहणेन महासमरासंपृक्तापि भारतभूमिः समरभूमिर्बभूव ।

सुभाषचन्द्रबोसस्तु भारतान्निर्गत्य जर्मनीप्रधानेन हिटलरेण सह साक्षात्कारं विधाय ततोऽपि जापानदेशमागत्य हिन्दुमहम्मदीयजनसमन्वितम् 'आजाद हिन्दफौज'नामकमेकं सैन्यसंगठनं कृत्वा ब्रिटिशराज्यविरोधे वायुयानद्वारा समर्पणं चकार ।

---

: ५० :

# द्वितीय-महासमर-विवरणम्

हिट्लरः पोलैण्डप्रभृतिन् देशान् विजित्य साम्यवादिनं महच्छक्तिशालिनं रूसमाक्रान्तवान् । परमपराक्रमशालिन स्वपितृभूमिरक्षार्थे स्वप्राणानप्युत्स्रष्टुं क्षमा रूसदेशवासिनो महता साहसेन धैर्येणञ्च युद्धं कृतवन्तः । अस्मिन् युद्धे सैनिकसहिताः प्रायः कोटिद्वयमिता उभयपक्षीया जना निहताः । इटलीदेशप्रधानो मुसोलिनीसाहबोऽपि हिटलरपक्षमवलम्ब्य यूरोपदेशवासिनां जीवनं मध्यमाक्रमनरोत् । पूर्वदेशे जापान चीनयोः परस्पर युद्ध प्रचलदेवासीत् ।

पश्चिमे मुसोलिनी हिटलरयोरत्याचारं वर्धमान विलोक्य तत्कालीनब्रिटिशप्रधानमन्त्री चर्चिलसाहबः अतलान्तिकमहासागरेऽमेरिकाया अध्यक्षेण सह 'अतलान्तिकचार्टर'-नामकमेक सन्धि चकार । तदनुसारममेरिकादेशोऽपि युद्धेऽभिरतः । इत्थममेरिकाब्रिटिशचीनरूसप्रभृतय एकस्मिन्पक्षेऽपरस्मिन् जर्मनेटलीजापानप्रभृतयो देशाश्च भूत्वा श्वार यापिनि युद्धे संलग्नाः ।

यदैऽस्मिन् त्रिदेशता भारतीयसीमान्तरक्षणार्थं विविधदेशवासिनो बहुविधभाषाचारविचारसम्पन्ना श्वेताङ्गाः कृष्णाङ्गाश्च बहवः शस्त्रधारिणो सैनिका भारतमागतवन्त. । नूतनवेषालङ्कृताना शस्त्रधारिणा तेषा स्वरूपाण्यभिवीक्ष्य बहुषु स्थानेषु भारतीया आबालवृद्धा जना भयभीता बभूवुः । जलस्थलाकाशेषु महद्भय समुपस्थितम् ।

यस्मिन्दिवसे जापानो युद्धघोषणामकरोत्, तत एव कलिकातायाः सर्वे जना अतिभयान्विताः स्वकीयान् बान्धवानपरत्र प्रेषयन्त. स्वयञ्चापि पलायनसमुद्यता बभूवु. । तत्र च सम्भवति शृगालध्वनौ ( सायरन ) वायुयान योद्धारः सहसैव वायुयानमारुह्य बमवर्षकविमान सम्प्रेक्ष्य युद्धं

कुर्वाणा महान्तं साहसमदर्शयन् । श्रुत्वैव च शृगालध्वनिं जनाः पलायमाना रक्षागृहं स्वगृहं वाऽवाप्य प्राणरक्षार्थं भगवन्नामस्मरणं कुर्वन्तोऽपि त्रस्ता अभूवन् ।

ब्रह्मदेशनिवासिनोऽपि भारतीया जलयानव्योमयाननिवेशाभावात् पदातय एव विहाय सर्वं व्यापारादिकं पशून् गृहादिकञ्च जलधाराप्रवाहमिव स्थलमार्गेण ब्रह्मदेशात् स्वदेशं भारतमागतवन्तः ।

क्षुत्पिपासार्दिताना कलिकातामार्गेण देशं गच्छता तेषां सेवाया कलिकातास्था व्यापारिणो दत्तावधाना बभूवुः । शरणार्थिनामागमनं स्वतन्त्रतान्दोलनं श्वेताङ्गानामत्याचारं देशे युद्धार्थं सैन्यसंगठनं यत्र यदा कदा बमवर्षणं कलिकाताया पूर्वबंगस्य कतिपयनगरेषु च रानावन्धकारञ्च विलोक्य भारतीया विशेषतो बङ्गवासिनो भयप्रकम्पिताः सम्बभूवुः । जापानिनः सिंगापुरं विजित्य ब्रह्मप्रदेशमपि जितवन्तः ।

---

: ५१ :

# सत्याग्रह-प्रतिक्रिया-भाषणानि

काग्रेसनेतॄणां सर्वेषां कारानिरोधात् सर्वत्रिकस्य जनान्दोलनस्य श्वेताङ्गदत्तदमनचक्रस्य च प्रतिक्रिया सर्वत्रैव जाता। भारतीयसमस्यायाः पैन्डर मून इव स्टैफर्डक्रिप्सप्रभृतिरपि पर्यैत, अतो चिंग्काई-शेक महाशय अमेरिकाया स्वकार्यं प्रतिनिधिं नियुक्तवान्। यथा चिंग्काईशेकमहो र-काया स्वकीयप्रतिनिधिं प्रेषितवान्, तथैव अमेरिकाध्यक्षोऽपि लौचलीन-क्यूरी विलियमफिलिप्स इत्येतयोः विन्डेनविल्सनप्रभृतीन् प्रतिनिधीन् प्रेषित-वान् भारतम्। सर्वे एवैते भारतीयपक्षसमर्थनं चक्रुः।

पश्चात्सम्मेलने चीनदेशे दक्षिणाफ्रिकायाञ्च भारतीयान्दोलनस्य महती प्रतिक्रिया चर्चा च समभूताम्।

ब्रिटेने स्टैफर्डक्रिप्सस्य प्रस्तावविषये भाषमाणः एमरीमहोदय इत्थ मुवाच—"भारतस्य उत्तरदायित्वपूर्णशासनप्रबन्धयोजनायां युद्धप्रयत्ने भागग्रहणयोजनायां च 'वर्धा' सभायामथवा किञ्चिदपि नैव दायित्वमिति कांग्रेस सदस्यानां दुराग्रहेण असफलीभूता। निरङ्कुशशासनानन्तरं हेतुनाद् भारतीय जनानां काग्रेसनिरोधाय जातश्चे' ति।

## एटली भाषणम्

एवरहीने भाषणं कुर्वन् एटली साहबेनोक्तम्—यद् 'भारतीयसमस्या समाधाने सदोषा अपि वयं शताब्दाधिकवर्षेभ्यः भारते सुप्रबन्ध सुशासनञ्च संस्थापितवन्त इति सत्यम्। पञ्चविंशत्यधिकवर्षेभ्य स्वतन्त्रताप्राप्त्यर्थमाधिकप्रयत्नशालिनि भारते विभिन्नमतावलम्बिना परस्परमैक्यमत्याभावाद् विशेषा प्रगतिर्नैव बभूव। विरोधविघटनोदितन-

कुर्वाणा महान्तं साहसमदर्शयन् । श्रुत्वैव च शृगालध्वनिं जनाः पलायमाना रक्षागृहं स्वगृहं वाऽवाप्य प्राणरक्षार्थं भगवन्नामस्मरणं कुर्वन्तोऽपि त्रस्ता अभूवन् ।

ब्रह्मदेशनिवासिनोऽपि भारतीया जलयानव्योमयाननिवेशाभावात् पदातय एव विहाय सर्वं व्यापारादिकं पशून् गृहादिकञ्च जलधाराप्रवाहमिव स्थलमार्गेण ब्रह्मदेशात् स्वदेशं भारतमागतवन्तः ।

क्षुत्पिपासार्दितानां कलिकातामार्गेण देशं गच्छतां तेषां सेवायां कलिकातास्था व्यापारिणो दत्तावधाना बभूवुः । शरणार्थिनामागमनं स्वतन्त्रतान्दोलनं श्वेताङ्गानामत्याचारं देशे युद्धार्थं सैन्यसंगठनं वङ्गे यदा कदा बमवर्षणं कलिकातायां पूर्ववङ्गस्य कतिपयनगरेषु च रात्रावन्धकारञ्च विलोक्य भारतीया विशेषतो वङ्गवासिनो भयप्रकम्पिताः सम्बभूवुः । जापानिनः सिंगापुरं विजित्य ब्रह्मदेशानपि जितवन्तः ।

---

: ५१ :

# सत्याग्रह-प्रतिक्रिया-भाषणानि

काँग्रेसनेतॄणां सर्वेषां कारायां निपातनात् संवर्धितस्य जनान्दोलनस्य ब्रिटेनकृततद्दमनचक्रस्य च प्रतिक्रिया सर्वत्रैव जाता। भारतीयप्रश्नस्याद्य केन्द्रं लन्दन इव दिल्लीन्यूयार्कावपि वर्तेते, अतो ब्रिटिश पार्लमेण्टमहाशय अमेरिकायां स्वकीयं प्रतिनिधिं नियुक्तवान्। यथा ब्रिटिशशासनमर्मेरिकायां स्वकीयप्रतिनिधिं प्रेषितवान्, तथैव अमेरिकाशासनमपि लोचलीन-क्यूरी-विलियमफिलिप्स-लुईफिशर-विण्डेलविल्कि-प्रमुखान् प्रतिनिधीन् प्रेषितवान् भारतम्। सर्व एवैते भारतीयपक्षसमर्थनं चक्रुः।

प्रशान्तसम्मेलने चीनदेशे दक्षिणाफ्रिकायाञ्च भारतीयान्दोलनस्य महती प्रतिक्रिया चर्चा च समभूवन्।

ब्रिटेने स्टैफर्डक्रिप्ससाहब प्रस्तावविषये भाषमाण एमरीसाहब इत्थमुवाच—"भारतस्य उत्तरदायित्वपूर्णशासनप्रदानवार्तां युद्धप्रयत्ने भागग्रहणवार्तां च 'सर्वं दीयतामथवा किञ्चिदपि नैव दीयतामिति काँग्रेससदस्यानां दुराग्रहेण असफलीभूते। क्रिप्सप्रस्तावानामसफलत्वाद् भारतीयजनानां काँग्रेसेऽविश्वासो जातश्चे' ति।

## एटली-भाषणम्

एबरडीने भाषणं कुर्वन् एटलीसाहबेनोक्तम्—यद् 'भारतीयसमस्यासमाधाने सदोषा अपि वयं शताब्दाधिककालेभ्यो भारते सुप्रबन्धं सुशासनञ्च स्थापितवन्त इति सत्यम्। पञ्चविंशतिवर्षेभ्यः स्वतन्त्रताप्राप्त्यर्थमधिकप्रयत्नशालिनि भारते विभिन्नमतावलम्बिनां परस्परमैकमत्याभावाद् विरोधा प्रगतिर्नैव बभूव। त्रिंशदधिककोटि-

समन्विते देशे जनतन्त्रस्थापनं काठिन्यपरिपूर्णम्। ब्रिटिशकर्मकरशासनस्य विश्वासोऽस्ति यद् युद्धोत्तरकाले स्वतन्त्रभारतसंस्थापनमवश्यम्भावि।

## चर्चिल-भाषणम्

तदनन्तरं ब्रिटिशशासकीयसभायां चर्चिल्साहबेनेत्थमुक्तम्—'काङ्ग्रेस-संस्था विहाय येन सह मम विरोधो वर्तते, अतो मुहम्मदीयवर्ग एव, यः स्वात्म-निर्णयाधिकारं याचते। दलितवर्गा राज्यप्रजाजना बहवो ब्रिटिशभारतीया हिन्दवः सिक्खा ख्रिस्तमतावलम्बिनश्च काङ्ग्रेसनीतिविरोधिन एव। ब्रिटेनेऽन्य-देशेषु चैतस्य मुख्यतथ्यस्योपेक्षा नैव भवितुमर्हति। एतन्मुख्यतथ्य-मन्तरा भारतीयसमस्याया ब्रिटिश-भारतयोः पारस्परिकसम्बन्धे च विचार एवासम्भवि। अधुना गान्धिनः काङ्ग्रेससंस्था अहिंसां तिलाञ्जलिं प्रदाय क्रान्तिकारकान्दोलने प्रवृत्ता। यातायातसाधनानां पङ्गूकरणं जापानीया-क्रमणविरोधि देशरक्षाव्यवस्थाया अवरोधनञ्च आन्दोलनस्यास्य मुख्यमुद्दिष्टम्।

'अत एव गान्धि-श्रीरत्नराजेन्द्रप्रसादप्रभृतयो नेतारः सर्वरक्षिकायां निवासिताः। तेषां सुखसौविध्यार्थं महती व्यवस्थापि शासनेन व्यधायि। यावद्रसंङ्ग्रामावसानं नैव जायते, तावत्ते सर्वरक्षिकायामेव स्थास्यन्ति। युद्ध-कारिजातिषु काङ्ग्रेससंस्थायाः कोऽपि प्रभावो नास्ति। अतो बहवो जना युद्धकार्यं करणार्थं स्वेच्छया समागताः, समागच्छन्ति समागमिष्यन्ति चैतत् सौभाग्यमेव। अद्यावधि संयुक्तराष्ट्रियसैनिकेषु प्रायो दशलक्षेभ्योऽप्यधिका जनाः सगठिताः। तेषां वीरत्वमपि प्रशंसनीयमासीत्। यत्किञ्चिदप्यभूत् तेनेदमेव निर्णीतं भवति यत्काङ्ग्रेससंस्था भारतीयवीराणां कर्तव्यविमुखीकरणे स्वमायाजालेन च वशीकरणे असफला एव।

'साम्प्रतं ऊनचत्वारिंशत्कोटिभारतीयेषु भारतवासिनामेव शासनम्। केवलं पट्शतपरिमिता उच्चशिक्षाशिक्षिताः श्वेताङ्गाः भारते विद्यन्ते। पञ्चसु प्रान्तेषु—येषु विशालं प्रान्तद्वयमपि वर्तते, यत्र निश्चिता संख्या

एकादश कोटिपरिमिताऽस्ति—धारासभोत्तरदायिप्रान्तीयमन्त्रिमण्डलमेव कार्यं कुरुते। नगरेषु ग्रामेषु च जनैरेव नागरिकाधिकाराः सन्ति।

'यातायातसाधनसम्बन्धविच्छेदकारिण्याः काङ्ग्रेससंस्थाया विद्रोहोऽसफलो भवन्नस्ति। अधुना च हिंसाप्रक्षेपस्य पश्यतो ह्रस्य भर्मोऽपि विरतिमाप्नोति। जीवनस्य धनस्य च क्षतिर्न्यूनैव। विशाले देशे समुपतन्त्रे विद्रोहे केवल पञ्चशतजना एव मरणमापेदिरे। नागरिकाणां साहाय्यार्थं नाममात्रमेव श्वेताङ्गसैनिका गताः। किन्तु सर्वत्र भारतीयसैनिका प्रकोपप्रशमकारिणः शान्तान् चक्रुः।

'विश्वसिम्यहं यदियं सभा मया सहैव वीरभारतीयसैनिकान् भारतीयशासकीयकर्मचारिणश्च प्रति राजभक्तिप्रदर्शननिमित्तमाभारं प्रदर्शयिष्यति। आन्दोलनेनैतेन स्पष्टमभूत् यत्काङ्ग्रेससंस्था भारतदेशस्य प्रतिनिधित्वं नैव करोतीति। देशीयजनसाधारणस्य व्यवस्थाकरणेऽपीयमयोग्या सवृत्ता। विषयेऽस्मिन् भवतः कथयामि यद्बहुसंख्याका सैनिका भारते गताः। श्वेताङ्गसैनिका यथेदानीं वर्तन्ते, तथा पूर्वं कदापि नासन्। अत एव वारं वारं सभा सूचयामि यद्भारतीयपरिस्थित्या नैव व्याकुलीभवन्त्विति।

चर्चिलसाहबस्य भाषणेन न केवलमिंग्लैण्डे भारते वा निर्त्यमेरिकायामपि महदौदासीन्यमभूत्। ब्रिटिशराज्यसभायाः सदस्य पेथ्नो ग्रीनवुडसाहबश्च भाषणस्यास्यालोचना कुर्वन्तो विरोधं कृतवन्तौ। अनेके पत्रकारा अनेकसंस्थाप्रतिनिधयः सदस्याश्च चर्चिलभाषणस्यालोचना विधाय भारतीयनेतृवर्गाणां विचारं सम्मान्य 'भारतं स्वाधीनं कर्तव्यमि'ति सर्वतः समुद्घोषितवन्तः।

## एमरी-भाषणम्

तदनन्तरं लन्दननगरे युद्धपरिस्थितेः सिंहावलोकनं कुर्वन् एमरी साहबः इत्थमुक्तवान्—'केनापि दलविशेषेण विनिर्मितं विधानं कदापि सुस्थिरं नैव भविष्यति। गान्धिनः काङ्ग्रेससंस्थाया नियन्त्रकाः मुष्टिमेया एव एतादृशं विचारयन्ति। एतेनैव विचारेण प्रेरितास्ते भारते

महदान्दोलनं प्रारभ्य भारतीयशासनं भङ्क्तुमैच्छन् । अनेन न केवलं युद्धप्रयत्ने, किन्तु भारतस्य भाविनि स्वातन्त्र्येऽपि बाधा समुपस्थिता भविष्यतीति ।

एकस्या राज्यसाधारणसभाया 'सम्प्रति श्रीरत्नः क्व वर्तते ?' इति प्रश्ने एमरीसाहब उक्तवान्—'विषयेऽस्मिन् न कोऽपि मामपृच्छत् । किन्तु गृहसम्बन्धिकार्येषु बान्धवैश्च पत्रव्यवहारं कर्तुं स स्वतन्त्रोऽस्ति । नाहं कथयितुं शक्ष्येऽसौ इदानीं क्व वर्तते । 'भारत उपद्रवकारिणि जनसम्मर्दे वायुयानद्वारा यद्बमवर्षणमभूत्तस्य पूर्णं विवरणं देयम् , अग्रे चेतादृशं कृत्यं मा भवत्वि'ति सदस्यैरुक्तोऽसौ जगाद यद् गतसप्ताहे भारत केन्द्रीयसभाया यत् शासकीय भाषणमभूत्, यच्च पत्रेषु प्रकाशितं तदतिरिक्तं मया किञ्चिदपि कथयितु नैव शक्यते' इति ।

ज्ञातव्यमिदं यत् वर्तमानोपद्रवे पञ्चवारं वायुयानद्वारा मशीनगनाख्यमहास्त्रेण च गुलिकावर्षणं तदाऽभूद्यदा बिहारप्रदेशे एकस्या वायुयानदुर्घटनाया चालकः मृत आसीत् । एतेन तत्कर्मचारिणो जनैर्घातिता बभूवुः । नागरिकाणामुपद्रवैरतिवृष्ट्या च विनष्टे बाष्पयानमार्गे सैनिकानां यातायातमार्गविरोधे जाते च वायुयानसाहाय्यमावश्यकमभूत् ।

भारतस्य भविष्यत्सम्बन्धे चर्चां कुर्वन्नमरीरेवमुवाच यत् काँग्रेसनेतृभिः सह कापि वार्ता न भविष्यतीति ।

'मैंचेस्टर गार्जियन'नामके दैनिकपत्रे सम्पादको बर्टैण्ड-रसलसाहबो लिखितवान्—'श्वेताङ्गाः पूर्णतया नैवानुभवन्ति यदमेरिकायामिदानीं भारतविषयणी कीदृशी व्याकुलता वर्तते । न केवलं भारतस्य, किन्त्वमेरिकाया अन्येषाञ्च देशानां विश्वासप्रदानार्थं ब्रिटेनेन भारतविषये किञ्चिदवश्यमेव कर्तव्यमि'ति ।

'न्यूज क्रानिकल'पत्रे वर्नान बार्टलेटसाहबोऽपि तद्दिन एवं लिखितवान् यदेटलीसाहब एमरीसाहबश्चेदं स्पष्टं कथितवन्तौ यद्ब्रिटिशशासनमधुनापि क्रिप्सयोजनाया स्थिरमस्ति । किन्तु तौ स्वयोजनासमर्थनं

किमपि नैव कृतवन्तौ । सम्राजापि घोषणा नैव कृता यद् युद्धानन्तरं भारतं पूर्णं स्वाधीनं भविष्यतीति । अन्तःकालीनावधौ काप्येतादृशी व्यवस्थापि न कृता, यया समानशत्रुविरुद्धे भारतस्य पूर्णं सहयोगं प्राप्तो भवेदि'ति ।

'किमधुने'ति शीर्षकेण हेरल्ड लास्कीमहोदयो लिखितवान्—'इदं कथितुं शक्यते यदिदानीं कार्यसदस्याः सर्वरञ्जिकाया वर्तन्ते । अत समस्त स्वार्थमिच्छुका वयमिति प्रमाणं कर्तुं तेषां ततो मुक्तिः कर्तव्या । यद्यस्मिन्समये भारतीयशासनाय सत्ता हस्तान्तरिता भवेत्तदा भारतजनता बहु स्पष्टस्यते इति युक्तिः प्रदीयेत चेत्तदा किमपि न भयमस्ति यद् भारतीय एव प्रधानलार्डपदमवाप्नुयादिति । यदि हिन्दूप्रधानलार्ड न्याय्यपरो-स्तदा मुहम्मदीय एव प्रधानलार्डो भवेत् । युद्धसमाप्तिमन्तरा अन्तकालीनमन्त्रिमण्डलस्यावधिरनिश्चित इव वर्तते, तर्हि द्वयोर्द्वयोर्वर्षयो कृते सात्योरुभयोर्मन्त्रिमण्डलं स्थाप्यम् । एतत्सम्मेलनमेव निश्चितं कुर्याद्यत्प्रधानमन्त्री को भवेत् । रक्षामन्त्री च प्रधानमन्त्रिसम्प्रदायाभिन्नो भवेत्' इति ।

अन्येऽपि बहवो विदेशीया भारतीयस्वतन्त्रतासमर्थने दमनात्याचारविरुद्धं भारतीयनेतृणां मुक्त्यर्थञ्च भाषणानि प्रदत्तवन्तः ।

अथ राजगोपालचारी श्यामाप्रसादमुखोपाध्याय-विलियमफिलिप्स-गान्धिनः सह साक्षात्कारार्थं कृता प्रार्थना शासनेन व्यर्थीकृता । एवम् एलिजाबेथ कैडवरी लिटनप्रभृतिप्रमुखमहिलासहितानां लार्ड मार्लेस्टाबोल्गो हेरल्डलास्की जुलियनहक्स्ले नेल्सफोर्डप्रभृतीनां स्वेताङ्गानां हस्ताक्षरसहितं राजगोपालाचारिणो लन्दनागमनसौविध्यार्थं प्रार्थनान्वितं पत्रमेव सम्राट्यपि एमरीसाहबो कमपि विचारं नाकरोत् । प्रत्युत ब्रिटिशशासनकालीन राभारं चर्चिल इत्थं ददौ—

स्वीये भाषणे चर्चिलसाहब उक्तवान् यत् वयमस्मिन् युद्धे न लाभस्य न वा प्रभुताविस्तारस्य दृष्ट्या, अपितु केवलं प्रतिज्ञायाः न्यायस्य स्वकर्तव्यपालनस्य चोद्देश्येन संलग्नाः स्मः । अहं सुस्पष्टं कथयामि यत्स्वकीयं साम्राज्यं मुरिधरीभूतमिच्छामीति, अहं सम्राज्ञः प्रधानमन्त्री ब्रिटिश-

शासनस्य परिसमाप्त्यर्थं नैवामवम्, किन्तु त सुस्थिरं स्थापयितुमेव। यद्येवमपि कदापि भवेत्तदा तदर्थमन्य एव कोऽपि मानवो जन्माप्स्यति। तथैव तत्कार्यार्थे प्रजातन्त्रात्मकमार्गान्तर्गतस्य राष्ट्रेण सह परामर्शस्यावश्यकता भवेत्। अहमेतस्य राष्ट्रमण्डलस्य तदधीनानामन्येषाञ्च राष्ट्राणां विभिन्नजातीयसमूहस्य च सदस्योऽस्मि। प्रकम्पमानेऽस्मिन् संसारे वयमुक्तिरूपस्य महापर्वतखण्डस्य सदृशा स्थास्यामः।

पट्टजार्जेनाऽपि स्वीये भाषणे उक्तं यत् मम प्रजाया सहयोगिनाञ्चोद्देश्यमिदं यत् यत्र क्वापि स्वाधीनतायामाक्रमणं भवेत्तत्र रक्षणं शत्रूणां प्रदेशे च समाक्रमणं कार्यम्। एताभ्यां शीघ्रातिशीघ्रमेव शत्रुभिरधिकृता देशाः स्वतन्त्रा भविष्यन्ति। युद्धसमाप्तौ तत्कालमेव भारतीयनेतृजननिर्मितविधानाधारेण ब्रिटिशराष्ट्रमण्डलान्तर्गतं स्वतन्त्रं भारतं दित्सते मम शासनमिति भारतीयनरेशान् प्रजाजनांश्चाह कथितवान्। किन्तु सखेदमिदमुच्यते यद् भारतीयनेतृवर्गो ममेदं निमन्त्रणं नैव स्वीकृतवान्। मम हार्दिकीच्छा यद् भारतीया बुद्धिमत्तया परस्परं सामञ्जस्यं विधाय यथाशीघ्रमेव शान्तिमेषु विजयमाप्नुवन्त्विति।

चर्चिलभाषणेन मुसो ब्रिटेन पुनरपि जागृतो बभूव। कियद्दिवसानन्तरमेव ब्रिटिशगृहमन्त्री हर्बर्टमॉरिसनसाहबो भाषणं कुर्वन्नवमुवाच—'ब्रिटिशो भारतायन्या विधाननिर्माणार्थं पूर्णं स्वातन्त्र्यं प्रदत्तवान् स्त। तस्य परिणामः पूर्णा स्वाधीनतैव भविष्यति युद्धानन्तरम्। ते स्वभाग्यनिर्णयेऽपि स्वतन्त्राः। किन्तु प्रवर्तति युद्धे मित्रराष्ट्राणां विजये काममपि बाधा नैव समुपस्थापयन्तु। किं भवद्भिः क्वापीतिहासे शासको शासकजातौ कृते एवंविधं स्वातन्त्र्यं प्रदातुमवययदित्युदाहरणं पठितं दृष्टं श्रुतं वा? भवन्त एतस्यार्थमन्यं यमपि विचारयन्तु, किन्तु मयैव एतावोऽवगम्यते यदेतया रीत्या ब्रिटेन एव नूतनमुदाहरणं समुपस्थापयति।' एतेन भाषणेनापि भारतायजनमनःशान्तौ किमपि साहाय्यं नाभूत्।

'भारत यावदयाशों कृते भारतीय एवास्तरदायी' ति सीर्षकेण पुस्तकं

शासनेन प्रकाशितम्। बन्दीभूतेष्वपि नेतृवृन्देषु काङ्ग्रेस एवान्दोलनस्य पथप्रदर्शनं चकार। पुनर्गान्धिनः काङ्ग्रेसस्य चालोचनापरिपूर्णमेकं श्वेतपत्रमपि प्रकाशितमभूत्।

एतस्याः पुस्तिकाया आलोचनां कुर्वन् 'न्यू स्टेट्समैन ऐण्ड नेशन' नामकं पत्रं लिखितवानेकमग्रलेखं यद् भारतशासनं काङ्ग्रेसविरोधि पुस्तकं श्वेतपत्रञ्च प्रकाश्य सुन्दरं नैवाकरोत्, यतस्तत्र काङ्ग्रेसस्य श्रीगान्धिनश्चालोचना वर्तते। नूनमियं पुस्तिका केवलं प्रचारायलिखितैव वस्तुतः। किन्तु 'टाइम्स'-सहितानि ब्रिटेनस्यान्यपत्राणि भारतविरुद्धं काङ्ग्रेसगान्धिविरुद्धञ्च विषवमनमेव चक्रुः।

पुनर्ब्रिटिशसाधारणसभायां भारतीयस्थितौ सदस्या विचारमारभन्त। लार्डसभायां यो हि प्रस्तावः समुपस्थापितोऽभूत्तस्मिन् पदप्रान्तविषय एव विचारो जातः। तत्र भाषणं कुर्वन् एमरीसाहबोऽकथयत् भारतस्य कृते एतादृशं विधानं निर्मातव्यं यद् ब्रिटेनविधानाद्भिन्नं तद्देशानुरूपं निजाभिनियासभूतस्य स्विट्जरलैण्डदेशस्य विधानमिव भवेत्।

एतस्यालोचनां कुर्वन् 'मैंचेस्टरगार्जियन'पत्रसम्पादको लिखितवान् यत् 'पुनः पुनः निष्प्रयोजनाया वक्तृतादानेन कार्यं नैव सम्पत्स्यते। साम्प्रतं क्रिप्सयोजना सर्वथाऽक्षमीभूता, नवीना परिस्थितिश्च समुत्पन्नाऽस्ति, यस्या यथार्थतादिरूपेण निर्णयो विधातव्य एव। 'डेली हेरल्ड' पत्रेऽपूर्वं प्रदत्तस्य वक्तव्यस्य पुनरावृत्तिमात्रमेवैमरीभाषणमिति प्रकाशितम्। एतेषामन्यान्यपि विषयाणां विवेचनं विहाय एमरीसाहबेन साधारणसभायां वक्तव्यमन्यथा ह्विन्स्टन्-चर्चिलसिद्धान्तानुसरणं विधेयम् इत्यादि दत्तवानिति।

अद्यावधि कदाप्येतादृशी सहानुभूतिः काङ्ग्रेसविषये न दृष्टा, यथा साम्प्रतं विद्यते। पीडितान् प्रति सहानुभूत्या सदैव शासनस्य कृते गत्यवरोधदूरीकरणार्थं प्रार्थनाप्येकाऽभवत्। अस्यां प्रार्थनायां शादीलाल-चिमनलाल-सीतलवाड-तेजबहादुरसप्रू-मिर्जाइस्माइल-राधाकृष्णन्प्रभृतिनेता-

सशास्त्रियार जयकरप्रभृतीनां भारतीयविशिष्टनेतॄणां व्यापारमण्डलादिसदस्या-प्रतिनिधीनामुच्चन्यायालयन्यायाधीशानां विशिष्टवाक्कीलानां लजपादरीप्रभृति-धार्मिकनेतॄणां साम्यवादिमहिलासम्मेलनसदस्यानां श्यामाप्रसादमुखोपाध्यायादि-हिन्दुमहासभानेतॄणां च सम्मतिरासीचद् भारतशासन पुनर्देशस्य परि-स्थितिं विचारयतु । किन्तु शासनस्य कर्णयोर्यूकापि नैव चचार ।

---

वयं ब्रिटिशशासनस्य कियतीं निन्दां कथं न कुर्याम, आहोस्विद् बहुरोषं कथं न प्रकटयेम। किन्तु सत्रिपाम्प्रत्येऽस्माकं स्थितिः कलङ्कस्येव वर्तते। छूरिका फलोपरि स्याद्यद्वा फलं छूरिकोपरि, उभयथापि विनाशस्तु फलस्यैव, गडगर्तं तस्यैव।

मानयन्तु भवन्तो यद् ब्रिटिशशासनं स्वान्तकालुषाः सौपवर्गीभूताश्च वयं कथयन्तो भवेम यद् ब्रिटिशशासनं त्यक्त्वा संकटाशान्तञ्च कुर्वन्तु, तेन सहासहयोगञ्च, तदा विश्वसन्तु भवद्भिः कारणेनाद्य अपेक्षातः पञ्चशत-गुणाधिके संकटे पतिष्यामः। न हि प्रश्नो नास्तिकत्वस्य, यतो मुहम्मदीयाना सन्निधे पञ्चशतगुणाधिकानि नास्तिकाश्रायाणि विद्यन्ते। यद्यप्यहं हिन्दूनां निन्दां नैव कर्तुमिच्छामि, किन्तु तेषां स्वभाव एवैतादृशः, यन्न योधगन्वे-षणाय एव वातावरणे अभूतामिति केनापि निश्चयाश्चित्ता कथितुं शक्यते। किन्तु स्वयमेवाहमात्मानं परिपृच्छामि किमिदमुचितं यद्वयं पञ्चशताधिके कष्टे पतितुं तत्पराः?

किन्तु प्रश्नस्त्वयमेव यदन्ततः कः परिणामो भविष्यति? निर्दिशामि परिणामद्वयम्, पूर्वतः पश्चिमतो दक्षिणोत्तराभ्यां वा भारते विदेशिना महदाक्रमणं भविष्यति। सर्वेऽत्र वदाऽस्माकं बलिदानेन को लाभः? यदि च द्वितीयवर्गोऽस्माभिः सह नैव भविष्यति तदा गृहसंग्रामो निश्चितः। द्वितीय-परिणामोऽयमेव स्यात्—यदि मुहम्मदीया एकैव हिंसाग्निज्वालां प्रकटी-कुर्वन्ति, तदा ते ब्रिटिशशासनं पङ्गुमपि विधातुं क्षमाः। तत्परिणामो भारतस्य खण्डनमेव। भवतु नाम! ब्रिटिशशासनं देशानिष्कासनं यद-महोरात्रं काम कुर्यामः, किन्तु वस्तुस्थितिरस्माकं कल्पनातीतैव इति।

### पाकिस्तानं वा प्राप्स्यामि श्मशानं वा लप्स्यामि

'न्यूक्रानिकल' इत्याख्यवृत्तपत्रसम्पादके जिन्नामहोदयः पूर्वं विवरणं कुर्वन्नाह—'भारतं कदापि स्वीयशासनसम्पादने क्षमं नाभूत्, अतएव भवद्भिः ब्रिटिशः स्वीयशासनस्याधिकारं भारतोपरि दद्यो'। जिन्नामहोदयेनोक्तप-

स्वीकृत्य सामूहिकान्दोलनारम्भो महाननुचितः । असम्भवमिदं विश्वासकरणं यत्कांग्रेससंस्था नेदमजानन्ती आसीत् यत् सामूहिकान्दोलने हिंसा रक्तपातोऽनपराधिनां विनाशश्च भवेयुः । महति सङ्कटपूर्णसमये आन्दोलनमिदमारब्धमित्यधिकं खेदजनकम् ।

एतस्योद्देश्यं बलान्महानालिकाख्यभयप्रदर्शनाद्वा स्वयाचना स्वीकार्या इति । यदि कांग्रेससंस्थायाः एतेभ्यो धृष्टतापूर्णव्यवहारेभ्यः उत्तरदायित्वविहीनकार्येभ्यश्च भीतं शासनं तस्या याचनां स्वीकरिष्यति, तदा तस्य परिणाम आत्मसमर्पणं सर्वेषां हितानां विशेषतो मुस्लिमजगतः स्वार्थस्य बलिदानमेव भविष्यति ।'

एकस्मिन् साक्षात्कारेऽनेनोक्तं यत् 'अखिलभारतीयकांग्रेसकार्यसमितेरन्तिमाधिवेशने गान्धी एवं समुवाच यत् देशे सबलं सगठनं केवलं कांग्रेससंस्था एव । सैव भारतस्यैकमात्रं प्रतिनिधिसंस्था । इमामेव वार्तामधिकं बलं प्रदाय श्रीरत्न एवमुक्तवान् यत् मुस्लिमलीगसंस्था एका प्रतिक्रियावादिनी संस्था वर्तते । मुहम्मदीयजनतैव तया सह सम्बद्धा । कांग्रेससंस्था पुनः समस्तदेशस्य प्रतिनिधिसंस्थाऽस्ति । श्रीरत्नेनेयं गर्जना न केवलं भारत एव कृता, किन्तु सम्पूर्णे विश्वस्मिन्नेतस्य प्रतिध्वनिरकारि ।' युद्धप्रयत्नसम्बन्धे अमेरिकासमाचारदातुः प्रश्नस्योत्तरेऽसौ उक्तवान् यद् अन्यदेशवासिनो जना भारतीयराजनैतिकपरिस्थितिविषयेऽपरिचिताः सन्ति । अत एवैतस्मिन्विषये विश्वासं कुर्वन्ति । अयं दूषितः प्रचारो जनानां छलनार्थमेव भवति । यदि भवन्तश्चर्चिलभाषणं पठित्वा विचारयन्तु चेत्तदा ज्ञास्यन्ति यदसौ कांग्रेसविचारान्खण्डनमेव चकारेति ।

युद्धप्रयत्ने मुस्लिमलीगसंस्था साहाय्यं नैवाकरोदित्यस्य नेदं कारणं यदियं युद्धविरोधिनी । किन्तु भावोऽयं विद्यते—तावदियं युद्धप्रयत्ने सहयोगं साहाय्यं वा नैव प्रदास्यति, यावज्जना एवं नैवानुभविष्यन्ति यद् देशस्य वास्तविकं शासनसूत्रमाङ्ग्ला मुस्लिमलीगसंस्थैवेति ।

मुस्लिमलीगसंस्था जिन्नाप्रभृतयस्तन्नेतारश्च इत्थं मन्यते यद्

यद्यदहमिदानीं युद्धोपरान्ते पाकिस्तानप्राप्त्यर्थं ब्रिटिशशासनेन प्रतिज्ञां कारयितुमिच्छामि। तत्प्रत्युपकाराऽस्थायिशासने सम्मिलितो भविष्यामि। किन्तु तत्र हिन्दुतुल्यान्येव स्थानानि ग्रहिष्यामीति। यदि ब्रिटिशशासनमद्य आगामिनि दिवसे वा समाश्वासनमेतादृशं प्रदास्यति तदा हिन्दूभरत-मपि मम विचारैरेतं प्रत्यक्षमनिवार्यञ्च परिणाममवश्यमेव स्वीकरिष्यति'।

दिल्लीनगर्यामेवस्मिन्दिवसे भाषणं कुर्वन् जिन्नासाहबः प्रावोचत् यत्सर्व एव मुहम्मदीयाः पाकिस्तानप्राप्त्यर्थं कटिबद्धा भवन्तु। अहं *पाकिस्तानं प्राप्स्यामि स्वात्मानमेव वा विनाशयिष्यामि।*

पूर्वं सयुक्तभारतसमर्थकस्य जिन्नासाहबस्यैतादृशं भारतखण्डनपूर्वकं पाकिस्तानयोजनान्वितं भाषणं श्रुत्वा पठित्वा च न केवल हिन्दव एव, प्रत्युत कतिपय मुहम्मदीया अपि विरोधमकुर्वन्।

दिल्लीनगर्यां क्रिस्प्सप्रस्तावरणविना सम्मेलने 'सम्मेलनमिदं सन्धिकार्ये समुचितं साधनं भविष्यती'ति मेडरिकजेम्ससाहबोऽकथयत्। सम्मेलने भाषणं कुर्वन् पण्डितहृदयनाथकुञ्जरूमहाशयो उक्तवान् यद् देश विभाजनविध्वंसमानसमये केवलमिदमेव सम्मेलनमस्ति यद्देशस्यैकतायाः समर्थनं करोतीति। अध्यक्षपदमलङ्कुर्वन् महाराजसिंहः साम्प्रदायिक-समस्यासमाधाने श्रीगान्धिमुक्तिविषयकं भाषणमदात्।

प्रधानलार्डो लिनलिथगोसाहबो निर्भयतापूर्वकं श्रीगान्धिनः सविधे पत्रमेकं लिखित्वा सूचितवान् यत् 'काङ्ग्रेसोपरि यद्दोषारोपणमभूत्, तद्यो-परमेकस्मिन्दिवसे भवता प्रदातव्यमवश्यमेव भविष्यतीति विश्वासं करोतु भवान्। यदि च भवान् संसारस्य समक्षस्य निर्दोषं कथयिष्यति, तदापि निर्णयो भवद्विरुद्ध एव भविष्यती'ति।

## गान्धिनोऽनशनम् तत्प्रतिक्रियाश्च

किन्तु लार्डप्रधाने इत्यमारोपे कृतेऽपि महात्मा गान्धी पूर्वसंकल्पित-मनशनमारब्धवान्। तदुपवासस्य सर्वत्रैव निम्नलिखिताः प्रतिक्रिया बभूवुः-

वैननहारैःझक्षहिता धारासमाकर्मकरदलस्य बहवः सदस्या एमरी-

साहबेन साक्षात्कारं कृत्वाऽनशनकारिणः श्रीगान्धिनो मुक्त्यर्थं प्रार्थनाञ्चक्रुः ।

हिन्दुमहासभायाः कार्यवाहकाध्यक्ष श्रीश्यामाप्रसादमुखोपाध्यायो 'महात्मानं गान्धिनमन्तरा भारतीयसमस्यायाः समाधानं न भविष्यती'ति सर्वप्रथमं घोषणां चकार । भारतीयव्यापारमण्डलाध्यक्षः श्रीमेहतामहाशयः कथितवान् यद् 'यदि श्रीगान्धिनोऽभियोगे किमपि परिवर्तनं न कर्त्तुं शक्नुयात् शासनं तदा तं मुक्तमेव कुर्यादि'ति । 'यदि श्रीगान्धिनोऽनशनावस्थायां मृत्युर्भविष्यति, तदा ब्रिटिशभारतयोर्मैत्रीपूर्णसम्बन्धे विघ्न एव भविष्यती'ति मदनमोहनमालवीयश्च चर्चिलसमीपमेकमाशुसंवादं ( तार ) प्रेषितवान् ।

आर्थरमूरसाहबः कथितवान् यद् अस्मिन्समये गान्धिनो जीवनं संकटेऽस्ति । शासनं तं यदि मोचयेत्तदा कलङ्कं नैवाप्स्यति, न च तत्प्रतिष्ठायाः कोऽप्याघातो भवेदिति ।

अमेरिकायाः सर्वेष्वेव पत्रेषु उपवासस्यास्य विवरणं प्रकाशितं बभूव । 'यो हि महात्मा स्वतन्त्रताप्राप्त्यर्थं सर्वमेव स्वकीयजीवनं समर्पितवान्, स चरमसीमोपवासे समाप्तिमाप्नोती'ति 'न्यूयार्कटाइम्स' प्रकाशितमभूत् । अमेरिकायाः स्वराष्ट्रमन्त्रिकार्डलहलः, अमेरिकास्थितब्रिटिशराजदूतलार्ड-हेलिफेक्सो हल्साहबश्च श्रीगान्धिनः उपवासविषये गम्भीरां चिन्तां प्रकटितवन्तः ।

भारते श्रीगान्धिनोऽनशनं समर्थयन्तः प्रधानलार्डशासनपरिषदः कतिपये सदस्यास्त्यागपत्रं प्रदत्तवन्तः । नूतनपरिस्थितौ विचारकरणार्थं विभिन्नसंस्थानां नेतृणामेकं सम्मेलनं दिल्ल्यां निमन्त्रितमभूत् । तत्र जिन्नासाहबोऽपि आसीत् । किन्तु तेन स्पष्टं सूचितं यद् गान्धिनोऽनशने विचारो हिन्दुभिरेव कार्यः यतोऽसौ खलु हिन्दुनेतेति । किन्तु सर्वैर्नेतृभिः सर्वाभिश्च संस्थाभिः कृता श्रीगान्धिनो मुक्त्यर्थं प्रार्थनाऽन्ततो व्यर्था बभूव । यथाकथमपि श्रीगान्धी स्वकीयानशनं शान्त्या सहासञ्च समाप्तवान् । ●

: ५३ :

# राजगोपालाचारिणः प्रस्तावः

श्रीराजगोपालाचारी वारद्वयं जिन्नासाहबं साक्षात्कृत्य वार्तालापञ्च विधाय सामञ्जस्यार्थमाशान्वितो जातः । तदा का गुप्त योजनासीदिति न केनापि कथितुं शक्यम् । नेतृसम्मेलनसमये सामञ्जस्यार्थं याऽऽशासीत्तस्या लार्डप्रधानः श्रीगान्धिना सहान्येषां साक्षात्कारमवरुध्य पूर्वमेव तुषारपातमकार्षीत् । राजगोपालाचारी आशान्वितो भूत्वा नेतृसम्मेलनमायोजितवान् । किन्तु लार्डप्रधान आज्ञा नैव प्रादाद्गान्धिनः सह साक्षात्काराय । एतत्सर्वमेव सन्देहादेव बभूव । राजगोपालाचारी कदाचिद्विचारयन्नासीत् यदस्याः समस्यायाः समाधानं पाकिस्तानस्वीकारेणैव भविष्यतीति । जिन्नासाहबो यद्यपि पाकिस्तानसिद्धान्तं नैव निर्धारितवान्, तथापि राजाजी द्विराष्ट्र-सिद्धान्तं स्वीकृतवानासीत् । पाकिस्तानस्वीकारेणैव सर्वासां समस्यानां समाधानं स्वत एव भविष्यतीति स मनुते स्म । बङ्गलोरे मुहम्मदसाहबस्य जन्मदिवसे भाषणं कुर्वन्नसौ स्पष्टमुक्तवान् यद् राजनीतिकविरोधपरि-समाप्तिः पाकिस्तानस्वीकारेणैव भविष्यति, अतोऽहं पाकिस्तानं समर्थयामीति ।

## जिन्ना-भाषणम्

अथ दिल्लीनगर्यां मुस्लिमलीगसम्मेलनाध्यक्षपदासीनो जिन्नासाहबो निम्नलिखितं भाषणमदात्—'सर्वानुपेक्ष्य शासनेन युद्धे विजयो नैव प्राप्तुं शक्यः । इमां वार्तां यदि शीघ्रमेव विचार्य शासनं किंचित् समाधानं करिष्यति तदैव सर्वेषां लाभः । युद्धेऽस्माकं पराजयः शासनस्य भ्रान्तिपूर्णनीत्यैव भविष्यति । भारतस्य खाद्यार्थमुद्रापरिस्थितिः संकटपूर्णा । हस्तोपरि हस्तनि-

भाय विषयेऽस्मिन् सर्वथा सपेक्षा विधाय शान्त सत् शासन यदि विजय-प्राप्त्यर्थं युद्ध करिष्यति तदा तत्र तत् महतीं हानिमवाप्स्यति ।

'एवमेवाहमखण्ड हिन्दुस्तान हिन्दूराष्ट्रञ्च कदापि नैव स्वीकरिष्यामि । यदि गान्धी पाकिस्तानमाधारीकृत्य मुस्लिमलीगेन सह सन्धि कर्तुं तत्परो भवेत्तदा मत्तोऽधिकमानन्द कस्यापि न भविष्यति । अह भवत कथयामि यद् हिन्दूना मुहम्मदीयानाञ्च कृते तदेव शुभदिन भविष्यति ।

'यदि गान्धी पाकिस्तान स्वीकृतवानस्ति तदा सुस्पष्टं मम सविधे कथं न लिखति ? किन्तु स लार्डप्रधानसचिवे पत्र लिखति । अत्र मत्स-विधे पत्रलेखनाद्गान्धिन कोऽवरोधस्त्यति ? एतस्मिन्देशे बहुशक्तिशाली शासन भवतु नाम, वय न तद्विरुद्ध काम कथयेम । किन्तु मन्नाम्ना प्रेषित पत्र तदवरोत्स्यतीति क्षणमात्रमपि नैव विश्वसिमि । यदि शासनमे-तादृश कार्यं करिष्यति, तदा नून तद्गम्भीर भविष्यति । अद्यापि मया श्रीगान्धिन काङ्ग्रेसस्य हिन्दूनेतृणा वा विचारे किमपि परिवर्तनलक्षण नैव विलोक्यते ।

जिन्ना भाषण पठित्वा महात्मा गान्धी जिन्नासाहबस्य कृते पत्रलेखनाय अनुमतिप्राप्त्यर्थमेक पत्र भारतशासनसविधे लिलेख । किन्तु निवेदनानन्तरं बम्बईराज्यद्वारा दिल्ल्या प्रेषितमपि तत्पत्र जिन्नासाहबा नाधिगतवान् ।

श्रीगान्धिन पत्र जिन्नासमीपमप्रेषणेन लन्दनस्य शासनीयक्षेत्रेषु या प्रतिक्रिया बभूव, ता रायटर संस्थाया राजनीतिकसंवाददाता इत्थम लिखत्—'भारते भूतस्यैतस्य निश्चयस्य त्रिटिशशासन पूर्णतया समर्थनं करिष्यति ।'

राजनीतिरित्थं कथितमभूद्युद्धारतस्य रक्षार्थं युद्धप्रयत्ने सापल्यार्थञ्च गान्धिप्रभृतया नेतार कामपि वार्ता कर्तुं नैव शक्नुवन्ति, यावच्च ते युद्धप्रयत्ने सहयोगार्थं तत्परा नैव भविष्यन्ति ।

'मैंचेस्टर गार्जियन' वृत्तपत्रे इत्थ प्रकाशितमभूत्—'भारतशासन-स्यैष निश्चय पूर्वनिर्धारितमार्गावलम्बनानुसारमेव । किन्तु स सनवार्ता

परिवर्तनशीलतैव गुणाय न भवति। भारतशासन बहुवार स्ववचनात्प राङ्मुखमभूत्। परिणामज्ञानार्थमेव शासनमन्यनेतृभि सह मिलितु श्री गान्धिनं कथ नादिशती'ति।

जिन्नासाहबश्च 'टाइम्स आफ इण्डिया'नामक वृत्तपत्रसंवाददातारमकथयद् 'गान्धिन पत्रमिद मुस्लिमलीगब्रिटिशशासनयोर्मध्ये कलहबीज वपनार्थमेको नूतन उपायोऽस्ति, येन मुक्तोऽसौ स्वेच्छया कार्यं कुर्यात्। अह खलु मुस्लिमलीगसस्थाया दिल्ल्यधिवेशने यादृश विचार प्रकटित वास्त मानितु स्वा नोति परिवर्तयितु वा गान्धिन इच्छैव नास्ति। तस्मिन् भाषणेऽहमकथय यद् यदि गान्धी काङ्ग्रेसविगताधिवेशने स्वीकृतं प्रस्ताव परावृत्त कुर्यात्। तदनुकूलञ्च स्वमार्गमपि समाप्य पश्चात्पदो भूत्वा स्वनीतिं परित्यज्य स पाकिस्तानाधारेण सन्धि कर्तुमागमिष्यति तदाहमपि भूतपूर्ववार्ता विस्मर्तुमुद्यतोऽस्मि। दृढीयान् मे विश्वासोऽस्ति यद् गान्धिन एतादृशाशय पत्र शासन कदापि नैवावरोत्स्यति। गान्धिनान्येन नेत्रा सह वा मिलित्वा वार्तालाप कर्तुं सर्वदैव तत्परोऽस्मि। किन्तु केवल मिलितुमिच्छाप्रकटनेन किं भविष्यति। इच्छाप्रकटने पत्रलेखने वा मम नास्ति निष्ठेति। भारतशासनस्य गृहमन्त्रालयद्वारा मया सूचना प्राप्ता यद् गान्धी मया सह मिलितुमेवेच्छा प्रकटितवानि'ति।

पूर्वं जिन्नासाहबेन पाकिस्तानस्वीकृत्यर्थमुक्त्वा पश्चाद्बम्बईप्रस्ताव-विरुद्ध भाषण प्रदत्तमिति परस्परविरुद्ध तद्भाषण पठित्वा जनास्त निन्दितवन्त एव।

: ५४ :

# वंग-दुर्भिक्षम्, लिनलिथगो-गमनञ्च

एतस्मिन्नेव समये वङ्गदशा दुर्भिक्षग्रस्ता दयनीया च जाता। फेनीचट्टग्रामकलिकातादिषु समरपथेन द्वितीयमहायुद्धविभीषिका वङ्गपर्यन्तं समागता। फजलुलहकसाहवेन वङ्गीयप्रधानमन्त्रिपदं परित्यक्तम्। अथ तत्पदे नाजिमुद्दीनः समासीनान्। अन्नाभावाद् बुभुक्षिता ग्रामीणक्षेत्रवासिनो वङ्गीयाः पञ्चत्वमापेदिरे। अन्येऽस्थिचर्मावशेषा जर्जरवस्त्राच्छादितशरीराः प्राणरक्षार्थं क्व प्राप्स्यामोऽन्नमिति पर्यटन्तः स्त्रीबालवृद्धसहिताः पिशाचसदृशाः कलिकातामागत्य यत्र तत्र पादपथेषु निवासं चक्रिरे। राजमार्गाः प्रतोल्यश्च कलिकाताया मृतानामर्धमृतानां दुर्भिक्षग्रस्तानां वङ्गीयजनानां समुदायेन परिपूरिता बभूवुः। यत्र क्वापि अन्नप्राप्तिचर्चां श्रुत्वा धावन्तोऽन्नं प्राप्याप्राप्य भोजनं कृत्वाऽकृत्वापि वा दुःखिता एवासन्। पश्यन्तीनां मातॄणां समक्षं शिशवः, पत्नीनां पतयः, पतीनां स्त्रियः पत्न्यः, भ्रातॄणां भ्रातरः, किं बहुना सर्वेषामेव प्रियजनाः पश्यतामेव मृताः। किन्त्वहो समयमाहात्म्यम्! मृतानां कृते किमपि कर्तुमसमर्थास्ते कतिपयानश्रुबिन्दूनेव निपात्य कृतकार्याः पार्श्ववर्तिनो मृतान् बान्धवान् विहायान्नप्राप्त्यर्थं प्रयतमाना धावन्तश्च इतस्ततो दिग्दिगन्ताभ्यन्तर एव महाप्रयाणं कुर्वन्तो बभूवुः।

वङ्गे प्रतिदिनमेव अन्नाभावान्म्रियमाणानां संख्या वर्धते स्म। मृतेषु बालकबालिकावृद्धा एव बाहुल्येनासन्। कतिपयास्तथा व्यापारिणो बहुषु स्थानेषु भोजनवितरणव्यवस्थामपि कृतवन्तः। तेषु बाहुल्येन मरुस्थलीया एवासन्। किन्त्वसन्तुष्टा दुर्भाग्यदुर्भिक्षग्रस्तास्ते शरणार्थिनः 'तत्र प्राप्स्यामः अन्नदानम्, तत्र प्राप्स्यामो गोधूमचूर्णम्, तत्र प्राप्स्यामः शुष्कान्नम्, तत्र

प्राप्स्यामो वस्त्रम्, तत्र प्राप्स्याम आवासमि"ति सर्वत्रैव धावता नरकङ्कालसमानामाबालवृद्धवनितानां मानवसमुदायानां मध्यतः कतिपयान् मृतानर्धमृतान् भूम्यां पतितांश्च विहाय स्वप्राणरक्षार्थं कृतप्रयत्ना अपि पञ्चत्वमापेदिरे। कलिकातामागतानां दुर्भिक्षपीडितानां यत्र तत्र शौचादिक्रियाभिः नगरी दुर्गन्धपरिपूरिता नरकसमा शवैराच्छादिता च बभूव। सम्पूर्णे वङ्गे त्रिंशल्लक्षसंख्यका मानवा दुर्भिक्षे मरणमाप्तवन्तः। भारतीयनेतृषु कारागारनिबद्धेषु तत्काले हिन्दूमहासभाकार्यवाहकाध्यक्षेण श्रीश्यामाप्रसादमुखोपाध्यायेन इतस्ततो धनसंग्रहं कृत्वा महत्साहाय्यमकारि।

अथ समाप्ते स्वीयकार्यकाले लार्डलिनलिथगोसाहबोऽवकाशमवाप्य लन्दनं जगाम। तत्स्थाने तत्स्वाधीनतायां प्रधानसेनापतिकार्यकारको लेखकः स्टालिनेन सह रूसीभाषायां वार्ताकारको रूसीभाषाया व्याख्याता रणनीतिविशारदो योद्धा फील्डमार्शलित्युपाधिविभूषितः सिंगापुरपतनात्पूर्वमेव भग्नास्थिरपलायनकारक आर्कीबाल्ड-वेवलो नैराश्यगर्ताद्भारतं समुद्धर्तुं भारत-लार्डप्रधानपदमलञ्चकार।

सार्धसप्तवर्षाणि यावद्भारतभाग्यविधायकस्य हृष्टपुष्टाङ्गस्य विचारेऽप्याग्रहिणो राजनीतावपटोः स्वभावे साम्राज्यवादिनो व्यवहारे शिष्टाचारवतः प्राचीनपद्धतौ विश्वासवतो वार्तायां मितभाषिणो जनसम्मेलने उदासीनस्य यदा कदा कार्ये प्रभावहीनस्य स्पष्टवादितायाः अभावेन स्वनीतौ जनसन्देहभाजनस्य लार्डलिनलिथगोसाहबस्य कार्यं दुःखान्तनाटकमिवासीत्।

स्वनीत्याऽसौ हिन्दु-मुहम्मदीययोः प्रान्तभारतीयराज्ययोः सवर्णासवर्णजात्योः प्रान्तपरिगणितप्रदेशयोर्मध्ये च भेदं समुत्पादितवान्, तेन तस्यैकतामहस्य जनाः समर्थनं नाकुर्वन्। देशीयराज्येभ्यः प्रोत्साहनं प्रदाय नरेशानां न केवलं कांग्रेसविरुद्धम्, किन्तु लोकतन्त्रविरुद्धमप्युपयोगं चकार। एमरीसाहबसंयोगेन कांग्रेसनेतॄणां कारागारदण्डं प्रदाय मुस्लिमलीग-कांग्रेसयोर्मध्येऽन्तरकृत्य यथाचानयोरैक्यमेव न भवतीत्यप्रयतत सः।

भाषणेऽस्मिन् भारतीयराजनीतिशब्देन काग्रेसनेतार एव सङ्केतिता भारतमन्त्रिमहोदयेन । किन्तु कारागारमुक्तिं विना कथं तैः सह प्रधानलार्ड-साहबः सामञ्जस्यं करिष्यतीत्यस्य तेन भाषणे चर्चा नाकारि ।

भारतमन्त्रिण आदेशरूपं भाषणं श्रुत्वा वेवलः कार्यं कर्तुमारभत । किन्तु स्वकीयविचारे स्वकीयसिद्धान्ते स्वकर्तव्ये च तस्य महती रुचिरासीत् । अतोऽसौ वङ्गदुर्भिक्षप्रस्तावानामुपरि ध्यानमदात् । अन्नवाणिज्यपरिवर्तने स्वच्छजलप्रबन्धे कीटाणुनाशकौषधवितरणे स्वच्छताया विद्यालयेषु विविध-ज्वरादिरोगविनाशकौषधालयसमुद्घाटनेऽन्नसंग्रहे तत्परतां विधाय तेन समागमसाधनानामेकः कोषोऽपि स्थापितः, यस्मिन् राज्यशासनेन सप्तविंशतिलक्षरूप्यकाणि प्रदत्तानि । पुनः शीघ्रमेव कलिकातानगरे गत्वा दारणार्थिनां व्यवस्था विधाय तेन सा महानगरी परिष्कारिता । एवं दिल्ल्यां शीघ्रमेव प्रान्तपालानामेकं सम्मेलनमाहूतम् । किन्तु सम्मेलनस्य किमपि फलं नाभूत् । सत्यप्येव लोकमते भ्रान्तिरेव समवर्धत । जना विचारयन्तो बभूवुर्यल्लार्डप्रधानस्य विचारे नास्ति काप्येतादृशी वार्ता, यया भारतीयराजनीतिकादर्शे कापि त्रुटिर्भवेत् । बहुकालेभ्य उपेक्ष्यमाणाया वङ्गीयान्नसमस्याया ध्यानं प्रदायासौ स्वकीयकर्तव्यपालनमेव चकार, नान्यत् किमपीति ।

एकस्मिन् दिवसे भारतीयवृत्तपत्रप्रतिनिधीन् भोजनायाहूय वार्ता-प्रसङ्गे अनेन लार्डप्रधानेनोक्तं यत् ब्रिटिशभारतयामध्ये सद्भावनापूर्ण-परामर्शार्थं बहूनि पत्राणि प्राप्तानि । किन्तु परिस्थितेरध्ययनं कृत्वैव किञ्चिद् वक्तुं शक्यते मयेति ।

भारतमन्त्रिणः सुप्रबन्धेन समुत्पन्नभारतीयदुर्भिक्षविषये बहवः प्रस्तावा लन्दनेऽपि पारिता बभूवुः ।

अथ वेवलसाहबस्य भारतागमनात् किञ्चित्कालानन्तरमेव ब्रिटेने मान्चेस्टरनगरे कर्मकरदलीयो मानफर्डस्य सभ्यान्निवेदितानिश्चयप्रस्ताव-यानकर्मकरसंघः बर्नस्पौरप्रतिष्ठानकर्मचारिणः केरटनराज्यकर्मचारि-

कारित्वाद्भारतस्य प्राचीनमित्रत्वाच्च स्वकीयकार्यकाले यथार्थं देशः समुन्नतः समुज्ज्वलश्च भवेत्तथा प्रयतिष्ये। किन्तु नास्ति मम कृते सरलो मार्गः। स्वकीयसमस्यानां समाधाने वयं यदा मिलित्वा प्रयत्नं करिष्यामस्तदैव भविष्यत्सम्बन्धे निश्चिता अपि भविष्यामः।'

वेवलभाषणस्यास्य ब्रिटेने भारते च महत्यालोचना बभूव। पुनः समागते स्वाधीनता दिवसे शासनकृतप्रतिबन्धस्थलेषु अतः स्वगेहेषु प्रतिबन्धरहितस्थलेषु च सानन्दं सर्वैरेवोत्सवः कृतवन्तः।



: ५६ :

# जिन्ना-वक्तव्यम्

लार्डप्रधानस्य भाषणानन्तरं जिन्नासाहवो 'न्यूज-क्रानिकल'पत्रस्य दिल्लीस्थितप्रतिनिधिना सह साक्षात्कारे प्रश्नोत्तररूपेण निम्नलिखितं स्वीयं वक्तव्यमदात्—

जिन्ना—वर्तमानपरिस्थित्या सन्तुष्टं शासनं किमपि नूतनं कार्यं कर्तुं नेच्छति। अवैधानिकाऽपि कांग्रेससंस्था स्वीयहृदयपरिवर्तनस्य परिचयं नैव प्रदत्तवती।

प्रश्नः—शासनं कांग्रेसदलस्यया सह वार्तालापं कथं न करोति? कथञ्च पाकिस्तानसमर्थकं राजगोपालाचारिसदृशं कमपि मानवं गान्धिनः सविधे सम्प्रेष्य स्वमतपरिवर्तने तं न विवशीकरोति?

जिन्ना—यावद्गान्धी प्रसन्नो न भवति, तावत् ममोचितामपि याचनां शासनं न स्वीकरिष्यत्ययमेवास्य प्रश्नस्यार्थो भवति। किन्तु तर्कमेतं नाहं स्वीकरोमि। नेदं मया कथितुं शक्यते यत् शासनस्य का नीतिरिति। किन्तु शासनं यदि भवद्विचारं स्वीकरिष्यति, तदा विजयः कांग्रेसस्यैव भवेत्। कांग्रेसमन्तरा च शासनं पदात्पदमपि चलितुं न शक्नोतीत्येव तदर्थः स्यात्।

प्रश्नः—तदा किं कर्तव्यम्?

जिन्ना—यदि ब्रिटिशशासनं तत्त्वतो भारते शान्तिस्थापनार्थं समुत्सुकं तदा द्वयोः स्वाधीनराष्ट्रयोर्मध्ये भारतविभाजनं कुर्यात्।

प्रश्नः—किन्तु द्वयो राष्ट्रयोर्मध्ये विभज्य भारतं बाह्यदेशाक्रमणार्हं शक्तिहीनं वा विधातुं कदापि शासनं न वाञ्छति।

जिन्ना— स्वस्यैकं भारतं रक्षितुमधिकं सुरक्षितं कर्तुं शक्यत इति नैव

मन्यते मया । प्रत्युत हिन्दुमुहम्मदीययोर्मध्येऽसामञ्जस्यावस्थाया ब्रिटेनीयै-र्भारतमाक्रान्तुं शक्यते पुनः पुनः । वस्तुतो हिन्दुमहम्मदीययोरेकस्मिन् देशे निवास शासन सहयोगा असम्भवा एव । ब्रिटेनो भारतमेकराष्ट्ररूपेण रक्षितुं वर्षेभ्यः प्रयत्नशीलोऽप्यसफल एव । इदानीमसौ द्वयो राष्ट्रयोः र्विभाजन करोतु । भारतस्येदं सर्वसुन्दरं कार्यं भविष्यति ।

प्रश्नः—किन्तु जानात्येव भवान् हिन्दवः काग्रेससंस्था च कदापि भारतविभाजनं नैव स्वीकरिष्यन्ति । अथ च शासन यदि पाकिस्तानयोजना स्वीकरिष्यति तदा हिन्दवः काग्रेससंस्था च सत्याग्रहं करिष्यन्ति । सत्याग्रहात् हिंसाया गृहयुद्धस्य च सम्भावना समुत्पत्स्यते ।

जिन्ना—न ह्येतत्किमपि भविष्यति, यदि शासनं पूर्वपाकिस्तान स्वीकुर्यात्तदा तेऽपि निमाशाभ्यन्तरमेव स्वीकरिष्यन्ति । यदि नाम शासनमिच्छेत् तदा काग्रेसाभिमान क्षणेनैव धूलिसात्कर्तुं शक्नुयात् । मुहम्मदीय बहुलपञ्चप्रान्तेषु मुहम्मदीयमन्त्रिमण्डलैः सह पाकिस्तानसिद्धान्तानुसारं हिन्दवोऽपि कार्यं कुर्वन्त्येव । पाकिस्तानात् सर्वे एव लाभान्विता भविष्यन्ति । अतो हिन्दव कामप्यापत्तिं नैव कुर्युः । भूतेऽपि पाकिस्ताने चीन रूसौ विहाय सर्वेभ्यो देशेभ्यो विशालमेव भारत भविष्यति ।

प्रश्नः—किन्तु सग्रामोऽवश्यम्भावी । पाकिस्तान निर्माय भवाश्च्छनूनेवोत्पादयिष्यति । तथा च पाकिस्ताने 'अखण्डभारतम्' इत्युद्घोषयन्तः हिन्दवः नूनमाक्रमण करिष्यन्ति ।

जिन्ना—निर्भयोऽहम्, न चैतेन सहमत । किन्तु नूतनविधानान्तर्गतपरिवर्तनकाले सशस्त्रसैनिकसम्पन्नं ब्रिटिशशासन सर्वोपरि स्थास्यति । परिवर्तनकालयावत् द्वयो राष्ट्रयोः ( पाकिस्तान भारतयोः ) ब्रिटेनेन सह सम्बन्धः स्थास्यति । अन्ततो द्वावेव स्वाधीनताप्राप्तमिस्रदेश इव तेन सह सन्धिसम्पन्नौ भविष्यतः ।

प्रश्नः—भारत पाकिस्तानौ स्वाधीनताप्राप्तप्रतिवेशिनौ भूत्वा नैव

स्थातुं शक्ष्यत इति तर्कं समुपस्थाप्य यदि ब्रिटिशशासनं भारतात्स्वाधिकारं नैव समापयिष्यति चेत्तदा किं भविष्यति ?

जिन्ना—एतादृशी सम्भावना नास्ति । किन्तु भवितुं शक्यते, तथापि यथा स्वाधीनतयाधुना वयं वञ्चिताः स्म चेत् सा आन्तरिक स्वाधीनता-वश्यमेव भविष्यति । अथ च स्वाधीनताप्राप्तौपनिवेशान्विता वयं वर्तमानकालापेक्षया शासनेन सामञ्जस्यार्थमुत्तमपरिस्थितौ भविष्यामः ।

प्रश्नः—शीघ्र तिशीघ्रं भारतं स्वाधीनं करिष्यामीति वदति ब्रिटिशशासने कथं विश्वसिति भवान् ?

जिन्ना—यदा ब्रिटिशो भारतं विभज्य हिन्दुमुहम्मदीयाभ्यां स्वातन्त्र्यं प्रदास्यति, तदैवाहं तस्मिन् विश्वासं करिष्यामि । एकदा जानब्राइटोऽकथयत् यदनिश्चयकालपर्यन्तं ब्रिटेनो भारतशासनं करिष्यति ? यस्मिन् विंशत्यधिकानि राष्ट्राणि विंशत्यधिका भाषाश्च विद्यन्ते, तद् भारतमखण्डसाम्राज्यरूपेण कदापि स्थातुं शक्नोतीति साधारणबुद्धि सम्पन्नोऽपि विश्वासं करिष्यति किम् ?

प्रश्नः—किं भवान् दिल्ल्यां लार्डप्रधानेन सह मिलिष्यति ?

जिन्ना—यदा मया सह मिलितुमसावभिलषिष्यति, तदा सहर्षं तेन मिलिष्यामि । किन्तु पूर्वं मया यत्किञ्चिदपि कथितं तदधिकं कथितुं न शक्यते ।

एतस्य जिन्नाकथनस्य सर्वत्रैव सर्वैर्विविधप्रकारैरालोचनं कृतम् ।

लन्दने भारतमन्त्रिणः कार्यकरणादिशासनसाम्राज्यवादरहस्यस्य भारतीयराजनीतिकार्मिकसामाजिकविषयाध्ययने कृतपूर्णप्रयत्नस्य भारतमागतस्य प्रधानलार्डपेथल्लस्य पञ्चमासा व्यतीता बभूवुः ।

परित्यक्तसैनिकक्षेत्रस्य भ्रमणकाले सैनिकविषयेषु स्नेहवतस्तस्य मतं राजनीतिविषयेऽमेरिका ब्रिटेनवासिनो जना मानितुं तत्परा नासन् ।

किन्तु सत्यमिदं यदनया कारागारमुक्त्या नाहं प्रसन्नोऽस्मि, प्रत्युत लज्जित एव। लब्धस्वास्थ्यं मां पुनरपि शासनं कारागारं प्रेषयिष्यति चेन्नास्ति मम कोऽपि दोषः। बम्बईप्रस्तावे किमपि परिवर्तनं नैव विधास्यते मया। यथा भवानपि कथितवान्, तथासौ निर्दोष एव। यद्यपि तस्य समर्थने आवयोर्मतं न मिलिष्यति, किन्तु स प्रस्तावो मम प्राणेभ्योऽपि गरीयान्' इति। प्रकाशितेऽस्मिन्पत्रे जनानां ध्यानं केन्द्रितमभूत्।

बम्बईप्रस्तावं परावर्त्य स्वात्मसमर्पणञ्च कृत्वा महात्मा गान्धी राजनीतिबन्दिनो मोक्ष्यतीत्याशा जनानां मनसि नासीत्। किन्तु श्रीगान्धि-निर्दिष्टेन केनापि नूतनेन सामञ्जस्येनावश्यमेव नेतारो मुक्ता भविष्यन्तीत्याशा बलवत्यासीत्।

यदा यदा महात्मा गान्धी कारागारान्मुक्तिमवाप, तदा तदा राजनीतिक-कलहसमाप्त्यै चेष्टितवान्। अधुनाऽपि लार्डवैवेल्सविधे विलिख्य पत्रं स कार्यसमितिसदस्यैः मिलितुमनुमतिं याचितवान्। कार्यसमितिसदस्यैः मिलितु-माज्ञा नैव प्रदीयेत चेद्भवता सहैव मिलिष्यामीति च लिखितवान्। श्रीगान्धिनस्तत्पत्रमित्थम्—

'प्रियबन्धो!

यस्मिन्कर्मणि व्यस्तो भवांस्तत्सम्बद्धमिदं पत्रमिति भवन्तं लिखामि। नास्ति किमपि कारणम्, तथापि भारतीयाः प्रायेण विदेशीयाश्च मया किञ्चित्कर्म कारयितुमिच्छन्ति। किन्तु लब्धस्वास्थ्योऽपि कांग्रेसकार्य-समितेर्विचारमज्ञात्वा किमपि कर्तुं नैव शक्नोमि। बन्दीभूय कार्यसमिति-सदस्यैः सह साक्षात्करणार्थं भवत आदेशं याचितवान्। किन्त्विदानीं मुक्त्यनन्तरात् पुनस्तमादेशं प्रार्थयामि। यद्येतस्मिन्विषये निश्चयात् पूर्वं भवान्मया सह मिलितुं स्वं कुर्याच्चेत् चिकित्सकैर्दूरयात्रार्थमादेशो प्राप्तो यत्रैव भवत इच्छा, तत्रैव समागत्य सानन्दं मिलिष्यामि। कारागारनिवाससमये भवता सह मम यो हि पत्रव्यवहारोऽभूत्, तानि पत्राणि मित्राणां मध्ये जनसाधारणेष्वपि च वितरितुं शासनं मह्यमाज्ञाप्रदानं कुर्यात्।'

लार्डवेवेलः पत्रमिदं पठित्वा श्रीगान्धिने निम्नलिखितमुत्तरं लिखितवान्—

'प्रिय गान्धिजी !

भूतपूर्वपत्रव्यवहार आवयोर्मतभेद एवासीत् । अत एवानयोर्मेलनस्य अवसरो नास्तीदानीम् । तेन लाभोऽपि नैव भविष्यति कोऽपि । इयमेव वार्ता भवतः कार्यसमितिसदस्यैः सह साक्षात्कारेऽपि कथितुं शक्यते । 'भारतं परित्यजे'ति प्रस्तावे भवता सार्वजनिकरूपेण सम्मतिः प्रदत्ता, तामहं भविष्यदर्थेऽसंगत्या व्यावहारिकनीत्या वा नैव मानयामि । स्वास्थ्यलाभात्परं यदि भवता पूर्णतया विचार्य भारतहिताय कापि निश्चिता रचनात्मिका च नीतिः प्रस्तूयेत, तदा सा मया स्वीकार्या भवेत् । सामञ्जस्येव आवयोः पत्राचारो भवता मित्रमण्डल्यां वितरित इति मया यावान् राजनीतिकस्तं प्रकाशितुमाज्ञा प्रदत्ता ।'

यदा श्रीगान्धिनो भाषणं प्रतीक्षमाणानां सपादमासो व्यतीतस्तदासौ 'न्यूज क्रानिकल'संवाददातृसमक्षं प्रकाशनार्थं प्रधानलार्डसमीपे प्रापणार्थञ्चैकं भाषणमदात् । तत्सारांशो यथा—'अहं कांग्रेसकार्यसमितिविचारमन्तरा किमपि नैव करिष्यामि । लार्डप्रधानेन संभूतः साक्षात्कारो युद्धप्रयत्ने साहाय्यार्थमेव भविष्यति । इतिहासस्य पुनरावृत्तिर्न भवति । अतोऽहं सत्याग्रहं नेच्छामि । गतद्विवर्षाभ्यन्तरे परिवर्तिता विश्वपरिस्थितिमवलम्ब्य समीक्षाऽत्यावश्यकी । नूतनपरिस्थितौ सैनिकविहीनशासने पूर्णनियन्त्रणकारकात् राष्ट्रियशासनात् सन्तुष्टो भविष्यामि । स्वाधीनताप्राप्तेः परमसौ कांग्रेसाय स्वविचारं नैव प्रदास्यति ।

: ५८ :

# राजाजी-योजना-वैफल्यम्

स्वमुक्तेरनन्तरं महात्मा गान्धी साक्षात्प्रधानलार्डेन सह वार्तामारब्धवान्, इत्यस्य नायमर्थो यज्जिनासाहबमुपेक्ष्य श्वेताङ्गैः सह स सन्धिमिच्छन्नासीत्। अत एव स्वोपानशनकालेऽसौ एका योजनामात्मनिर्णयसिद्धान्तानुकूलां विहितवान्। राजगोपालाचारिविचारानुकूलमन्तिमं रूपञ्च प्रदाय जिन्नासमीपमुपस्थापिता सा तेन न स्वीकृता। पुना राजगोपालाचारिणाऽनुवाद प्रेष्य पुनर्विचारार्थं प्रार्थितो जिन्नासाहब। सवमेवैतत्कार्यं श्रीगान्धिबन्दिकाल एव सम्पन्नमभूत्। पुनर्गान्धिनो मुक्तेः परमपि राजगोपालाचारी श्रीगान्धी योजनयैतया पूर्णं सहमत इति लिखित्वा जिन्नाविधे। किन्तु सर्वमेव निष्फलं जातम्। योजना चैतादृशी आसीत्—

'स्वाधीनभारताय नूतनविधानपूर्तौ मुस्लिमलीगसंस्था स्वातन्त्र्याय भारतयाचना समर्थयिष्यति, सङ्क्रान्तिकालेऽन्तःकालीनशासनसंस्थापने सहयोगञ्च प्रदास्यति। युद्धसमाप्तौ उत्तरपश्चिमस्थानि उत्तरपूर्वस्थानि च मुहम्मदीयबहुलमण्डलानि निर्देष्टुमेकं निर्देशकमण्डलं भविष्यति। तच्च निश्चितक्षेत्रेषु तत्रस्थानां वयस्कमताधिकारवता व्यावहारिकमताधिकारवता-माधारेण वा मतसंग्रहं कृत्वा भारतात्पृथग्भविष्यमाणानां क्षेत्राणां निर्णयं कुर्यात्। यदि बहुसंख्यान्विता जनता भारतात् पृथगेकसत्तासम्पन्नं राज्यसंस्थापनं निर्णयात् तदा स निर्णयः कार्यान्वितो भवेत्। जनसंख्या-परिवर्तनञ्च जनतेच्छयैव स्यात्।

एतद्योजनानुसारं दशदिवसपर्यन्तं श्रीगान्धिना जिन्नासाहबेन सह कृतायामपि वार्तायां जनमतसंग्रहं विना द्विराष्ट्रसिद्धान्ते प्रस्तरवत् संस्थितो

जिन्नासाहबो वार्ता व्यथाचकार । एतस्मिन् समये सर्व एव बन्दिनो नेतारः निवासभूतकारागारात् स्वस्वप्रान्तीयकारागारेषु परिवर्तिता ।

## भूलाभाई लियाकतअली सामञ्जस्यम्

कांग्रेस लीगसंस्थयो समसदस्यसंख्यान्विताया केन्द्रीयशासनपरिषदि शासननिर्वाचिता एव सदस्या भविष्यन्ति, नैतदावश्यकम् । अल्पसंख्यकाना (विशेषत परिगणितजाति सिक्खजातीना) प्रतिनिधयोऽपि तत्र स्थास्यन्ति । प्रधानसेनापतिश्च पदेन सदस्यो भविष्यति । वर्तमानशासनान्तर्गता व्यवस्थेय वर्तमानशासनाधीना कार्यं करिष्यति । किन्तु कमपि प्रस्ताव पारितुमशक्नुवति मन्त्रिमण्डले प्रधानलार्डो विशेषाधिकारप्रयोग नैव विधास्यति । एतत्कारणात्स्वरूपमेव फलतो मन्त्रिमण्डल प्रधानलार्डाधिकारात् स्वतन्त्रतामाप्स्यति । कांग्रेसलीगसंस्थे यदि एतस्मिन्विषये सहमते स्याताम्, तदनुसार चेदयमन्तरिमशासन स्थापित भवेत्तदा कांग्रेसकार्यसमितिसदस्याना मुक्तिरेव प्रथम कार्य तस्य भवेदिति । अमुमेव सामञ्जस्याधार मत्वा कोऽप्येतादृशो मार्गो निःसरेद्येन केन्द्रेऽन्तरिमशासनसंघटनार्थं तत्पर प्रधानलार्डो जिन्नासाहब भूलाभाईदेसाईमहाशयञ्चैकदा पार्थक्येन वा निमन्त्रयेत्तदा तौ स्वकीय प्रस्ताव तत्र समुपस्थाप्य तदनुसारञ्च शासने भाग ग्रहीतु प्रस्तावो निश्चितोऽस्तीति कथयेताम् ।

---

: ५९ :

# शिमला-सम्मेलनम्

अत्रान्तरे अमेरिकाद्वारा नवनिर्मितस्य परमाणुबमनामास्त्रस्य वर्षणेन यदा जापानस्य हिरोशिमा नागासाकीनामकं नगरद्वयं विनाशितं तदैव द्वितीयविश्वयुद्धसमाप्तिरभूत् । जापानवासिभिः स्वीकृते पराजये रंगूनतो टोकियोमहानगरीं गच्छन् सुभाषचन्द्रो वायुयानदुर्घटनाया मरणमापेदे । हिटलरः स्वपराजयं निश्चित्यादृश्यतां गतः । इत्थं ब्रिटिशरूसचीनामेरिका-प्रभृतिमित्रराष्ट्राणि विजयं प्रापुः । तदा सर्व एव बन्दिनो कांग्रेसनेतारो तत्तद्बन्दिगृहान्मुक्ता बभूवुः ।

लन्दनतो वेवेलो योजनामेकामादाय भारतमाजगाम । स निम्नलिखितं भाषणमदात् । तद्योजना यथा—'युद्धे जापान-विजयसमुत्साहवता विभिन्नदलविशेषनिर्वाचितानां विदेशविषयेण सहैव सर्वविषयप्रबन्धक्षमानां योग्यानां व्यक्तीनां नूतनशासनपरिषन्निर्माणार्थं विशिष्टव्यक्तीनामेकस्मिन् सम्मेलने नामोल्लेखनं प्रधानलार्डः कुर्यात् । अस्पृश्यजातीर्विहाय मुहम्मदीयानां संख्या च तत्र समैव भविष्यति । किन्तु कार्यसञ्चालनभारो भारतमन्त्रि प्रधानलार्डाधीन एव स्थास्यति । एष प्रस्तावः केवलं भारतीयप्रान्तानामेव, न तु देशीयराज्यानां विषयेऽपि भविष्यति । सम्राट्प्रतिनिधिः स्वाधिकारे यथापूर्वमेवाधिकृतो भविष्यति संक्रमणकाले । अनन्तरं देशीयराज्यप्रजानरेशयोः राष्ट्रीयशासनमध्ये यो हि मतभेदः स्यादसौ सामञ्जस्येन समाप्तो भवेत् ।

यदि एतत्सम्मेलनं सफलं भविष्यति तदाहं शासनपरिषदं निर्मातुं सहमतः स्याम् अन्यथा विभिन्नराजनीतिकदलेषु सामञ्जस्यं यावद्वर्तमान-स्थितावेव स्थास्यामी'ति ।

केवलयोजनानुसारं सम्मेलनमेकं शिमलानगरेऽभूत् तत्र मुख्याः श्रीरत्नप्रभृतयो नेतारो मुस्लिमलीगनेतारश्च सम्मिलिताः, परं विभिन्नदल-विशेषाणां सदस्यनामाङ्कनविषये जाते मतभेदे सम्मेलनमिदं असफलतां गतम् । जिन्नामहोदयो लीगान्तर्गतानां मुहम्मदीयानां नामाङ्कनमस्त्वेव लीगसंस्थैव मुहम्मदीयानां प्रतिनिधित्वरूपेण यदसहमतो जातः सम्मेलनात् । ●

# : ६० :

# भारतीय स्वातन्त्र्य-पूर्वभूमिका

चर्चिलेन ब्रिटिशप्रधानमन्त्रिपदात् त्यागपत्रे प्रदत्ते कर्मकरदलसदस्य एटलीमहोदयो ब्रिटिशप्रधानमन्त्रिपदे समासीनः। निर्वाचने पराजितस्यैमरी-महोदयस्य च भारतमन्त्रिपदे पेथिक्लारेन्समहोदयः समासीनः।

## लार्ड-वेवेल-भाषणम्

**अथ** ब्रिटिशशासनमन्त्रिभिः पुनरप्याहूतो वेवेलो लन्दनं गत्वा सम्राट्-शासनेन सह वार्तां विधाय भारतमागतः। आगत्य चात्र स भाषणमदात्—'भारतीयनेतृवर्गसहयोगेन भारते शीघ्रमेव स्वायत्तशासनस्थापने सर्वविधं साहाय्यं विधातुमुद्यतोऽस्मीति ब्रिटिशराज्य-साधारणसभोद्घाटनावसरे सम्राड-कथयत्। आशासे यत् केन्द्रीय प्रान्तीय व्यवस्थापिकासदस्यानां युद्धवशात् स्थगितं निर्वाचनं त्वरितमेव भविष्यति, ग्रहीष्यन्ति च राजनीतिकनेतारो मन्त्रिपददायित्वमवश्यमेव।

विधाननिर्मातृपरिषद आयोजनं यथाशीघ्रमेव भवेदिति सम्राट्शासन-मिच्छति। निर्वाचनसमाप्तौ कीदृशा विचारास्तेषामिति ज्ञातुं प्रान्तीय-व्यवस्थापिकासदस्यैर्विधाननिर्मातृपरिषदि कथं पूर्णं साहाय्यं प्रदास्यन्ते इति विज्ञातुं देशीयराज्यप्रतिनिधिभिश्च सह करिष्यामि वार्ताम्।

एतासु प्रारम्भिकावस्थासु भारतीयशासनव्यवस्थायाः प्रचलन्त्या आर्थिक सामाजिकव्यवस्थायाश्च समाप्ति सदैव भवेत्। निर्वाचनपरिणामं विज्ञाय भारतीयमुख्यदलसमर्थनसम्पन्नासेवा विधाननिर्मातृपरिषदं संगठयितुं प्रयत्नं करिष्यामि तदर्थं। ब्रिटिशशासनात् प्राप्ताधिकारोऽहमिति'।

## नवप्रधानमन्त्रि-क्लीमेण्टैटली-भाषणम्

अनन्तर ब्रिटिशसाम्राज्यप्रधानमन्त्री क्लीमेण्टैटलीसाहयो भाषणमेकं प्रददौ—'ब्रिटिशशासनभारतहितसाधक पूर्वघोषणानुसारं भारतीयविधान-परिषदा सहैव सन्धि करिष्यति। विधाननिर्मातृसस्थायाः स्थापने सञ्चालने च चत्वारिंशत्कोटिजननिर्वाचितानां भारतीयप्रतिनिधीनां विजयश्चावश्यमेव काठिन्यपरिपूर्णो भवेत्।'

एटलीव्याख्यान्वित प्रधानलार्ड भाषण भूतपूर्वक्रिप्सयोजनायाः पुनरावृत्ति एवासीत्। किन्तु युद्धसमाप्त्यनन्तर प्रान्तेषु मन्त्रि मण्डलकार्यस्य केन्द्रे शासनपरिषदः पुन सगठनस्य च वार्तासीत्तत्र, किन्तु वर्तमानप्रधानमन्त्रिणा भाषणे न खलु समयनिर्धारणप्रान्तीयमन्त्रिमण्डल-स्थापनयोर्वार्तासीत्। कथितनीत्यनुसार संशोधितरूपेण मध्यनिर्वाचन व्यवस्थैव केवलमासीत्। नवनिर्वाचितधारासभासदस्याः कथ कार्यं करिष्य न्तीति राज्यप्रतिनिधयोऽपि स्वमत प्रकटीकुर्वन्। केवलनरेशप्रतिनिधय एव तत्र भविष्यन्त्याहोस्वित् प्रजापरिषदः प्रतिनिधयोऽपीति नासी स्पष्टं तत्र।

नैराश्यसागरमग्नः काग्रेसकार्यसमिति सदस्या उभयमपि भाषण विचार्य प्रस्तावोऽयमपर्याप्तोऽस्पष्टश्चेति निश्चितवन्तो बम्बय्याम्। तदुपरि भारतमन्त्री पेथिकलॉरेन्स उवाच यत् नूतननीतेः प्रतिक्रियया नास्मि निरा शोऽहम्। घोषणेयं भारतीयराजनीतिकसमस्यायाः समाधानभूता नास्ति। किन्त्वनया स मार्गोऽपावृतो यस्मिंश्चलित्वा भारतं स्वगन्तव्यस्थानमाप्स्यती'ति।

पुनर्लन्दनस्य द्वितीययात्राया यदैव प्रधानलार्डो भारतमागतस्तदैव काग्रेससदस्याः वङ्गादिकतिपयस्थानेषु लीगसदस्या अपि निर्वाचने विजयमवाप्य प्रान्तेषु मन्त्रिमण्डलनिर्माणमकुर्वन्।

अथ ब्रिटेनात् लार्डपेथिकलॉरेन्सः स्वसार्धैः सह भारतमागतः। आगत्य चात्र स उवाच—'प्रदत्तवचनं पूरयितुमिच्छन्ता ब्रिटिशशासनेन प्रेषितो-

ऽहमत्रागतः । स्वकीयवार्तालापे भारतीयस्वाधीनताविरोधिनीं कामपि वार्तां नैव उपस्थापयिष्यामी'ति । स मासत्रयं यावद्भारते स्थित्वा विभिन्नदलीयनेतृभिः राजनीतिज्ञैर्महात्मभिर्विद्वद्भिः शासनपरिषत्सदस्यैरुद्योगपतिभिर्वैधानिकनियममर्मज्ञैरध्यापकैश्च सह विभिन्नविषयान् विचार्य मध्यवर्तिशासनस्थापनाय स्वकीयं प्रस्तावमकरोत् । कांग्रेसकार्यसमितिश्च मध्यवर्तिशासने स्वकीयसदस्यान् प्रेषयितुं स्वीकृतिं प्रदत्तवती ।

मुस्लिमलीगसंस्था च अल्पकालीन-दीर्घकालीनयोजनयोः सम्मिलनमस्वीकृती । लार्डप्रधानः कांग्रेसाध्यक्षसमीपे सम्राट्शासनमतानुसारं मध्यवर्तिशासने सहयोगप्रदानार्थं लिलेख । यथांया मध्यवर्तिशासननिर्माणप्रस्तावं विचार्य कांग्रेसकार्यसमितिसदस्याः स्वां स्वां स्वीकृतिं प्रदत्तवन्तः । लार्डप्रधानेन मधुरैः शब्दैर्मध्यवर्तिशासने सहयोगार्थं जिन्नासाहबोऽपि प्रार्थितः । कांग्रेसाध्यक्षोऽपि तत्सम्बन्धे पत्रं लिखितवान् । किन्तु स्वकीयहठवादितया सुप्रसिद्धो जिन्नासाहब एतस्मिन्नपि प्रस्तावे नवीनगोपुरं प्राचीनदीपमेवापश्यत् । स पाकिस्तानप्राप्त्यर्थं साक्षाद्विरोधस्य (प्रत्यक्षकारवाई) घोषणां चकार ।

## हिन्दु-मुहम्मदीयोर्घोरः कलहः

अथ वङ्गीयलीगमन्त्रिमण्डलप्रधानो हुसनशहीदसुहरवर्दीसाहबो रमजानान्तरे सार्वजनिकावकाशघोषणां कृत्वा निश्चिते एकस्मिन्दिवसे पाकिस्तानप्राप्त्यै हिन्दुभिः सह विद्रोहपूर्वकं कलिकातायां साक्षाद्विरोधारम्भमकरोत् । पूर्वमेकस्यां सभायां समर्थितपाकिस्तानप्रस्तावैः 'अल्ला हो अक्बर' इति घोषणां कुर्वद्भिर्मुहम्मदीयैर्हिन्दुवधारम्भेन विद्रोहाग्निज्वाला प्रज्वालिता । कलिकातायां श्रीहट्टे च गम्भीरोपद्रवो बभूव । रक्तधारान्वितराजमार्गाः शवदुर्गन्धिना परिपूर्णा बभूवुः । कलिकातानगरं दिवसे निवसतामपि भयकारकं जातम् । सप्तसहस्राधिका जना मरणमापेदिरे । बहवो विहता अनाथाश्च बभूवुः ।

श्रीहट्टे (सिल्हटे) ढाकायाञ्च असंख्यामानवा हता आहताश्च । मुहम्मदीयबहुले हिन्दुविरले नोआखालीमण्डले नरराक्षसानां मुहम्मदीयानां हिन्दुजनपेषणेन रक्षांसि लज्जितानि । महाकालोऽपि तेषां नृशंसतां दृष्ट्वा लज्जितः । मण्डलेऽस्मिन् निवासिनां हिन्दूनां संख्या चतुर्लक्षपरिमिता मुहम्मदीयाश्च अष्टादशलक्षसंख्यका आसन् ।

नारीनिर्यातनेन बलाद्धिन्दुमहिलाभिर्विवाहेन धर्मपरिवर्तनेन गृहदाहेन प्रसिद्धपरिवाराणामुपरि सामूहिकाक्रमणेन विलुप्तधैर्याणां हिन्दूनां चेतसि यादृशोऽविश्वाससञ्चारोऽभूत्, तादृशो वङ्गीयदुर्भिक्षसमयेऽपि नासीत् । एकस्मिन् स्थाने सप्ताधिकशतसंख्यकाभिः शिशुसहिताभिर्नारीभिः स्वधर्मरक्षार्थं कूपे पतित्वा प्राण-विसर्जनं व्यधायि । सप्ताधिकत्रिंशत्-संख्यकाः स्त्रीबालवृद्धशिशुसहिता हिन्दवः एकस्मिन् भवने पिधाय तैरत्याचारिभिः अग्नये हुताः । धर्मस्थाने चैकत्र हिन्दुभिः पञ्चाशत्संख्यका महिलाः स्वहस्तैरेव धर्मरक्षार्थं हिंसिताः । बह्वीभिर्नारीभिरबोधबालिकाभिश्च पश्यतामेव तद्बान्धवानां महान्तमत्याचारं चक्षुर्विमर्दिनः । कतिपयहिन्दून् पृथग्गर्ते दण्डायमानान् विधाय वक्षसि गोलकान् प्रवेश्य हतवन्तः । यत्र कुत्रापि बान्धवान् निहत्य रमणीभिः सह विवाहमकार्षुः । कलिकाताया राजकीयसंस्कृतमहाविद्यालयच्छात्रावासस्थितान् पञ्चविंशतिसंख्यकान् छात्ररूपान् विदुषो ब्राह्मणान् पूर्वं विवस्त्रान् सहसैव निर्दयमेव निहतवन्तश्च मुहम्मदीयाः । हिन्दुगृहदीपनं बलाद्विवाहकरणं हननञ्च मुहम्मदीयानां कृते साधारणकृत्यमासीत्तदा ।

कलिकातानिवासिनो ग्रामस्थिता हिन्दवः कतिपयहिन्दून् कथमपि मुहम्मदीयजनोपद्रवेभ्यो निःसार्य रक्षाञ्चक्रिरे । बिहारेऽपि प्रतिशोधभावनया हिन्दुभिः विद्रोहः समारब्धः । अथ श्रीनेहरो बिहारं महात्मा गान्धी च नोआखालीं गत्वा शान्तिसंस्थापनं कृतवन्तौ ।

पश्चाद् गदमुक्तेश्वरेऽपि हिन्दुमुहम्मदीययो: कलहः समजनि । सर्व एव नेतारो हिन्दूनामुपरि संभूतेनात्याचारेण सुदुःखिताः । किन्तु जिन्नाशाहयस्य मुखात् सहानुभूत्यामेकोऽपि शब्दो नैव निःससार ।

## मध्यवर्ति-शासन-मघटनम्

अनन्तरं कथमपि काङ्ग्रेस्लीगसिक्खादिप्रतिनिधिसहितं मध्यवर्ति शासनं संस्थापितमभूद्दिल्ल्याम् । आचार्यकृपलानीमहाशयस्य अध्यक्षतायामेतस्मिन् वर्षे काङ्ग्रेसाधिवेशनं मेरठनगरे जातम् ।



श्रीहट्टे (सिल्हटे) ढाकायाञ्च असंख्यामानवा हता आहताश्च। मुहम्मदीयबहुले हिन्दुविरले नोआखालीमण्डले नरराक्षसाना मुहम्मदीयाना हिन्दुजनपेषणेन रक्षापि लज्जिता। महाकालोऽपि तेषा नृशंसता दृष्ट्वा लज्जितः। मण्डलेऽस्मिन् निवासिना हिन्दूना संख्या चतुर्लक्षपरिमिता मुहम्मदीयाश्च अष्टादशलक्षसंख्यका आसन्।

नारीनिर्यातनेन बलाद्धिन्दुमहिलाभिर्विवाहेन धर्मपरिवर्तनेन गृहदाहेन प्रसिद्धपरिवाराणामुपरि सामूहिकाक्रमणेन विनष्टधैर्याणा हिन्दूना चेतसि यादृशोऽविश्वाससञ्चारोऽभूत्, तादृशो वङ्गीयदुर्भिक्ष समयेऽपि नासीत्। एकस्मिन् स्थाने सप्ताधिकशतसंख्यकाभिः शिशुसहिताभिर्नारीभिः स्वधर्मरक्षार्थं कूपे पतित्वा प्राण-विसर्जनं व्यधायि। सप्ताधिकत्रिशत-संख्यकाः स्त्रीबालवृद्धशिशुसहिता हिन्दव एकस्मिन् भवने पिधाय तैरत्याचारिभिः अग्नये हुताः। धर्मस्थाने चैकत्र हिन्दुभिः पञ्चाशत्संख्यका महिलाः स्वहस्तैरेव धर्मरक्षार्थं हिंसिताः। बह्वीभिर्नारीभिरबोधबालिकाभिश्च पश्यतामेव तदान्धयवाना महान्तमत्याचारं चक्रुर्विधर्मिणः। कतिपयहिन्दून् वृक्षलग्नं दण्डायमानान् विधाय वक्षसि कीलकान् प्रवेश्य हतवन्तः। यत्र कुत्रापि बान्धवान् निहत्य रमणीभिः सह विवाहमकार्षुः। कलिकाताया राजकीयसंस्कृतमहाविद्यालयच्छात्रावासस्थितान् पञ्चविंशतिसंख्यकाश्छात्ररूपान् विदुषो ब्राह्मणान् पूर्वं विश्वास्य सहसैव सिन्दिग्धे निहतवन्तश्च मुहम्मदीयाः। हिन्दुगृहोद्दीपनं बलाद्विवाहकरणं हननञ्च मुहम्मदीयाना कृते साधारणकृत्यमासीत्तदा।

कलिकातानिवासिनो लब्धप्रतिष्ठा हिन्दवः कतिपयहिन्दून् कथमपि मुहम्मदीयमतोलीभ्यो नि.सार्य रक्षाञ्चक्रिरे। बिहारेऽपि प्रतिशोधभावनया हिन्दुभिः विद्रोहः समारब्धः। अथ धीरजो बिहारं महात्मा गान्धी च नोआखालीं गत्वा शान्तिसंस्थापनं कृतवन्तौ।

पश्चाद् गढमुक्तेश्वरेऽपि हिन्दुमुहम्मदीययोः कलहः समजनि। सर्वे एव नेतारो हिन्दूनामुपरि संभूतेनात्याचारेण सुदुःखिताः। किन्तु जिन्नाशाहमस्य मुखात् सहानुभूत्यामेकोऽपि शब्दो नैव निःससार।

## मध्यवर्ति-शासन-संघटनम्

अनन्तरं कथमपि कांग्रेसलीगसिक्खादिप्रतिनिधिसहितं मध्यवर्ति शासनं संस्थापितमभूद्दिल्ल्याम्। आचार्यकृपलानीमहाशयस्य अध्यक्षतायामेतस्मिन् वर्षे कांग्रेसाधिवेशनं मेरठनगरे जातम्।



# माउण्टबेटनागमनम्, भारत-स्वातंत्र्यश्च

पश्चाद्गतवति येवेले ब्रिटिशकर्मकरदलप्रधानमन्त्रिणा एटलीसाहबेन नियुक्तः प्रधानलार्डो भूत्वा समाजगाम भारतवर्षे माउण्टबेटन । भारतीयस्वतन्त्रता विषये परमोत्साहवता तेन सह वार्ता विधाय श्रीरत्न परमानन्दमवाप ।

अथ ब्रिटिशसाम्राज्यप्रधानमन्त्री एटलीसाहब ऐतिहासिकीय घोषणामकरोत् यत् 'बहुकालेभ्यो भारतीयस्वतन्त्रतायै प्रयतमान ब्रिटिशशासन हिन्दुमुहम्मदीयमतभेद विचार्य निकर्तव्यविमूढमपि वर्षाभ्यन्तर एव भारत स्वतन्त्र विधास्यति । युद्धकालायैव लार्डवेवेलस्य नियुक्तिरासीत् । इदानीं ब्रिटिशशासनेन लार्डमाउण्टबेटनस्यनियुक्ति सविचार कृते'ति ।

किन्तु पाकिस्तानयाचनाया दृढो जिन्नासाहब प्रदत्तेऽपि महति सौविध्ये किमपि श्रोतु तत्पर एव नासीत् ।

महात्मा गान्धी चेदानीं साम्प्रदायिककलहशान्त्यै विहारे कलिकाता यान्च स्वकीयशान्तिप्रचार समाप्य नोआखाली गत्वा ग्रामीणक्षेत्रेषु पदातिरेव भ्रमण कुर्वन् शान्तिसस्थापने दत्तमतिरासीत् ।

### देश विभाजन-स्वीकृति

भारतीया नेतारो जिन्नासाहबस्यानेन हठधर्मित्वेन सर्वथा किंकर्तव्य विमूढा समभवन् । भारतदेश खण्डयित्वा पाकिस्ताननामके द्वितीये राष्ट्रे स्वीकृते सति सर्वदा कांग्रेसकार्ये साहाय्ययागदानकर्तृभिर्हिन्दुभिः सह महानत्याचारो विश्वासघातोऽन्यायश्च भविष्यतीति विचारयन्तोऽपि ते नेतार. कमपि मार्गं पाकिस्तानमन्तरा भारतीयस्वतन्त्रतायै नालभत । अन्ततस्ते श्रीरत्न गान्धिन सविधे किन्चिदुपायप्राप्त्यर्थं प्रेषितवन्त ।

दिल्लातो वाष्पयानेन कलिकातानगरे, ततश्च नोआखाली गत्वा श्रीगान्धिमपृच्छच्छ्रीरत्न —'महात्मन् ! कांग्रेससदस्यैरस्माभिरस्मिन् जिन्ना-

इते किंकर्तव्यमित्यस्माकं राजनीतिगुरुर्भवानेव कथयतु। देव! कांग्रेसकर्णधारो भवान् भूतपूर्वान्दोलनानि स्मरति किम्, यैरेव विवशाः श्वेताङ्गाः भारतं स्वतन्त्रं विधातुं कृतनिश्चयाः संवृत्ताः? किन्तु पाकिस्तानस्यायं प्रश्नः सपदि दुरुत्तरणीयः संवृत्तोऽस्मत्कृते। स्वीकृते पाकिस्ताने देशोऽस्मान् किं वक्ष्यति? अस्वीकृते च वर्षमेनत्पराधीनमेव स्थास्यतीति सेयमुभयतः पाशारज्जुरि'ति।

क्षणं विचार्य निःश्वस्य चोक्तवान् महात्मा—'तात! किं कथयामि जिनाशाहृतस्य हठवादिताविषये! पुनः पुनर्विचार्यापि कमप्यन्यं मार्गं न पश्यामि पाकिस्तानमन्तरा भारतस्वातन्त्र्याय। किन्तु स्वीकृते पाकिस्ताने देशेन सह महान् विश्वासघातो भविष्यति। नूनं कठिनतरोऽयं प्रश्नः।

पश्चात् श्रीरत्न गान्धिनो विविधप्रकारैर्विचारे जातेऽपि किंकर्तव्यविमूढो महात्माऽन्तिमे क्षणे पाकिस्तानस्वीकारार्थं स्वकीयां स्वीकृतिमदात्। श्रीरत्नश्चागत्य दिल्लीमन्यनेतृभिः सह विचार्य कांग्रेसमतं सूचितवान् लार्ड-प्रधानम्।

## विजयतां स्वतन्त्रं भारतम्!

अन्ततः लन्दनराज्यसभाया पारितनियमानुसारं भारतं स्वतन्त्रमभूत्, पाकिस्तानरूपेण खण्डितं च। स्वतन्त्रे भारते श्रीकैलाशनाथकाटजू-सरोजिनीदेवी-राजगोपालाचारी माधवश्री हरिअणे रंगनाथरामचन्द्रदिवाकर-प्रभृतयो भारतीया एव प्रान्तेषु प्रान्तपालपदमलञ्चक्रुः। केवलं माउण्टवेटनो भारतीयशासनाधीनो भूत्वा प्रधानलार्डपदमलञ्चकार।

अनन्तरं पाकिस्तानाधीने पञ्जाबे ऽलात् पाकिस्तानवासिभिर्मुहम्मदीयैरधिकृते काश्मीरे च हिन्दूनां सिक्खानामुपरि महानत्याचारोऽभूत्। एकत्र नग्नहिन्दूस्त्रीणां यात्रापि निष्कासिता समायगानं मुहम्मदीयैः। क्रमशः सर्वाण्येव भारतीयराज्यानि भारतीयशासने विलीनान्यभूवन्। गतवति माउण्टवेटने श्रीराजगोपालाचारिणा प्रधानलार्डपदमलङ्कृतम्।

ततो नवनिर्मितभारतीयविधानानुसारं श्रीराजेन्द्रप्रसादः प्रथमो राष्ट्राध्यक्षः श्रीरत्नश्च भारतीयमन्त्रिप्रधानो बभूव ।

कर्णयोः पीयूषवर्षिणी श्रीब्रह्मचारिसदानन्दस्य ता शाब्दिकी भविष्यवाणी-मद्य साकारता गता वीक्ष्य मुक्तामणि-प्रभावत्यौरात्मानं यत्र कुत्रापि स्याताम् , नूनं परमानन्दमहासागरे मज्जनोन्मज्जनं विधाय स्वातन्त्र्य-महायज्ञस्य अवभृथस्नानं विधास्यन्तीति शिवम् ।

यस्यैव भासा भुवनं समस्तं प्रकाशमानं सततं विभाति ।
पूर्णे प्रबन्धेऽत्र परं प्रसन्नस्तं नन्दसूनुं शिरसा नमामि ॥

श्रीकृष्णचन्द्रचरणाम्बुजसेवकेन,
श्रीमन्मगद्विजदिवाकरसम्भवेन ।
श्रीरुद्रदत्तविबुधेन कृते प्रबन्धे,
भागो द्वितीय इह पूर्तिमितो मनोज्ञः ॥

—:०॥०:—

ग्रन्थाननेकानवलोक्य सम्यगेष प्रबन्धो लिखितः श्रमेण ।
पठन्तु पश्यन्तु सदैव विज्ञाः स्वदेशभक्ताः परमादरेण ॥

यावद्विराजति धरा फणिराजमूर्ध्नि,
यावच्च भूतनिवहो विलयं न याति ।
तावद्धि रत्नचरितं सुरभाषयोक्तं
श्रुत्वाप्यधीत्य सुखिनश्च भवन्तु लोकाः ॥

सर्वेतिहासान् समधीत्य यावद्बहुप्रयासैः फलमाप्नुवन्ति ।
तावत्पठित्वा मम काव्यमेतत् स्वल्पप्रयासैः फलमाप्नुवन्तु ॥

इति श्रीगयामण्डलान्तर्गतानन्दपुरनिवासि पण्डितश्रीदिवाकर-पाठकात्मज-श्रीरुद्रदत्तपाठकविरचिते भारतीय-रत्नचरिते

द्वितीयो भागः ।

समाप्तश्चायं प्रबन्धः ।

---